श्रीगणेशायनमः श्रीगुरुभ्योनमः ॐकारविघ्नेशगुरून्सरस्वतीं गौरीशसूर्यौचहरिंचभैरवं ॥ प्रणम्यदेवान्कुरुतेहि
ग्रंथंदैवज्ञशर्माजगतोहिताय १ विष्ण्वर्चनंदानशिवार्चनंचउत्सर्गधर्मंव्रतनिर्णयंच वेदात्पुराणात्स्मृतितश्चतद्वद्व्रतोक्तसिद्धांत
निधिंविधत्ते ॥२॥ संगृह्यसर्वस्यमतंपुराणंसिद्धांतवाक्यंमुनिभिःप्रणीतं लोकोपकारायकृतोनिबंधोव्रतप्रकाशःसुधियांमुदेस्या
त् ३ यावंतोब्राह्मणालोकेधर्मशास्त्रविशारदाः तावंतःकृपयायुक्ताःकुर्वंतुग्रंथशोधनं ४। विज्ञाप्यंतेमयासर्वेपंडितागुणमं
डिताः प्रचारणीयोग्रंथोयंबालवद्बालकस्यमे ५ रामांकमुनिभूसंख्ये १७९३वस्विषुंगेंदुसंख्यके १६५८ वर्षेशाकेशकृप
क्षेपंचम्यांतपसःशुभे ६ विलोक्यविविधान्ग्रंथांल्लिख्यतेसुजनायवै तन्निमित्तोमयारंभःकिमज्ञातंमनीषिणाः ७ चित्तपाव
नजातीयःशांडिल्यकुलमंडनः गोपालात्मजदैवज्ञःसंगमेश्वरसंज्ञितः ८ दुर्गाधांदेवसन्काश्यांनत्वापितृपितामहान् कुर्वेवैवि
द्वनाथोहंव्रतराजंसुविस्तरं ९ ॥ अथव्रतराजप्रारंभः॥ ॥ अत्रचस्वकर्तव्यविषयोनियतःसंकल्पोव्रतमि
ते तत्रअग्निहोत्रसंध्यावंदनादिविषयेसंकल्पे अतिप्रसक्तेकिंत्वभियुक्तव्रतप्रसिद्धिविषयः संकल्पविशेषःसएवव्रतं न
तंसंकल्पयेदित्यनन्वयइतिवाच्यं पाकंपचतिदानंदद्यादितिवत्प्रत्ययानुग्रहार्थंप्रयोगोत्पत्तिरितिवक्तव्या अत्रप्र
लमाह हेमाद्रौगार्ग्यः अस्तगेचगुरौशुक्रेबाल्येवृद्धेमलिम्लुचे उद्यापनमुपारंभंव्रतानांनैवकारयेत् १ तत्रैववृद्ध
बृहस्पती अग्न्याधानंप्रतिष्ठांचयज्ञदानव्रतानिच मांगल्यमभिषेकंचमलमासेविवर्जयेत् बालेवायदिवावृद्धेशुक्रेचा

तेगुरौ मलमासेच एतानिवर्जयेद्देवदर्शनं लल्लः नीचस्थेवक्रसंस्थेप्यतिचरणगतेबालवृद्धास्तगेवासन्यासोदेवयात्राव्रत
मविधिः कर्णवेधस्तुदीक्षा मौंजीबंधोथचूडापरिणयनविधिर्वास्तुदेवप्रतिष्ठावर्ज्याःसद्भिःप्रयत्नात्रिदशयतिगुरौसिंह
राशिस्थितेचेति नीचस्थोमकरस्थः कल्पतरौदेवीपुराणे सिंहसंस्थंगुरुंशक्रंसर्वारंभेषुवर्जयेत् प्रारब्धंनचसिद्ध्येतमहा
भयकरंभवेत् पुत्रमित्रकलत्राणिहन्याच्छीघ्रंनसंशयः देवारामतडागेषुव्रतोद्यानगृहेषुच सिंहस्थंमकरस्थंचगुरुंयत्नेन-
वर्जयेत् वसिष्ठः सिंहस्थेतुमघासंस्थंगुरुंयत्नेनवर्जयेत् अन्यत्रसिंहभागेतुसिंहस्थोपिनदुष्यति सिंहस्थगुरोर्वर्जनी
यत्वंनर्मदोत्तरभागेएव अन्यत्रतुसिंहांशएववर्ज्यः तथाचमदनरत्नादिधृतकालविधाने सिंहस्थितःस्फुरगुरुर्यदिनर्मदायास्तं
वर्जयेत्सकलकर्मसुसौम्यभागे विंध्यस्यदक्षिणदिशिप्रवदंतिचार्याःसिंहांशकेमृगपतावपिवर्जनीयः सिंहांशस्तुपूर्वाफल्गु
न्याःप्रथमःपादः मृगपतौमकरस्थेगुरौदेशविशेषमाह लल्लः नर्मदापूर्वभागेतुशोणस्योत्तरदक्षिणे गंडक्याःपश्चिमे
भागेमकरस्थोनदोषभाक् केषांचित्स्त्रीकर्तृकाणामन्येषांचव्रतानामगस्त्योदयेप्यारंभनिषेधइति हेमाद्रौलौगाक्षिः उद्या
निकाशिवपवित्रकमेघपूजादूर्वाष्टमीफलविरूढकजागरणि स्त्रीणांव्रतानिनिखिलान्यपिवार्षिकाणिकुर्यादगस्त्यउदिते
नशुभानिलिप्साःरिति उद्यानिकाव्रतविशेषः शिवपवित्रकंआषाढ्यामथवामाघ्यांविहितंशिवपवित्रारोपणं मेघपूजा
व्रतविशेषः दुर्वाष्टमीभाद्रशुक्लाष्टमी फलविरूढकंभाद्रपदशुक्लचतुर्दश्यांपालीव्रतंकदलीव्रतापरनामकं जागरंआश्विन

पौर्णिमास्यांकोजागरव्रतं कार्तिकशुक्लचतुर्दश्यांविहितंजागरव्रतंवा अत्रोभयत्रागस्त्योदयस्यावश्यंभावित्वेनविधेरनवकाशा
पत्तेर्विकल्पोज्ञेयः वार्षिकाणीत्यत्रवर्षासुभवानिवार्षिकाणिइत्येवव्युत्पत्तिर्नतुवर्षेभवानीतिनथासतिशरदादिग्रीष्मपर्यंतंअगस्त्यो
दयानुवृत्तेस्तन्मध्येविहितानांस्त्रीव्रतानांसर्वथानारंभएवापद्यतइति अगस्त्योदयकालश्चदिवोदासीये उदेतियाम्यांहरिसंक्र-
माद्दिवेरेकाधिकेविंशतिमेह्यगस्त्यः ससप्तमेस्तंवृषसंक्रमाच्चप्रयातिगर्गादिभिरत्यभाणि व्रतारंभसमाप्त्योस्तिथिंविशिनष्टिहे
माद्रौसत्यव्रतः उदयस्थातिथिर्याहिनभवेद्दिनमध्यभाक्॥ साखंडानव्रतानांस्यादारंभश्चसमापनं एतद्व्यतिरिक्तायामखंडा
यांप्रारंभमाह तत्रैववृद्धवसिष्ठः खखंडव्यापिमार्तंडायद्यखंडाभवेत्तिथिः व्रतप्रारंभणंतस्यामनस्तगुरुशुक्रयुगि-
ति अनस्तमितगुरुशुक्रायांतिथौव्रतमारंभणीयमित्यर्थः रत्नमालायां सोमसौम्यगुरुशुक्रवासराःसर्वकर्मसुभवंतिसि
द्धिदाः भानुभौमशनिवासरेषुचप्रोक्तमेवखलुकर्मसिध्यति विरुद्धसंज्ञाइहयेचयोगास्तेषामनिष्टःखलुपादआद्यः सवैधृति
र्व्यतिपातनामासर्वोप्यनिष्टःपरिघस्यचार्धं तिस्रस्तुयोगेप्रथमेसवज्रेव्याघातसंज्ञेनवपंचशूले गंडेतिगंडेचषडेवना
ड्यःशुभेषुकार्येषुविवर्जनीयाः दर्शसंक्रांतिपातोपरिघमुखदलंवैधृतिंपातयोगंविष्कंभाद्यास्त्रिनाडीःशुभकृतिषुचषड्गंड-
चशूले व्याघातवज्रकेंकाःपितृमृतिदिवसोनाधिमासान्कुहोरांजह्याज्जन्मोक्षमासोडुतिथिखलुतिथिंव्युद्गमांश्चाशुभं
ब्रह्मयामले दिनभद्रायदारात्रौरात्रिभद्रायदादिवा नत्याज्याशुभकार्येषुप्राहुरेवंपुरातनाइति अथर्ववेदव्यासः

श्रीगणेशायनमः अथादौप्रतिपदादितिथिव्रतानिलिख्यंते मात्स्ये वर्जयित्वामधौयस्तुदधिक्षीरघृतेक्षवम् दद्याद्वस्त्राणिसूक्ष्माणिरस
पात्रैर्युतानिच रसपात्रैर्दध्यादिपात्रैः संपूज्यविप्रमिथुनंगौरीमेप्रीयतामिति हेमाद्रौपाद्मेच अर्चयेच्चैत्रमासेतुयस्तुगंधानुलेपन
म् शक्तिंगंधभृतांदद्याद्विप्रायश्वेतवाससी भक्त्यातुदक्षिणान्दद्यात्सर्वकामार्थसिद्धये गंधवस्त्रदानमंत्रः चंदनावासगंधानांसर्वेद्वंदारका
र्चितम् चंदनंत्वत्प्रसादेनसंप्राप्नानंदप्रदोभव शरण्यंसर्वलोकानांलज्जायारक्षणंपरम् सुवेषधारिर्वंयस्माद्वासः शांतिंप्रयच्छमे इतिमं
त्राभ्यांगंधवाससीदद्यात् अथैव चैत्रशुक्लप्रतिपदिसंवत्सरारंभविधिर्ब्राह्मे अत्रप्रतिपत्सूर्योदयव्यापिनीग्राह्या श्रीभगवानुवाच चै
त्रेमासिजगद्ब्रह्माससर्जप्रथमेहनि शुक्लपक्षेसमग्रेतुतदासूर्योदयेसति इतिवचनात् दिनद्वयेव्याप्तावव्याप्तौवापूर्वैव वत्सरादौवसंता
दौबलिराज्येतथैवच पूर्वविद्धैवकर्तव्याप्रतिपत्सर्वदाबुधैः वसिष्ठवचनादितिबहवः युक्तंतुदिनद्वयेउदयसंबंधाभावे संवत्सरारंभप्र
युक्तकार्यलोपप्रसक्तावदवचनंपूर्वयुताग्राह्यताविधायकम् दिनद्वयेतत्संबंधेतुसंपूर्णत्वादेवपूर्वास्मेः कदाकार्यमित्याकांक्षाविरहात्पूर्व
युतत्वविरहाच्चैवैतद्वचनात् पूर्वेतिब्राह्मे प्रवर्तयामासतथाकालस्यगणनामपि गृहानब्दानृतून्मासान्पक्षान्संवत्सराधिपान् द
दौसभगवान्ब्रह्मासर्वदेवसमागते ब्राह्मंयास भार्याब्रह्माणमनिर्देश्यतनुंततः येथोक्तेतेनमस्यंतस्तुवंतश्चाप्युपासते ततस्तेकृतशुश्रू
षागत्वाचैवहिमालयम् स्वानिस्वान्यथकर्माणितेनयुक्ताश्चचक्रिरे ब्राह्मीसभाकामरूपाविशेषेणतदानघ धारयंत्यमलंरूपमनि
र्देश्यंमनोहरम् ततः प्रभृतियोधर्मः पूर्वैः पूर्वतरैः कृतः अद्यापिरूढः सुतरांसकर्तव्यः प्रयत्नतः तत्रकार्यामहाशांतिः सर्वकल्मषना-
शिनी सर्वोत्पातप्रशमनीकलिदुःस्वप्नप्रणाशिनी आयुःप्रदापुष्टिकरीधनसौभाग्यवर्धिनी मंगल्याचपवित्राचलोकद्वयसुखावहा तस्या

मादौतु संपूज्यो ब्रह्मा कमलसंभवः पाद्यार्घपुष्पधूपैश्च वस्त्रालंकारभोजनैः होमैर्बलिउपहारैश्च तथाब्राह्मणभोजनैः ततः क्रमेण देवेभ्यः पूजा कार्या पृथक् पृथक् कृत्वोंकारवषट्कारौ कुशोदकतिलाक्षतैः पुष्पधूपप्रदीपाद्यैर्भोजनैश्च यथाक्रमम् मंत्रसंपूज्य नार्थैतु ब्रह्मरूपं परिस्पृशेत् मंत्रमितिनिधाता चेत्येकवचनम् बहुरूपं मंत्रं नानारूपान्मंत्रान्परिस्पृशेत् परिगृण्हीयादित्यर्थः तेनर्ज नमो ब्रह्मण इत्यादि विष्णवे प रमात्मनेनम इत्येवं मंत्रवाक्यद्वंदो यात्रादेवताशब्दाश्चतुर्थ्यंताः प्रणवादयो नमोंता मंत्रत्वेन ग्राह्याः प्रार्थनामंत्राः ओंनमो ब्रह्मणे तुभ्यं कामा यच महात्मने नमस्तेस्तु निमेषाय तृटये च नमोस्तु ते लवाय च नमस्तुभ्यं नमस्तेस्तु क्षणाय च नमोनस्ते काष्ठायै कलायै तेन नमोस्तु ते नाडिकायै सुषुम्नायै सुमुहूर्तायै नमोनमः नमो निशाभ्यः पुण्येभ्यो दिवसेभ्यश्च नित्यशः पक्षाभ्यां चाथ मासेभ्य ऋतुभ्यश्च नमोनमः अष्टाविंश तिसंख्येभ्यो नक्षत्रेभ्यो नमोनमः प्रतिवर्षाधिपेभ्यश्च विज्ञातेभ्यो नमः सदा नमोस्तु कुलनागेभ्यो सानुयात्रेभ्य एव च सानुयात्रेभ्यः सानु चरेभ्यः नमश्चतुर्दशादिभ्यो दिक्पालेभ्यो नमोनमः नमः पुरंदरेभ्यश्च तत्संख्येभ्यो नमोनमः पंचाशते नमो नित्यं दक्षकन्याभ्य एव च नमो देव्यै सुभद्रायै जयायै चाथ सर्वदा मृशास्त्रायनमस्तुभ्यं सर्वास्त्रजनकाय च नमस्ते बहुपुत्राय पत्नीभिः सहिताय च नमो बु ध्यै तथा वृध्यै निद्रायै धनदाय च नमः कुबेरपुत्राय गुह्यकः स्वामिने नमः नमोस्तु शंखपद्मेभ्यो निधिभ्यो मे थ नित्यशः भद्रकाल्यै नमस्तुभ्यं सुरभ्यैश्च नमोनमः वेदवेदांगवेदांतविद्यासंस्थेभ्य एव च नागयक्षसुपर्णेभ्यो नमोस्तु गरुडाय च सप्तभ्यश्च समुद्रेभ्यः सागरेभ्यश्च स र्वदा उत्तरेभ्यः कुरुभ्यश्च नमो मेरवताय च भद्राश्वकेतुमायेभ्यो नमः सर्वत्र सर्वदा इलावृताय च नमो हरिवंशाय चैव हि नमः किंपुरु षेभ्यश्च भरताय नमोनमः नमो भारतभेदेभ्यो महद्भ्यश्चाथ सर्वदा पातालेभ्यश्च सप्तभ्यो नरकेभ्यो नमोनमः कालाग्निरुद्रशैवाभ्यां

हरये क्रोधरूपिणे समभ्यस्त्वथलोकेभ्यो महाभूतेभ्य एव च नमः संबुद्धये चैव नमः प्रकृतये तथा पुरुषायाभिमानाय नमोस्तु व्यक्तमूर्तये
हिमवत्समुखेभ्यश्च पर्वतेभ्यो नमस्त्वथ पौराणीभ्यश्च गंगाभ्यः समभ्यश्च नमो नमः नमोस्त्वाद्यमुनिभ्यश्च समभ्यश्चाथ सर्वदा नमोस्तु पुष्
गादिभ्यस्तीर्थेभ्यश्च पुनः पुनः निम्नगाभ्यो नमो नित्यं वितस्तादिभ्य एव च चतुर्दशभ्यो दीर्घेभ्यो धरणीभ्यो नमो नमः नमो धात्रे विधात्रे च
छंदोभ्यश्च नमो नमः स्कर भ्यैरावणाभ्यां च नमो भूयो नमो नमः नमस्तथोच्चैःश्रवसे ध्रुवाय च नमो नमः नमोस्तु धन्वंतरये शस्त्रास्त्राभ्यां न-
मो नमः विनायककुमाराय विघ्नेभ्यश्च नमः सदा शाखाय च विशाखाय नैगमेयाय वै नमः नमस्कंदगृहेभ्यश्च स्कंदमातृभ्य एव च ज्वरा
य रोगपतये भस्मप्रहरणाय च ऋषिभ्यो वालखिल्येभ्यः केशवाय नमः सदा अगस्तये नारदाय व्यासादिभ्यो नमो नमः अप्सरोभ्यः सोम
पेभ्यो देवेभ्यश्च नमो नमः असोमपेभ्यश्च नमस्तुषितेभ्यो नमः सदा आदित्येभ्यो नमो नित्यं द्वादशभ्यश्च सर्वदा एकादशभ्यो रुद्रेभ्यस्तप
श्विभ्यो नमो नमः नमो नासत्यदस्राभ्यां अश्विभ्यां नित्यमेव हि साध्येभ्यो द्वादशभ्यश्च पौराणेभ्यो नमः सदा एकोनपंचाशतभ्यो मरु
द्भ्यश्च नमो नमः शिल्पाचार्याय देवाय नमस्ते विश्वकर्मणे अष्टभ्यो लोकपालेभ्यो सानुगेभ्यश्च सर्वदा आयुधेभ्यो वाहनेभ्यो चर्मभ्यश्च
नमः सदा आसनेभ्यो दुंदुभीभ्यो देवेभ्यश्च नमः सदा दैत्यराक्षसगंधर्वपिशाचेभ्यश्च नित्यशः पितृभ्यः ससभेदेभ्यः प्रेतेभ्यश्च नमः स
दा सूक्ष्मेभ्यश्च देवेभ्यो भावगम्येभ्य एव च नमस्ते बहुरूपाय विष्णवे परमात्मने अथ किं बहुनोक्तेन मंत्रेणानेन वार्चयेत् प्राङ्मुखो
दङ्मुखो विप्रान् देवानुद्दिश्य पूर्ववत् अथवा किमत्र विस्तरेण ब्राह्मणानेव देवतोद्देशेन पूजयेदित्यर्थः पूर्ववन्मंत्रोक्तक्रमेण अर्च्चैः
पुष्पैश्च वरुम्रमाल्यैः सत्ह स्रकं सत्ह स्रकं संरोमासमर्चयेदित्यर्थः धनधान्यानुविभवैर्दक्षिणाभिश्च सर्वदा इतिहासपुराणानां प्रवक्ष्यं च

द्विजोत्तमान् कालज्ञान्वेदवेदज्ञान् भृत्यान्संबंधिबांधवान् अनेनैव तु मंत्रेणस्वाहांतेनपृथक्पृथक् प्रविष्टायाग्नयेहोमः कर्तव्यः सर्वदृ
सयेवेदविच्चक्षुषीदत्वास्थानेप्राधानिकेसदा प्रतिष्ठायश्चेष्टा वेदवित्वेदोक्तविधिज्ञः मदनरत्नेतुवेदवित्इतिपठित्वा वेदोक्तविधि-
ने॰त व्याख्यातम् चक्षुषीआज्यभागौ प्राधाननिकेस्थाने प्रधानहोमारंभे होमारंभेततःकुर्यान्मंगलालंभनंतरः मदनरत्ने शालशो
भा ततःकुर्यान्मंगलालंभनंततः इतिपठेत् भोजयित्वाद्विजान्सर्वान्सुहृत्संबंधिबांधवान् विशेषेणचभोक्तव्यंकार्यश्चापिमहोत्सवः न
वसंवत्सरारंभः सर्वसिद्धि प्रवर्तकः इतिसंवत्सरारंभविधिः अथअत्रैवविष्णुधर्मोत्तरोक्तंआरोग्यप्रतिपद्व्रतम् पुष्करउवाच संव-
त्सरावसानेतु पंचदश्यामुपोषितः प्रातःप्रतिपदिस्नातःकुर्याद्व्रतमनन्यधीः पूजयेद्भास्करंदेवंवर्णकैःकमलेकृते वर्णकैरक्तश्वेतनी
लपीतादिभिः शुक्लेनगंधमाल्येन चंदनेनसितेनच तथाकुंदुरुधूपेनघृतदीपेनभार्गव कुंदुरुसल्लकीनिर्यासः अपूपैःसैकतैर्दध्नापर
मान्नेणभूरिणा सैकतैःशर्कराविकारैः ओदनेनचभुक्तेनसतालवणसर्पिषा सताउत्तमेन क्षीरेणचफलैःशुक्लैर्बहुब्राह्मणतर्पणैः
पूजयित्वाजगद्धामदिनभागेचतुर्थकम् आहारंप्रथमंकुर्यात्सघृतंमनुजोत्तम सर्वंचमनुजश्रेष्ठघृतहीनंविवर्जयेत् भुक्त्वासकलदे
वान्नमहारंचसमाचरेत् पानीयपानंकुर्वीतब्राह्मणानुमतेपुनः प्रथमंआहारंप्रथमग्रासं सर्वंप्रथमंप्रथमंचआहारं एकमेवग्रासं
भक्षयित्वाऽवशिष्टमन्नंत्यजेत् ब्राह्मणानुमत्याभुजानोपिघृतहीनंनभुंजीत घृतहीनंविवर्जयेदितिनिषेधात् संवत्सरमिदंकृत्वाततःसा
क्षात्त्रयोदश पूजनंदेवदेवस्यतस्मिन्नहनिभार्गव संवत्सरंशुक्लप्रतिपत्सत्रयोदशमितिलिंगदर्शनात् सवस्त्रंसहिरण्यंचततोदद्याद्द्वि
जातये पूजनंपूजोपकारणं प्रतिपदिव्रतेनानेनधर्मज्ञरोगमेवंव्यपोहति आरोग्यमाप्नोतिगतिंतथाग्र्यांयशस्तथाग्र्यंविपुलांश्चभो-

गान् व्रतेनसम्यक्पुरुषोथनारीसंपूजयेद्यस्तुजगत्प्रधानंम् जगत्प्रधानंसूर्यंम् इतिचैत्रशुक्लप्रतिपदिआरोग्यदायकंव्रतम् अस्यामे-
वोक्तंविद्याव्रतं मदनरत्नेविष्णुधर्मे मार्कंडेयउ० अष्टपत्रंतुकमलंविन्यसेद्वर्णकैःशुभैः ब्रह्माद्यांकर्णिकायांतुतस्यसंपूजयेद्विभुम् ऋ-
ग्वेदंपूर्वपत्रेतुयजुर्वेदंतुदक्षिणे पश्चिमेसामवेदंतुउदक्चाथर्वणंतथा आग्नेयेचतथांगानिधर्मशास्त्राणिनैर्ऋते पुराणंचैववायव्येई-
शान्यांन्यायविस्तरम् एवंविन्यस्यधर्मज्ञःसोपवासस्तुपूजयेत् चैत्रशुक्लमथारभ्यसोपवासोजितेंद्रियःसदाप्रतिपदंप्राप्यशुक्लप-
क्षस्ययादव संवत्सरमहाराजशुक्लगंधानुलेपनैः भूषणैःपरमान्नेनधूपदीपैरितंद्रितः संवत्सरांतेगांदद्याद्व्रते चीर्णेनरोत्तमम् इदंव्र-
तंयस्तुकरोतिराजन्नत्सवेदवित्स्याद्बुविधर्मनिष्ठः कृत्वासदाद्वादशवत्सराणिविरिंचिलोकंपुरुषःप्रयाति इतिविद्याप्रतिपद्व्रतम् ॥
अथात्रैवभविष्योक्तंतिलकव्रतं श्रीकृष्णउवाच वसंतेकिंशुकाशोकशोभितेप्रतिपत्तिथौ शुक्लातस्यांप्रकुर्वीतस्नानंनियममाश्रि-
तः नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः नद्यातीरेतडागेवागृहेवातदलाभतः पिष्टान्नतीरेविलिखेवद्वत्सरंपुरुषाकृतिं पिष्टातकःपट-
वासकोगंधः इतिचूर्णविशेषः ततश्चंदनचूर्णेनपुष्पधूपादिनार्चयेत् मासर्तुनामभिपश्चान्नमस्कारैस्तथार्चितैः मासर्तुनामभि
श्चैत्रवसंताद्यैचनामभिः पूजयेद्ब्राह्मणोविद्वान्मंत्रैर्वेदोदितैःशुभैः संवत्सरंपठन्मंत्रंतथावेदोदितंद्विजः नमस्कारेणमंत्रेणशूद्रोपीत्थं
प्रपूजयेत् शूद्रोपीत्यनेनस्त्रीणांपरिग्रहः तासांविषेषभावेवैदिकमंत्राधिकारात् संवत्सरोसिपरिवत्सरोसीत्यादियजुर्वेदप्रसिद्धा
मंत्राः नमस्कारेणमंत्रेणसंवत्सरायतनेनमइत्यादिनाएवमभ्यर्च्यवासोभिःपश्चात्तमभिवेष्टयेत् कालोद्भवैर्मूलफलैर्नैवेद्यैर्मोदका-
दिभिः ततस्तंपूजयेत्सार्थपुरस्कृत्वाकृतांजलिः भगवंस्त्वत्प्रसादेनवर्षक्षेममिहास्तुमे संवत्सरोपसर्गामेविलयंयांत्वशेषतः एवं-

मुक्त्वाऽयथा शक्त्यादत्वाविप्रायदक्षिणां ललाटपट्टेतिलकंकुर्याच्चंदनपंकजम् ततःप्रभृत्यनुदितेतिलकालंकृतंमुखं धार्यंसंवत्सरंयाव
च्छशिनेवनभस्तलम् एवंनरोवानारीवाव्रतमेतत्समाचरेत् सदैवपुरुषव्याघ्रभोगान्भुविभुनक्त्यसौ भूतप्रेतपिशाचाद्यादुर्वारावैरिणो
ग्रहाः निरर्थकाभवंत्येतेतिलकंवीक्ष्यतत्क्षणात् निरर्थकाप्रयोजनशून्याःअनिष्टकरणेअसमर्थाइत्यर्थःअत्रवसंतेप्रतिपत्तिथिः श्रू
क्रांतस्यांप्रकुर्वीतेतिवसंतशक्लाप्रतिपल्लब्धा तयाव्रतमिदंचैत्रेगृहीतंद्विजसंनिधौ इत्यग्रेनेनचैत्रस्यैवेतिविज्ञायतेपूर्वमासीन्महो
पालोनाम्नाशत्रुजयोजयी चित्रलेखेतितस्याभूद्भार्याचातिविभूषणा तयाव्रतमिदंभक्त्यागृहीतंद्विजसंनिधौ वत्सरंपूजयित्वातु-
ध्यात्वादेवंजनार्दनं हंतुंवाक्षेमकामोवासमागच्छतियःपुनः प्रयातिसप्रियंकृत्वादृष्ट्वातुतिलकंनरः सपत्नीहर्षप्रहरावशीकृतमहीत
ला भर्तृहृष्टाप्रहृष्टासासुखमास्तेनिराकुला पावकेनाभिभूतस्तुभर्तापुत्रःसवेदनः शिरोर्तिनासंप्रयातःस्तुहृदांसुखदायकः शिरो
र्तिनाशिरोवेदनायुक्तः धर्मराजपुरींप्राप्तःसर्वतापकरींततः तस्मिन्क्षणेमहाराजधर्मराजस्यकिंकराः तस्याद्वारमनुप्राप्ताःप्रवि
ष्टागृहमंजसा शत्रुंजयंसमानेतुंकालमृत्युःपुरःसराः पार्श्वेस्थितांचित्रलेखांतिलकालंकृताननाम् दृष्ट्वाप्रनष्टसंकल्पाःपराहृत्यगताः
पुनः गतेषुतेषुसनृपःपुत्रेणसहभारत भूभुजांबुभुजेभोगानपूर्वकर्मार्जितान्शुभान् अक्रूरेणसमाख्यातंममपूर्वंयुधिष्ठिर एतत्त्रि
लोक्यतिलकाख्यविभूषितंचपुण्यव्रतंसकलदुष्टहरंपरंच इत्थंसमाचरतियःसमुखंविहृत्यमर्त्यःप्रयातिपदमच्युतमिंदुमौलेः ॥
इतितिलकव्रतं अस्यामेवनवरात्रारंभः तत्रपरयुताग्राह्या अमायुक्तानकर्तव्याप्रतिपच्चंडिकार्चने मुहूर्तमात्राकर्तव्याद्वितीयायां
गुणान्विता अत्रैवप्रपादानमुक्तं अतीतेफाल्गुनेमासिप्राप्तेचैवमहोत्सवे पुण्येन्हिविप्रकथितेप्रपादानंसमारभेत् ततश्चोत्स-

जेयेद्विद्वान्मंत्रेणानेनमानवः प्रपेयंसर्वसामान्यभूतेभ्यःप्रतिपादिता अस्याःप्रदानात्पितरस्तृप्यंतुहिपितामहाः अनिवार्यंततोदेयंज
लंमासचतुष्टयम् प्रपादातुमशक्तेनविशेषाद्धर्ममीप्सुना प्रत्यहंधर्मघटकोवस्त्रसंवेष्टिताननः ब्राह्मणस्यगृहेदेयःशीतामलजलः
शुचिः एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः अस्यप्रदानात्सकलाममसंतुमनोरथाः अनेनविधिनायस्तुधर्मकुंभंप्रयच्छति प्र
पादानफलंसोपिप्राप्नोतीहनसंशयः इतिप्रपादानं अथश्रावणशुक्लप्रतिपदिसोमवारमारभ्याचारप्राप्तंरोटकव्रतम् युधि
ष्ठिरउवाच अथसर्वशिवव्रतेषुपूजाविधिः ममेहजन्मनिसमस्तसौभाग्यप्राप्त्यर्थंधनपुत्रप्राप्तिकामःसार्धमासत्रयात्मकंरोट-
कासोमेश्वरप्रीत्यर्थंबिल्वव्रतंकरिष्ये तत्रसोमेश्वरपूजनम् कार्तिकशुक्लचतुर्दश्यांउद्यापनम् मयाअनुष्ठितस्यसार्धमासत्रया
त्मकबिल्वव्रताख्यस्यकर्मणःसांगतासिध्यर्थंबिल्वरोटकाव्रतोद्यापनंकरिष्ये तंडुलैरष्टदलंकृत्वा तत्रसप्तमातॄल्लोकपालांश्च
पूजयेत् मध्येसोमेश्वरं आयाहिभगवान्शंभो शर्वत्वंगिरिजापते: प्रसन्नोभवदेवेशनमस्तुभ्यंहिशंकर त्रिपुरांतकरंदेवंचंद्र
चूडंमहाद्युतिम् गजचर्मपरीधानंसोममावाहयाम्यहम् आवाहनं बंधूकसंन्निभंदेवंत्रिनेत्रंचंद्रशेखरम् त्रिशूलधारिणंदेवं
चारुहासंसुनिर्मलम् कपालधारिणंदेवंवरदाभयहस्तकम् उमयासहितंशंभुं ध्यायेत्सोमेश्वरंसदा ध्यानं विश्वेश्वरमहादेव
राजराजेश्वरप्रिय आसनंदिव्यमीशानदास्येहंतुभ्यमीश्वर आसनं महादेवमहेशानमहादेवपरात्पर पाद्यंगृहाणमद्दत्तंपा
र्वतीसहितेश्वर पाद्यं त्र्यंबकेशसदाचारजगदादिविधायक अर्घ्यंगृहाणदेवेशसाम्बसर्वार्थदायक अर्घ्यं त्रिपुरांतकदीनार्ति
नाशश्रीकंठशाश्वत गृहाणाचमनीयंचपवित्रोदककल्पितम् आचमनीयं क्षीरमाज्यंदधिमधुःशर्कराचामृतंपयः प्रक

स्थितं माहात्म्येश गृहाणेदं जगत्पते पंचामृतं गंगागोदावरीरेवापयोष्णीयमुनातथा सरस्वत्यादितीर्थानि स्नानार्थं प्रतिगृह्यतां स्ना
नं वस्त्राणिपट्टकूलानिविचित्राणिनवानिच मयानीतानिदेवेशप्रसन्नोभवशंकर वस्त्रं सौवर्णराजतंताम्रंकार्पासस्यतथैवच उप-
वीतंमयादत्तंप्रीत्यर्थंप्रतिगृह्यताम् उपवीतं सर्वेश्वर जगद्वंद्यदिव्यासनसमस्थित गंधंगृहाणदेवेशचंदनंप्रतिगृह्यतां गंधं गंधो
परिशुक्लाक्षतान् अक्षताश्चसुरश्रेष्ठशुभ्राधूताश्चनिर्मलाः मयानिवेदिताभक्त्यागृहाणपरमेश्वर अक्षतान् माल्यादीनि
सुगंधीनि पुष्पाणि वनस्पतीतिधूपं आज्यंचेतिदीपं अपूपानिचपक्वानिमंडकावटकानिच पायसंसूपमन्नंचनैवेद्यंप्रति
गृह्यताम् नैवेद्यं मध्येपानीयं करोद्वर्तनं कूश्मांडमातुलिंगंचनारीकेरफलानिच गृहाणपार्वतीकांतसोमेशः प्रतिगृह्यताम्
फलं पूगीफलमितितांबूलम् हिरण्यगर्भेतिदक्षिणा अग्निर्ज्योतिरविर्ज्योतिर्ज्योतिर्नारायणोविभुः नीराजयामिदेवेशंपंचदी
पैः सुरेश्वरम् नीराजनम् हेतवेजगतामेवसंसारार्णसेतवे प्रभवेसर्वविद्यानांशंभवेगुरुवेनमः नमस्कारः यानिकानिचेति
प्रदक्षिणा हरविश्वाखिलाधारनिराधारनिराश्रय पुष्पांजलिंगृहाणेशसोमेश्वरनमोस्तुते पुष्पांजलिं बिल्वपत्रंसुवर्णेनत्रिशू
लाकारमेवच मयार्पितंतुतच्छंभोबिल्वपत्रंगृहाणमे बिल्वपत्रार्पणं अथकथा युधिष्ठिरउवाच हृषीकेशमयाकारिव्रतदा
नान्यनेकधा श्रोतुमिच्छामिदेवेशव्रतंसंपत्तिदायकम् येनव्रतेनदेवेशपुनाराज्यंलभामहे तथाव्रतंतुमेब्रूहियादवानांकृ
पाकर भगवानुवाच वदामिशुभदंपार्थलक्ष्मीवृद्धिप्रदायकम् धर्मार्थकाममोक्षाणांनिदानंपरमव्रतम् युधिष्ठिर उवा
येनचादौपुराचीर्णंमर्त्यैकेनप्रकाशितम् विधिनानेनकर्तव्यंतत्सर्वंब्रूहिकेशव भगवानुवाच आसीत्सौम्यपुरेराजासोम

नाम्नेति विश्रुतः क्षात्रधर्मेति कुशलः प्रजापालन तत्परः तस्य राज्ये प्रजाः सौम्याः सर्वधर्मपरायणाः तस्य राजस्तु चामात्यः सोपि सौम्यः
शुभावहः तस्मिन्सरस्तु सौम्यं च सदा सौम्यांबुना प्लुतम् अभूत्सोमेश्वरो देवो लोकानां पालनाय च तत्राभवत्सोमशर्मा ब्राह्मणो
वेदपारगः वेदार्थविच्छास्त्रविच्च शुद्धाचारो तिदुर्लभः तस्य भार्या शुभाचारा पुरंध्री चारुभाषिणी भर्तृशुश्रूषणरता कल्याणी
प्रियवादिनी सो करोच्च कुटुंबार्थं कणयज्ञं दिने दिने न लभ्यते धिकं तेन धनं धान्यं तथैव च अतीव खेदखिन्नस्तु विचार्य च पुनः
पुनः किं करोमि क्व गच्छामि सभार्योहं महीतले केन कर्मविपाकेन कीदृशं लभ्यते फलम् अथवा र्थकरं धर्मं देवपूजादिकं शुभम् स
सोमेशो करोद्भक्तिं दैन्यनाशाय पार्थिव कदाचिदतिखिन्नः सन् स जगाम सरोवरम् अभूत्सोमेशः प्रत्यक्षः स्तस्मिन्सौम्यसरोवरे वृ
द्ध ब्राह्मणरूपेण कृपया परया युतः तेनासौ दुःखितो दृष्टः सोमशर्मा द्विजोत्तमः किमर्थं क्रियते दुःखं त्वया विद्यावरेण च किंचिद्व
त्तं नास्ति पूर्वं तदर्थमीदृशी दशा तस्य तद्वचनं श्रुत्वा ब्राह्मणस्त्विदमब्रवीत् भो भो विप्रवरः श्रेष्ठ व्रतमेकं वदामि ते तेनादिष्टव्रतं चे
दं पूर्णसंपत्तिदायकम् सोमशर्मोउ० भो भो ब्राह्मणशार्दूल व्रतं तद्वद मे प्रभो यस्यानुष्ठानमात्रेण लक्ष्मीवृद्धिः प्रजायते कस्मिन्मा
से च कर्तव्यं किं दानं कस्य भोजनम् धनलाभाय कर्तव्यं कस्य देवस्य पूजनम् कैस्तु पुष्पैः प्रकर्तव्या पूजा चारुतरा शुभा नैवेद्यं कीदृ
शं देयं अर्घ्यं कैस्तु फलैर्भवेत् यदि तुष्टोसि विप्रेंद्र तत्सर्वं ब्रूहि मे प्रभो ब्राह्मणउ० साधु त्वया विप्र दृष्टं व्रतं वृद्धिप्रदायकम् वि
धानं तस्य वक्ष्यामि सर्वसिद्धिप्रदायकम् श्रावणे च सिते पक्षे प्रथमे सोमवासरे प्रकर्तव्यं व्रतं विप्र शुभं नियमपूर्वकं सार्धमास
त्रयं विप्र कर्तव्यं विधिपूर्वकम् बिल्वपत्रैरखंडैश्च पूजनं च दिने दिने पंचसप्तत्रिभिश्चैव पूजनं विधिपूर्वकम् परिपूर्णं तु कर्तव्यं चतु

दश्यांतुकार्तिके व्रतारंभेतुकर्तव्योनियमस्तुविचक्षणैः अद्यारंभेव्रतंदेवरोटकाख्यंमनोहरम् करोमिपरयाभक्त्यापाहिमांजगतां
गुरो दिनेदिनेप्रकर्तव्यापूजादेवस्यशूलिनः कथांविनानभोक्तव्यंमत्यहंचपुनःपुनः उपोषणंचतुर्दश्यांकर्तव्यंविधिपूर्वकम् शुचि
र्भूत्वादिनेतस्मिन्कर्तव्यंरोटकाव्रतम् चतुर्दश्यांनिराहारःस्थित्वाचैवपरेहनि भोक्ष्यामिपार्वतीनाथसर्वसिद्धिप्रदायक उपोष
णमंत्रः कृत्वामाध्यान्हिकंकर्मस्थापयेदव्रणंघटम् पंचरत्नसमायुक्तंपुष्पादिभिरलंकृतम् वेष्टितंश्वेतवस्त्रेणसर्वाभरणभूषि
तम् तस्योपरिन्यसेत्पात्रंताम्रंचैवाथवैणवम् विरच्याष्टदलंतत्रपूजयेद्रुमयाशिवम् कृत्वासायान्हिकंकर्मनित्यपूजादिकंतथा
तस्यांरात्रौतुकर्तव्यापूजादेवस्यशूलिनः शुभेचैतत्प्रदेशेतुकर्तव्यंपुष्पमंडपम् पूज्यस्तत्रशिवोदेवोधर्मकामार्थसिद्धये क्षीरादिस्ना
पनंकुर्याच्चंदनादिविलेपनम् कृष्णागरुचकर्पूरमृगनाभिविमिश्रितम् पुष्पैर्नानाविधैरम्यैःपूज्योदेवोमहेश्वरः धनकामेनकर्तव्या
पूजादेवस्यशूलिनः बिल्वपत्रैरखंडैश्चतुलसीपत्रकैस्तथा नीलोत्पलैश्चारुतरैःकर्तव्यापुण्यवर्धिनी कल्हारकमलैश्चैवकुमुदैश्चाति
शोभनैः चंपकैर्मालतीपुष्पैर्मुचकुंदैःशुभावहैः मंदारैश्चार्कपुष्पैश्चपूजार्हैश्चशिवप्रियैः अन्यैर्नानाविधैःपुष्पैर्ऋतुकालोद्भवैस्तथा
धूपैर्नानाविधैःपार्थपुण्यवर्धनसाधकैः दीपास्तत्रप्रकर्तव्याघृतपूर्णामनोरमाः लेह्यपेयैस्तथाभोज्यैःस्वादुभिश्चशिवप्रियैः अन्यै
र्नानाविधैरम्यैस्तथाविप्रवरैस्तम् नैवेद्यंतुप्रकर्तव्यंरोटकानांविशेषतः कर्तव्यारोटकाःपंचपुरुषाहारमानकाः शालितंडुलपिष्टे
नसम्यभागेनवापुनः द्वौतुविप्रायदातव्यौद्वाभ्यांवैभोजनंशुभम् एकोदेवायदातव्योनैवेद्यार्थंसदाबुधैः महेशायचदातव्यंतांबू
लंसुमनोहरम् अर्घ्यदानंप्रकर्तव्यंधनसंपत्तिदायकम् पनसंनारिकेरंचपूगीजंबीरपूरकम् खर्जूरीचशुभाद्राक्षामातुलिंगंम

५

नोहरम् अक्षोडानिचदाडिंबंनारिंगानिशुभानिच कर्कटीचशुभाप्रोक्ताअर्घ्यदानेमनोहरा अन्यैर्नानाविधैःपार्थऋतुकालोद्भवैः
शुभैः यःकरोत्यर्घ्यदानंचतस्यपुण्यंवदाम्यहम् इलांचसागरैर्युक्तांरक्तैश्चान्यैर्मनोहरैः दत्वायत्फलमाप्नोतितेनतत्फलमाप्नुया
त् अनेनैवविधानेनतत्कार्यंव्रतसिद्धये पंचवर्षंतुकर्तव्यमतुलंधनमीप्सुभिः पश्चादुद्यापनंकुर्याद्रोटकाख्यव्रतस्यच उद्यापनेतु
कर्तव्योहेमरूप्यैस्तुरोटकौ बिल्वपत्रंसुवर्णस्यसोमेश प्रीतयेशुभम् रात्रौजागरणं कुर्यात्पूज्योदेवोमहेश्वरः पूर्णेनविधिनावि
प्रकर्तव्यंचशिवप्रियम् दारिद्र्यनाशनंपुण्यंलक्ष्मीवृद्धिप्रदायकम् कर्तव्यंविधिवद्भक्त्याश्रोतव्यं तुकथानकम् गीतवाद्यादिसहितंकु
र्याज्जागरणंनिशि ततःप्राभातेविमलेस्नात्वापूजांसमापयेत् पूर्वोक्तविधिनातेनकर्तव्यंशिवपूजनम् तत्सर्वंदापयेद्भक्त्याब्रा
ह्मणायकुटुंबिने विप्रायवेदविदुषेवस्त्रालंकारभोजनैः गुरुंसपत्निकंचैवततोभक्त्याक्षमापयेत् यन्मयाकृतसंकल्पोव्रतेस्मि
ब्राह्मणप्रभो तत्सर्वंपूर्णतांयातुयुष्मद्दृष्ट्याविलोकनात् एवंयःकुरुतेपार्थशास्त्रोक्तंरोटकव्रतम् अनायासेनसिध्यंतिह्यद्याः
सर्वेमनोरथाः सभर्तृकामहानारीकरोतिविधिवद्व्रतम् पतिव्रतासकल्याणीजायतेनात्रसंशयः मयाअनुष्ठित तस्यसार्धेमा
सत्रयात्मकस्य बिल्वव्रताख्यस्यकर्मणःसांगतासिद्ध्यर्थेब्राह्मणायएतद्दायनप्रदानंकरिष्ये ब्राह्मणंसंपूज्य विप्रायवेद
विदुषेश्रोत्रियायकुटुंबिने नरकोत्तारणार्थायशंकरःप्रियतांनमः इतिदानमंत्रः इतिशिवपुराणेबिल्वरोटकसोमनाथव्र
तकथोद्यापनम् अथाश्विनशुक्लप्रतिपदिदौहित्रेणमातामहश्राद्धंकार्यम् तदुक्तंहेमाद्रौ जातमात्रोपिदौहित्रोजीवत्यपिचमातु
ले कुर्यान्मातामहश्राद्धंप्रतिपद्याश्विनेसिते इयंचसंगवव्यापिनीग्राह्येतिनिर्णयदीपेउक्तम् प्रतिपद्याश्विनेशुक्लेदौहित्रस्तै

स्वेकपार्वणम् श्राद्धंमातामहंकुर्यात्सपितासंगवे सति जातमात्रोपिदौहित्रोजीवत्यपिहिमातुले प्रातःसंगवयोर्मध्येयाश्वयुक्प्र
तिपद्भवेत् अत्रपिताइतिविशेषणात् जीवत्पितृकएवाधिकारी अतएवपिंडरहितंकुर्यात् मुंडनंपिंडदानंचप्रेतकर्मचसर्वशः
नजीवत्पितृकःकुर्याद्गुर्विणीपतिरेवच अथैवनवरात्रारंभः तत्रपरविद्धाग्राह्या तदुक्तंगोविंदार्णवेमार्कंडेयपुराणदेवीपुरा
णयोः पूर्वविद्धातुयाशुक्लाभवेत्प्रतिपदाश्विनी नवरात्रव्रतंतस्यांनकार्यंशुभमिच्छता देशभंगोभवेत्तत्रदुर्भिक्षंचोपजायते
नंदायांदर्शयुक्तायांयत्रस्यान्मंत्रपूजनम् तथादेवीपुराणे नदर्शकलयायुक्ताप्रतिपच्चंडिकार्चने उदयेद्विमुहूर्तापिग्राह्यासो
दयकारिणी यदापूर्वदिनेशुद्धाभूत्वापरदिनेपिच वर्धतेचतदाभूत्वासंपूर्णत्वादमांविना यानितुद्वितीयायोगनिषेधपराणिवच-
नानिश्रुतानितानितानिश्राद्धादिपराण्येव परदिनेप्रतिपदोसत्वेतुअमायुक्तापिग्राह्या अमायुक्ताप्रकर्तव्येतिनृसिंहप्रसादोदा
हृतवचनान्यपिएतद्विषयाण्येव अत्रदेवीपूजाप्राधान्यप्रधानं अष्टम्यांचनवम्यांचजगन्मातरमंबिकाम् पूजयित्वाश्विनेमा-
सिविशोकोजायतेनरः यतीचब्रह्मचारीत्वविधवाचरजस्वला नवरात्रंचोपवासमेकभुक्तमयाचितम् चित्रावैधृतियुक्ताचेत्प्र-
तिपच्चंडिकार्चने तयोरंतेविधातव्यंकलशस्थापनंध्रुवम् प्रतिपद्याश्विनेमासिभवेद्वैधृतिचित्रयोः आद्यपादौपरित्यज्य प्रारभेन्न
वरात्रकम् चित्रावैधृतिसंयुक्ताप्रतिपत्तुभवेन्नृप वैधृत्यावापियुक्तास्यात्तदामध्यंदिनेरवौ त्याज्याअंशास्त्रयस्त्वाद्यास्तुरीयांशेतु
पूजनम् नवरात्रेस्थापनंकार्यम् नचकुंभाभिषेचनम् भास्करोदयमारभ्ययावत्तुदशनाडिकाः प्रातःकालइतिप्रोक्तःस्थाप
नारोपणादिषु आद्याःषोडशनाडीस्तुत्यक्त्वायःकुरुतेनरः कलशस्थापनंतत्रअरिष्टंजायतेध्रुवम् द्वंद्वौसमासिरष्टम्यांन्हासेन-

प्रतिपन्निशि प्रारंभोनवचंड्यास्तुनवरात्रमतोर्थवत् तिथिवृद्धौतिथिन्हासे नवरात्रमथार्थकम् घटस्थापनविधिः प्रतिपदिप्रातर
भ्यंगंकृत्वादेशकालौसंकीर्त्यममेहजन्मनिदुर्गाप्रीतिद्वारासर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनपुत्रपौत्राद्यनवच्छिन्नसंततिवृद्धिस्थिरल
क्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिध्यर्थंशारदनवरात्रप्रतिपदिविहितंकलशस्थापनंदुर्गापूजांकुमारिपूजादिकरिष्ये इतिसंक
ल्प्य तदंगगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंऋत्विग्वरणंचकरिष्ये ततोमहीद्यौरितिभूमिंस्पृष्ट्वा ऊषधयःसं
वदंतेइतियवान्निक्षिप्यआकलशेष्वितिकुंभं संस्थाप्य इमंमेगंगेतिजलेनापूर्य गंधद्वारामितिगंधं ओषधयइतिसर्वौषधीः कां-
डात्कांडादितिदूर्वाः अश्वत्थेवइतिपंचपल्लवान् स्योनापृथिवीतिसप्तमृदः याःफलिनीरितिफलम् सहिरत्नानीतिपंचरत्नानिहिरण्यं
क्षिप्त्वा युवासुवासाइतिवस्त्रेणसूत्रेणवावेष्ट्य पूर्णादर्वीतिपूर्णपात्रंकलशोपरिनिधाय तत्रवरुणंचसंपूज्य जीर्णायांनूतनायांवाप्रतिमा
यांदुर्गामावाह्यपूजयेत् नूतनमूर्तिकरणेग्न्युत्तारणंकुर्यात् अथपूजा आगच्छवरदेदेविदैत्यदर्पनिषूदनि पूजांगृहाणसुमुखीनम-
स्तेशंकरप्रिये सर्वतीर्थमयंवारिसर्वदेवसमन्वितम् इमंघटंसमागच्छतिष्ठदेविगणैःसह दुर्गेदेविसमागच्छसांनिध्यमिहकल्पय ब
लिंपूजांगृहाणत्वमष्टभिःशक्तिभिःसह इतिआवाह्य शंखचक्रगदाहस्तेशुभ्रवर्णेशुभासने ममदेविवरंदेहिसर्वैश्वर्यप्रदायिनि स
हस्रशीर्षा॰ हिरण्यवर्णां॰ इत्यावाहनं॰ नानाप्रभासमाकीर्णंनानावर्णविचित्रितम् आसनंकल्पितंदेविप्रीत्यर्थंप्रतिगृह्यताम् पुरुष
ए॰ तांमआवह॰ इत्यासनं॰ गंगादिसर्वतीर्थेभ्यआनीतंतोयमुत्तमम् पाद्यंतेहंप्रदास्यामिगृहाणपरमेश्वरि एतावा॰ अश्वपूर्वां॰ पा-
द्यं॰ अक्षतागंधसंयुक्तंफलपुष्पयुतंतव अर्घ्यंगृहाणदत्तंमेप्रसीदपरमेश्वरि त्रिपादूर्ध्व॰ कांसोस्मितांहिरण्य॰ अर्घ्यंस॰ गंगागो

दावरीचैवयमुनाचसरस्वती मयाआचमनीयार्थ मानीतंतोयमुत्तमम् तस्मादिराळ· चंद्रांप्रभासां· आचमनी· पंचामृतंमयानीतंप
योदधिसमन्वितम् घृतंमधुशर्करयाप्रीत्यर्थंप्रतिगृह्यताम् श्रुतिमंत्रः आप्यायस्वेतिऽदधिक्राण्वेति घृतंमिमिक्षेति मधुवाताऋचः
४ स्वादुःपवस्वेति पंचभिर्मंत्रैःपंचामृतस्नानम् ज्ञानमूर्तेभद्रकालिदिव्यमूर्तेसुरेश्वरि स्नानंगृहाणदेवित्वंनारायणिनमोस्तुते यत्पु
रुषेण· आदित्यवर्णे· स्नानं· सूक्ष्मतंतुविनिर्मितंनानावर्णविचित्रितम् वस्त्रंगृहाणमेदेविप्रीत्यर्थंप्रतिगृह्यताम् तस्माद्यज्ञात्सर्व· क्षु
त्पिपासा· उत्तरीयं· अलंकारान्महादिव्यान्नानारत्नविनिर्मितान् गृहाणदेविदेवित्वंप्रसीदपरमेश्वरि अलंकारान्सम· मलयाद्रिस
मुद्भूतंकर्पूरागरुवासितम् मयानिवेदितंभक्त्याचंदनंप्रतिगृह्यताम् तस्माद्यज्ञात्सर्वहु· गंधद्वारा·गंधं· अक्षताश्चसुरश्रेष्ठ कुंकु
मेनसमन्विताः मयानिवेदिताभक्त्याप्रीत्यर्थंप्रतिगृह्यताम् अक्षतान् मंदारपारिजाताश्चपाटलीकेतकीतथा मारुतंमोगरंचैवशत
पत्राणिचंपकम् तस्मादश्वा· मनसःकाममा· पुष्पाणि· अहिरिवभोगैः ऋचः परिमलद्रव्याणि अथांगपूजा दुर्गायैनमः पादौ
पूजयामि महाकाल्यैनमः गुल्फौ· मंगलायै· जानुनी· कात्यायिन्यै· ऊरूपू· भद्रकाल्यै· कटिं· कमलायै· नाभिं· शिवायै· उदरं· क्षमायै हृद
यं· स्कंदायै· कंठंपू· महिषासुरमर्दिन्यै· नेत्रे उमायै· शिरःपू· विंध्यवासिन्यै· सर्वांगंपूजयामि दशांगंगुग्गुलंधूपंचंदनागरुसंयुतम् म
यानिवेदितंभक्त्यागृहाणपरमेश्वरि यत्पुरुषंव्यद· कर्दमेनप्रजाभू· धूपं· आज्यंचवर्तिसंयुक्तंवन्हिनायोजितंमया दीपंगृहाण
देवित्वंप्रीत्यर्थंप्रतिगृह्यतां ब्राह्मणोस्य· आपस्रजंतु· दीपं· अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितम् भक्ष्यभोज्यसमायुक्तंप्रीत्यर्थं
प्रतिगृह्यताम् चंद्रमामनसो· आर्द्रांपुष्करिणीं· नैवेद्यं· आचमनं· मलयाचलसंभूतंकस्तूर्याचसमन्वितम् करोद्वर्तनकंदेविगृ

हाणपरमेश्वरि करोद्वर्तनं॰ इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि नाभ्या॰आर्द्रांयः॰करिणीं॰ फलं पूर्गीफ
लंमहद्दिव्यंनागवल्यादलैर्युतम् कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यताम् तांबूलं हिरण्यगर्भेतिदक्षिणां यज्ञेनयज्ञ॰यः॰शुचिः॰प्रयतो
भू॰ मंत्रपुष्पांजलिं॰ अश्वदायैगोदायैधनदायैइत्यादिप्रार्थयेत् श्रियेजातः नीराजनं श्रीसूक्तंसंपूर्णपुष्पांजलिः मंत्रहीनंक्रियाहीनंभ
क्तिहीनंसुरेश्वरि यत्पूजितंमयादेविपरिपूर्णंतदस्तुमे माहिषघ्निमहामायेचामुंडेमुंडमालिनि यशोदेहिधनंदेहिसर्वान्कामांश्चदेहि
मे नमस्कारः ततोऋत्विग्वरणं अथकुमारीपूजा एकवर्षातुयाकन्यापूजार्थेतांविवर्जयेत् गंधपुष्पफलादीनांप्रीतिस्तस्यान
विद्यते मंत्राक्षरमयींलक्ष्मींमातृणांरूपधारिणीं नवदुर्गात्मिकांसाक्षात्कन्यामावाहयाम्यहम् द्विवर्षकन्यामारभ्यदशवर्षात॰
विग्रहा पूजयेत्सर्वकार्येषुयथाविध्युक्तमार्गतः कुमारिकाद्विवर्षातुत्रिवर्षातुत्रिमूर्तिका चतुर्वर्षातुकल्याणीपंचवर्षातुरोहिणी षड्वर्षा
तुकालीस्यात्सप्तवर्षातुचंडिकाअष्टवर्षाशांभवीचदुर्गाचनवमेस्मृता दशवर्षासुभद्रेतिनामतःपरिपूजयेत् प्रातःकालेविशेषेणस्नात्वाभ्यं
गसमाहितः आवाहयेत्ततःकन्यांमंत्रैरेभिः पृथक्पृथक् जगत्पूज्येजगद्वंद्येसर्वशक्तिस्वरूपिणी पूजांगृहाणकौमारीजगन्मातर्नमोस्तुते
प्रतिपदमारभ्यदशमीपर्यंतंपूजयेत् एवमग्रेपि त्रिपुरांत्रिगुणांधारांत्रिमार्गज्ञानरूपिणीं त्रैलोक्यवंदितांदेवींत्रिमूर्तिंपूजयाम्यहम्
द्वितीयां कलात्मिकांकलातीतांकारुण्यहृदयांशिवाम् कल्याणजननींनित्यांकल्याणींपूजयाम्यहम् तृतीयां अणिमादिगुणाधारां
आकाराद्यक्षरात्मिकाम् अनंतशक्तिभेदांतांरोहिणींपूजयाम्यहम् चतुर्थी कामचारींकामरात्रिंकालचक्रस्वरूपिणीम् कामदांकरुणा
धारांकालिकांपूजयाम्यहम् पंचमीं उग्रद्वारांचोग्ररूपांदुष्टासुरनिबर्हिणीं चार्वंगींचंडिकांलोकेपूजितांपूजयाम्यहं षष्ठीम् स

दानंदकरीं शांतां सर्वदेवनमस्कृताम् सर्वभूतात्मिकां लक्ष्मीं शांभवीं पूजयाम्यहम् सप्तम्यां दुर्गमे दुस्तरे युद्धे भयदुःखविनाशिनीम् पूजयामि स
दा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् अष्टमीं सुंदरीं स्वर्णवर्णाभां सर्वसौभाग्यदायिनीं सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् नवम्यां इति कु
मारीपूजनम् अष्टरात्रेन दोषोयं नवरात्रं तिथिक्षये सूतके पूजनं प्रोक्तं जपदानं विशेषतः देवीमुद्दिश्य कर्तव्यं तत्र दोषो न विद्यते रजस्वलां त
थाशौचे ब्राह्मणैश्च सुपूजयेत् गंधालंकारतांबूलपुष्पमालानुलेपनम् उपवासं न दुष्यंति दंतधावनमंजनम् इति आश्विनशुक्लप्रतिप
त्कृत्यम् अथ कार्तिकशुक्लप्रतिपत् सा पूर्वा ग्राह्या पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् वत्सरादौ वसंतादौ बलिराज्ये तथैव च तैला
भ्यंगमकुर्वाणो नरकं प्रतिपद्यते प्रातर्गोवर्धनः पूज्यो द्यूतं चापि समाचरेत् पूजनीयास्तथा गावस्त्याज्यं दोहनमंजसा अथ कथा ॥
वालखिल्या ऊचुः प्रतिपद्युदये भ्यंगं कृत्वा नीराजनं ततः सुवेषः सत्कथा गीतैर्दानैश्च दिवसं नयेत् शंकरस्तु पुरा द्यूतं ससर्ज सुमनो
हरम् कार्तिके शुक्लपक्षे तु प्रथमे हनि सत्यवत् प्रसुवाच वचश्चेदं देवीं प्रति सदा शिवः कालक्षेपाय केषांचित् केषांचिद्धनहेतवे केषांचि
द्धननाशाय पश्य द्यूतं कृतं मया तस्य लं कौतुकं पश्य भुवनं लापयाम्यहम् उद्यस्थं क्रीडितं ताभ्यां भवान्या च जितं तदा पुनर्द्वितीयं भुवनं
लापितं निर्जितं तया पुनस्तृतीयं भुवनं लापितं निर्जितं तया पुनर्वृषं पुनश्चर्म पुनः पन्नगबंधनम् शशिलेखां डमरुकं वृषभं चाप्यजीज
यत् निर्गतस्तु हरो गेहाच्चीरवल्कलधारकः गंगातीरे समागत्य तस्थौ चिंतासमन्वितः तस्मिन्क्षणे कार्तिकेयः खेलितुं च गतः क्वचि
त् गंगातीरा द्ययौ गेहमपश्यन्नथ शंकरम् इष्टं क्रुद्धं विरक्तं च वननाम चरणो पितुः तेनापि मूर्ध्न्याघ्रातः पुत्र याहि गृहं सुखम् त
व मात्रा जितश्चाहं गच्छामि गहनं वनम् स्कंद उवाच कथं मात्रा जितो देवो वनं कस्माच्च गच्छसि अहमप्यागमिष्यामि त्वत्पादौ से

८

वयाम्यहम् शिवउ॰ विजित्यतवमात्रातुक्षणंतस्थेयमत्रवै ममलोकेतथेत्युक्त्वाक्वचिद्गच्छाम्यहंततः स्कंदउवाच मागच्छत्वंमहादेवद्यूतमार्गंमदर्शय ॥
आनीयतेमयाजित्वासर्वंतवधनादिकम् शिवेनापितथेत्युक्त्वाद्यूतमार्गःप्रदर्शितः स्कंदोपिगृहमागत्यपार्वतींवाक्यमब्रवीत् स्कंदउवाच देविदेवो
गतःक्वासौवृषभोनैवसंस्थितः शीर्षेचनविधुःकस्मान्मातःसत्यंवदाद्यमे देव्युवा॰ स्वयमेवहृतंद्यूतंस्वयमेवपराजितः स्वयमेवजितःक्रोधात्पृ
थ्व्यतांसवकथंमया स्कंदउवा॰ मयासहक्रिडितव्यंकथंतात्क्रीडनंत्विति देव्यक्रीडत्तेनसार्द्धंततःस्कंदेननिर्जितं मयूरेणवृषस्तस्याःशक्त्यापन्नगबंध
नम् वृषणेंदुंततोर्धांगंतत्सर्वंतेननिर्जितं कौपीनान्निर्जितंचर्मगृहीत्वानदुपाययौगंगातीरेयत्रशिवस्तत्रागत्यन्यवेदयत् ततोदेवीसमीपेतु-
विघ्नराजःसमाययौ किमर्थंम्लानवदनादेविजातासितद्वद देव्युवाच मयाजितोमहादेवःसतुगेहाद्विनिर्गतःआयास्यतिवृषाद्यर्थमिति
संचिंत्यसंस्थितं तवभ्रात्रातुतज्जित्वासर्वंतस्मैनिवेदितं नायास्यत्यधुनादेवइतिचिंतापराम्यहम् गणेशउ॰ देविक्षययमेद्यूतंजेष्यामिभ्रातरं
हरम् आनयिष्यामिसामग्रींयद्यहंस्यात्कृतस्तव सगृहीत्वापाशयुग्मंयद्यहंस्यात्कृतस्तव इतिपुत्रवचःश्रुत्वातस्मैद्यूतमशिक्षयत् हस्वाद्दस्वायत्र
देवःस्कंदोयत्रव्यवस्थितः गणेशउ॰ मयानीताविमौपाशौसारिकानाद्यमेवच क्रीडत्वंतुमयासार्द्धंदेवस्याग्रेममाग्रज इतिभ्रातृवचंश्रुत्वाउभा
भ्यांक्रीडितंतदा मूषकेनबलीवर्दोमयूरंचाप्यजीजयत् शिवस्यसर्वविषयंस्कंदस्यचतथैवच गृहीत्वासतुविघ्नेशस्तत्कालंपार्वतींययौ पार्वत्य
पिचसंतुष्टागणेशंवाक्यमब्रवीत् सम्यक्कृतंत्वयापुत्रनानीतोसौमहेश्वरःसामदानादिकंकृत्वाआनयात्रमहेश्वरम् तथेत्युक्त्वागणेशोसौसमा
रुह्यचमूषकम् त्वरितंचाययौतत्रगृहेनेतुंमहेश्वरम् इश्वरस्तुसमुत्थायहरिद्वारंसमागतः नारदरितद्वृत्तांतोविष्णुस्तत्र-
समागतः विष्णुरुवाच त्र्यक्षांविद्यांकुरुशिव एकाक्षोहंभवाम्यहम् एकश्चासावक्षःपाशकइतिविग्रहेपिपरिनिष्टितरूप-

त्वात्काणोभवेतिशब्दछलम् रावणेनतथेत्युक्तंकाणोभवजनार्दन विष्णुरुवाच अंतुवत्पश्यसेमांत्वंतस्मादांतुर्भविष्यसि नारदउवा॰
देवसिद्धंमहत्कार्यमायातिसगणेश्वरः ज्ञातुमत्रभवद्वृत्तंमूषकस्तस्यधर्षितां इतिश्रुत्वानारदस्यवचनंरावणोग्रतः कुर्वन्मार्जारवच्छब्दं
मूषकोसौपलायितः मूषकंत्यज्यगणपःशनैःशनैरुपाययौ जातोविष्णुःपाशइतिदूरतस्तद्विलोकितम् मणिपत्यमहादेवं विनया-
नतकंधरः गणेशउवाच आगम्यतांदेवगेहंदेवीमानपुरःसरम् यदिनायासिगेहेत्वंप्राणास्त्यतिचांबिका त्वय्यागतेमयासर्वं
कार्यमेतदुपायनम् महादेवउवाच एषाव्यक्षामयाविद्याऽधुनागणपनिर्मिता अनयाक्रीडितेदेवीआगमिष्येगृहंतदा गणेशउवा॰
सर्वथैवक्रीडितव्यंदेव्यानास्त्यत्रसंशयः आगम्यतांगृहंदेवंभ्रातरंयाहिमाव्रज इतितस्यवचश्रुत्वाईश्वरःसगणोययौ नारदोपिगत
स्तत्रमहौत्सुरपिचागतः उपविष्टास्तकैलासेदेवास्तत्रसमागताः हस्त्वादेवींप्रहस्यादौमहेशोवाक्यमब्रवीत् व्यक्षविद्यामहादेविगणाद्वारे
विनिर्मिता अनयाजयसेत्वंचतदात्वंसत्यभाषिणी देव्युवाच हृषाद्यतवसामग्रीमयेयंलापिताशिव त्वयाकिंलाप्य तेब्रूहिदर्शयस्व
दसंदोगताः इतिश्रुत्वावचस्तस्याःप्रेक्षताधोमुखंहरः तस्मिन्क्षणेनारदेनस्वकौपीनंसमर्पितम् वीणादंडश्चोपवीतमनेनेसितामिति
सदाशिवःप्रसन्नोभूत्क्रीडनंसमचक्रतुः यद्यद्याचयनेरुद्रःस्तथाविष्णुःप्रजायते यद्यद्याचयतेदेवीविपरीतापतत्यसौ स्वकीयाःभ
रणाद्यंचमहादेवेननिर्जितम् स्कंदालंकारिकंसर्वंपुनरामंहरेणच ततोगणेशःप्रोवाचवाक्यंसदसिगर्वितः नक्रीडितव्यंहेमातःपा
शोलक्ष्मीपतिःस्वयम् कृतोहरेणसर्वस्वंतेहरिष्यतिमत्पिता इतिपुत्रवचश्रुत्वापार्वतीक्रोधमूर्छिता तथाविधायमालोक्यरावणो
वाक्यमब्रवीत् रावणउवाच पापिष्टेनाद्यशमोस्मिदुर्दुरूहेनविष्णुना अधर्मोयंन्नकर्तव्यइत्युक्तेतेभयायतः देव्युवाच सर्वा

त्रशपिष्येवत्साहंधूर्तानेतान्महाबलान् सामर्थ्यंपश्यमेपुत्रधर्मत्याग फलंतथा देवयस्मादबलयाकपटंचकृतंत्वया तस्मात्सदास्तुतेमूर्धा
गंगाभारप्रपीडितः इतस्ततःकुचेष्टांत्वंयतःशिक्षयसेमुने स्वप्नेपितेसुखंस्त्रीणांनकदापिभविष्यति यतःकृत्वाबलयासहमायात्वयाह
रे एषवैरीरावणोयंतवभार्यांनयिष्यति एषवैरीभवितायःअयंपुनस्तवभार्यांनयिष्यतिसंबंधद्द्यादेतदिदंप्रयोगोदुष्टः हिमामांमातरंपु
त्रबालकत्वंत्वयाकृतम् अतस्त्वंनयुवावृद्धोबालएवभविष्यसि गणेशउवाच अनेनचौतुरूपेणमूषकोयंपलायितः मध्येमार्गेकृतंविघ्नंश
पैनंराक्षसाधमम् देव्युवाच यस्माद्विघ्नंत्वयादुष्टकृतंमद्बालकस्यतु तस्मादयंतववैरिपुर्विष्णुस्त्वांघातयिष्यति इतिदेव्यावचःश्रुत्वास
र्वेसंक्रुद्धमानसाः देवीशापेमनश्चक्रुर्नारदोवाक्यमब्रवीत् नारदउवाच कोपंकुर्वं तुमादेवानेयंशप्याकदाचन सर्वेषामादिमा
येयंयथायोग्यफलप्रदा नायंशापइमादेव्यःस्मर्तव्यास्तुविचक्षणैः गंगासदातिष्ठतिरुद्रमस्तकेबलाद्रमांवानयतुक्षपाचरःजाया
हरःस्यायथयथोचितामूर्तिश्चानंगतृष्णारहितःकुमारः अहंभ्रमामिधरिणींनस्थातव्यंतपोधनैः सम्यक्कदेवित्वयाप्रोक्तंशृणिवदानींवचो
मम सर्वक्रोधापनुत्त्यर्थंननर्तमुनिपुंगवः कक्षानादंचकारोच्चैर्हाहाहीहीनिचाब्रवीत् तस्यचेष्टांविलोक्याथसर्वेहर्षमवाप्नुयुः देव्यु॰ भो
भोविदूषकश्रेष्ठकृतकृत्योसिनारद विदूषकःविनोदकृत् वरंवरयभद्रंतेयद्यन्मनसिरोचते नारदउ॰ याचयंतुवरंसर्वेकोवाकिंयाचयिष्य
ति सर्वेतेयाचयिष्यंतियथाश्रेष्ठंब्रुवंतुनत् शिवउ॰ सर्वेसंसम्यनादेविजितंयद्वृषभादिकं तन्मयातुद्यूतशतैर्नयाह्यंजगदंबिके देव्युवाच
मास्तुत्वयासमंनाथस्वप्नेपिममचांतरं एतदेववरंमन्येक्रोधोमाभून्ममोपरि कार्तिकेशुक्लपक्षेतुप्रथमेहनिसत्यवत् जयोलब्धोमया
त्वत्तःसत्येनैवमहेश्वर तस्माद्यूतंप्रकर्तव्यंप्रभातेतत्रमानवैः तस्मिन्द्यूतेजयोयस्यतस्यसंवत्सरंजयः विष्णुरु॰ अहंयंयंकरि

रिथ्याभिषेकंवालघुमेववा तथा तथा भवतुसवरमेनंवदाम्यहम् स्कंदउवा॰ सदामनस्तपस्यायांममतिष्ठतुदेवताः कदापिविषयेमा
स्तुदेयएषवरोमम गणेशउवाच संसारेयानिकार्याणितदादौममपूजनात् यांतुसिद्धिंममद्रूपांविनासिध्यंतुमाकचित् रावण॰छे
दव्याख्यानसामर्थ्यंममशीघ्रंभवत्विति सदाशिवेसदाचास्तुभक्तिर्मेव्यभिचारिणी नारदउ॰ कुन्द्राकुक्षाश्वयेकेचिन्मूर्खामूर्खाश्च
येजनाः मद्वाक्यंसत्यमित्येवमानयंतुसदासुराः इत्युक्त्वांतर्हिताःसर्वेदेवारुद्रपुरोगमाः तस्मात्प्रतिपदिद्यूतंकुर्यात्सर्वोपिवैज
नः द्यूतंनिषिद्धंसर्वत्रहित्वाप्रतिपदंबुधाः स्वस्योद्यमादिज्ञानायकुर्याद्यूतमतंद्रितः विशेषवच्चभोक्तव्यंसुहृद्भिर्ब्राह्मणैःसह प
क्वान्नादिविशेषमित्यर्थः योषिताभिश्चसहितंनेयासाचभवेन्निशा ततःसंपूजयेन्मानैरंतःपुरस्थवासिनीः पदातिजनसंघा-
तान्ग्रैवेयैःकटकैःशुभैः स्वनामांकैःस्वयंराजातोषयेत्स्वजनान्पृथक् वृषभान्महिषांश्चैवयुध्यमानान्परैःसह गजानश्वांश्चयोद्धां=
श्चपदातीन्समलंकृतान् मंचारूढःस्वयंपश्येन्नटनर्तकचारणान् युधापयेत्त्रासयेच्चगोमहिष्यादिकंतथा ततोपरार्धसमयेपू
र्वस्यांदिशिकाश्यप मार्गपालींप्रबध्नीयात्तुंगेस्तंभेप्यपिपादयोःपालींकुशमयींदिव्यांलंबकैर्बहुभिर्नयेत् दर्शयित्वागजानश्वान्साय
यमस्याकृतेनयेत् कृतहोमैर्द्विजेंद्रैश्चबध्नीयान्मार्गपालिकां मार्गपालिनमस्तेस्तुसर्वलोकसुखप्रदे विधेयैःपुत्रदाराद्यैःपुन
रेहिव्रतस्यमे नीराजनंचतत्रैवकार्यंराष्ट्रजयप्रदम् मार्गपालीसमु ल्लिख्यनीडजारक्तसुखान्विताः तस्मादेतत्सकुर्वीतद्यू
ताद्यंविधिपूर्वकम् इतिसनत्कुमारसंहितायांद्यूतविधिः तत्रैवबालिरिवस्याऊचुः पूर्वविद्धाप्रकर्तव्याप्रतिपद्बलिपूजने
वर्धमानातिथिर्नंदायदासार्ध त्रयात्मिका द्वितीयावर्धगामित्वादुत्तरातत्रचोच्यते बलिमालिरव्यदैत्येंद्रं वर्णकैः

१०

पंचरंगकैः गृहमध्यमशालायांविंध्याकांत्यासहासितम् जिह्वाचार्वक्षिणीयांतेकरयोःपादयोःस्तले रक्तवर्णेनास्यकेशाः कृष्णेनैव
समालिखेत् सर्वांगंपीतवर्णेनशस्त्राद्यंनीलवर्णकैः वस्त्राद्यंश्वेतवर्णेनयथाशोभंप्रकल्पयेत् सर्वाभरणशोभाढ्यंद्विभुजंनृप
चिन्हयुक् लोकोलिखेदिह स्यांतः शय्यायांशुक्लतंडुलैः मंत्रेणानेनसंपूज्योषोडशैरुपचारकैः बलिराज्ञनमस्तुभ्यंदैत्यदानपू
जिता इंद्रप्रभोमरारातेविष्णुसांनिध्यदोभव बलिमुद्दिश्यदीयंतेभूमिदानानिपुंगवाः यान्यहान्यक्षयाण्याहुर्मयैतत्संप्रदर्शि
तम् कौमुदीतिर्बलेर्यस्माद्दीयतेऽस्यांयुधिष्ठिर पार्थिवेंद्रैर्मुनिवरास्तेनेयंकौमुदीस्मृता योयादृशेनभावेनतिष्ठत्यस्यांयुधि-
ष्ठिर हर्षदैन्यादिरूपेणतस्यवर्षंप्रियातियः बलिपूजांविधायैवपश्चाद्गोक्रीडनंचरेत् गवांक्रीडादिनेयत्ररात्रौदृश्येतचंद्रमाः
सोमोराजापशून्हंतिसुरभीःपूजकांस्तथा प्रतिपद्दर्शसंयोगेक्रीडनंचगवांमतम् परविद्धेषुयःकुर्यात्पुत्रदारधनक्षयः अलं
कार्यास्तदागावोग्रासाद्यैश्चसुरर्चिताः गीतवादित्रनिर्घोषैर्नीयेन्नगरबाह्यतः आनीयचगृहंपश्चात्कुर्यान्नीराजनंविधिम्
अथचेत्प्रातिपत्स्वल्पानारीनीराजनंचरेत् द्वितीयायांतदाकुर्यात्सायंकमलमालिकाम् एवंनीराजनंकृत्वासर्वपापैःप्रमुच्यते
प्रतिपत्पूर्वविद्धैवदृष्टिकाकर्षणोभवेत् कुशकाशमयींकुर्याद्दृष्टिकांसुदृढांनवाम् देवद्वारेनृपद्वारेरथवानेयाचतुष्पथे तामेक
तोराजपुत्राहीनवर्णास्तथैकतः गृहीत्वाकर्षयेयुस्तांस्तथासादंमुहुर्मुहुः समसंख्याद्वयोःकार्यासर्वेपिबलवत्तराः जयोत्रही
नजातीनांजयोराज्ञस्तुवत्सरम् उभयोःपृष्ठतःकार्यारेखास्वार्ककरोपरि रेखांतेयोनयेत्तस्यजयोभवतिनान्यथा जयचिन्हा
भिदंराजाविदधीतप्रयत्नतः सनत्कुमारसंहितायाम् वालखिल्याऊचुः कार्तिकस्यसितेपक्षेअन्नकूटंसमाचरेत्

गोवर्धनोत्सवश्चैवश्रीविष्णुःप्रीयतामिति ऋषयऊचुः कोसौगोवर्धनोनाम कस्मात्तंपरिपूजयेत् कस्मात्तदुत्सवःकार्यःकृतेकिंच
फलंभवेत् वालखिल्याऊचुः एकदाभगवान्कृष्णोगतोगोपालकैःसह गृहीत्वागाःप्रतिपदिकार्तिकस्यगतोवने तत्रनानाविधालो
कागोप्यश्चापिसहस्रशः गोवर्धनसमीपेतुकुर्वंत्युत्सवमादरात् खाद्यंलेह्यंचचोष्यं चपेयंनानाविधंकृतं कृतानगास्तथानानात्र
संतिचपुरेजनाः नानापताकाःसंगृह्यकेचित्स्थावंतिचायतः केचिद्गोपाःप्रनृत्यंतिस्तुवंतिचतथापरे इतस्ततोवितानानितोरणा-
निसहस्रशः दृष्ट्वैतत्कौतुकंकृष्णोवाक्यमेतदुवाचह कृष्णउ॰ उत्सवःक्रियतेकस्यदेवताकाचपूजने पक्वान्नखादनार्थायकल्पितो
वोत्सवोधुना नभक्षयंति येदेवास्तेभ्योन्नंतुप्रदीयते प्रत्यक्षभोजिनोदेवास्तेभ्योन्नंनैवदीयते दृष्ट्वेदृशींभवद्बुद्धिंगोपालावेधसा
कृताः गोपालाऊचुः एवंमावदकृष्णंत्वंह्यत्रहेतुर्महोत्सवः वार्षिकःक्रियतेस्माभिर्देवेंद्रस्यचतुष्टये इमंप्रपूजयभद्रंतेभविष्यतिनसंश
यः अद्यकुर्वंतिदेवेंद्रमहोत्सवमिमंनरः कुर्वेइतिप्रतिजानातीतिविशेषः इलोपआर्षःनरइतिराजलक्षणम् दुर्भिक्षंचतथा-
हृष्टिर्देशेतस्यनजायते तस्मात्वमपिकृष्णाद्यकुरूत्सवमनेकधा कृष्णउवाच अयंगोवर्धनःसाक्षाद्वृष्टिसोभिक्ष्यकारकः मथुरास्थे
व्रजस्थैश्चपूर्वंचायंप्रपूजितः यदायदासंकटंमेमहदागत्यजायते तदातदापूजयामिदृश्यंगोवर्धनंगिरिम् श्रवणेश्रवणेक
र्णे २ गोपावार्ताकुर्वंतिकिंत्विदम् तेषांमध्येकैश्चिदुक्तंकृष्णोक्तंक्रियतामिति यदाखादतिचान्नंचेन्मगोगोवर्धनस्तदा तदा
कृष्णोक्तमखिलंसत्यमेवभविष्यति सर्वएवतदागोपाविनिश्चित्यचनंदजम् वचनंप्राहुरित्थंचेन्निश्चयोस्तितदाकुरु सर्वत्व
मग्रणीर्भूत्वागोवर्धनमहोत्सवम् ततःकृष्णस्तथेत्युक्त्वाउत्सवेकृतनिश्चयः नानासामग्रिकंचक्रुर्यथोक्तंनंदसूनुना नाना-

वस्त्राणिपात्राणिचारूणि तानिनगाग्रतः तत्रदनन्नपुंजस्तुयथागोवर्धनोमहान् भक्तसूपानिशाकांश्चकांजिकंवटकास्तथा रो
टकाःपूरिकाद्यंचलड्डुकाःमंडकादिकम् दुग्धंदधिघृतंक्षौद्रंलेह्यंचोष्यंतथामिषम् क्वथिकाद्यंसर्वमपितत्रदत्वावचोब्रवीत् कृ
ष्णउवाच मंत्रंपठित्वागोपालानेत्रेसंमीलयंतुच गोवर्धनेनभोक्तव्यंसर्वमन्ननसंशयः कृष्णउवाच गोवर्धनधराधारगोकुल
त्राणकारक बहुबाहुकृतछायागवांकोटिप्रदोभव लक्ष्मीर्यालोकपालानांधेनुरूपेणसंस्थिता घृतंवहतियज्ञार्थेममपापंव्यपोह
तु एवंत्वित्थंमंत्रयुगंसर्वेमुद्रितलोचनाः कृष्णोगोवर्धनंविश्यसर्वमन्नमभक्षयत् भक्षणावसरेकैश्चिजनैर्दृष्टोगिरिस्तदा अ
तीवाभूत्तदाश्चर्यंतच्चेतसिमुनीश्वराः ततोनाडीद्वयात्कृष्णोगोपान्वाक्यमुवाचसः अहोगोवर्धनेनात्रक्षणाद्भुक्तमिदंस्फुटम्
पश्यंतुसर्वेगोपालाःप्रत्यक्षोयंनसंशयः यद्यस्तिसुखवांछावः कुर्वंत्वस्यमहोत्सवं इतिश्रुत्वावचस्तस्यसर्वेविस्मितमानसाः॥
गोवर्धनोत्सवंचक्रुरिंद्राच्छतगुणंततः इंद्रोत्सवंद्रष्टुकामःसमागछतनारदः गोवर्धनोत्सवंदृष्ट्वादेवेंद्रस्यसभांययो देवेंद्रेणकृ
तातिथ्योवारंवारंप्रणोदितः नोवाचवचनंकिंचिद्देवेंद्रःप्रत्यभाषत इंद्रउवाच युष्माकंकुशलंविप्रवर्ततेनेवानवेतिवा मदग्रे
कथ्यतांदुखंमुनीश्वरहराम्यहम् नारदउवाच अस्माकंकिंमुनींद्राणां इतिदुःखस्यकारणम् परंगोवर्धनःशैलःशक्रोजातो-
विलोक्यते त्वदुत्सवेपूज्यतेसौगोपालैर्गोकुलेहरे अतःपरंयज्ञभागान्गृहिष्यतिसएवहि इंद्रासनंतथैवद्राणीक्रमात्सैवगृही
ष्यति यस्यवीर्यंचशस्त्रंचतस्यराज्यंप्रजायते किमस्माकंमुनींद्राणांयएवेंद्रासनेभवेत् वर्षाद्वामासषट्काद्वाद्रक्ष्यसोस
भागतः इत्थमुक्त्वाचदेवेंद्रंप्रययौनारदोमुनि इत्थंनारदवाक्यंचश्रुत्वाशक्रोभ्यभाषत अहोआवर्तसंवर्तद्रोण नीलक

ब्र॰रा॰
१२

पुष्कराः सर्वमेघाजलंगृह्यकरकाभिः समन्वितं प्रयांतुगोकुलेशीघ्रंमारयंतुचयादवान् गोवर्धनंस्फोटयंतुवज्रपातैरनेकशः पात
यंतुचगाश्चापिगृहाण्युच्चाटयंतुच ततोघनघटाघोषोगोकुलेमूर्ध्न्युर्नीश्वराः जातआरादंधकारोमध्यान्हसमयेतदा कंपिताः
पादपाःसर्वेकिमकांडमुपस्थितम् ववर्षुर्बहुपानीयंकरकाभिस्तदाघनाः गोपाउवाच हाकृष्णकृष्णहेकृष्णकिमिदानींवि
धीयनाम् मृताःस्मयादवाःसर्वेकुपितोयंहिवासवः कृष्णउवाच निमील्याक्षीणिभोगोपाध्येयोगोवर्धनोनगः रक्षाकर्तास
एवास्मिन्नान्योस्तिजगतीतले इत्युक्त्वोत्पाट्यतंशैलंतत्तलेस्थापितास्तुते ततःप्रोवाचवचनंगोपान्प्रतिबलाग्रजः श्रीकृष्ण
उवाच अहोगोवर्धनेनैनत्स्थलंदत्तंव्रजव्रज अन्यःकोस्तिस्थलंदातुंप्रत्यक्षोयंनगोत्तमः एवंससदिनंतोयवृष्टिंमुसलधार
या नानादेशायुर्नाशंनगोपाःशरणंययुः गोवर्धनस्यनाम्नैवकृष्णानित्यंप्रयच्छति पक्वान्नानिचगोपेभ्यस्तत्रतेसुखमासताम् ॥
इत्येवंकौतुकंदृष्ट्वासत्यलोकंययौमुनिः ब्रह्मन्नूनंकिंप्रसुप्तोसिजायतेसृष्टिनाशनम् तस्माच्छीघ्रंगोकुलेत्वंगत्वावृष्टिंनिवारय
ब्रह्मोवाच किमर्थंजायतेवृष्टिःकथंसृष्टिविनाशनम् कश्चिद्दैत्यःसमुत्पन्नःसर्वमाख्याहिमेमुने नारदउवाच नो
त्पन्नोदैत्यराट्कश्चित्तत्यक्तःशक्रोत्सवोभुवि यादवैरितिसंक्रुद्धइंद्रएवंप्रवर्षति इतितस्यवचःश्रुत्वाहंसमारुह्यवैविधिः आ
गतोयत्रशक्रोस्तिक्रोधाद्देवःप्रवर्षति ब्रह्मोवाच कथंव्यवसिताबुद्धिरीदृशीतेसुरेश्वर त्रैलोक्यनाथोभगवान्नर्निर्जेतव्यः
कथंत्वया एकयैवकरांगुल्यापश्यगोवर्धनोधृतः ईर्ष्याकथंतेनसाकंत्वयाशक्रविधीयते इतिब्रह्मवचःश्रुत्वामेघान्संस्तभ्यवास
वःप्रणिपत्यचतंकृष्णंशक्रोवचनमब्रवीत् क्षंतव्यामत्कृतिर्विष्णोदासोहंशरणागतः यद्गोचतेतत्प्रदेयमपराधापनुत्तये ॥

१२

कृष्णोवाच अज्ञात्वातवसामर्थ्यंगोपालेरचितंत्विदम् एषांदंडस्तुयोग्योयंसम्यगेवत्वयाकृतः अहंकनीयांतेभ्रातातवाज्ञापरि
पालकः शरणागतजातीनांरक्षणंतुमयाकृतम् यदिप्रसन्नोदेवेशउत्सवोयंप्रदीयताम् गोवर्धनायगिरयेगोकुलंरक्षितंयतः श
क्रोपिचतथेत्युक्त्वातत्रैवांतरधीयत गतेशक्रेगिरींद्रंतंसंस्थाप्यहरिरब्रवीत् कृष्णउवाच गोपाःपश्यंतुमहात्म्यमद्भुतंशैल
जंतुयत् अद्यारभ्यप्रकर्तव्योमहान्गोवर्धनोत्सवः गोवर्धनेनशैलेनाननिखिलातुधराधृता एतत्सारमजानद्भिःकथंसंक्रीडितंपु
रा अद्यपर्वतराजस्तुसर्वंभूतममायनः एतत्सेवाप्रभावेनबलंलब्धंमयामहत् प्रतिसंवत्सरंतस्मादन्नकूटंविधीयताम् गवां
भवतिकल्याणं पुत्रपौत्रादिसंततिः ऐश्वर्यंचसदासौख्यंभवेद्गोवर्धनोत्सवात् कृतंयत्कार्तिकेस्नानेजपहोमार्चनादिकम् स
र्वंनिष्फलतामेतिनोकृतेपर्वतोत्सवे एवमुक्तास्तुतेगोपाःसत्यंसर्वममन्यत ययुःकृष्णादयःसर्वेनवमेहनिगोकुले बालखि
ल्याऊचुः इत्येतत्सर्वमाख्यानमस्माभिस्तुमुनीश्वराः श्रीकृष्णस्यतुसंतुष्ट्यात्वन्नकूटंविधीय ताम् नानाप्रकारशाकादिदे
शकालोद्भवानिच पक्वान्नानिविचित्राणिकुर्याच्छक्त्यानुसारतः सर्वान्नपर्वतंकुर्याच्छ्रीकृष्णायनिवेदयेत् गोवर्धनस्वरूपा
यमंत्रोकृष्णोदितोपठन् यत्कृष्णोरूपकृत्वेतिमंत्रो एवंयःकुरुतेमर्त्योविष्णुलोकमहीयते इतिश्रीसनत्कुमारसंहितायां
प्रतिपत्कृत्यम् अथद्वितीयाव्रतानि तत्रकार्तिकशुक्लद्वितीयायमद्वितीया साअपराण्हव्यापिनीग्राह्या ऊर्जेशुक्ल
द्वितीयायामपराऽण्हेर्चयेद्यमम् स्नानंकृत्वा भानुजन्यांयमलोकंनपश्यति ऊर्जेशुक्लद्वितीयायांपूजितस्तर्पितोयमः
वेष्टितःकिंनरैर्हृष्टैस्तस्मैयच्छतिवांछितम् इतिस्कंदात् दिनद्वयेअपराण्हव्याप्तौवापरैवेतियुग्मवाक्यात् प्रथमेप्यावणे

मासितथाभाद्रपदेपरा तृतीयाश्वयुजेमासिचतुर्थीकार्तिकोभवेद् श्रावणेकुसुपानाम्नीतथाभाद्रेचनिर्मला आश्विनेप्रेतसंचारा
कार्तिकेयाम्यतामनेति चतस्रोद्वितीयाउपक्रम्यप्रथमायांकिंचित्प्रायश्चित्तं द्वितीयायांसरस्वतीपूजा तृतीयायांश्राद्धंकर्तव्यम्
चतुर्थ्यांयमपूजनम् कार्तिकेशुक्लपक्षेतुद्वितीयायांयुधिष्ठिर यमोयमुनयापूर्वंभोजितःस्वगृहेर्चितः अतोयमद्वितीयेयंत्रि
षुलोकेषुविश्रुता अस्यांनिजगृहेपार्थनभोक्तव्यमतोनरैः यत्नेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्धनम् दानानिचप्रदेयानिभगिनीभ्यो
विशेषतः स्वर्णालंकारवस्त्रान्नपूजासत्कारभोजनैः सर्वाभगिन्यःसंपूज्याअभावेप्रतिपन्नकाः तत्स्थानेनमाता पितृव्यभगिनी
हस्तात्प्रथमायांयुधिष्ठिर मातुलस्यसुताहस्ताद्द्वितीयायांयुधिष्ठिर पितुर्मातुःस्वसुश्चैवतृतीयायांतयोःक्रमात् भोक्तव्यंसह
जायाश्चभगिन्याहस्ततःपरम् सर्वासुभगिनीहस्ताद्भोक्तव्यंबलवर्धनम् धन्यंयशस्यमायुष्यंधर्मकामार्थसाधकम् तस्यांतिथौ
यमुनयायमराजदेवःसंभोजितोनिजकरात्स्वसृसौहृदेन तस्यांस्वसाकरतलादिहयोभुनक्तिप्राप्नोतिरत्नधनधान्यमनुत्तमं
सः इतिहेमाद्रौभविष्येयमद्वितीयाविधिः अथकथा वालखिल्याऊचुः कार्तिकस्यसितेपक्षेद्वितीयायमसंज्ञिता
तत्रापराण्हेकर्तव्यंसर्वथैवयमार्चनम् प्रत्यहंयमुनागत्ययमंमप्रार्थयत्पुरा भ्रातर्ममगृहेयाहिभोजनार्थंगणाहृतः अद्यश्वो
वापरश्वोवाप्रत्यहंवदतेयमः कार्यव्याकुलचित्तत्वादवकाशोनजायते तदेकदायमुनयाबलात्कारान्निमंत्रितः सगतःका
र्तिकमासिद्वितीयायांमुनीश्वराः नारकीयजनान्मुक्त्वागणैःसहरवेःसुतः कृतातिथ्योयमुनयानानापाकाःकृतास्तथा
कृताभ्यंगोयमुनयातैलैःगंधमनोहरैः उद्वर्तनंततःपायित्वास्नापितःसूर्यनंदनः ततोलंकारिकंदत्तंनानावस्त्राणिचंदनम्

माल्यानिचप्रदत्तानिमंचोपरिउपाविशत् पक्वान्नानिविचित्राणिकृत्वासास्वर्णभांजने यमंचभोजयामासयमुनाप्रीतिमानसा
भ्रात्रायमोपिभगिनीमलंकारैःसमर्चयन् नानावस्त्रैस्ततःप्राहवरंवरयभागिनि इतितद्वचनंश्रुत्वायमुनावाक्यमब्रवीत् ॥
यमुनोवाच प्रतिवर्षसमागच्छभोजनार्थंतुमद्गृहे अद्यसर्वेमोचनीयाःपापिनोनरकाद्यम येचैवभगिनीहस्तात्करिष्यंतिचभोजनं
तेषांसौख्यप्रदोहित्वमेतदेववृणोम्यहम् यमउवाच यमुनायांतुयःस्नात्वासंतर्प्यपितृदेवताः भुनक्तिभगिनीगेहेभगिनींपूजये
दपि कदाचिदपिमद्द्वारंनसपश्यतिभानुजे वीरेशेशानदिग्भागेयमतीर्थंप्रकीर्तितम् तत्रस्नात्वाचविधिवत्संतर्प्यपितृदेवताः
पठेदेतानिनामानिआमध्यान्हेनरोत्तमः सूर्यस्याभिमुखोमौनीदृढचित्तःस्थिरासनः यमोनिहंतापितृधर्मराजोवैवस्वतो
दंडधरश्चकालः भूताधिपोदत्तकृतानुसारीकृतांतमेतद्दशभिर्जपंति एतानिचदशशतैःनामदशकेन ततोयमेश्वरंपूज्य
भगिनीगृहमाव्रजेत् मंत्रेणानेनचतयाभोजितःपूर्णमादरात् भ्रातस्तवानुजाताहं भुंक्ष्वभुक्तमिदंशुभम् प्रीतयेयमरा-
जस्ययमुनायांविशेषतः ततःसंतोष्यभगिनींवस्त्रालंकरणादिभिः स्वमेपियमलोकस्थभविष्यतिनदर्शनम् नृपैःकारागृहे
येचस्थापितामम वासरे अवश्यंतेप्रेषणीयाभोजनार्थंस्वसृगृहे विमोक्तव्यामयापापान्नरकेभ्योद्यवासरे यद्येवंधिकरिष्यंति
तेदंड्याममसर्वथा कनीयान्भगिनीनास्तितदाज्येष्ठागृहंव्रजेत् तदभावेसपत्न्यायाःपैतृव्यास्तदभावतः तदभावेमातृशी
स्या मातृसमशीलायाः मातुर्भगिन्यावामातुलस्याथवातथा सापत्नगोत्रसंबंधैःकल्पयेदाद्यथाक्रमम् सर्वाभावेमाननी
याभगिनीकाचिदेवहिगोनघाद्यथवातस्याअभावेसंतिकारयेत् तदभावेप्यरण्यादिकल्पयित्वासहोदराम् अस्यांनिज

गृहेदेविनभोक्तव्यंकदाचन येभुंजंतिदुराचाराःनरकेतेपतंतिच स्नेहेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्धनम् दानानिचप्रदेया
निभगिनीभ्योविशेषतः श्रावणेतुपितृव्यस्यकन्याहस्तेनभोजनम् मातुलस्यसुताहस्ताद्भुंजीयाद्भाद्रमासके पितुर्मातुःस्व
सुःकन्येआश्विनेतुतयोःकरात् पितृष्वसेयीमातृष्वसेयीच अवश्यंकार्तिकेमासिभोक्तव्यंभगिनीकरात् एवमुक्त्वाधर्मराजोययौ
संयमिनींततः तस्मादपिनराःसर्वेकार्तिकव्रतकारकाः भुंजंतुभगिनीहस्तात्सत्यंसत्यंनसंशयः यमद्वितीयांयःप्राप्यभगिनीगृ
हभोजनं नकुर्याद्वर्षजंपुण्यंनश्यतीतिरवेःश्रुतम् यातुभोजयतेनारीभ्रातरंयुग्मकेतिथौ अर्चयेच्चापितांबूलैर्नसावैधव्य
माप्नुयात् भ्रातुरायुःक्षयोनूनंनभवेत्तत्रकर्हिचित् अपराण्हव्यापिनीस्याद्द्वितीयाभ्रातृभोजने अज्ञानाद्यदिवामोहान्नभुक्तं
भगिनीगृहे प्रवासिनावाभावाद्वाज्वरितेनाथबंदिना एतदाख्यानकंश्रुत्वाभोजनस्यफलंलभेत् इतिसनत्कुमारसंहि
तायांयमद्वितीयाऽऽख्यानकंसंपूर्णम् अत्रैवभ्रातृद्वितीयाविधिस्तिथितत्वे यमंचचित्रगुप्तंचयमदूतांश्चपूजयेत् अर्घ्यश्चा
त्रप्रकर्तव्योयमायसहजद्वयैः भ्रातृभगिनीभिःसहअर्चनमंत्रस्तु एह्येहिमार्तंडजपाशहस्तयमांतकालोककरामरेश
भ्रातृद्वितीयांकृतदेवपूजांगृहाणचार्घ्यंभगवन्नमस्ते धर्मराजनमस्तुभ्यंनमस्तेयमुनाग्रज त्राहिमांकिंकरैःसार्धंसूर्यपुत्रन
मोस्तुते लैंगेयातुभोजयतेनारीभ्रातरंयुग्मकेतिथौ अर्चयेच्चापितांबूलैर्नसावैधव्यमाप्नुयात् स्कांदे कार्तिकेतुद्वितीयायांशु
क्लायांभ्रातृपूजनम् यानकुर्याद्विनश्यंतिभ्रातरःसप्तजन्मसु पाद्मे उत्तरखंडे भद्रेभागिनिभोभामत्वदंघ्रिसरसीरुहम् प्रे
यसेधनमस्तुभ्यंमागतोहंतवालयम् मृदुवाक्यंततश्रुत्वासत्वरंक्रियतेतदा अद्यभ्रातृसतीभ्रात स्त्वयाधन्यास्मिमानद

भोक्तव्यंतेद्यमद्गृहे स्वायुषेममनानद कार्त्तिके शुक्लपक्षस्यद्वितीयायांसहोदरः यमोयमुनयापूर्वंभोजितःस्वगृहेर्चितः यस्मिन्दि
नेयमेनात्रनारीवापुरुषोपिवा अपिविश्वाकर्मपाशैःस्वच्छयायेपचंतिहि पापेभ्योविप्रमुख्यास्तेमुक्ताःकर्मनिबंधनात् तेषांमहो
त्सवोहृत्तोयमराष्ट्रेसुखावहः तस्माद्दंधोत्रमद्गेहे भोजनंकुरुकार्त्तिके आशिषःप्रतिगृह्याथनमस्कृत्यसमर्चयेत् सर्वाभागि
न्यःसंपूज्याज्येष्ठाउभयतःस्मृताः वस्त्रादिनानमस्कुर्यान्निजवित्तानुसारतः भ्रातुरायुष्यवृध्यर्थंभगिनीभिर्यमस्यवै पूजनी
याःप्रयत्नेनप्रतिमाश्चविधानतः मार्कंडेयोबलिर्व्यासोहनूमांश्चबिभीषणः कृपोद्रौणिःपर्शुरामोअष्टेतेचिरजीविनः मार्कंडे
यमहाभागसप्तकल्पांतजीवित चिरंजीवियथात्वंहितथामेभ्रातरंकुरु इतिभ्रातृद्वितीया अथतृतीयाव्रतानि तत्रचैत्र
शुक्लतृतीयायांसौभाग्यशयनव्रतम् मात्स्ये मत्स्यउवाच वसंतमाससमासाद्यतृतीयायांजनप्रिय सौभाग्यायसदास्त्रीभिः
कार्यंपुत्रसुखेप्सुभिः शुक्लपक्षस्यपूर्वाण्हेतिलैःस्नानंसमाचरेत् तस्मिन्नहनिसादेविकिलविश्वात्मिकासति पाणिग्रहणकै
र्मेरुमारूढावरवर्णिनी तयासहैववदेवेशंतृतीयायांसमर्चयेत् फलैर्नानाविधैर्धूपैर्दीपैर्नैवेद्यसंयुतैः प्रतिमांपंचगव्येनत
थागंगादकेनच पंचामृतैःस्नापयित्वागौरीशंकरसंयुता नमोस्तुपाटलायैच पादौदेव्याःशिवस्यतु शिवायेतिचसंकी
र्त्यजयायैगुल्फयोस्तथा त्रिगुणायेतिरुद्रस्यभवान्यैजंघयोर्युगम् शिवंरुद्रेश्वरायेतिजयायैइतिजानुनी संकीर्त्यहरिकेशा
यतथोरूवरदेनमः इशायेतिकटिंरत्यैशंकरायेतिशंकरं कुक्षिद्वयेचकोटव्यैशूलिनःशूलपाणये मंगलायैनमस्तुभ्यं
उदरंचापिपूजयेत् सर्वात्मनेनमोरुद्र ईशान्यैचकुचद्वयम् शिवंवेदात्मनेतद्वदिंद्राण्यैकंठमर्चयेत् त्रिपुरघ्नायविश्वेश

मनंतायकरद्वयम् त्रिलोचनायइतिचेत्वाहु कालानलप्रिये सौभाग्यभुवनाये तिभूषणादिसमर्चयेत् नमोर्धनारीशाहरंप्रसि
तांगास्तुनासिकाम् नमउग्रायलोकेशंललितेतिप्युतभ्रुवौ शर्वायपुरहंतारंवस्व देव्यै तथालकम् नमःश्रीकंठनाशायशिवं
केशांतथार्चयेत् भीमोग्रसौम्यरूपिण्यैशिरःसर्वात्मनेनमः शिवमभ्यर्च्यविधिवत्सौभाग्याष्टकमित्यतः स्थापयेद्घृतनिष्पा
वकुसुंभंक्षीरजीरकम् तृणराजेक्षुलवणंकुस्तुंबुरुमथाष्टमम् दत्तंसौभाग्यकृद्यस्मात्सौभाग्याष्टकमित्यतः एवंनिवेद्यतत्स
र्वंमुद्भूतंशिवयोःपरः चैत्रेशृंगोदकंप्राश्यस्वरूपेद्भूअरिंदम पुनःप्रभावेचतथाकृतःस्नानजपःशुचिः संपूज्याद्विजदांपत्यंमा
ल्यवस्त्रविभूषणैः सौभाग्याष्टकसंयुक्तंसुवर्णप्रतिमाद्वयम् प्रीयतामत्रललिताब्राह्मणायनिवेदयेत् एवंसंवत्सरंयावत्तृ-
तीयायांसदामुने प्राशनेदानमंत्रेचविशेषोयंनिबोधमे गोशृंगोदकमाद्येस्याद्वैशाखेगोमयंपुनः ज्येष्ठेमंदारकुसुमंबिल्वपत्रंशु
चौस्मृतम् श्रावणेदधिसंप्राश्यनभस्येचकुशोदकम् क्षीरमाश्वयुजेमासिकार्त्तिकेपृषदाज्यकम् मार्गशीर्षेचगोमूत्रंपौषेसंप्राशये
द्घृतम् माघेकृष्णातिलांस्तद्वत्पंचगव्यंचफाल्गुने ललिताविजयाभद्राभवानीपर्वदाशिवा वासुदेवीतथागौरीमंगलाकमलास
तीउमाचदानकालेतुप्रीयतामितिकीर्त्तनात् मल्लिकाशोककमलकुसुमोत्पलमालतीकुब्जकंकरवीरंचबाणमम्लानकुंकुमम्
बाणंनीलकुरंटः सिंदुवारंचसर्वेषुमासेषुक्रमशस्मृतम् जपाकुसुमकौसुंभमालतीशतपत्रिका यथालाभप्रशस्तानिकर
वीरंचसर्वदा एवंसंवत्सरंयावदुपोष्यविधिवन्नरः स्त्रीवाभक्त्याकुमारीवाशिवामभ्यर्च्यशक्तितः व्रतांतेशयनंदद्यात्सर्वो
पस्करसंयुतम् उमामहेश्वरंहैमंवृषभंचगवासह स्थापयित्वाचशयनेब्राह्मणायनिवेदयेत् अन्यान्यपियथाशक्त्याभि

धुनान्यंबरादिभिः धान्यालंकारगोदानैरभ्यर्च्येधनसंचयैः वित्तशाठ्येनरहितःपूजयेद्गतविस्मयः एवंकरोतियासम्यक्सौभाग्यश
यनव्रतम् सर्वान्कामानवाप्नोतिपदमानंत्यमश्नुते फलकस्यचसर्वांगमेनत्कुर्वन्समाचरेत् यत्रकीर्तिंसमाप्नोतिप्रतिमासंनराधिप
सौभाग्यारोग्यरूपायुर्वस्त्रालंकारभूषणैः नवियुक्तोभवेद्राजन्नब्दानांचशतत्रयम् यस्तुद्वादशवर्षाणिसौभाग्यशयनव्रतम् करो-
तिसप्तचाष्टौवाश्रीकंठभवनेमरैः पूज्यमानोवसेत्सम्यक्यावत्कल्पायुनत्रयम् नारीवाकुरुतेभक्त्याकुमारीवानरेश्वरं सापितत्फ
लमाप्नोतिदेव्यानुग्रहलालिता इतिमत्स्यपुराणेसौभाग्यशयनव्रतं अत्रैवगौर्यादोलोत्सवः तदुक्तंहेमाद्रौ देवीपुराणे
चैत्रशुक्लतृतीयायांगौरीमीश्वरसंयुताम् संपूज्यदोलोत्सवंकुर्यान्नारीशुभेप्सुका तथाचनिर्णयामृते तृतीयायांयजेद्देवीं
शंकरेणसमन्विताम् कुंकुमागरुकर्पूरमणिवस्त्रस्रगाहितां सुगंधिपुष्पधूपैश्चदमनेनविशेषतः आंदोलंदोलयेद्दत्तशिवोमातुष्टयेस
दा रात्रौजागरणंकुर्यात्प्रातर्दद्यात्तुदक्षिणा सौभाग्यायसदास्त्रीभिः कार्यापुत्रसुखेप्सुभिः इयंचपराग्राह्या मुहूर्तमात्रसत्वेपिदि
नेगौरीव्रतंपरे इतिमाधवोक्तेः इयंचमन्वादिः कृतंश्राद्धंविधानेनमन्वादिषुयुगादिषु हायनानिद्विसाहस्रंपितॄणांतृप्तिदंभवेत्
अधिमासेपिइदंकर्तव्यम् अत्रपिंडदानंनास्ति अत्रचैत्रशुक्लतृतीयायांमनोरथतृतीयाव्रतम् ईश्वरउवाच साधुपृष्ट
त्वयादेविकृतवत्यापरिग्रहम् अस्येहधर्मपीठस्यमनोरथकृतःसति तएवविश्वभोक्तारोविश्वमान्यास्तएवहि येत्वांवि-
श्वभुजामत्रपूजयिष्यंतिमानवाः विश्वेविश्वभुजेविश्वस्थित्युत्पत्तिलयप्रदे नरास्त्वदर्चकाश्चात्रभविष्यंत्यमलात्मकाः म
नोरथ तृतीयायांयस्तेभक्तिंविधास्यति तन्मनोरथसंसिद्धिर्भवित्रीमदनुग्रहात् नारीवापुरुषोवापित्वद्व्रताचरणात्प्रिये

मनोरथानिहप्राप्यज्ञानमंतेच्चलभ्यते देव्युवाच मनोरथ तृतीयायांव्रतंकीदृक्कथानकम् किंफलंकैः कृतंनाथकथयैनल्कृपांकु
रु ईश्वरउवाच शृणुदेवियथादृष्टंभवत्याभवतारणम् मनोरथव्रतंचैतद्दुष्प्राप्यंह्युत्तरंपरम् पुलोमतनयापूर्वंनतापपरमंतपः
किंचिन्मनोरथंप्राप्तुंनचापतपसःफलम् अपूपुजत्ततोमासंभक्त्या गौरीमहेश्वरम् गीतेनसरहस्येनकलकंठीरवेनहि तज्ज्ञानेना
तिसंतुष्टेमृदुनामधुरेणच स्वतालेनस्वरंगेणधातुमात्रकलावता प्रोवाचचवरंशूलीप्रसन्नोस्मिपुलोमजे अनेनचस्वगीतेनत्वन
यालिंगपूजया पुलोमजोवाच यदिप्रसन्नोदेवेशतदायोमेमनोरथः तंपूजयमहादेवमहादेव्याःप्रियंवद सर्वदेवेषुयोमा-
न्यःसर्वदेवेषुसुंदरः यायजूकेषुसर्वेषुयःश्रेष्ठःसोस्तुमेपतिः यथाभिलषितंरूपंयथाभिलषितंस्वरम् यथाभिलषितंवायुःप्रस
न्नोदेहिमेभव यदायदाचपत्यामेसंगःस्याच्चस्वेच्छया तदातदाचतंदेहंत्यक्त्वान्यंदेहमाप्नुयाम् सदाचलिंगपूजायांममभक्तिरनु
त्तमा ममभूयाद्भगवतिजरामरणहारिणी भर्तुर्व्ययेतिवैधव्यंक्षणमात्रपीहन ममभाविमहादेवपातिव्रत्यंचयातुमाम् ईश्वर
उवाच पुलोमकन्येयश्चैषत्वयाकारिमनोरथः लप्स्यसेव्रतचर्यायां त्वंकुरुष्वजितेंद्रिया मनोरथतृतीयायाश्चरणेनभविष्यति
तत्सात्वयेव्रतंवक्ष्येतद्विधेहियथोदितम् तेनव्रतेनचीर्णेनमहासौभाग्यदेनतु अवश्यंभविताबालेतवचैवमनोरथः पुलोम-
कन्योवाच कारुण्यवारिधेशंभोप्रणतप्राणिसर्व किंनामाचाथकाभक्तिःकापूज्यात्रदेवता कदाचसाविधातव्याइतिकर्तव्य
ताचका इत्याकर्ण्यशिवोवाक्यंतांतुप्रीत्याजगादह ईश्वरउवाच मनोरथस्तृतीयायांव्रतंपौलोमितच्छृणु पूज्याविश्वभुजागौ
रीचतुर्भुजाविशालिनी वरदोभयहस्तश्चसाक्षसूत्रःसमोदकः देव्याःपुरस्ताद्विनापूज्यआशाविनायकः चतुर्भुजःश्वा

रुनेत्रः सर्वसिद्धिकरः प्रभुः चैत्रशुक्लतृतीयायां कृत्वा वै दंतधावनम् सायंतनीं च निर्वर्त्य नातितृप्या भुजिक्रियाम् नियमं चेति गृण्हीयाज्जितक्रोधो जितेंद्रियः संत्यक्तास्पृश्यसंभारं शुचिस्तद्गतमानसः प्रातर्व्रतं चरिष्यामि मातर्विश्वभुजे नघे विधेहि तन्ममान्विघ्नं मम नो व्रतसिद्धये नियमं चेति संगृह्य स्वपेद्रात्रौ शुभं स्मरन् प्रातरुत्थाय मेधावी विधायावश्यकं विधिम् शौचमाचमनं कृत्वा दंतकाष्ठं समाहरेत् अशोकवृक्षस्य शुभं सर्वशोकविनाशनम् नित्यं तनं च संपाद्य विधिं विधिविदां वरः स्नात्वा शुभ्रांबरः सायं गौरीपूजासमाचरेत् आदौ विनायकं पूज्य घृतापूपान्निवेदयेत् ततोर्चयेद्विश्वभुजां अशोककुसुमैः शुभैः अशोकवर्तिनैवेद्यं धूपेश्चागुरुसंभवैः कुंकुमेनानुलिप्यादौ एकभुक्तं ततश्चरेत् अशोकवर्तिसहितैर्घृतपूरैर्मनोहरैः एवं चैत्रतृतीयायां व्यतीपातायां पुलोमजे चैत्रादिफाल्गुनांतासु तृतीयासु व्रतं चरेत् क्रमेण दंतकाष्ठानि कथयामि तवानघे अनुलेपनवस्तूनि कुसुमानि तथैव च नैवेद्यादि गजाश्वेश्च देव्याश्चाधिशुभव्रते अन्नानि चैकभक्तस्य शृणु तानि फलासये जंब्वपामार्गखदिरजातीचूतकदंबकम् प्लक्षोदुंबर खर्जूरी बदरी दाडिमी तथा दंतकाष्ठद्रुमा एते व्रतिनः समुदाहृताः सिंदूरागरुकस्तूरी चंदनं रक्तचंदनम् गोरोचनं देवदारुं पद्मासं च निशाद्वयम् प्रीत्यानुलेपनं बाले यक्षकर्दमसंभवम् सर्वेषामप्यलाभे च प्रशस्तो यक्षकर्दमः कस्तूरिकाया द्वौ भागौ द्वौ भागौ कुंकुमस्य च चंदनस्य त्रयो भागाः शशिनस्त्वेक एव हि यक्षकर्दम इत्येष समस्तसुरवल्लभः अनुलिप्याथ कुसुमैरर्चयेद्दर्चिताप्यपि पाटलीमल्लिकापद्मकेतकीकरवीरकैः उत्पलै राजचंपैश्च नद्यावर्तैश्च राजभिः कुमारीभिः कर्णिकारैरलाभे तच्छदैः सह सुगंधिभिः प्रसूनोघैः सर्वालाभेपि पूजयेत् करंभोदधिभक्तं च सचूतरसमंडकः फेणिकावटकाश्चैव पायसं च सशर्करम्

ससुक्रं सघृतं भक्तं कार्तिके विनिवेदयेत् उंडेरिकाश्चलड्डुकामाघेलंपसिकाश्शुभा सुष्टिकाः शर्करागर्भाः सर्पिषापरिसाधिताः निवेद्य फाल्गुने देव्यैः सार्धं विघ्नजितामुदा निवेदयेत दन्नं हि एकभुक्तेपि तत्स्मृतम् अनिवेद्येन संभुंदां फंजानोन्यपतेदधः प्रतिमासं तृतीयायामेकमाराध्यवत्सरम् व्रतसंपूर्तये कुर्यात् स्थंडिलेग्निसमर्चनम् जातवेदसमंत्रेण तिलाज्यद्रविणेनच शतमष्टाधिकं होमं कारयेद्विधिनाव्रती सदैव नक्ते पूजोक्ता सदा नक्ते तु भोजनम् नक्त एवहि होमोयं नक्त एव क्षमापनम् गृहाण पूजां मे भक्त्यामार्तविघ्नजितासह नमोस्तु ते विश्वभुजे पूरयाशुमनोरथम् नमो विघ्नहृते तुभ्यं नम आशाविनायक त्वं विश्वभुजया सार्धं मम देहि मनोरथम् एतौ मंत्रौ समुच्चार्यौ पूज्यौ गौरीविनायकौ व्रतक्षमापवेदेव्याः पर्यंकस्तूलिकान्वितः आचार्यं च सपत्नीकं पर्यंके उपवेश्यच व्रती समर्चयेद्वस्त्रैः करकर्णविभूषणैः दद्यात्सयस्विनीं गां च व्रतस्य परिपूर्तये मनोरथतृतीयां व्रतमेतन्मयाकृतम् न्यूनातिरिक्तं संपूर्णमेतु दस्तु भवद्गिरा इत्याचार्यसमागच्छेत्तथेत्युक्तश्चतेनवै प्रातश्च तुर्थ्यां संपूज्य चतुरश्च कुमारकान् एवं संपूर्णतां याति व्रतमेतत्फ़ निर्मलम् चिंतितं लभते कामं व्रतस्यास्य निषेवणात् इति श्रीस्कंदपुराणे चैत्रशुक्लतृतीयायां मनोरथव्रतोद्यापनं व्रतं संपूर्णम् अथ चैत्रशुक्लप्रतिपदमारभ्य त्रिरात्रपूर्वकं तृतीयायां अरुंधतीव्रतम् तत्र स्त्रीणामेवाधिकारः अवैधव्यादिफलश्रवणात् तत्रादौ संकल्पः ममइहजन्मांतरे वा बालवैधव्यनाशार्थं अनेकसौभाग्यपुत्ररूपसंपत्तिसमृध्यर्थं अरुंधतीव्रतमहं करिष्ये निर्विघ्नतासिध्यर्थं गणपतिपूजनं स्वस्तिवाचनं आचार्यवरणं च करिष्ये पश्चात्पूजादि आचार्येणकारयेत् वैशाखे श्रावणे वापि माघे वा कार्तिके तथा प्रतिपत्प्रातरुत्थाय स्नात्वा शुक्लतिलामूलकैः प्रतिपदि दिनेनक्तं द्वितीया

यामयाचितम् तृतीयायांउपोष्यंचआचार्येणततःसह रात्रौअधिवासनम् सुवर्णनिर्मितांदिव्यांद्विभुजांप्रतिमात्रयम् अरुंधतीं
वसिष्ठंचध्रुवंचैवपृथक्कृत्यसेत् शिलोपरिसर्वतोभद्रस्थापनम् कलशंधातुमयंतदुपरिताम्रपात्रंप्रतिमायांअग्न्युत्तारणंकृत्वा
तदुपरिअरुंधतींवसिष्ठंध्रुवंचस्थापयेत् कुंकुमाक्षतैःपूजयेत् अथअरुंधतीपूजा अष्टकर्णिकयायुक्तेमंडलेपूजयेत्तुताम्
अरुंधतींमहादेवींवसिष्ठसहितांसतीम् आवाहनं अरुंधतिमहादेवीसर्वसौभाग्यदायिनि दिव्यंसुचारुवेषंचआसनंप्रतिगृ
ह्यताम् आसनं सुचारुशीतलंदिव्यंनानागंधसुवासितम् पाद्यंगृहाणदेवेशिअरुंधतिनमोस्तुते पाद्यंसमर्पयामि अरुंधतिम
हाभागेवसिष्ठप्रियवादिनि अर्घ्यंगृहाणकल्याणिभर्त्रासहपतिव्रते अर्घ्यं॰ गंगातोयंसमानीतंसुवर्णकलशेस्थितं आच
म्यतांमहाभागेवसिष्ठसहितेनघे आचमनं गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः स्नापितासिमयादेवितथाशांतिकुरुष्वमे
स्नानं नानारंगसमुद्भूतंदिव्यंचारुमनोहरम् वस्त्रंगृहाणदेवेशिअरुंधतिनमोस्तुते वस्त्रं॰ कंचुकीमुपवस्त्रंचनानारत्नैःसमन्वितं
गृहाणत्वंमयादत्तंअरुंधतिनमोस्तुते उपवस्त्रं कर्पूरकुंकुमैर्युक्तंहरिद्रादिसमन्वितम् कस्तूरिकासमायुक्तंचंदनंप्रतिगृह्यताम्
चंदनंसम॰ हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितम् मयानिवेदितंभक्त्यागृहाणपरमेश्वरि सौभाग्यद्र॰ माल्यादीनिसुगंधी॰
पुष्पं॰ वनस्पतिरसोदिव्यो॰ धूपं॰ आज्यंचवर्ति दीपं॰ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितम् नैवेद्यंगृह्यतांदेविप्रसीद
परमेश्वरि नैवेद्यं॰ पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतम् कर्पूरेलासमायुक्तंतांबूलंप्रतिगृह्यताम् तांबूलंसमर्पया-
मि इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि फलं॰ हिरण्यगर्भगर्भस्थंहेमबीजंविभा=

वस्रोः अनंतपुण्यफलदमतः शांतिंप्रयच्छमे दक्षिणा पुत्रान्देहि धनंदेहि सौभाग्यंदेहि सुव्रते आन्यांश्चसर्वकामांश्चदेहि देविनमोस्तु
ते प्रार्थनां॰ अरुंधतिमहाभागेवसिष्ठप्रियवादिनि सौभाग्यंदेहि मे देविधनंपुत्रांश्चसर्वदा उत्तरार्ध्यंद्विभुजांश्चारुसर्वांगींसाक्षसूत्रक
मंडलुं प्रतिमांकांचनींकृत्वानामभिः परिपूजयेत् ॐदेववंद्यायैनमः पादौपूजयामि लोकवंद्यायैनमः जानुनीपू॰ संपत्तिदायिन्यै॰
कटिंपू॰ गंभीरनाभ्यै॰ नाभिंपू॰ लोकधात्र्यै॰ स्तनौपूज॰ जगद्धात्र्यैन॰ कंठंपूज॰ शांत्यैन॰ बाहुंपू॰ वरप्रदायै॰ हस्तौपू॰ धृत्यैन॰ मुखंपू॰ अरुंध
त्यै॰ शिरःपू॰ सकलप्रियायैनमः शिरवांपूजयामि॥ वसिष्ठप्रियायैनमः वसिष्ठध्रुवसहितंस॰ सर्वांगंपूजयामि नमोदेव्याइतिनीरा
जनं पुष्पांजलिं वायनंदद्यात् वंशपात्रेस्थितं पूर्णंवाणकंघृतसंयुतम् अरुंधतीप्रीयतांचब्राह्मणायददाम्यहम् वायनं सुवर्णमूर्तिः
संयुक्तांवसिष्ठध्रुवसंयुताम् अरुंधतींसोपचारांब्राह्मणायददाम्यहम् मूर्तिदानमंत्रः गच्छदेवियथास्थानंसर्वालंकारभूषिता अरुं
धतिनमस्तुभ्यंदेहि सौभाग्यमुत्तमम् इतिविसर्जनम् इतिपूजनम् अथकथा स्कंदउवाच पुरावृत्तमिदंविप्राःश्र
णुध्वंव्रतमुत्तमम् आसीत्कश्चित्पुराविप्रः सर्वशास्त्रविशारदः तस्यैकाकन्यकाजातारूपेणाप्रतिमाभुवि ततोविवाहंसम्यग्वै
पितातस्याकरोद्द्विजः कुलशीलवतेदत्तासाकन्यावरवर्णिनी अचिरेणैवकालेन भर्तातस्यामृतोद्विजः बालरंडातुसाजाता।
निर्वेदादगमद्गृहात् यमुनातीरमासाद्यचकारविपुलंतपः एकभुक्तयादिकैश्चैवकृच्छ्रचांद्रायणैस्तथा मासोपमासनियमैरा
स्नानंसाह्यपावयत् कदाचिदागतस्तत्रभ्रमन्गौर्यासदाशिवः यमुनातीरमासाद्यविनितांतांददर्शसा कृपयाचशिवागौरीम
हादेवमुवाचसा देवकेनेदृशींप्रासाबालवैधव्यतादशाम् वदमांकृपयादेवकृपांकुरुदयानिधे महादेवउवाच अयंवि

विपः पुरागौरी कुलशीलयुतोभुवि तेनकन्यापरिणीतास्वरूपायुवतीसती सतांविवाह्यनरूर्णां विदेशमगमद्विजः ततोबहुतिथंका
लंसापश्यद्भर्तुरागमम् नागतस्तुचतदाविप्रोयावज्जीवंगतोद्विजः तस्याजन्मगतंसर्वंविफलंपतिनाविना तेनपापेनविप्रोसोनारी
त्वंमामवाप्नशिवे स्वनारींयःपरित्यज्यनिर्दोषां कुलसंभवाम् यातिदेशांतरंचाथअंधाइवमहार्णवे परदाररतोवास्यादन्यांवाकुरुते
स्त्रियम् सोन्यजन्मनिदेवेशिस्त्रीभूत्वाविधवाभवेत् यानारीतुपतिंत्यक्त्वामनोवाक्कायकर्मभिः रहःकरोतिवैजारंगत्वावापुरुषांतरम्
भोगान्भुक्त्वाचयायोषिन्मदेनप्रमदासती तेनकर्मविपाकेनसानारीविधवाभवेत् सपत्नीं कुलसंभूतांपतिव्रतरतांसतीम् अनु
कूलांपरित्यज्यपरांयोयातिस्वेच्छया सपापीजायतेन्यस्मिंस्त्रीहिनोविप्रजन्मनि अनेनसदृशंदेविलोकेस्मिन्नास्तिपातकम् न
वैधव्यात्परोव्याधिर्नवैधव्यात्परोज्वरः नवैधव्यात्परःशोकोनवैधव्यात्परोंकुशः निरयोनचवैधव्यात्कुष्टंवैधव्यतानृषु तेनपापेनब
हुनाजायतेबालरंडका इतितस्यवचःश्रुत्वासागौरीविस्मिताभवत् प्रपच्छतंमहादेवंगौरीसाकरुणान्विता केनेदृशंमहत्पापंबा
लवैधव्यदायकम् नश्यतेकर्मणाकेनतन्मांवदकृपांकुरु महादेवउवाच शृणुदेविप्रवक्ष्यामिबालवैधव्यनाशनम् अरुंध
तीव्रतंपुण्यंनारीसौभाग्यदायकम् यत्कृत्वाबालवैधव्यान्मुच्यतेनात्रसंशयः श्रुतमेतत्तदाविप्रागौर्याशंकरतोव्रतं यमुनातीरमासाद्य
उपदिष्टंतदाद्विजाः तस्यैनार्यैमहादेव्याकारितंव्रतमुत्तमम् तेनपुण्येनमहताव्रतजेनमुनीश्वराः सानारीचागमत्स्वर्गंमुक्त्वावै
धव्यतांतदा इत्यव्रतंश्रुतंसम्यगुपदिष्टंमुनीश्वराः कृतमन्यैश्चबहुभिस्तेपिमुक्तानसंशयः अरुंधतीव्रतमिदंसदाकार्यंमुनी
श्वराः नारीवैधव्यतोमुच्येत्सौभाग्यंप्राप्नुयात्परम् इतिश्रीस्कंदपुराणेअरुंधतीव्रतम् अथउद्यापनम् युधिष्ठिरउवाच

उद्यापनविधिंब्रूहि अरुंधत्याः सुरेश्वर भक्तितः श्रोतुमिच्छामि व्रतसंपूर्णहेतवे कृष्णउ॰ अरुंधतीव्रतंवक्ष्ये नारीसौभाग्यदायकम्
येनचीर्णेनवैसम्यक्नारीसौभाग्यमाप्नुयात् जायतेरूपसंपन्नापुत्रपौत्रसमन्विता वसंतेतुसमासाद्यतृतीयायांयुधिष्ठिर माघे
वामाधवेचैवश्रावणेकार्तिकेथवा स्नानंकृत्वातुवैसम्यक्त्रिरात्रोपोषितासती मिथुनानिचचत्वारिसमाहूयपतिव्रता पूज
येत्पुष्पतांबूलैश्चंदनैश्चतथाक्षतैः कुंकुमागरुकस्तूरीकर्पूरमृगनाभिभिः शिलापट्टेचसंस्थाप्यजीरकंलवणान्वितम् लोहके
नसमायुक्तंवस्त्रयुग्मेनवेष्टितम् आवाहयेदरुंधत्यांवसिष्ठप्राणसंमिताम् पतिव्रतानांसर्वासांमुख्यांवैदेवभामिनीं द्विभु
जांचारुसर्वांगींसाक्षसूत्रकमंडलुम् प्रतिमांकांचनींकृत्वानामभिःपरिपूजयेत् वसिष्ठंचध्रुवंचैवप्रतिमांपूजयेद्व्रती देववंद्ये
नमःपादौजानुभ्यांलोकवंदिते कटिंसंपूजयेत्तस्याःसर्वसंपत्तिदायनीम् नाभिंगंभीरनाभ्यै तुलोकधात्र्यैतथास्तनौ जगद्धा
त्र्यैतथास्कंधौबाहू शांत्यैनमस्तथा हस्तौतुवरदायैतुमुखंधृत्यैनमःपुनः अरुंधत्यैतथापूज्यंशिरस्तुसकलप्रियं एवंसंपूज्य
तांदेवींगंधपुष्पोपचारकैः पूजयित्वासतींदेवींततश्चार्घ्यंप्रदापयेत् अरुंधतीमहाभागेवसिष्ठप्रियवादिनी सौभाग्यंदेहि
मेदेविधनपुत्रांश्चसर्वदा पुत्रान्देहिधनंदेहिसौभाग्यंदेहिसुव्रते अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते सुवासिन्योथ
संपूज्याःसमाप्तिदिवसेतदा शुभगंधाक्षतैःपुष्पैर्दद्याच्छूर्पेणभक्ष्यकान् होमंचैवतदाकुर्यात्समिद्भिश्चतिलैःपृथक् अष्टोत्तर
शतंसंख्यापार्थनामंत्रतःसुधीः मिथुनानिचसंपूज्यभूषणाच्छादनादिभिः नानाविधोपचारैश्चचतुर्विंशतिसंख्ययाआचार्यायचगां
दद्याद्वस्त्राण्याभरणानिच शय्यांसोपस्करांदद्यात्कांस्यपात्रंसदीपकम् आदर्शंचामरंचैवअश्वंदद्यात्सुशोभनम् यथातु

भोजयित्वाथस्त्रियः शूर्पान्समोदकान् मोदकान्कांचनंचैवतथावस्त्रंयथाविधि पोलिकाघृतपूपाश्चपूरिकाश्चविशेषतः सोहालिका
श्चदातव्याएकैकंद्विगुणं तथा भोजनद्वयपर्यासंदीनानाथांश्चपूजयेत् एवंव्रतंसमाप्याथपश्चान्नक्तंसमाचरेत् अनेनैवविधानेनभा
मिनीकुरुतेव्रतम् अवैधव्यत्वमाप्नोतितथाजन्मसहस्रकम् पुत्रपौत्रसमायुक्ताधनधान्यसमावृता जीवेद्वर्षशतंसाग्रंसहभर्त्राम-
हाव्रता एवमभ्यर्चयित्वातुपदंगच्छेदनामयम् देवभार्यायथास्वर्गेऋषिभार्यातथैवच राजतेचमहाभागासर्वकामसमृद्धिभिः ॥
इतिश्रीस्कंदपुराणेअरुंधतीव्रतोद्यापनं अथवैशाखशुक्लतृतीयायांभविष्योक्तरोक्तमक्षय्यतृतीयाव्रतम् तीर्थेवाल्पद्दिनेस्नानं
तिलैश्चपितृतर्पणम् दानंधर्मघटादीनांमधुसूदनपूजनम् माधवेमासिकुर्वीतमधुसूदनमृषिदम् तुलामकरमेषेषुप्रातस्नानंवि
धीयते हविष्यंब्रह्मचर्यंचमहापातकनाशनम् वैशाखस्नाननियमंब्राह्मणानामनुज्ञया मधुसूदनमभ्यर्चकुर्यात्संकल्पपूर्वकम्
वैशाखंसकलंमासंमेषसंक्रमणेरवेः प्रातःसनियमस्नास्येप्रीयतांमधुसूदनः मधुसूदनसंतोषाद्ब्राह्मणानामनुग्रहात् निर्विघ्न
मस्तुमेपुण्यंवैशाखस्नानमन्वहम् माधवेमेषगेभानौमुरारिर्मधुसूदनः प्रातःस्नानेनमेनाथफलदःपापहाभव यदानज्ञायते
नामतस्यतीर्थस्यभोद्विजाः तत्रउच्चारणंकार्यंविष्णुस्तीर्थमिदंत्विति अपिसम्यग्विधानेननारीवापुरुषोपिवा प्रातःस्नातःसनि
यमःसर्वपापैःप्रमुच्यते वैशाखेविधिवत्स्नात्वाभोजयेद्ब्राह्मणान्दश कृत्स्नशःसर्वपापेभ्योमुच्यतेनात्रसंशयः इतिवैशाख-
स्नानविधिर्भविष्ये इयमेवतृतीयापरशुरामजयंती साचप्रदोषव्यापिनीग्राह्या तदुक्तंभार्गवार्चनदीपिकायांस्कांदभविष्ययोः
वैशाखस्यासितेपक्षेतृतीयांपुनर्वसौ निशायाःप्रथमेयामेरामाख्यःसमयेहरिः रेणुकायास्तुयोगर्भादवतीर्णोविभुःस्वयम्

दिनद्वयेतथाव्याप्तौअंशतःसमव्याप्तौचपरा शुक्लतृतीयांवैशाखेशुक्लोपोष्यादिनद्वये निशायांपूर्वयामेचेद्दुत्तरान्यत्रपूर्विका
नत्वेवंवैशाखतृतीयाअक्षय्यतृतीयासाचपूर्वाण्हव्यापिनीग्राह्यादिनद्वयेतद्व्याप्तौतुपरैवेति इयंयुगादिरपि यामन्वाद्यायुगाद्या-
श्चतिथयस्तासुमानवः स्नात्वाहुत्वाचजप्त्वाचदत्वानंतफलंलभेत् यास्वेपिपूर्वाण्हव्यापिनीग्राह्या पूर्वाण्हेतुसदाकार्याःशुक्ला मनुयु
गादयः दैवेकर्मणिपैत्र्येचकृष्णेचैवापराण्हिका वैशाखस्यतृतीयांयःपूर्वविद्धांकरोतिवै हव्यंदेवानगृह्णंतिकव्यंचपितरस्तथा इति
वैशाखस्यतृतीयायांश्रीसमेतंजगद्गुरुम् नारायणंपूजयेच्चपुष्पधूपविलेपनैः योस्यांददातिकरकान्वारिव्यंजनसंयुतान् सयातिपु
रुषोवीरलोकान्वैहेममालिनः वैशाखशुक्लपक्षेतुतृतीयायांतथैवच गंगातोयेनरःस्नात्वामुच्यतेसर्वकिल्बिषैः श्रीकृष्णउवाच
बहुनात्रकिमुक्तेनकिंबह्वक्षरमालया वैशाखस्यसितामेकांतृतीयामक्षयांशृणु तस्यांस्नानंतपोहोमःस्वाध्यायःपितृतर्पणम्
दानंचक्रियतेतस्यांतत्सर्वस्यादिहाक्षयम् आदिःकृतयुगस्येयंयुगादिस्तेनकथ्यते सर्वपापप्रशमनीसर्वसौख्यप्रदायिनी पुराम
होदयेपार्थवणिगासीत्सुनिर्धनः प्रियंवदःसत्यव्रतोदेवब्राह्मणपूजकः पुण्याख्यानेकचित्तोभूत्कुटुंबेव्याकुलोपिसन् तेनश्रुता-
वाच्यमानातृतीयारोहिणीयुता यदास्याद्बुधसंयुक्तातदासातुमहत्फला यस्यांयद्दीयतेकिंचिदक्षय्यंस्यात्तदेवहि इतिश्रुत्वाचगं
गायांसंतर्प्यपितृदेवताः गृहमागत्यकरकान्सान्नान्नुदकसंयुतान् अन्नपूर्णान्बृहत्कुंभानजलेनविमलेनच यवगोधूमलवणान्
सक्तुदध्योदनंतथा इक्षुक्षीरविकारांश्चसहिरण्यांश्चशक्तितः शुचिःशुद्धेनमनसाब्राह्मणेभ्योददौवणिक् भार्ययावार्यमा
णोपिकुटुंबासक्तचित्तया तावत्तस्थौस्थिरेसत्वेमत्वासर्वंविनश्वरम् धर्मासक्तमतिःपार्थकालेनबहुनाततः जगामपंचत्वम

सौवासुदेवमनुस्मरन् ततःसक्षत्रियोजातःकुशवत्यांयुधिष्टिर बभूवचाक्षयातस्यसमृद्धिर्धर्मसंयुता ईजेसचमहायज्ञैःसमाप्तव
रदक्षिणैः सददौगोहिरण्यानिदानान्यन्यान्यहर्निशम् बुभुजेकामतोभोगान्दीनांधांस्तर्पयन्धनैः तथाप्यक्षयमेवास्यांक्षयंयातिनतद्धनम्
श्रद्धापूर्वंतृतीयायांयद्दत्तंविभवंविना इत्येतत्त्वसमाख्यातंश्रूयतामत्रयोविधिः तृतीयायांसमाख्यातंस्नात्वासंतर्प्यदेवताः एकभक्तं
तदाकुर्याद्वासुदेवंप्रपूजयेत् तस्यांकार्यायवैर्होमोयवैर्विष्णुंसमर्चयेत् यवान्दद्याद्विजातिभ्यःप्रयतःप्राथयेद्यवान् उदकुंभान्स
करकान्सान्नान्सर्वरसैःसह यवगोधूमचणकान्सक्तुदध्योदनंतथा ग्रैष्मकंसर्वमेवात्रसम्यक्दानेप्रशस्यते तृतीयायांतुवैशा
खेरोहिण्यृक्षेप्रपूजित उदकुंभप्रदानेनशिवलोकेमहीयते तत्रमंत्रः एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः अस्यप्रदानात्तृप्यं
तुपितरोपिपितामहाः गंधोदकतिलैर्मिश्रंसान्नंकुंभंसदक्षिणम् पितृभ्यःसंप्रदास्यामि अक्षय्यमुपतिष्ठतु छत्रोपानत्प्रदा
नंचगोभूकांचनवाससाम् यद्यदिष्टंकेशवस्यतद्देयमविशंकया एतत्तेसर्वमाख्यातंकिमन्यच्छ्रोतुमिच्छति अनाख्येयंनमेकिंचि
दस्तिस्वल्पं कृतेनघ तस्यांतिथौक्षयमुपैतिहुतंचदत्तंतेनाक्षयेतिकथितामुनिभिस्तृतीया उद्दिश्यदैवतपितॄन्क्रियतेमनु
ष्यैस्तत्त्वाक्षयंभवतिभारतसर्वमेव इतिश्रीभविष्येअक्षय्यतृतीयाव्रतम् अस्यामेवविष्णुधर्मोत्तरेपिउक्तम् वैशाख
शुक्लपक्षेतुतृतीयायामुपोषितः रात्रौभुक्त्वेवत्सरेतुमन्वादिषुयुगादिषु अभिस्वदृष्टिमंत्रंचअष्टोत्तरशतंजपेत् कृतोपवासा
मलिलंयेयुगादिदिनेषुच दास्यंत्यन्नादिसहितंतेषांलोकामहोदयः अक्षय्यंफलमाप्नोतिसर्वस्यसुकृतस्यच तथासाकृत्ति-
कोपेताविशेषेणचपूजिता तत्रजप्तंहुतंदत्तंसर्वमक्षय्यमुच्यते अक्षय्यासातिथिस्तस्मात्तस्यांसुकृतमक्षयम् अक्षतैःपूज्य

नेक्षिप्णुस्तेनसाप्यक्षयास्मृता अक्षतैस्तुनरस्नातोविष्णोर्दत्वातथाक्षतान् सत्कृत्यसंस्कृतांश्चैवहुत्वाचभृगुनंदन ॥ अक्षय्यतृतीया यांसर्वासांतुफलंलभेत् अत्रैवपरशुरामजयंतीदोलोत्सवश्चहेमाद्रौभविष्ये इतिअक्षय्यतृतीयायावतंसंपूर्णम् अथज्येष्ठशु क्लतृतीयायांरंभाव्रतम् तदुक्तंमाधवीयेभविष्ये कृष्णउवाच भद्रेकुरुष्वयत्नेनरंभाख्यंव्रतमुत्तमम् ज्येष्ठशुक्लतृतीयायांस्ना त्वानियमतत्परा पूर्वविद्धातिथिर्ग्राह्यातत्रैवव्रतमाचरेत् बृहत्तपातथारंभासावित्रीवटपैतृकी कृष्णाष्टमीचभूताच कर्तव्यासंमुखी तिथिः इतिरंभाव्रतनिर्णयः अथश्रावणशुक्लतृतीयायांमधुस्रवाख्या गुर्जरेषुप्रसिद्धा सापरयुताग्राह्या अथाचारप्राप्तश्रावण शुक्लतृतीयायांस्वर्णगौरीव्रतम् तच्चकर्नाटकदेशेभाद्रपदशुक्लतृतीयायांप्रसिद्धम् तत्रसंकल्पः ममइहजन्मनिजन्मांतरेचअक्ष य्यसौभाग्यप्राप्तिकामायाः पुत्रपौत्रादिधनधान्यैश्वर्यप्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थंस्वर्णगौरीव्रतमहंकरिष्ये तत्रपूजा देविदेविसमाग च्छप्रार्थयेहंजगत्पते इमांमयाकृतांपूजांगृहाणसुरसत्तमे आवाहनं भवानित्वंमहादेविसर्वसौभाग्यदायके अनेकरत्नसंयुक्तंआ सनंप्रतिगृह्यताम् आसनं सुचारुशीतलंदिव्यंनानागंधसुवासितम् पाद्यंगृहाणदेवेशिमहादेविनमोस्तुते पाद्यं श्रीपार्वतीमहा भागेशंकरप्रियवादिनि अर्घ्यंगृहाणकल्याणीभर्त्रासहपतिव्रते अर्घ्यं गंगातोयंसमानीतंसुवर्णकलशेस्थितम् आचम्यतांमहा भागेरुद्रेणसहितेनघे आचमनं गंगासरस्वतीरेवाकावेरीनर्मदाजलैः स्नापितासिमयादेवितथाशांतिंकुरुष्वमे स्नानं० सर्वभू षाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् वस्त्रं० कंचुकीं आचमनीयं० कर्पूरकुंकुमैर्युक्तंहरिद्रा दिसमन्वितम् कस्तूरिकासमायुक्तंचंदनंप्रतिगृह्यताम् चंदनं हरिद्रांकुंकुमंचैवसिंदूरंकज्जलंतथा सौभाग्यद्रव्यसंयुक्तंगृहाण

परमेश्वरि ॥ सौभाग्यद्रव्यं ॥ माल्यादीनितिपुष्पं ॥ देवद्रुमरसोद्भूतःकालागरुसमन्वितः ॥ आघ्रेयतामयंधूपोभवानीघ्राणतर्पणः ॥ धूपं ॥ आ
ज्यंचेतिदीपं ॥ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं ॥ भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां ॥ नैवेद्यं ॥ आचमनं ॥ कर्पूरैलालवंगादि
ताम्बूलीदलसंयुतं ॥ क्रमुकादिफलंचैवतांबूलंप्रतिगृह्यतां ॥ तांबूलं ॥ इदंफलंमयादेविस्थापितंपुरतस्तव ॥ तेनमेसफलावाप्तिर्भवेज्ज
न्मनिजन्मनि ॥ फलं ॥ हिरण्यगर्भेतिदक्षिणा ॥ नीराजनं ॥ नमस्कारः ॥ प्रदक्षिणापुष्पांजलिः ॥ पुत्रान्देहिधनंदेहिसौभाग्यंदेहिसुव्रते
॥ अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते ॥ इतिप्रार्थना ॥ भवान्याश्चमहादेव्याव्रतसंपूर्णहेतवे ॥ प्रीतयेद्विजवर्यायवाणकंप्रददाम्यहं
॥ वायनं ॥ नानाषोडशपक्वान्नैर्वेणुपात्राणिषोडश ॥ शर्कराघृतसंयुक्तान्याहूयद्विजदंपतीम् ॥ व्रतोद्यापनपूर्त्यर्थंब्राह्मणेभ्योददाम्यहं ॥
स्वलंकृताःसुवासिन्यःपातिव्रत्येनभूषिताः ॥ ममकामसमृध्यर्थंप्रतिगृण्हंतुभूषिताः ॥ ॥ इतिस्वर्णगौरीपूजा ॥ ॥ अथकथा ॥
पुराकैलासशिखरेसिद्धगंधर्वसेविते ॥ उमयासहितःस्कंदःपप्रच्छशिवमव्ययम् ॥ ॥ स्कंदउवाच ॥ ॥ करुणासागरेशानलोकानांहि
तकाम्यया ॥ व्रतंकथयदेवेशपुत्रपौत्रप्रवर्धनम् ॥ ॥ शंकरउवाच ॥ ॥ साधुपृष्टंमहाभागकथयामिषडानन ॥ स्वर्णगौरीव्रतंनाम
सर्वसंपत्करंनृणां ॥ पुरासरस्वतीतीरेविमलाख्यामहापुरी ॥ तत्रचंद्रप्रभोनामराजाभूत्मदनोपमः ॥ महादेविविशालाक्षेभार्येबालमृगे
क्षणे ॥ तयोःप्रीयतराज्येष्ठातस्यासीन्नृपतेर्मता ॥ सकदाचिद्वनंभेजेमृगयासक्तमानसः ॥ तत्रशार्दूलवाराहवनमाहिषकुंजरान् ॥ ह
त्वाबभ्रामतृष्णार्तोसरसीविग्रहंमहत् ॥ चकोरचक्रकारंडरवंजरीकशताकुलं ॥ उत्फुल्लकल्हकोद्दामंकुमुदोत्पलमंडितम् ॥ अपूर्वमव
नीशोसौददर्शाप्सरसांगणान् ॥ समासाद्यसरस्तीरंपीत्वाजलमनुत्तमं ॥ भक्त्यागौरीमर्चयेतददर्शाप्सरसांगणान् किमेवादितिपप्रछ

राजाराजीवलोचनः स्वर्णगौरीव्रतमिदंक्रियतेस्माभिरुत्तमं सर्वसंपत्करंनृणांतत्कुरुष्वनृपोत्तम राजोवाच विधानंकीदृशंब्रूतकिंफलंत्र त-
चारणात् नाउचुर्योषिताभःसर्वानभेमासितृतीयके प्रारब्धव्यंव्रतमिदंगौर्याःषोडशवत्सरान् तच्छ्रुत्वासोपिजग्राहव्रतंनियतमानसः गुणैःषो
डशसंयुक्तंदोरकंदक्षिणेकरे वबंधानेनमंत्रेणकरिष्येहंव्रतंतव ततःकृत्वाव्रतंदेव्याःआगमन्निजमंदिरे मंदिरस्यांततोदृष्टोराजागौर्याः
प्रपूजकः बद्धंतंदोरकंहस्तेदृष्ट्वाचपतिकोपना त्रुटित्वासाचनिक्षेपबाह्यशुष्कतरूपरि नकर्त्तव्यंनकर्त्तव्यंइतिराजावदत्यपि तेनसंस्पृ
ष्टमात्रेणतरुःपल्लवतांगतः तद्द्वितीयाततोदृष्ट्वाविस्मयाल्लुज्जिताभवत् तन्मूलेदोरकंछिन्नंगृहीत्वासाबबंधह ततस्तद्व्रतमाहात्म्यात्सापति
प्रियतराभवत् देवीव्रतोपचारेणसात्यक्ताढुःखितावने भ्रमंतीसामहादेवींध्यायंतीनित्यमन्विता मुनीनामाश्रमेपुण्येनिवसंतीत्यपिक्व-
चित् निवारितास्फनिर्वैरंगच्छपापेयथासुखं धावंतीविपिनंघोरंगणाध्यक्षंददर्शह तेनदृष्ट्वापिसागौरीरक्षाम्यहमुपोषिता ततोददर्शाग्रत
रुंगच्छंतीत्वसरोवरं ततोवनश्रियंचाग्रेसर्वाभरणभूषिता पश्यंतीशनकैस्तद्वत्व्रजंतीचैवमानुषी तैस्तैनीराकृताहृष्ट्वानिर्विण्णानिपसादह
ततस्तत्कृपयागौरीप्रादुरासीन्महासती तांदृष्ट्वादंडवद्भूमौनत्वास्तुत्वानृपप्रिया जयदेविनमस्तुभ्यंजयभक्तवरप्रदे जयशंकरवामांगेसं
गलेसर्वमंगले ततोलब्ध्वावरंभक्त्यागौरीमभ्यर्च्यतद्व्रतं चक्रेदेवीपदंतस्यैददौसौभाग्यसंपदः इतितस्याःप्रसादेनसर्वान्भोगानवाप्य
च अंतेशिवपुरप्राप्तिःकांताभिःसहितोनृप यत्छोभनंव्रतमिदंकथितंशिवायाःकुर्यान्ममप्रियतरोभवितात्वगौर्याः प्राप्यश्रियःसमवि
कुमविशत्रुसंघान्निर्जित्यनिर्मलपदंसहसाप्रयाति इतिश्रीस्कंदपुराणेगौरीखंडेस्वर्णगौरीव्रतकथा अथोद्यापनं युधिष्ठिरउवाच
॥ ॥उद्यापनविधिंब्रूहितृतीयायाःसुरेश्वर भक्तितःश्रोतुमिछामिव्रतसंपूर्णहेतवे कृष्णउवाच उद्यापनविधिंवक्ष्ये

संबन्धनेनवैशृणु त्रिंशद्दंडप्रमाणेन प्रमितं दक्षिणोत्तरे प्रत्यक्प्रागपिराजेंद्र नवगोचर्ममिष्यते गोचर्ममात्रं संलिप्यगोमयेनविचक्षणः
मंडपंकारयेत्तत्रनानावर्णैः सुशोभनं गृहमंडलपार्श्वेतुपद्ममष्टदलंलिखेत्॥ तन्मध्येस्थापयेत्कुंभमव्रणंमृन्मयंशुभं ताम्रपात्रंप्रकुर्वी
तपलैःषोडशभिस्तथा तदर्धार्धेनवाकुर्याद्वित्तशाठ्यंविवर्जयेत् कर्षमात्रसुवर्णेन प्रतिमांकारयेद्बुधः तदर्धंमध्यमंप्रोक्तंतदर्धंतुक
निष्ठकं कृत्वारूपंप्रयत्नेन पार्वत्याचहरस्यच अथताम्रमयेपात्रे प्रतिमांतत्रविन्यसेत् श्वेतवस्त्रयुगच्छन्नंश्वेतयज्ञोपवीतिनं भाज
नंचतिलैःपूर्णंकलशोपरिविन्यसेत् पार्वत्यास्तुयुगंदद्यात्स्थापयित्वाविधानतः वेदोक्तेनप्रतिष्ठाचकर्तव्यातुयथाविधि पंचामृते
नस्नपनंकृत्वादेवस्यचोत्तमं स्नानंचकारयेत्पश्चात्ततःपूजांसमाचरेत् चंदनेनसुगंधेनसुपुष्पैश्चप्रपूजयेत् धूपंचकल्पयेद्धूपंचं
दनागरुसंयुतं नानाप्रकारैर्नैवेद्यंतथादीपंचकारयेत् अर्चयेत्पूजयेद्भक्त्यागंधपुष्पैःफलाक्षतैः आवाहनादिकर्तव्यंपुराणागमसु
द्भवैः कार्यांविधानतःपूजांभक्तिश्रद्धासमन्वितः देवदेवसमागच्छ प्रार्थयेहंजगत्पते इमांमयाकृतांपूजांगृहाणसुरसत्तमे एवंपू
जांप्रकर्तव्यारात्रौजागरणंततः गीतनृत्यादिसंयुक्तंकथाश्रवणपूर्वकं अर्चयेत्पूर्ववद्देवंपश्चाद्धोमंसमाचरेत् स्वगृह्योक्तविधाने
नकृत्वाग्निस्थापनंततः आरभेच्चततोहोमंनवग्रहपुरःसरं तिलांश्चयवसंमिश्रानाज्येनचपरिप्लुतान् संकर्षणेनमंत्रेणगौरीमंत्रेण
वाशिवाम् एवंसमाप्यहोमंतुतत्राचार्यंप्रपूजयेत् अर्घ्यपुष्पप्रदानैश्चवस्त्रालंकारभूषणैः शक्त्यासदक्षिणांकुर्यात्प्रचारेगौरधिका
मता धेनुःसदक्षिणांदत्वासुशीलांचपयस्विनी स्वर्णशृंगींरौप्यखुरींकांस्यदोहनसंयुतां रत्नपुच्छांवस्त्रयुतांतांम्रपृष्ठीमलंकृताम्
सवत्सांमव्रणांभद्रांधेनुंदद्यात्प्रयत्नतः सुवर्णेनसमोपेतामाचार्यायचसाधवे षोडशभिःप्रकारैश्चपक्वान्नैःप्रीणयेत्सदा षोडश

व्र॰रा॰
२३

प्रमितैर्देयाद्ब्राह्मणेषु प्रयत्नतः वंशपात्रैः स्थितैः पश्चात्पक्वान्नं वायनैः शुभैः अन्येभ्यो ब्राह्मणेभ्यश्च दक्षिणां च प्रयत्नतः बंधुभिः सह भुंजीत
नियतश्च परेहनि एवं कृत्वा भवेत्सार्थपरिपूर्णव्रतीयतः इति श्रीस्कंदपुराणे स्वर्णगौरीव्रतोद्यापनं अथ सकृत तृतीया श्रावणशु
क्लतृतीयायां सकृतव्रतं सा मध्यान्हव्यापिनी ग्राह्या शौनक उवाच सर्वकामप्रदानानि व्रतानि कथितानि वै व्रतं कथय यत्नेन ये
न श्रेयोहमाप्नुयां सूत उवाच साधु साधु महाभाग लोकानां हितकारक कथयामि व्रतं दिव्यं योषितां फलदायकं कृष्णस्यावरजा साध्वी सु
भद्रानाम विश्रुता रूपलावण्यसंपन्ना सुभगा चारुहासिनी गांडीवधन्वनश्चासौ योषितां च वराप्रिया त्रैलोक्याधिपतिः कृष्णः तस्याहं भ
गिनी प्रिया इति गर्वसमाविष्टा न किंचिदकरोच्छुभं कालोपि यस्य आज्ञां वै शिरसा धारयत्सदा समेभ्राता सखा कृष्णो दनुजानां निकृंतनः॥
इति संचिंत्य मनसि न किंचित्सा करोत्तदा सर्वज्ञानं तदा तेन देवदेवेन शार्ङ्गिणा इति संचिंत्य मनसि भ्रातृत्वान्मम गौरवात् भवाब्धितारणं
किंचिन्मूढत्वान्न करिष्यति ध्यात्वा मुहूर्तं मनसि श्रीकृष्णो भक्तवत्सलः सुभद्रानिकटे गत्वा वचनं चेदमब्रवीत् परलोकजिगीषार्थं न किं
चिदपि ते कृतं व्रतं कुरुष्व मनसा सर्वान्कामानवाप्स्यसि सकृत्तंतारकं लोके लोकानां हितकारकं यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संश
यः भुक्तिमुक्तिप्रदं चापि सर्वसौभाग्यदायकं व्रतं कुरुष्व चाद्यैव सकृतस्य फलाप्तये कालोहं सर्वलोकेषु वृक्षरूपेण संस्थितः धर्मं तस्य
च मूलं हि त्क्लवस्कंध एव च मासद्वादशसंख्याकाश्चोपसंख्याद्यनुक्रमात् षष्ट्याधिकं च त्रिशतं फलानि समजायत॥ ॥ पर्णानि
घटिकाः प्रोक्ताः कालोहं वृक्षरूपकः तस्मात्सकृत्त्वानां प्राप्तयर्थं व्रतं कुरुष्व शोभने नभसि मासे संप्राप्ते शुक्लपक्षे च भामिनि तृतीया हस्तसंयुक्ता
ग्रा॥ र्यमिदं शुभं प्रातश्चैव समुत्थाय दंतधावनपूर्वकम् स्नानं कुर्याद्यथान्यायं हरिद्राभिः समन्वितं मध्यान्हे चैव संप्राप्ते कृत्वा गोम-

२३

व्र॰ ३७ चतुर्द्वारेणसहितंमंडपंतत्रकारयेत् वेदिंविरिच्यधवलांहस्तमात्रांविशेषतः तन्मध्येष्टदलंपद्ममस्तेःपरिकल्पयेत् पीन
वेणंचपरिस्थाप्यक्षीराब्धितनयासह उपचारैःषोडशभिःपूजयेद्भक्तिसंयुतः षष्ठ्याधिकंचत्रिशतंसकृत्तस्यफलानिवै गोधूमस्यचूर्ण
फलंशर्कराभिःसमन्वितं औदुंबरस्यवृक्षस्यफलाकारंचकारयेत् वेणुपात्रेचसंस्थाप्यवाणकंचद्विजातये सहिरण्यंसतांबूलंदद्याच्चैव
यथाविधि पुत्रपौत्रसमृध्यर्थंसौभाग्यावाप्तयेतथा वाणकंवैप्रदास्यामिव्रतसंपूर्णहेतवे पिष्टस्यचफलानांवैपायसंपरिकल्पयेत्
भ्रातृस्वरूपिणंमांचभोजयित्वायथाविधि इतिकृत्वाचविधिवत्समाप्यचततःपरं तृतीयेवत्सरेप्राप्तेउद्यापनविधिंचरेत् आचार्यं
वरयेद्भक्त्यावेदवेदांगपारगं सुशीलंसर्वधर्मज्ञंशांतंदांतंकुटुंबिनम् स्वस्तिवाचद्विजैःसाकंनांदीश्राद्धंविधायच हैमींचप्रतिमां
कुर्यान्निष्कनिष्कार्धसंख्यया क्षीराब्धितनयासाकंमांप्रतिष्ठाप्यभक्तितः नवीनंकलशंताम्रंपिधानेनसमन्वितं पल्लवैश्चहिर
ण्यैश्चवस्त्रयुग्मेनवेष्टितं तन्मध्येमांप्रतिष्ठाप्यउपचारैःप्रपूजयेत् ततःपुष्पांजलिंदद्यात्समाप्यचपुनःपुनः वाणकंहिप्रदद्याच्च
व्रतसंपूर्णहेतवे लक्ष्मीनारायणोदेवोस्यस्मात्संसारसागरात् रक्षेद्वैसकलात्पापादिहसर्वंददातुमे अच्युतःप्रतिगृण्हातिअच्युतो
वैददातिच अच्युतस्तारकोभाभ्यांअच्युतायनमोनमः रात्रौजागरणंकुर्याद्गीतवादित्रमंगलैः पुराणश्रवणेनैवरात्रिशेषंततोनयेत्
प्रभातेविमलेस्नात्वानित्यकर्मसमाप्यच विष्णोर्नुकंसत्कुभिवहोमेमंत्रद्वयंस्मृतं अष्टाधिकद्विशतंचतिलैर्होमंतुकारयेत् कलशंप्रति
मायुक्तंमाचार्यायनिवेदयेत् गांदद्यात्कपिलांचैवसालंकारां सदक्षिणां आचार्यंपूजयेद्भक्त्यावस्त्रैराभरणैरपि ब्राह्मणान्भोजये
त्पश्चाच्चतुर्विंशतिसंख्यकान् आशिषोवैगृहीत्वाथस्वयंभुंजीतभक्तितः इतितस्यवचश्रुत्वानत्सर्वंहिचकारसा भुक्ताभोगान्

न्यथाकामंअंतेस्वर्गंजगामसा ॥ इतिश्रीभविष्योत्तरपुराणेस्कंदकुलव्रतोद्यापनम् ॥ अथभाद्रपदशुक्लतृतीयायांशिवप्रियगृहीतं हरितालिकाव्रतं तच्चपरविद्धायांकार्यं मुहूर्तमात्रसत्वेपिदिनेगौरीव्रतंपरेइतिमाधवोक्तेः हरितालिकाव्रतसत्वेपुरस्कारेणापिपरविद्धाग्रहणवचनात् द्वितीयासीयेउदाहृतत्वाच्च ॥ तत्रव्रतविधिः भाद्रपदशुक्लतृतीयायांप्रातस्तिलामलककल्केनस्नात्वापट्टवस्त्रंपरिधाय मासपक्षाद्युल्लिख्यममसमस्तपापक्षयपूर्वकसप्तजन्मराज्यअखंडितसौभाग्यादिविवृद्धये उमामहेश्वरप्रीत्यर्थंहरितालिकाव्रतमहंकरिष्ये ॥ तत्रादौगणपतिपूजनंकरिष्ये गौरीयुक्तंमहेश्वरंपूजयेत् ॥ अथपूजा ॥ पीतकौशेयवसनांहेमाभांकमलासनां भक्तानांवरदांनित्यांपार्वतींचिंतयाम्यहं मंदारमालाकुलितालकायैकपालमालांकितशेखराय दिव्यांबरायैचदिगंबरायनमःशिवायैचनमःशिवाय उमामहेश्वराभ्यांनमः ध्यायामि देवदेवसमागच्छप्रार्थयेहंजगन्मये इमांमयाकृतांपूजांगृहाणसुरसत्तम उमामहेश्वराभ्यांनमः आवाहनं भवानित्वंमहादेविसर्वसौभाग्यदायके अनेकरत्नसंयुक्तमासनंप्रतिगृह्यतां आसनं सुचारुशीतलंदिव्यंनानागंधसमन्वितं ॥ पाद्यंगृहाणदेवेशिमहादेवनमोस्तुते पाद्यं श्रीपार्वतिमहाभागेशंकरप्रियवादिनि अर्घ्यंगृहाणकल्याणिभर्त्रासहपतिव्रते अर्घ्यं गंगाजलंसमानीतंसुवर्णकलशेस्थितं आचम्यतांमहाभागेरुद्रेणसहितेनघे आचमनं गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः स्नापितासिमयादेवितथाशांतिंकुरुष्वमे स्नानं पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनंप्रीत्यर्थंप्रतिगृह्यतां पंचामृतस्नानं कारणाभूतपापानपुण्यतोयासरस्वती मणिकर्णिजलंशुद्धंस्नानार्थंप्रतिगृह्यतां स्नानं सर्वरक्षाधिकंवस्त्रं उपवीतं कंचुकीमुपवस्त्रंचनानारत्नैःसमन्वितं गृहाणत्वंमाकुलंःपार्वतीचनमोस्तुते कंचुकीं कुंकुमागरुकर्पूरंचंदनंकस्तुरीयुतं विलेपनंमहादेविगंधंदास्यामिभक्तितः गंधं रंजिताःकुंकु

कुला: सा

प्रसन्नाभातिशोभनाः ममैषां देविभावेन प्रसन्ना भव पार्वती अक्षताः हरिद्रांकुंकुमंचैवसिंदूरंकज्जलान्वितं सौभाग्यद्रव्यसंयुक्तं
गृहाणपरमेश्वरि सौभाग्यद्रव्याणि सीमंतिकाबकुलचंपकपाटलाब्जपुन्नागजातिकरवीररसालपुष्पैः बिल्वप्रवालतुलसीदलमाल
तीभिस्त्वांपूजयामिजगदीश्वरिमेप्रसीद पुष्पं अथांगपूजा उमायैनमः पादौपूजयामि गौर्यैनमः जंघे पार्वत्यै जानुनी जग
द्धात्र्यै ऊरू जगत्प्रतिष्ठायै कटिं शांतिरूपिण्यै नाभिं देव्यैनम उदरं लोकवंदितायै स्तनौ काल्यैन कंठंपू शिवायै मुखं भवान्यै नेत्रेपू
रुद्राण्यै कर्णौपू शर्वाण्यैन ललाटंपू मंगलदात्र्यै शिरःपूजयामि देवद्रुमरसोद्भूतःकृष्णागरुसमन्वितः आनीतोयंमयाधूपो भवानिप्र
तिगृह्यतां धूपं त्वंज्योतिःसर्वदेवानांतेजसांतेजउत्तमं आत्मज्योतिःपरंधामदीपोयंप्रतिगृह्यतां दीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिः
समन्वितं भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां नैवेद्यं आचमनं मलयाचलसंभूतंकर्पूरेणसमन्वितं करोद्वर्तनकंचारुगृह्य
तांजगतःपते करोद्वर्तनं इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि फलं पूगीफलंमहद्दिव्यं-
नागवल्यादलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोःअनंतपुण्यफलदमतःशां
तिंप्रयच्छमे दक्षिणां वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितं पुष्परागसमायुक्तंभूषणंप्रतिगृह्यतां भूषणं चंद्रादित्यौचधरणी-
विद्युदग्निस्तथैवच त्वमेवसर्वज्योतींषिआर्तिक्यंप्रतिगृह्यतां नीराजनं अथनामपूजा उमायैनमः गौर्यै पार्वत्यै जगद्धात्र्यै ज
गत्प्रतिष्ठायै शांतिरूपिण्यै हराय महेश्वरा शंभवे शूलपाणये पिनाकधृषे शिवाय पशुपतये महादेवा पुष्पांजलिं यानि
कानिचपापानिब्रह्महत्यासमानिचेति प्रदक्षिणा अन्यथाशरणंनास्तित्वमेवशरणंमम तस्मात्कारुण्यभावेन क्षमस्वपरमेश्व

रि नमस्कारः पुत्रान्देहि धनंदेहि सौभाग्यंदेहि सुव्रते अन्यांश्चसर्वकामांश्चदेहि देविनमोस्तुते इतिप्रार्थना ततोवैणवपात्राणिसौभाग्या
ग्यद्रव्यसहितानिवायनानिदद्यात् अन्नंसुवर्णपात्रस्थंसवस्त्रफलदक्षिणं वायनंगौरिविप्रायददामिप्रीतयेतव सौभाग्यारोग्यकामानांस
र्वसंपत्समृद्धये गौरीगिरीशतुष्ट्यर्थंवायनंतेददाम्यहं मंत्राभ्यांवायनं तस्मिन्नहनिकर्तव्यंपूजनंरजनीमुखे अर्धरात्रेउमा
कांतोर्चनंजागरंचरेत् इतिपूजा अथकथा सूतउवाच मंदारमालांकुलितालकायैकपालमालांकितशेखराय दिव्यांबरायै
चदिगंबरायैनमःशिवायैचनमःशिवाय कैलासशिखरेरम्येगौरीपृच्छतिशंकरं गुह्याद्गुह्यतरंगुह्यंकथयस्वमहेश्वर सर्वेषांसर्वधर्मा
णांअल्पायासंमहत्फलं प्रसन्नोसियदानाथतथ्यंब्रूहिममाग्रतः केनत्वंहिमयाप्राप्तस्तपोदानव्रतादिना अनादिमध्यनिधनोभर्ताचै
वजगत्प्रभुः ईश्वरउवाच शृणुदेविप्रवक्ष्यामितवाग्रेव्रतमुत्तमं यद्गोप्यंममसर्वस्वंकथयामितवप्रिये यथानोडुगणेचंद्रो
ग्रहाणांभानुरेवच वर्णानांचयथाविप्रोदेवानांविष्णुरेवच नदीनांचयथागंगापुराणानांचभारतं वेदानांचयथासामइंद्रियाणांम
नोयथा पुराणंवेदसर्वस्वंआगमेनयथोदितम् एकाग्रेणशृणुष्वैतत् यथादृष्टंपुरातनं येनव्रतप्रभावेन्प्राप्तमर्धासनंमम तस्य
र्वंकथयिष्येहंत्वंममप्रेयसीयतः भाद्रेमासिसितेपक्षेतृतीयाहस्तसंयुता तदनुष्ठानमात्रेणसर्वपापैःप्रमुच्यते शृणुदेवित्वया
पूर्वंयद्व्रतंचरितंमहत् तत्सर्वंकथयिष्यामियथावृत्तंहिमालये पार्वत्युवाच कथंकृतंमयानाथव्रतानामुत्तमंव्रतं तत्सर्वंश्रो
तुमिच्छामित्वत्सकाशान्महेश्वर शिवउवाच अस्तितत्रमहाद्रिर्व्योहिमवान्नगउत्तमः नानाभूमिसमाकीर्णोनानाद्रुमस
मांकुलः नानापक्षिसमायुक्तोनानामृगविचित्रकः यत्रदेवाःसगंधर्वाःसिद्धचारणगुह्यकाः विचरंतियथादेविगंधर्वाध्वनिसं

कुलाः स्फाटिकैः कांचनैः शृंगैर्मणिवैडूर्यभूषितैः भुजैर्लिखन्निवाकाशं सद्भवोमंदिरं यथा हिमेन पूरितो नित्यं गंगाध्वनिविनोदितः पा
[illegible] गाषाख्यं परमाचरती तपः अब्दद्वादश कंदेविधूम्रपानमधोमुखी संवत्सरचतुःषष्टीपक्कपर्णाशनं कृतं दृष्ट्वा तातेन तत्कष्टं चिं
तयादुःखितो भवत् कस्मै देया मया कन्या एवं चिंतातुरो भवत् तदेवावसरे प्राप्ते ब्रह्मपुत्रस्तु धर्मवित् नारदो मुनिशार्दूलः शैलपुत्री
दिदृक्षया दत्वार्घ्यं विष्टरं पाद्यं नारदं प्रोक्तवान् गिरिः हिमवानुवाच किमर्थमागतः स्वामिन् वदस्व मुनिसत्तम महद्भाग्ये-
न संप्राप्तं मदागमनमुत्तमं नारद उवाच शृणु शैलेंद्र मद्वाक्यं विष्णुना प्रेषितोस्म्यहं योग्यं योग्याय दातव्यं कन्यारत्नमिदं त्वया
वासुदेवसमो नास्ति ब्रह्मविष्णुशिवादिषु तस्मै देया त्वया कन्या अत्रार्थे संमतं मम हिमवानुवाच वासुदेवः स्वयं देवः क
न्यां प्रार्थयते यदि तदा मया प्रदातव्या त्वदागमनगौरवात् इत्येवं गदितं श्रुत्वा नभस्यां तर्दधे मुनिः ययौ पीतांबरधरं शंखचक्रगदा
धरम् कृतांजलिपुटो भूत्वा मुनींद्रस्तमभाषत नारद उवाच शृणु देव भवत्कार्यं विवाहो निश्चितस्तव हिमवांस्तु तदा गौरी
मुवाच वचनं मुदा दत्ता सि त्वं मया पुत्रि देवाय गरुडध्वजे श्रुत्वा वाक्यं पितुर्देवि सखिभिः सहिता वनं सिंहव्याघ्रे मृगैर्व्याप्ते तत्र स्थि
ता सि निर्जने सख्युवा० किमर्थं दुःखिता देवि कथयस्व ममाग्रतः यद्भवत्याभिलषितं करिष्येहं न संशयः पार्वत्यु० सखि शृणु मम प्रीता मनोभिलषितं
मया महादेवं च भर्त्तारं करिष्येहं न संशयः एतन्मे चिंतितं कार्यं तातेन कृतमन्यथा तस्माद्देह परित्यागं करिष्येहं सखिप्रिये पार्वत्या वचनं श्रु
त्वा सखी वचनमब्रवीत् सख्युवाच पिता यत्र न जानाति गमिष्यामो हि तद्वनं इत्येवं संमतं कृत्वानीतासि त्वं महद्वनं पितानिरीक्ष्य या
मास हिमवांस्तु गृहे गृहे केन नीतासि मे पुत्री देवदानवकिंनरैः नारदाग्रे कृतं सत्यं किं दास्ये गरुडध्वजे इत्येवं चिंतयाविष्टो मूर्छितो निपपात ह

हाहाकृत्वाप्रधावंतिलोकास्तेगिरिपुंगवं उचुर्गिरिवरंसर्वेमूर्च्छाहेतुंगिरेवद गिरिरुवाच दुःखस्यहेतुंशृणुतकन्यारत्नंहृतंमम दष्टंवा
कालसर्पेणसिंहव्याघ्रेणवाहता नजानेक्वगतापुत्रीकेनदुष्टेनवाहृता चकंपेशोकसंतप्तोवातेनेवमहातरुः गिरिर्वनाद्वनंयातस्त्वदालो
कनकारणात् सिंहव्याघ्रैश्चभिल्लैश्चरोहिभिश्चमहावनं त्वंचापिविपिनेघोरेव्रजंतीसखिभिःसह तत्रदृष्ट्वानदींरम्यांतत्तीरेचमहागु
हाम् तांप्रविश्यसखीसार्धंअन्नभोगविवर्जिता: संस्थाप्यवालुकालिंगंपार्वत्यासहितंमम भाद्रशुक्लतृतीयायांअर्चयंती तुहस्तभे
तत्रवाद्येनगीतेनरात्रौजागरणंकृतम् व्रतराजप्रभावेनआसनंचलितंमम संप्राप्तोहंतदातत्रयत्रत्वंसखिभिःसह प्रसन्नोस्मिम
याप्रोक्तंवरंब्रूहिवरानने पार्वत्युवाच यदिदेवप्रसन्नोसिभर्त्ताभवमहेश्वर तथेत्युक्त्वातुसंप्राप्तोकैलासंपुनरेवच ततःप्र
भातेसंप्राप्तेनद्यांकृत्वाविसर्जनम् पारणंतुकृतंतत्रसख्यासार्धंत्वयाशुभे हिमवानपितंदेशंआजगामघनंवनं चतुराशानिरीक्ष्यं
स्तुविह्वलःपतितोभुवि दृष्ट्वातत्रनदीतीरेप्रसुप्तंकन्यकाद्वयम् उत्थाप्योत्संगमारोप्यरोदनंकृतवान्गिरिः सिंहव्याघ्राहिभल्लू
कैर्वनेदुष्टेकुतस्थिता पार्वत्युवाच शृणुतातमयाज्ञातंत्वंदास्यसीश्वरायमां तदन्यथाकृतंताततेनाहंवनमागता ददा
सितातयदिमांईश्वरायतदागृहं आगमिष्यामिनेवंचेदिहस्थास्यामिनिश्चितं तथेत्युक्त्वाहिमवतानीतासित्वंगृहंप्रति पश्चाद्द
त्तात्वमस्माकंकृत्वावैवाहिकींक्रियां तेनव्रतप्रभावेनसौभाग्यंसाधितंत्वया अद्यापिव्रतराजस्तुनकस्यापिनिवेदितः नामा-
स्यव्रतराजस्यशृणुदेवियथाभवत् आलिभिर्हरितायस्मात्तस्मात्साहरितालिका देव्युवाच नामेदंकथितंदेवविधिंव
दप्रभो किंपुण्यंकिंफलंचास्यकेनचक्रियतेव्रतं ईश्वरउवाच शृणुदेविविधिंवक्ष्येनारीणांव्रतमीदृशं करिष्यतिप्र

यत्नेनयदिसौभाग्यमिच्छति तोरणादिप्रकर्त्तव्यं कदलीस्तंभमंडितं आच्छाद्यपट्टवस्त्रैस्तुनानावर्णविचित्रितैः चंदनेनसुगंधेनलेपयेद्व
स्त्रमंडपं शंखभेरीमृदंगैस्तुकारयेद्बहुनिस्वनैः नानामंगलगीतंचकर्त्तव्यंममसद्मनि स्थापयेत्वालुकापिंडंपार्वत्यासहितंमम पू
जयेद्बहुपुष्पैश्चगंधधूपादिभिर्नवैः नानाप्रकारैर्नैवेद्यैःपूजयेज्जागरंचरेत् नारीकेरैःपूगफलैर्जंबीरैर्बहुभिस्तथा बीजपूरैःस
नारिंगैःफलैश्चान्यैश्चभूरिशः ऋतुकालोद्भवैर्भूरिप्रकारैःकंदमूलकैः गंधपुष्पैर्धूपदीपैर्मंत्रेणानेनपूजयेत् ॐनमःशिवायशांतायपं
चवक्त्रायशूलिने नंदिभृंगिमहाकालगणयुक्तायशंभवे शिवायैहरकांतायैप्रकृत्यैसृष्टिहेतवे शिवायैसर्वमांगल्यैशिवरूपेजग
न्मये शिवेकल्याणदेनित्यंशिवरूपेनमोस्तुते शिवरूपेनमस्तुभ्यंशिवायैसततंनमः नमस्तेब्रह्मचारिण्यैजगद्धात्र्यैनमोनमः सं
सारभयसंतापात्त्राहिमांसिंहवाहिनी येनकामेनदेवित्वंपूजितासिमहेश्वरि राज्यसौभाग्यसंपत्तिर्देहिमामंबपार्वती मं
त्रेणानेनदेवित्वांपूजयित्वामयासह कथांश्रुत्वाविधानेनदद्यादन्नंचभूरिशः ब्राह्मणेभ्योयथाशक्त्यादेयावस्त्रहिरण्यगाः अन्ये
षांभूयसीदेयास्त्रीणांवाभूषणादिकं भर्त्रासहकथांश्रुत्वाभक्तियुक्तेनचेतसा कृत्वाव्रतेश्वरंदेविसर्वपापैःप्रमुच्यते सप्तजन्म
भवेद्राज्यंसौभाग्यंचैववर्धते तृतीयायांतुयानारीआहारंकुरुतेयदि सप्तजन्मभवेद्वंध्यावैधव्यंजन्मजन्मनि दारिद्र्यंपुत्रशोकं
चकर्कशादुःखभागिनि पच्यतेनरकेघोरेनोपवासंकरोतिया रजतेकांचनेताम्रेवैणवेचाथमृन्मये भाजनेविन्यसेदन्नंसव=
स्त्रफलदक्षिणं दानंचद्विजवर्यायदद्यादंतेचपारणं एवंविधिंयाकुरुतेचनारीत्वयासमानारमतेचभर्त्रा भोगाननेकान्भुविभु
ज्यमानासायुज्यमंतेलभतेहरेण अश्वमेधसहस्राणिवाजपेयशतानिच कथाश्रवणमात्रेणतत्फलंप्राप्यतेनरैः एतत्तेकथितं

देविनवाप्येव्रतमुत्तमम् कोटियज्ञकृतंपुण्यंअस्यानुष्ठानमात्रतः    इतिश्रीभविष्योत्तरपुराणेहरगौरीसंवादेहरितालिकाव्रतक
थासंपूर्णा   अथोद्यापनं   पार्वत्युवाच   उद्यापनविधिंब्रूहितृतीयायाःसुरेश्वर भक्तितःश्रोतुमिच्छामिव्रतसंपूर्णहेतवे
महादेवउवाच   उद्यापनविधिंवक्ष्येव्रतराजस्यशोभने यस्यानुष्ठानमात्रेणसंपूर्णंहिव्रतंभवेत् चतुस्तंभंचतुर्द्वारंकदलीस्तंभमं
डितं घंटिकाचामरयुतंकमलैरुपशोभितं चंदनागरुकर्पूरैर्लेपितंमंडपंशुभम् मध्येवितानंबध्नीयात्पंचवर्णैरलंकृतं तन्मध्येकार
येत्सम्यक्पंचवर्णैःसुशोभनैः तस्योपरिन्यसेद्व्रीहीन् द्रोणेनपरिसंमितान् सौवर्णंराजतंताम्रंकलशंविन्यसेद्बुधः पंचरत्नानिनिक्षिप्य
सर्वौषधिसमन्वितं तस्योपरिन्यसेत्पात्रंसौवर्णंराजतेनवा वृषारूढंमहादेवंरजतेनविनिर्मितं सर्वावयवसंयुक्तांगौरींहेम्नाविनि
र्मितां पूजयेत्तच्चगंधाद्यैःपुष्पैर्नानाविधैःशुभैः रात्रौजागरणंकुर्यात्कथावाचनपूर्वकं ततःप्रभातसमयेकृत्वास्नानादिकर्मचपूर्व
वच्चार्चयेद्देवंपश्चाद्धोमंसमाचरेत् स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंततः प्रारभेच्चततोहोमंनवग्रहपुरःसरं तिलांश्चयवसं
मिश्रा नाज्येनचपरिप्लुतान् जुहुयाद्रुद्रमंत्रेणगौरीमंत्रेणवेदवित् अष्टोत्तरशतंवापिअष्टाविंशतिमेववा एवंसमाप्यहोमंतुतत्रा
चार्यंप्रपूजयेत् सुवर्णरत्नवासोभिर्गांदद्याच्चयथाविधि शय्यांसोपस्करांदद्यादाचार्यायप्रयत्नतः षोडशद्विजयुग्मानिविपक्वान्ना
न्नैश्चभोजयेत् सौभाग्यद्रव्यवस्त्राणिवंशपात्राणिषोडश दातव्यानिप्रयत्नेनब्राह्मणेभ्योयथाविधि अन्येभ्योद्विजवर्येभ्योदक्षि
णांचप्रयत्नतः भूयसींपरयाभक्त्याप्रदद्याच्छिवतुष्टये उद्दिश्यपार्वतीशंचसर्वंकुर्यादतंद्रितः बंधुभिःसहभुंजीतनियतश्चपरे-
हनि एवंयाकुरुतेनारीव्रतराजंमनोहरं सौभाग्यमखिलंतस्याःसप्तजन्मसुनसंशयः    इतिश्रीहरितालिकाव्रतोद्यापनंसंपूर्णं

अथाश्विनकृष्णतृतीयायां बृहद्गौरीव्रतं डोऊीतिदेशभाषायां शाखामूलफलैः सहारिंगिणीं गृहे आनीय सिकतावेद्यां निक्षिप्य उदकेनासिच्य चंद्रोदये दृष्ट्वा सुरूपाता पंचसखिभिः सह अलंकृत्य पूजयेत् तद्यथा मम इह जन्मनि जन्मांतरे चाक्षय्यसौभाग्यप्राप्तिकामः पुत्रपौत्रादिधनधान्यैश्वर्यप्राप्त्यर्थं श्रीगौरीप्रीत्यर्थं बृहद्गौरीव्रतं करिष्ये कलशे वरुणं पूज्य बृहद्गौरीं प्रपूजयेत् चतुर्भुजां सुवर्णाभां नानालंकारभूषितां हिमेंदुतुहिनाभासां मुक्तामणिविभूषितां पाशांकुशधरां देवीं ध्यायेत्सर्वार्थसिद्धिदां कमंडलुधरां सूक्ष्मां पानपात्रं च बिभ्रतीं ध्यायामि एहि मातर्विशकल्पे त्वं त्रिगुणे परमेश्वरि आवाहयामि भक्त्या त्वां प्रसन्ना भव सर्वदा आवाहनं· हेमरत्नकृतं देवि आसनं ते विनिर्मितं पाशांकुशधरा देवी मासने स्थापयाम्यहं आसनं· अक्षमालांकुशधरे वीणापुस्तकधारिणि भक्त्या दत्तं मया तोयं पाद्यार्थं प्रतिगृह्यतां पाद्यं· अर्घ्यं ददामि ते मातर्भक्तानामभयंकरे गृहाण त्वं बृहद्गौरि गंधाक्षतसमन्वितं अर्घ्यं· भक्तानामिष्टदे मातः सर्वालंकारसंयुते आचम्यतां जगन्मातर्बृहद्गौरि नमोस्तु ते आचमनं· ततः पंचामृतं स्नापयामि जगन्मातस्त्वां सुतीर्थजलेन वै प्रार्थयित्वा मया देवि सद्यस्तापविनाशिनि स्नानं· वस्त्रं धौतं मया देवि दुकूलं तव निर्मितं भक्त्या समर्पितं मातर्गृह्यतां जगदंबिके वस्त्रं· हरिद्रां कुंकुमं चैव सिंदूरं कज्जलान्वितं सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि सौभाग्यद्रव्यं· पंचसूत्रनिर्मितं दोरकं अर्पयेत् मलयाचलसंभूतं घनसारं मनोहरं गंधं गृहाण देवि त्वं बृहद्गौरि नमोस्तु ते गंधं· करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैः शुभैः शतपत्रैश्च कल्हारैरर्चये परमेश्वरि पुष्पं· धूपोयं गृह्यतां देवि कालागरुसमन्वितः आघ्रेयः सर्वदेवानां देवद्रुमरसोद्भवः ॥ धूपं· दीपं गृहाण देवेशि त्रैलोक्यतिमिरापहं वह्निना योजितं मातर्बृहद्गौरि नमो नमः दीपं· नैवेद्यं गृह्यतां देवि भक्तिं मे ह्यचलां

कुरु ईप्सितंमेवरंदेहि परत्रचपरांगतिं नैवेद्यं पानीयंइदंफलमितिनारिकेलफलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां नीराजनं
पुष्पांजलिः अथकंठेदोरकंबध्नीयात् धारयिष्यामिभद्रेत्वांत्वद्भक्त्यात्वत्परायणा आयुर्देहियशोदेहिसौभाग्यंदेहिमेशिवे दोरकबंधनं
क्षेमसंपत्करेदेविसर्वसौभाग्यदायिनि सर्वकामप्रदेदेविगृहाणार्घ्यंनमोस्तुते इतिविशेषार्घ्यं ततश्चंद्रार्घ्यं क्षीरोदार्णवसंभू
तलक्ष्मीबंधोनिशाकर गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् प्रार्थना गगनांगणसंदीपक्षीराब्धिमथनोद्भव भाभासितदिगंतांत
रमानुजनमोस्तुते आनीतासिमयादेविपूजितासिमयाशुभे ममसौभाग्यदेहित्वंयत्रस्थातत्रगम्यतां इतिविसर्जनं अथकथा
विजयोवाच अथान्यद्धूहतीगौरीव्रतंवक्ष्यामिकन्यके मासिभाद्रपदेकृष्णेतृतीयायांचतद्व्रतं आनयेद्धूहतीगौरीशाखामूलफ
लैःसह रिंगिणीवृक्षंसमूलंआनयेत् निक्षिप्यगृहवेद्यांतुतदधःसिकताशुभां न्यसेच्चंद्रोदयंदृष्ट्वास्नात्वाधौतांबराद्वृता सखिभिःस
हितासम्यक्अलंकृत्यप्रपूजयेत् गौरीमावाह्यविधिवत् सिकतामंडलेशुभे गंधपुष्पाक्षतैर्दिव्यैर्धूपदीपैरनेकशः सर्वोपचारैर्बृ
हतीं पंचपंचभिरर्चयेत् एवंपूज्ययथाशक्त्याकृत्वाचैवप्रदक्षिणां दोरकंबंधयेत्पश्चात्तंतुपंचकनिर्मितं बध्नामिदोरकंकंठेत्व-
द्भक्त्याचपरायणा आयुर्देहियशोदेहिसौभाग्यंदेहिमेशुभे अनेनदोरकंबध्वाचंद्रायार्घ्यंसमर्पयेत् क्षेमसंपत्करेदेविसर्वसौभा
ग्यदायिनि सर्वकामप्रदेदेविगृहाणार्घ्यंनमोस्तुते गगनांगणसंदीपक्षीराब्धिमथनोद्भव भाभासितदिगंतालसोमराजनमोस्तु
ते कथामेतांचशृणुयाद्व्रीर्यमेतन्मनाःसदा ततोगोधूमचूर्णेनपंचभिःकुंडवैर्युतं पक्वान्नमर्धंविप्रायदत्वाभुंजीतचस्वयं एवंवैपंच
वर्षाणिकृत्वाव्रतमनुत्तमं सर्वान्कामानवाप्नोतिनात्रकार्याविचारणा ऋषिकन्योवाच केनचादौपुराचीर्णंव्रतंयत्तुत्वयोदि

तं ईप्सितंकोपिलेभेवाव्रतस्यास्यप्रभावतः विजयोवाच शृणुकन्येयथाप्राप्तंपार्वत्याकथितंपुरा सूतउवाच शृणुध्व
मृषयःसर्वेनैमिषारण्यवासिनः पुराकृतयुगस्यादौसर्वभूतहितैषिणा शंभुनाकथितंगौर्यै तद्व्रतंकथयाम्यहं कदाचिदुपविष्टंतंपा
र्वतीपर्यपृच्छत पार्वत्युवाच शंभोत्वांप्रष्टुमिच्छामिकरुणाकरशंकर सर्वबाधोपशमनंसर्वकामफलप्रदं व्रतानांसर्वदानानांउ-
त्तमंब्रूहितत्वतः आयुरारोग्यदंदेवपुत्रपौत्रप्रदायकं तद्व्रतंब्रूहिदेवेशयद्यहंतववल्लभा ईश्वरउवाच शृणुदेविपरंगुह्यंव्रतंष
रमदुर्लभं पुराभूद्द्वापरस्यांतेपंडोःप्रियवरांगना वर्षषोडशसंपूर्णासंपन्नानवयौवना अनपत्यातुसाकुंतीभर्त्तारमिदमब्रवी-
त् कुंत्युवाच केनकर्मविपाकेनपुत्रहीनास्मिदुःखिता अनपत्यप्रतीकारमिदानींब्रूहितत्वतः पंडुरुवाच ऋषिशापो
स्तिमेभद्रेपुत्रस्तेनभविष्यति भर्त्तुस्तद्वचनंश्रुत्वापितृगेहेभ्यगात्स्वयं पितुर्गेहेवर्तमानेकुंतीव्यासंददर्शह नमस्कृत्यचतंप्राहकुं
तीमुकुलितांजलिः कुंत्युवाच व्रतंमेकथयास्तुल्यंपुत्रसंतानदायकं सर्वसंपत्प्रदंनृणांव्रतमेकंमहात्मने व्यासउवाच ॥
शृणुत्वंबृहतीगौर्याव्रतंसंतानदायकं भाद्रकृष्णातृतीयायांनिशिचंद्रोदयेशुभे स्नानंकृत्वाचविधिवत्मौनीभूत्वाव्रतंचरेत् सर्वसंप-
त्करंचैवस्त्रीणांपुत्रान्नसौख्यकृत् भूहिरण्यादिदानानांसर्वेषामधिकंव्रतं पंचवर्षविधातव्यंततउद्यापनंचरेत् उद्यापनविधानेन
संपूर्णफलमश्नुते अंतेतुकारयेद्भक्त्यासौवर्णंबृहतीफलं षष्ठकृत्तरचतुर्भिश्चशुभैर्बीजैर्युतंतुतत् देव्याःपुरस्तत्संस्थाप्यपूर्ववत्प्र
तिपूजयेत् आचार्यंपूजयेद्भक्त्याविप्रान्पंचतथैवच सुवासिन्यःपंचपूज्यावस्त्रालंकारभूषणैः कुंचुकैश्चैवताटंकैः कंठसूत्रैर्हरिप्रि
यां वंशपात्राणिपंचैवसूत्रैःसंवेष्टितानिच सिंदूरंजीरकंचैवसौभाग्यद्रव्यसंयुतं गोधूमपिष्टजातंचबृहतीफलचंपकं वायनानि

वयंचैवताभ्योदद्यात्तुभोजनं अर्घ्यंदत्वावायनानिदत्वाभुंजीतवाग्यता तत्सूत्रंधारयेत्कंठेसर्वकामसमृद्धये ततःप्रातःसमुत्थायसालंकारा
सखीजनैःगीतवाद्ययुतानद्यांगौरींतांतुविसर्जयेत् आगच्छवरदेदेविपूजितासिमयाशुभे ममसौभाग्यदानाययथेष्टंगम्यतांत्वया
एतद्व्रतप्रभावेनकाचिद्ब्राह्मणकन्यका पतिंसंजीवयामासनिर्भर्त्स्ययमकिंकरान् तस्माच्चरत्वंव्रतमेतदाद्यमायुःप्रदंपुत्रसमृद्धिदंच
पुत्रैश्चपौत्रैश्चयुताचपत्यागौरीप्रसादाद्भवजीववत्सा यइदंशृणुयान्नित्यंभावयेद्वासमाहितः सभुक्त्वाविपुलान्भोगानंतेशिवप
दंव्रजेत् इतिभविष्योत्तरपुराणेबृहद्गौरीव्रतोद्यापनंसंपूर्णं इदंकर्णाटकेप्रसिद्धं अथमार्गशीर्षेमाघेवाकृष्णतृतीया
यांसौभाग्यसुंदरीव्रतं तच्चचतुर्थीयुतायांकार्यं नद्वितीयाविद्धायां द्वितीयावेधरहितातृतीयायासिताभवेत् चतुर्थीयोगिनीकिंचि
त्शुद्धावापियदाभवेत् नारदउवाच भगवंस्त्वेप्रजाःसृष्टानानावर्णास्तथागुणाः स्वेदजाअंडजाश्चैवउद्भिजाश्चजरायुजाः दे-
वासुराःसगंधर्वाःसयक्षोरगराक्षसाः एकेसुरूपाःसुभगाबलिनश्चापरेतथा तथान्येदुःखसंयुक्ताःकाणामूकाश्चपंगवः दुःशी
लादुर्भगादीनाःपापकर्मकराःसदा एवंमेत्वद्धृदिसंतापःसंशयंछेत्तुमर्हसि ब्रह्मोवाच शृणुवत्सप्रवक्ष्यामित्वंभक्तोसिप्रियोसिमे
कर्मबीजप्ररूढंहिशरीरंपांचभौतिकं ॥ येदत्तदानाजायंतेसुरूपाःसुखिनोजनाः तपःप्रभावाज्जायंतेबलिनःसुभगास्तथा अदत्त
दानाज्जायंतेपरकर्मकराःसदा परापवादवक्तारःपरद्रव्यापहारकाः हंतारःप्राणिनांचैवअभक्ष्याणांचभक्षकाः क्रमशोनरकान्
भुक्त्वाजायंतेकुत्सितानराः दारिद्रास्तुंगवामूकाःकाणाद्यादुर्भगास्तथा नारदैवंस्वकर्मोत्थैर्नरानार्यश्चदुःखिताः नारदउवा·
उपायंब्रूहिभगवन्येनकर्मक्षयोभवेत् तपोदानंव्रतंतीर्थंशरीरस्यचशोषणं दुःखसंतापतप्तानांजीवितान्मरणंवरं ब्रह्मोवा·

शृणु नारद यद्गुह्यं व्रतानामुत्तमं व्रतं सर्वदुःखप्रशमनं व्याधिदारिद्र्यनाशनं सुखसौभाग्यजननं पुत्रपौत्रप्रदायकं वसिष्ठाय पुराणोक्तं ऋषी-
णां च समागमे कैलासशिखरे रम्ये शंकरेण महात्मना नारद उवाच कस्मात्प्रोवाच भगवान्कृपा कस्माच्च जायते ब्रह्मोवाच दृ-
ष्ट्वाद्भुतं च सौभाग्यं अरुंधत्या जगत्प्रभुः तथा रूपं च शीलं च सौभाग्यमतुलं तथा चूलाशिरः प्रकंपं च जहास मृदु शंकरः दृष्टवान्शंकरं
देवं वसिष्ठः स्मितकारणं ईश्वर उवाच अहो व्रतस्य माहात्म्यं श्रूयतामृषिसत्तमाः पुरा जन्मनि शूद्रस्य दासकर्मकरा सदा उच्छिष्टभो-
जना नित्यं उच्छिष्टशयना सदा कुरूपा दुर्भगा दीना रूक्षाग्रद्रुदभाषिणी नाम्ना मेघवती ख्याता दुर्दर्शवदना शुभा एकदा प्रेषणार्थं सा
गता ब्राह्मणसंनिधौ श्रुतं व्रतं च नारीणां वाच्यमानं द्विजन्मना सौभाग्यसुंदरीनाम तृतीया सर्वकामदा ज्ञात्वाचारगमे शास्त्रे सर्व काम
फलप्रदा मया प्रकाशितं सर्वं प्रार्थिते नो मया तथा चीर्णं तासां प्रसंगाच्च मेघवत्या प्रसंगतः कुत्सितं चैव नैवेद्यं दत्तं दानं च किंचन ह
विष्यं च ततोच्छिष्टं पारणं च तथा कृतं केवलं च व्रतं चीर्णं भक्त्या पूतेन चेतसा श्रद्धया धार्यते धर्मो बहुभिर्नार्थराशिभिः ऋषयश्चक्रिरे धर्मं
श्रद्धया भाविनात्मना तेन धर्मविपाकेन निषादाधिपतेः सुता सुरूपा च सुशीला च सर्वलक्षणसंयुता संपूर्णावयवा जाता तस्या देव्याः प्र
सादतः उच्छिष्टभोजनाज्जाता निषादानां च योनिषु आदत्तदानात्संजाता तपसा भोगवर्जिता व्रतप्रभावात्संजाता सुरूपा च पतिव्रता ॥
महासौभाग्यसंयुक्ता साक्षाल्लक्ष्मीरिवापरा सर्वकामप्रदा देवी नंदिनी वसते गृहे तद्व्रतं चास्ति देवर्षे सर्वकामफलप्रदम् नारद उवा०
व्रतस्यास्य विधिं ब्रूहि को विधिः किं च पूजनम् कस्मिन्मासे प्रकर्तव्यं देवता का प्रकीर्तिता किं पुण्यं किं च नैवेद्यं ध्यानं कस्य च पूजनम् ॥
ब्रह्मोवाच व्रतस्यारंभणं चादौ मार्गशीर्षे थ माघके द्वितीयावेधरहिता तृतीया या सिता भवेत् चतुर्थी योगिनी किंचिच्छुस्था चापि

येदपूपांश्वसुगंधान्शालिसंभवान् अ क्रोडंचार्घ्यदानेन लवंगंप्राशयेत्ततः सावियोगंनचाप्नोतिपितृभ्रातृसुतादिभिः एवंचीर्णव्रतेकुर्यादुद्यापनविधिंततः
सर्वशास्त्रमधीयानंआगमेषुविशारदं आचार्यंप्रार्थयेत्प्रातर्मार्गशीर्षेयथाविधि चीर्णंव्रतंमयाचार्यउद्यापनविधिंमम व्रतवैकल्यनाशाययथाशास्त्रं
समाहितः सुंदरीमंडलंकार्यंगौरीतिलकमेववा उमामहेश्वरंदेवंसौवर्णेनतुकारयेत् व्रतारंभेयथाशक्त्याराजतंवापिकारयेत् वित्तशाठ्यंनकुर्वीतसति
द्रव्येफलार्थिना वर्षंप्रपूज्यतांमूर्तिंतामेवमंडलेर्चयेत् सर्वोपहारैर्गंधैश्चपुष्पैर्नानाविधैरपि एकैवसाजगन्माताबहुरूपैर्व्यवस्थिता रूपैर्द्वादशभिश्चैवपू
ज्यासौभाग्यसुंदरी ततःपद्मनिभांदेवींरक्तवस्त्रोपशोभितां रक्ताभरणशोभाढ्यांरक्तकुंकुमचर्चितां ध्यात्वैवंविधांदेवींपूजयेदेकमानसा रात्रौजागर
णंकार्यंगीतवादित्रनिस्वनैः ततःसर्वाणिपुष्पाणिनैवेद्यादिफलानिच अर्घ्यार्थंपरिकल्प्यानिसर्वकामार्थसिद्धये ततःप्रभातेविमलेस्नानंकृत्वाविधानतः कु
सुंभकुसुमैर्होमंकिंशुकैर्वापिकारयेत् अष्टोत्तरशतंपूर्णंमध्वान्नंपयसान्वितं तदभावेतुकर्त्तव्यःशतपत्रैर्विधानतः आसुरेणचमंत्रेणगौणंमुख्यंसमाचरेत्
भोजयेच्चप्रयत्नेनचत्वार्यष्टौविधानतः मिष्टान्नेनसपत्नीकान्भक्त्यावैपरितोषयेत् वस्त्रालंकरणैश्चैवयथाशक्त्याप्रपूजयेत् सौभाग्यवस्त्रंचैकैकं
नारीणांचैवदापयेत् ततोहस्तेप्रदातव्यंकुंकुमंलवणंगुडं नारिकेरंतथावल्लीदूर्वासिंदूरकज्जलं मंगलाष्टकमेतद्धिदत्वासौभाग्यमाप्नुयात् आचा
र्यंचसपत्नीकंवस्त्रालंकरणैःशुभैः परिधाप्ययथाशक्त्यामंडलंतस्मैसमर्पयेत् प्रार्थयेच्चततोदेवींसर्वसौभाग्यसुंदरीं पूजितासिमयादेविसर्वसौभा
ग्यसुंदरी दत्वामत्प्रार्थितान्कामान्वांछ्देवियथासुखं मूर्त्तिंचमंडलंदिव्याउपहारांश्चसर्वशः गुरोगृहाणसर्वंत्वंसुंदरीप्रियतामिति त्वत्प्रसादान्मयाची
र्णंव्रतमेतत्सुदुर्लभं क्षमस्वविप्रशार्दूलप्रसादसुमुखोभव एवंचीर्णव्रतानारीकृतकृत्याभवेत्सदा येनेदंचकृतंवर्षंसंप्राप्तंजन्मतःफलं नातःपरत
रंकिंचित्कृतंसौभाग्यकारकं देहांतेशिवलोकेतुभोगान्भुंक्तायथेप्सितान् इतिभविष्योत्तरसौभाग्यसुंदरीव्रतोद्यापनंसंपूर्णम् ॥

याःपुण्याःसागराःसरितस्तथा अरण्यानिचपुण्यानिविशेषांनैमिषंतथा देवीपुराणे देशोनदीगयाश्रीलःगं
करं वाराणसीकुरुक्षेत्रंप्रयागंजंबुकेश्वरं केदारंवामपादंचकुडवंपुष्कराव्हयं सोमेश्वरंमहापुण्यंतथावामरकंटकं
थाविंध्यंयत्रवासोगुहस्यच गुहःस्वामिकार्तिकेयःमनुः सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरं तंब्रह्मनिर्मितंदेशं
ते यस्मिन्देशेयआचारःपारंपर्यक्रमागतः वर्णानांसांतरालानांससदाचारउच्यते कुरुक्षेत्रंचमत्स्याश्चपांचालाः
ः एषब्रह्मर्षिदेशोवैब्रह्मावर्तादनंतरः मत्स्यःविराटःपांचालः कान्यकुब्जः शूरसेनिकाःमथुरादेशाःअनंतरः
वद्विंध्ययोर्मध्येयत्प्राग्विनशनादपि प्रत्यगेवप्रयागाच्चमध्यदेशउदाहृतः विनशनंकुरुक्षेत्रं आसमुद्रात्तुवैपूर्वा
मात् तयोरेवांतरंगीयोरार्यावर्तंविदुर्बुधाः सिंधुनदीपश्चिमतीरव्यावृत्त्यर्थमित्याह कृष्णसारस्तुचर-
वभावतः सज्ञेयोयज्ञियोदेशोम्लेंछदेशास्ततःपरः एतान्द्विजातयोदेशान्संश्रयेरन्प्रयत्नतः याज्ञवल्क्यो
न्देशेमृगःकृष्णास्तस्मिन्धर्मान्निबोधत अथव्रताधिकारिणःस्कांदे निजवर्णाश्रमाचारनिरतःशुद्ध
अलुब्धःसत्यवादीचसर्वभूतहितेरतः व्रतेष्वधिकृतोराजन्नान्यथाविफलःश्रमः श्रद्धावान्पापभीरुश्चमदंभविव-
र्जितनिश्चयमाश्रित्यपथावत्कर्मकारकः अवेदनिंदकोधीमानधिकारीव्रतादिषु निजवर्णाश्रमाचारेत्यनेनचतुर्वर्णाना
गम्यते अतएवकौर्मे ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चैवद्विजोत्तम अर्चयंतिमहादेवंयज्ञदानसमाधिभिः व्र

सलोकतान्वसारूप्यंजायतेतत्प्रसादतः देवलो
नियमैर्होमस्वाध्यायतर्पणैः तेषांवैरुद्रसायुज्यंसामीप्यंचातिनिर्मलं
वासनियमैःशरीरोत्तापनैस्तथा वर्णाःसर्वेविमुच्यंतेपातकेभ्योनसंशयः अत्र अधिकारिविशेषणस्यपुंस्त्वस्याविव
तुस्त्रीणामप्यधिकारः भारते मामुपाश्रित्यकौंतेययेपिस्युःपापयोनयः स्त्रियोवैश्यास्तथाशूद्रास्तेपियांतिपरांगतिं
च्छानामप्यधिकारोहेमाद्रौ देवीपुराणे स्नातैःप्रमुदितैर्हृष्टैर्ब्राह्मणैःक्षत्रियैर्नृपैः वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यै
भिश्चकुरुशार्दूल तद्विधानमिदंशृणु वैश्यशूद्रयोस्तुद्विरात्राधिकोपवासोनभवति वैश्याः शूद्राश्चयेमोहादुप
रात्रंपंचरात्रंवातेषांव्युष्टिर्नविद्यते प्राच्यलिखितनिषेधात् व्युष्टिःफलं सभर्तृकाणांस्त्रीणांभर्त्राज्ञांविना
तथाचमदनरत्नेमार्कंडेयपुराणे यानारीखल्वनुज्ञाताभर्त्रापित्रासुतेनवा निष्फलंतुभवेत्तस्यायत्करोतिव्रता
भार्याभर्तुर्मतेनैवव्रतादीनांचरेत्सदेतिकात्यायनोक्तिः तथाच पत्यौजीवतियानारी
यासर्वव्रतेष्वधिकारः
रेत् आयुष्यंहरतेभर्तुःसानारीनरकंव्रजेत् इतिविष्णुवचनात् तद्भर्तुरनुज्ञापरं यत्तुकश्चित् नास्ति
यज्ञोनव्रतंनाप्युपोषणं भर्तुःशुश्रूषयैवैताल्लोकानिष्टान्व्रजंतिताः यद्देवेभ्योयच्चपित्रादिकेभ्यः कुर्याद्भर्ताभ्य
च तस्यस्यधर्मसाफलंनान्यचित्तानारीभुंक्ते भर्तृशुश्रूषयैव इतिस्कांदात् तस्मात्सभर्तृकाणामेकादश्याद्यु
धिकारइति तन्न तस्यापिपृथक्स्वातंत्र्येणभर्त्रनुज्ञापरत्वात् अतएवव्यासः कामंभर्तुरनुज्ञाताव्रता-

२

नादिष्वधिकारिणीति शंखोपि कामंभर्त्तुरनुज्ञयाव्रतोपवासनियमाः स्त्रीधर्माइति नचानुज्ञयाव्रतेष्विवयज्ञेपिपृथग
धिकारापत्तिरितिशंक्यं तस्याःश्रुत्यध्ययनानधिकारात् यच्चस्कांदे भर्त्तुःशुश्रूषायास्तावकत्वेनाप्युपपन्नत्वादिति नचभर्तुर
नुज्ञ[illegible]धिकारसिद्धेः विधवायाः व्रतेनधिकारापत्तिरितिवाच्यं नारीखल्वननुज्ञाताभर्त्रापित्रासुतेनवा विफलंतद्भवे
[illegible]यत्करोत्यौर्ध्वदेहिकम् इतिमार्कंडेयोक्तेः पित्राद्याज्ञयातस्याअधिकारइतिहेमाद्रिः स्त्रीणांव्रतग्रहणेविशेषोहेमा
द्रौहरिवंशे स्नानंचकार्यंशिरसस्ततःफलमवाप्नुयात् स्नात्वास्त्रीप्रातरुत्थायपतिंविज्ञापयेत्सती अथव्रतधर्माः व्र
तसंकल्पविधिर्भारते गृहीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः उपवासंतुगृण्हीयाद्यद्वासंकल्पयेद्बुधः औदुंबरंताम्रमयम्
औदुंबरंस्मृतंताम्रमितिविश्वोक्तेः यद्वान्यन्नक्तव्रतादिकंकल्पयेदितिकल्पतरुः श्रीदत्त स्तु कल्पतरुमतेवाकारश्चा
र्थेतेनायमर्थः यस्तुनक्तादिकर्त्तुमिच्छेत्तदपिउक्तविधिनैवगृण्हीयादितितन्मतंपरिष्कृत्यवाकारस्योपवासपदस्यचवैयर्थ्याप
त्तेः यत्संकल्पयेत्तद्गृण्हीयादित्यनेनैवोपपत्तेरित्यदूषयत् ताम्रपात्राद्यभावेहस्तेनापिजलंगृहीत्वासंकल्पयेदितिउक्तं अत
एवानंतभट्टः वर्षेवधारयेदितिपाठः मदनरत्नेदेव ल[illegible]वाक्येतुयथासंकल्पयेदितिपाठः यथाकामंफलमुद्दिश्येदित्यर्थः अ
तएवमार्कंडेयः संकल्प्यंचयथाकुर्यात्स्नानदानव्रतादिकं अनंतरंकृत्यमाह मदनरत्नेदेवलः अभुक्त्वाप्रातराहारंस्नात्वाच
म्यसमाहितः सूर्यायदेवताभ्यश्चनिवेद्यव्रतमाचरेत् अत्रमातर्व्रतमाचरेदित्येवान्वयः प्रधानक्रियान्वयस्याभ्यर्हितत्वात्

अभुक्त्वेति तु अशक्तस्याभ्यनुज्ञातेक्ष्वादिभक्षणापवादः केचित्तु व्रतदिने प्रातराहारं अभुक्त्वा व्रतमाचरेदित्याहुः अत्रउपवासो
व्रते कार्य इत्यनेनैवाभुक्तवताधिकारस्य प्राप्तत्वादेतस्य वैयर्थ्यापत्तेः अन्ये तु पूर्वदिने प्रातराहारमभुक्त्वा अर्थादेकभक्तं कृत्वा
स्नात्वाचम्य व्रतादिकं कुर्यादित्याहुः परे तु सर्वत्र पूर्वेद्युरेव सायंसंध्योत्तरं व्रतं ग्राह्यं वारव्रतादौ बहुशस्तथा दृष्टत्वात् प्रातः स्ना
त्वेति चान्वय इत्याहुः सामान्यधर्मा हेमाद्रौ भविष्ये क्षमा सत्यं दया दानं शौचमिंद्रियनिग्रहः देवपूजाग्निहवनं संतोषः स्तेयव
र्जनम् सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्थितः देवपूजा यद्दैवत्यं व्रतं तस्य पूजा अग्निहवनं पूज्यदेवतोद्देशेन होमः उपक्रमादे
तच्च सप्तमीव्रते सूर्यपूजाग्निहवनं नवमीव्रते दुर्गापूजा अनुक्तदेवताव्रते इष्टदेवतापूजा हवनं व्याहृतिहोम इति केचित् अत्र क्षमा
दीनां स्वातंत्र्य त याचतुर्वर्गसाधनत्वेन विहितानां व्रतांगतया विधानं खादिरं वीर्यकामस्य यूपं कुर्यादितिवत्संयोगपृथक्त्वादुपपन्नमि
ति हेमाद्रिः सर्वव्रतेष्वित्यत्र सर्वव्रतपदं भविष्यपुराणोक्तं सर्वव्रतपरमतेव्रतांतरे विध्यंतरं सत्त्वएव होमादीनामंगत्वं नान्यथा अत
एव एकादशीव्रतादौ शिष्टानां होमाद्यनाचरणमिति केचित् येषेव पुराणांतरोक्तव्रतेषु होमादिविधिरस्ति तद्विषयकमेव सर्वपदम
न्यथा तदितरपरत्वेन संकोचापत्तेरिति पृथ्वीचंद्रोदये अग्निपुराणे स्नात्वा व्रतवता सर्वव्रतेषु व्रतमूर्तयः पूज्याः सुवर्णमय्याद्याः श
क्त्या वै भूमिशायिना जपो होमश्च सामान्यं व्रतांते दानमेव च चतुर्विंशद्द्वादश वा पंच वा त्रय एव वा विप्राः पूज्या यथाश

४

क्ति तेभ्यो दद्याच्च दक्षिणां व्रतमूर्त्तयः तद्देवप्रतिमाः देवलः ब्रह्मचर्यमहिंसा च सत्यमामिषवर्जनं व्रतेष्वेतानि चत्वारि चरित

व्यानिनित्यशः स्त्रीणांतुप्रेक्षणास्पर्शात्ताभिः संकथनादपिनश्यतेब्रह्मचर्यंन दारेष्वतु संगमात् स्वदारेष्वतुसंगमादिक्वचित्पाठः
आमिषंमांसंआमिषमतिपानीयं गोवर्जक्षीरमामिषं मसूरमामिषंसस्ये फलेजंबीरमामिषम् आमिषंशक्तिकाचूर्णम्
आरनालंतथामिषम् इतिस्मृत्यंतरोक्तम् व्रताद्यारंभेवृद्धिश्राद्धंकार्यं तदाहशातातपः नानिष्ट्वातुपितॄन्श्राद्धेकर्मकिंचित्
समारभेत् गृहीतव्रतानाचरणेमदनरत्नेछागलेयः पूर्वंव्रतंगृहीत्वायोनाचरेत्काममोहितः जीवन्भवतिचांडालोमृतश्वेवाभि
जायते काममोहितइतिविशेषणाद्व्याध्यादिनानाचरणेनदोषः तथाचहेमाद्रौस्कांदे सर्वभूतभयंव्याधिप्रमादोगुरु
शासनम् अव्रतघ्नानिपक्यंतेसकृदेतानिशास्त्रतः सर्वेभ्योभूतेभ्यः सकाशाद्भूतकर्तृभयादितिहेमाद्रिः मदनरत्नेतु स
र्वभूतभयंव्याधिरपरिचितत्वात्व्याख्यातः सर्वभूतभयंभूतेभ्यः सर्पादिभयाच्चव्रतांगंवैकल्यते व्रतहानिर्भवतीत्यर्थः गुरु
शासनंगुरोराज्ञासकृदुक्तिःसकृत्यागेप्रायश्चित्तं तदुक्तंस्कांदगारुडयोः क्रोधात्प्रमादाल्लोभाद्वाव्रतभंगोभवेद्यदि दिनत्रयंन
भुंजीतमुंडनंशिरसोथवा नचात्रप्रायश्चित्तोक्तेअतिक्रांतव्रतानाचरणमितिवाच्यं प्रायश्चित्तमिदंकृत्वापुनरेवव्रतीभवेत्
इतिस्कांदात् अथोपवासधर्माः तत्रोपवासस्वरूपंकात्यायनवृद्धवसिष्ठाभ्यांदर्शितम् उपावृत्तस्यपापेभ्योयस्तुवासोगुणैः
सह उपवासःसविज्ञेयः सर्वभोगविवर्जितः गुणैरिति तज्जाप्ययजनध्यानतत्कथाश्रवणादयः उपवासकृतामेतेगुणाःप्रोक्तामनी
षिभिः दयाचसर्वभूतेषुक्षांतिरनसूयाशौचमनायासोकार्पण्यंचमांगल्यं मस्पृहेतिविष्णुधर्मोत्तरगौतमादिप्रतिपादितेः ॥ ॥ तच्छब्देनो-

पास्यादेवता व्रतदेवतावाएवंचपापनिर्वृत्त्यागुणानुष्ठानसहितोनिराहारस्यवासोवस्थानमुपवासइत्युक्तंभवति एवंचफलसाध
नस्योपवासस्यस्वरूपमुक्तम् उपवासपदार्थस्तुस्मृतिपुराणे व्यवहाररूढ्यानिराहारावस्थानमात्रम् वृद्धवसिष्ठः उपवासे
तथाश्राद्धेनकुर्याद्दंतधावनम् काष्ठेनेतिशेषः अतएवतन्निंदतिदंतानांकाष्ठसंयोगोहंतिसप्तकुलानिचेतिवाक्यशेषादि
धेरेवनिषेधस्यापिविशेषपरतायुक्तैवतेन अलाभेवानिषेधेवाकाष्ठानांदंतधावने पर्णादिनाविशुध्येतजिह्वोल्लेखःसदैवहि ॥
इतिपैठीनसिवचनात् अलाभेदंतकाष्ठानांनिषिद्धायांतथातिथौ अपांद्वादशगंडूषैर्विदध्याद्दंतधावनम् इतिव्यासवचनं
देवलः असकृज्जलपानाच्चसकृत्तांबूलचर्वणात् उपवासःप्रणश्येतदिवास्वापाच्चमैथुनात् अशक्तौतुतेनैवजलपा
नमभ्यनुज्ञातम् अत्ययेम्बुपानेननोपवासःप्रणश्यति अत्ययेजलपानंविनाप्राणात्ययेविष्णुधर्मे असकृज्जलपानंच
दिवास्वापंचमैथुनं तांबूलचर्वणं मांसंवर्जयेद्व्रतवासरे असकृदुक्त्यासकृज्जलपानेनदोषःअत्रपारणांतंव्रतंज्ञेयंव्रतांते
विप्रभोजनम् असमाप्तेव्रतेपूर्वेकुर्यान्नैवव्रतांतरमिति तस्यापिव्रतवासरत्वान्मांसनिषेधः पारणादिनेएवउपवासप्रसक्त्य
भावात् अतएवनिर्णयामृतेव्यासः वर्जयेत्पारणेमांसंव्रताहेप्यौषधंसदा अष्टैतान्यव्रतघ्नानिआपोमूलंफलंपयः हविर्ब्राह्म
णकाम्याचगुरोर्वचनमौषधं इतिस्कांदवचनात् प्रसक्तमौषधरूपमपिमांसंव्रताहेवर्जयेदित्यर्थः विष्णुपुराणे स्मृ
त्यालोकनगंधादिस्वादनंपरिकीर्त्तनं अन्नस्यवर्जयेत्सर्वंग्रासानांचाभिकांक्षणम् गात्राभ्यंगंशिरोभ्यंगंतांबूलंचानुलेपनम्

व्रतस्थोवर्जयेत्सर्वंयच्चान्यद्बलरागकृत् इतिहारीतः पतितपाखंडादिनास्तिकादिसंभाषणानृताश्लीलादिकमुपवासादिषु वर्जयेत्
अन्नादिपदेनयत्पुरुषार्थतयासर्वदानिषिद्धंतदपिक्रत्वर्थतयासंगृह्यते अतएवव्रताधिकारेस्मृत्यंतरे विहितस्याननुष्ठानमिंद्रि
याणामनिग्रहः निषिद्धसेवनंनित्यंवर्जनीयंप्रयत्नतः पतितादेर्दर्शनंतुविष्णुपुराणे तस्यावलोकनात्सूर्यंपश्येतमतिमान्नरः
स्पर्शादौविष्णुधर्मे संस्पर्शेत्वनरःस्नात्वाशुचिरादित्यदर्शनात् संभाष्यतान्शुचिपदंचिंतयेदच्युतंबुधः योगयाज्ञवल्क्यः ॥
यदिवाग्यमलोपस्याद्व्रतदानक्रियादिषु व्याहरेद्वैष्णवंमंत्रंस्मरेद्वाविष्णुमव्ययम् यमः मानसेनियमेलुप्तेस्मरेद्वि
ष्णुमनामयम् बृहन्नारदीये रजस्वलांचचांडालंमहापातकिनंतथा सूतिकांपतितंचैवउच्छिष्टंरजकादिकम् व्रता
दिमध्येशृणुयाद्यद्येषांध्वनिमुत्तमः अष्टोत्तरसहस्रंतुजपेद्वैवेदमातरम् वेदमातागायत्री मिताक्षरायांदक्षः सं
ध्याहीनोशुचिर्नित्यमनर्हःसर्वकर्मसु यदन्यत्कुरुतेकिंचिन्नतस्यफलमश्नुते अत्रप्रातःसंध्यैवअन्यांगमित्याहुः अविशेषा
त्तत्संध्योत्तरभाविनिकर्मादौसांगमित्युक्तंआहुःप्राज्ञाः व्रतादिकालः संकल्पस्तुप्रातःसंध्यांकृत्वैवकार्यः संध्यांबुधःकृत्वा
संकल्पंततआचरेत् इतिगौडनिबंधेध्रुवस्मृतेः मार्कंडेयपुराणे सूर्योदयंविनानैवव्रतदानादिककर्मइति क्रमइ-
तिउपक्रमः स्नानदानादिकाःक्रियाः सूर्योदयशब्देनउषःकालोप्रशस्यते तंविनारात्रौस्नानादिकंनकार्यमितिकल्पतरौ ॥
छंदोगपरिशिष्टे सदोपवीतिनाभाव्यंसदाबद्धशिखेनच विशिखोव्युपवीतिश्चयत्करोतिनतत्कृतम् पित्र्यमंत्रानुद्रवणे

आत्मालंभेअवेक्षणे अधोवायुसमुत्सर्गेप्रहासेनृतभाषणे मार्जारमूषकस्पर्शेआक्रोशेक्रोधसंभवे निमित्तेष्वेषुसर्वत्रकर्म
कुर्वन्नपःस्पृशेत् मार्कंडेयपुराणे शिरस्नातश्चकुर्वीतदैवंपित्र्यमथापिवा वराहपुराणे स्नानसंध्यात
र्पणादिजपहोमसुरार्चनम् उपवासवताकार्यंसायंसंध्याहुतीर्विना भगवद्गीतायाम् तस्मादोमित्युदाहृत्ययज्ञदानतपः
क्रियाः प्रवर्त्तंतेविधानोक्ताःसततंब्रह्मवादिनाम् तैत्तिरीये त्रिमात्रस्तुप्रयोक्तव्यःकर्मारंभेषुसर्वशः इतिसामान्यपरि
भाषा विस्तृताचेयंसामान्यपरिभाषा आचारमयूखेद्रष्टव्या अत्रस्त्रीणांविशेषोहेमाद्रौपाद्मे गर्भिणीसूतिकादिश्चकु
मारीचाथरोगिणी यदाशुद्धातदान्येनकारयेत्प्रयतास्वयम् प्रयताशुद्धास्वयंकुर्यादित्यर्थः पुंसोप्येषविधिर्लिंगस्याविवक्षि
तत्वादितिहेमाद्रिः एवंस्त्रीभिरजोदर्शनेपिकार्यम् तथाचसत्यव्रतः प्रारब्धदीर्घतपसांनारीणांयद्रजोभवेत् नचतत्रव्रत
स्यस्यादुपरोधःकथंचन व्रतस्यउपवासस्येत्यर्थः पूजादिकंतुअन्येनकारयेत् तथाचमदनरत्नेमात्स्ये अंतरातुरजस्पर्शे
पूजामन्येनकारयेत् सूतकेप्येवम् तथाचतत्रैव पूर्वसंकल्पितंयच्चव्रतंसुनियतव्रतैः तत्कर्त्तव्यंनरैःशुद्धंदानार्चनविव-
र्जितम् अन्येनकारयेदित्यपेक्षायांतत्रैवपैठिनसिः भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतम् असामर्थ्येपरस्ताभ्यांव्रत
भंगोनजायते तत्रैववायुपुराणे उपवासेत्वशक्तस्तुआहिताग्निरथापिवा पुत्राद्वाकारयेदन्याद्ब्राह्मणाद्वापिकारयेत् उप
वासंप्रकुर्वाणःपुण्यंशतगुणंभवेत् नारीचपतिमुद्दिश्यएकादश्यामुपोषिता पुण्यंशतगुणंप्रोक्तमित्याहगालवोमुनिःमाता

महादीनुद्दिश्यएकादश्यामुपोषणे कृतेचभक्तितोविप्राःसमग्रंफलमाप्नुयुः मोक्षव्रतेप्रतिनिधिःतथाचमंडनःकाम्येप्रतिनिधिर्नास्ति
नित्येनैमित्तिकेनच काम्येप्युपमाक्रमादूर्ध्वंकेचित्प्रतिनिधिंविदुः नस्यात्प्रतिनिधिर्मंत्रस्वामिदेवाग्निकर्मसु नदेशकालयोःशब्देनार
णीःपुत्रभार्ययोः नापिप्रतिनिधातव्यंनिषिद्धंवस्तुकुत्रचित् अथव्रतेहविष्याणि हेमाद्रौछंदोगपरिशिष्टेकात्यायनः
हविष्येषुयवामुख्यास्तदनुव्रीहयस्मृताः माषकोद्रवगौरादीन्सर्वाभावेपिवर्जयेत् तत्रैवअग्निपुराणे व्रीहिचणक
मुद्गश्चकलापाःसलिलंपयः श्यामाकाश्चैवनीवारागोधूमाद्याव्रतेहिताः कूष्मांडालाबुवृंताकपालक्यज्योत्स्निकास्त्यजेत् चरु
भैक्ष्यंसक्तुकणाःशाकंदधिघृतंमधु श्यामाकाःशालिनीवाराःयावकंमूलतंदुलं हविष्यंव्रतनक्तादावग्निकार्यादिकेहितं मधु
मांसंविहातव्यंसर्वव्रतनयेरितं पालकीपाथरीज्योत्स्निकाकोशातकी तत्रैवभविष्ये हैमंतिकंसितास्विन्नंधान्यंमुद्गा
यवास्तिलाः कलापकंगुनीवारावास्तुकंहिलमोचिका षष्टिकाकालशाकंचमूलकंकेमुकेतरत् कंदःसैंधवसामुद्रेगव्येचदधिस
र्पिषी पयोदधिघृतंचैवपनसाम्रहरीतकी पिप्पलीजीरकंचैवनागरंगकतिंतिणी कदलीलवलीधात्रीफलान्यगुडमैक्षवं अ
तैलपक्वंमुनयोहविष्याणिप्रचक्षते लवणेमधुसर्पिषीइतिक्वचित्पाठः हैमंतिकंधान्यंकमलाःतदपिसीतंश्वेतं अस्विन्नंहविष्यं
कलापाःसतीनापरपर्यायाः मटरइतिप्रसिद्धाः वाटाणेइतिदक्षिणेप्रसिद्धाःवास्तुकंबथुवाइतिख्यातः शाकःहिलंशक्रंमोचयती
इतिक्षीरस्वामी शक्रासारोहिलसारइतिप्रसिद्धः शाकःजलोद्भवः गौडदेशेहेलांचलेइतिप्रसिद्धा कालशाकंउत्तरदेशे कालिके

निप्रसिद्धं केसुकंकेपुन्नाइनिपूर्वदेशेप्रसिद्धं नागरंनारिंगं ऐरावतोनागरिंगोनादेयीभूमिजंबुकेत्यमरात् नागरंचैवेनिपाठेनाग
रंशुंठी लवलीरायआवळी इतिमहाराष्ट्रभाषयोच्यमानंफलं हरफरेवडीइतिमध्यदेशभाषया अतैलपक्वंइत्येतत्कथितंह
विष्याणामेवविशेषणं मन्नुःमुन्यन्नानिपयः सोमोमांसंयच्चानुपस्कृतं अक्षारलवणंचैवप्रकृत्याहविरुच्यते अनुपस्कृतंअप
क्वं अथव्रताद्युपयुक्तानिवस्तूनि तत्रपंचरत्नानि आदित्यपुराणे सुवर्णरजतंमुक्ताराजावर्तप्रवालकं रत्नपंचक
माख्यातंशेषंवस्तुप्रवीम्यहं कनकंकुलिशंनीलंपद्मरागंचमौक्तिकं एतानिपंचरत्नानिरत्नशास्त्रविदोविदुः इतिमेघप्रदीपधृ
तकालिकापुराणोक्तानिवा कुलिशंहीरकंस्मृत्यंतरे अभावेसर्वरत्नानांहेमसर्वत्रयोजयेत् विष्णुधर्मोत्तरे मुक्ताफलं-
हिरण्यंचवैडूर्यंपद्मरागकं पुष्परागंचगोमेदंनीलंगारुत्मकंतथा प्रवालयुक्तान्युक्तानिमहारत्नानिवैनव हेमाद्रौब्रह्मांडपुराणे
अश्वत्थोदुंबरप्लक्षचूतन्यग्रोधपल्लवाः पंचभंगाइतिख्यानाःसर्वकर्मसुशोभनाः पंचभंगाःपंचपल्लवाः पंचगव्यंचतत्रैवस्कां
दे गोमूत्रंगोमयंक्षीरंदधिसर्पिर्यथाक्रमम् विष्णुधर्मे गोमूत्रभागतस्त्वार्धंसकृत्क्षीरस्यत्वत्रयं द्वयंदध्नोघृतस्यैकमेकस्त्व
कुशवारिजः गोमूत्रप्रमाणंतुप्रायश्चित्तमयुखेज्ञेयं विष्णुधर्मे गायत्र्यादायगोमूत्रंगंधद्वारेतिगोमयं आप्यायस्वेतिक्षीरं
चदधिक्राव्णोथवेदधिः शुक्रमसीतिआज्यंचदेवस्यत्वाकुशोदकं एभिस्तुमंत्रराजैस्तुपंचगव्यंप्रचक्षते पंचामृतंतुहेमाद्रौ
शिवधर्मे पंचामृतंदधिक्षीरंसितामधुघृतंस्मृतं अन्यत्र पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतमितिख्यातंभा

पितंमुनयोविदुः मदनरत्नेकात्यायनः आज्यंक्षीरंमधुतथामधुरत्रयमुच्यते मधुरोम्लश्चलवणः कषायस्तिक्तएवच कटुकश्चेतिरा
जेंद्ररसःषट्कमुदाहृतं चंदनंतुगारुडे कस्तूरिकायाद्वौभागौचत्वारश्चंदनस्यच कुंकुमस्यत्रयश्चैवशशिनस्याच्चतुःसमं
कुंकुमंकेशरं शशीकर्पूरः कर्पूरंचंदनंदर्पंकुंकुमंचसमांशकं सर्वगंधमितिप्रोक्तंसमस्तसुरभूषणंदर्पःकस्तूरिका तथा कस्तूरीह्य
गरुश्चैवकर्पूरश्चंदनंतथा कंकोलंचभवेदेभिःपंचभिर्यक्षकर्दमः अथसर्वौषधीः कुष्टंमांसीहरिद्रेद्वेमुराशैलेयचंदनं
वचाचंपकमुस्तंचसर्वौषध्योदशस्मृताः पाद्मे इक्षवस्तृणराजंचनिष्पावाजाजिधान्यकं विकारवच्चगोक्षीरंकुसुमंकुंक
मंतथा लवणंचाष्टमंतत्रसौभाग्याष्टकमुच्यते तृणराजस्तालःअजाजीजीरकं आपःक्षीरंकुशाग्राणीदध्यक्षततिलास्तथा
यवाःसिद्धार्थकाश्चेतिह्यर्घ्योष्टांगःप्रकीर्तितः पंचरात्रेरजांसिपंचवर्णानिमंडलार्थेहिकारयेत् शालितंदुलचूर्णेनशुक्लंवाय
वसंभवं रक्तंकुसुंभसिंदूरगैरिकादिसमुद्भवं हरितालोद्भवंपीतंरजनीसंभवंतथा कृष्णंदग्धंचहरितंपीतकृष्णाविमिश्रितं
रजनीहरिद्रा कौतुकंसंज्ञानिभविष्ये दूर्वायवांकुराश्चैववालकंचूतपल्लवाः हरिद्राद्वयसिद्धार्थशिखिपत्रोरगत्वचः कंकणो
षधयश्चैताकौतुकाख्यादशस्मृताः अथसप्तमृदोमात्स्ये गजाश्वरथवल्मीकसंगमात्ह्रदगोकुलात् मृदमानीयकुंभेषुप्रक्षि
पेच्चत्वरात्तथा गोकुलावधिसप्तचत्वरेणसहाष्टौमृदोभवेदिति हेमाद्रौभविष्ये सुवर्णंरजतंताम्रमारकूटंतथैवच लोहंत्र
पुतथासीसंधातवःसप्तकीर्तिताः आरकूटंपित्तलं तत्रैवषट्त्रिंशन्मते यवगोधूमधान्यानितिलाःकंगुश्चमुद्गकाः श्यामाकंची

नकंचैवसप्तधान्यमुदाहृतं सप्तदशधान्यानिमार्कंडेयपुराणे व्रीहियश्चयवाश्चैवगोधूमाःकंगुकास्तिलाः प्रियंगवःकोविदाराः
कोरदूषाःसतीनकाः माषामुद्गामसूराश्चनिष्पावाःसकुलित्थकाः आढक्यश्चणकाश्चैवयावनालास्तथास्मृताः क्रमादेवंविजा
नीयाद्धान्यान्सप्तदशस्मृताः कोरदूषाःकोद्रवाः सतीनकाःकलापाःमठरइति अष्टदशधान्यानिस्कांदे व्रीहियवास्तिलाश्चैवया
वनालास्तथैवच सतीनकाःकुलित्थाश्चकंगुकाः कोरदूषकाः माषामुद्गामसूराश्चनिष्पावाःश्यामसर्षपाः गोधूमाश्चणकाश्चैव
नीवाराढक्यएवच एवंक्रमेणजानीयाद्धान्यान्यष्टदशानिच हेमाद्रौक्षीरस्वामी मूलपत्रकरीराग्रफलकांडाधिरूढकाः त्वक्
पुष्पंकवचंचेतिशाकंदशविधंस्मृतं करीरंवंशांकुरः अग्रंपल्लवः कांडंनालंकवचंछत्राकं कलशाउक्ताविष्णुधर्मे हेमराजततां
म्राश्चमृन्मयालवणान्विताः यात्रोद्वाहप्रतिष्ठादौकुंभास्सुरभिषेचने पंचाशांगुलवैपुल्याउत्सेधेषोडशांगुलाः द्वादशांगुलमूला
स्युर्मुखमष्टांगुलंभवेत् पंचचआशाश्चपंचाशाः आशादश पंचाशदंगुलानिवैपुल्य मित्यर्थः केचित्तुपंचदशांगुलवैपुल्या
मित्याहुः प्रतिमाद्रव्ययोःपरिमाणं हेमाद्रौभविष्ये अनुक्तद्रव्यतत्संख्यादेवताप्रतिमान्नृप सौवर्णीराजतीताम्रीवृक्षजामा
र्तिकीतथा चित्रजापिष्टलेपोत्थानिजवित्तानुरूपतः आमाषात्पलपर्यंताकर्तव्याशक्तिसंभवे अंगुष्ठपर्वमारभ्यवितस्त्यवधि
कास्मृता मात्स्येतुविशेषः अंगुष्ठपर्वादारभ्यवितस्त्यवधिदेवता गृहेतुप्रतिमाकार्यानाधिकाशस्यतेबुधैः आषोडशात्तुप्रासादे
कर्तव्यानाधिकाततः इत्यधिकंकल्पतरौप्रतिष्ठाकांडेज्ञेयं तथाअनुक्तसंख्याहोमेस्याच्छतमष्टोत्तरंस्मृतं मात्स्ये होमोग्रहा

दिपूजायांशतमष्टोत्तरंभवेत् अष्टाविंशतिरष्टौवायथाशक्तिविधीयते मदनरत्नेब्राह्मे यथोक्तवस्त्वसंपत्तौग्राह्यंतदनुकारिय
त् यवाभावेचगोधूमाव्रीह्याभावेचतंदुलाः आज्यंद्रव्यमनादेशेजुहुयाच्चयथाविधि मंत्रस्यदेवतायाश्चप्रजापतिरितिस्थितिः
मंत्रस्यदेवतायाश्चविधानेनप्रजापतिर्देवतासमस्तव्याहृतिर्मंत्रःस्मृत्यंतरेपि नव्याहृत्यासमंहुतइति गारुडे प्रणवादिनमों
तंचचतुर्थ्यंतंचसत्तम देवतायाःस्वकंनामसूलमंत्रःप्रकीर्तितः द्रव्याभावेप्रतिनिधिः दध्यलाभेपयोग्राह्यमध्वलाभेतथागुडः घृतेप्र
तिनिधिःकार्योपयोवादधिवान्रप तत्रैवमैत्रायणीयपरिशिष्टे दर्भाभावेकाशाःपैठीनसिःसर्वाभावेयवाः आज्यहोमेषुसर्वेषुगा
व्यमेवभवेद्धृतं तदभावेमहिष्यास्तुआज्यमाविकमेवतु तदभावेतुतैलंस्यात्तदभावेतुजार्तिलं तदभावेतुकौसुंभंतदभावेतुसार्षपं अ
थपवित्रं अनंतर्गर्भिनंसाग्रंकौशंद्विदलमेवच प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचित् अथेध्माः पलाशाश्वत्थखदिरवटोदुंबरमेव
च अथधूपाः अगरुंचंदनंमुस्तासिल्हकंवृषणंतथा समभागंतुकर्तव्यंधूपोयममृताह्वयः सिल्हकंसिल्हादइतिप्रसिद्धः वृषणंक
स्तूरी षड्भागकुष्ठंद्विगुणोगुडस्यलाक्षात्रयंपंचनखस्यभागाः हरीतकीसर्जरसःसमांसीभागैकमेकंत्रिवलंशिलाजं घनस्यचत्वारिपुरस्यचै
कोधूपोदशांगः कथितोमुनींद्रैः सर्जरसः राळइति मांसीजटामांसी त्रिवलंत्रिभागं घनःकर्पूरः परंगुग्गुलः सुवर्णमानंसयाज्ञ
वल्क्यः जालसूर्यमरीचिस्थंत्रसरेणूरजःस्मृतं तेष्टौलिक्षास्तुतास्तिस्त्रोराजसर्षपउच्यते गौरस्तुतेत्रयःषट्तेयवोमध्यस्तुते
त्रयः कृष्णालःपंचतेमाषस्तेसुवर्णस्तुषोडश पलंसुवर्णाश्चत्वारःपंचवापिप्रकीर्तितं रजतमानमाह द्वेकृष्णलेरूप्यमाषोध-

रणंषोडशैवते शतमानंतुदशभिर्धरणैर्पलमेवतु निष्कस्सुवर्णाश्चत्वारइति ताम्रमान माह कार्षिकः ताम्रिकाः पणइतिप
लचतुर्थांशेनकर्षेणोन्मितः कार्षिक स्ताम्रसंबंधीपणोभवतिकर्षसंज्ञश्च निघंटौतेषोडशाक्षः कर्षोस्त्रीपलंकर्षचतुष्टयमितिते
षोडशमाषाःअक्षः हेमाद्रौनारदःअक्षः सचकर्षइत्यर्थः धरणस्यैवपुराणेसंज्ञांतर तेषोडशस्याद्धरणंपुराणश्चैवराजतमिति
मिताक्षरायांस्मृतेः शतमानेपलेपर्यायेसुवर्णचतुष्टयसम तोलितंरूप्यंराजतोनिष्कइत्यर्थः सुवर्णनिष्कस्सचतुःसौवर्णिकोनि
ष्कोविज्ञेयस्सप्रमाणइतिसचपलसमानएवकोत्रकार्षापणइत्यपेक्षायांदेशभेदेनकार्षापणोभिन्नइतिआह हेमाद्रौनारदे का-
र्षापणोदक्षिणस्यांदिशिरौप्यःप्रवर्तते पणैर्निबद्धः पूर्वस्यांदिशिषोडशस्यैवपणाः अष्टौदब्बूकाःकार्षापणः पूर्वस्यामित्यर्थः
तावतालभ्यंरूप्यंदक्षिणस्यांसइतिद्वैतनिर्णयेपितामहचरणाः लीलावत्यां वराटकानांदशकद्वयंयत्साकाकिणीताश्चपणा-
श्चतस्रः तेषोडशद्रम्यइहावगम्योद्रम्मैस्तथाषोडशभिश्चनिष्कः अथधान्यमानंभविष्ये पलद्वयंतुप्रसृतंद्विगुणंकुडवंमतं च
तुर्भिःकुडवैःप्रस्थःप्रस्थाश्चत्वारआढकः आढकैस्तैश्चतुर्भिश्चद्रोणस्तुकथितोबुधैः कुंभोद्रोणद्वयंशूर्पःखारीद्रोणास्तुषोडश द्रो
णद्वयस्यैवशूर्पइतिसंज्ञा पलंचकुडवःप्रस्थआढकोद्रोणएवच धान्यमानेषुबोद्धव्याःक्रमशोमीचतुर्गुणाः द्रोणैःषोडशभिःखा
रीविंशत्याकुंभउच्यते कुंभैस्तुदशभिर्वाहोधान्यसंख्याप्रकीर्तिताः विंशत्येत्यत्रापिद्रोणैरितिसंबध्यते तयाच कुंभोद्रोणद्व
यमितिपक्षाद्विंशतिद्रोणमितः कुंभइतिपक्षांतरंद्रोणाढकयोः परिमाणांतरमुक्तं पराशरेण वेदवेदांगविद्विप्रैर्धर्मशास्त्रानुपाल-

कैः प्रस्थाद्द्वात्रिंशतिद्रोणमितोद्विप्रस्थ आढक इति एतेषान्न्यूनाधिकपक्षाणांशक्तिदेशकालाद्यपेक्षयाव्यवस्थाज्ञेया अथ
होमद्रव्यमानंसिधांतशेखरे होमद्रव्यप्रमाणानिवक्ष्यंतेतुयथाक्रमं कर्षप्रमाणमाज्यंस्यान्मधुक्षीरंचतत्समं॥ तंदुलानांशु-
क्तिमात्रंपायसंप्रसृतेःसमं कर्षमात्राणिभक्ष्याणिलाजामुष्टिमिताःस्मृताः अन्नंग्राससमंग्राह्यंशाकंग्रासार्धमात्रकं मूला-
नांतुत्रिभागःस्यात्कंदानामष्टमोंशकः इक्षुःपर्वप्रमाणंस्यादंगुलद्वितयंलता प्रादेशमात्राःसमिधोव्रीहीणांचांजलिःसमःति
लसर्षपकणादीनांमृगीमुद्राप्रमाणतः पत्रपुष्पफलादीनांप्रमाणाहुतिरिष्यते चंद्रश्रीखंडकस्तूरीकुंकुमागरुकर्दमाः हरिमं
थसमाःप्रोक्तागुग्गुलुर्बदरोपमः हरिमंथश्चणकः आहूतीनामिदंमानंकथितंवेदवेदिभिः स्यात्रिमुद्रामृगीमुद्राहोमेसर्वफल
प्रदा मानांतरंशारदातिलकटीकायांपदार्थादर्शे कर्षमात्रमिदंहोमेशक्तिमात्रंपयःस्मृतं उक्तानिपंचगव्यानिशुक्तिमात्राणि
साधुभिः तत्समंमधुदुग्धान्नग्रासमात्रमुदाहृतं दधिप्रसृतिमात्रंस्याल्लाजाःस्युर्मुष्टिसंमिताः पृथुकास्तत्प्रमाणाःस्युःसक्त-
वोपितथाविधाः पलार्धंगुडमानंचशर्करापितथाविधा ग्रासार्द्धमात्रमन्नानामिक्षुःपर्वप्रमाणतः एकंस्यात्पत्रपुष्पंचतथापा
पादिकल्पयेत् मातुलिंगंचतुःखंडंपनसंदशधाकृतम् अष्टधानारिकेलंचचतुर्धाकदलीफलं॥ त्रिधाकृतंफलंबैल्वंकपित्थंखं
डितंद्विधा व्रीहयोमुष्टिमानाःस्युर्मुद्गामाषायवास्तथा तंडुलाःस्युस्तदर्धाशाक्तोद्रवामुष्टिसंमिताः लवणंशुक्तिमात्रंस्यान्मरि
च्यानेकविंशतिः घृतस्यकार्षिकोहोमःक्षीरस्यमधुनस्तथा शुक्तिमात्राहुतिर्दध्नःप्रसृतिःपायसस्यच खंडत्रयंतुमूलानांफला

स्वप्रमाणतः ग्रासमात्रंतु होतव्याइतरेषांचतंदुलाः अक्षनास्तुयवाःप्रोक्ताअभावेव्रीहयःस्मृताः तदभावेचगोधूमानलुखंडि
तांतंडुलाः येषांकेषांचिदन्येषांद्रव्याणामप्यसंभवे सर्वत्राज्यमुपादेयंभरद्वाजमुनेर्मतात् सर्वप्रमाणमाहुत्यापंचांगुलगृहीतये-
ति संपूर्णानिचसर्वत्रसूक्ष्माणिपंचपंचच इक्षूणांपर्वकंमानंलतानामंगुलद्वयं चंद्रचंदनकाश्मीरकस्तूरीयक्षकर्दमात् क-
लापसंमितानेतान्गुग्गुलंबदरास्थिवत् द्रवःस्रुवेणहोतव्यःपाणिनाकठिनंहविः स्रुवपूर्णाद्रवाःप्रोक्ताःकठिनाग्रासमात्रकाः
व्रीहयोयवगोधूमप्रियंगुतिलशालयः स्वरूपेणवहोतव्याइतरेषांचतंदुलाः अथऋत्विग्वरणं हेमाद्रौपाद्मे बालाग्नि
होत्रिणांविप्रंसरूपंचगुणान्वितं सपत्नीकंचसंपूज्यभूषयित्वाचभूषणैः पुरोहितंमुख्यतमंकृत्वान्यांश्चतथार्त्विजः चतुर्विंश
तृगुणोपेतान्सपत्नीकान्निमंत्रितान् अहतांबरसंछन्नान्स्रग्विणःशुचिभूषितान् अंगुलीयकानिचतथाकर्णभूषान्प्रदाप
येत् तत्रैवलैंगं वस्त्रयुग्मंतथोष्णीषंकुंडलेकंठभूषणं अंगुलीभूषणंचैवमणिबंधस्यभूषणं एतानिचैवसर्वाणिप्रारंभे
हूमकर्मणां पुरोहितायदत्वाथऋत्विग्भ्यःसंप्रदापयेत् पूर्वोक्तभूषणंसर्वंसोष्णीषंवस्त्रसंयुतं दद्यादेतत्त्रयोत्कृष्टमाछा
दनपदंतथा व्रतानांमधुपर्कमाह विश्वामित्रः संपूज्यमधुपर्केणऋत्विजःकर्मकारयेत् अपूज्यकारयेत्कर्मकिल्बिषे
णानुयुज्यते ऋत्विजांसंख्यामाहमात्स्ये हेमालंकारिणःकार्याःपंचविंशतिऋत्विजः तोषयेच्चसमंसर्वानाचार्यंद्विगुणंभवे
त् दक्षिणयातोषयेदित्यर्थः अथसर्वतोभद्रमंडलंहेमाद्रौस्कांदे प्रागुदीच्यागतारेखाःकुर्यादेकोनविंशतिं खंडेंदुस्त्रि

पदैः कोणेशृंखलापंचभिः पदैः एकादशपदावल्लीभद्रंतुनवभिःपदैः चतुर्विंशत्पदावापीविंशत्यापरिधिःपदैः मध्येषोडशभिःकोष्ठैःपद्म
मष्टदलंस्मृतं श्वेतेंदुःशृंखलाकृष्णावल्लीर्नीलेनपूरयेत् भद्रारुणासितावापीपरिधिःपीतवर्णकः बाह्यांतरदलश्वेताकर्णिकापीतवर्णि
का परिध्यावेष्टितंपद्मंबाह्येसत्वंरजस्तमः तन्मध्येस्थापयेद्देवान्ब्रह्माद्यांश्वरुशान्वितान् इतिसर्वतोभद्रपीठं अथलिंगतोभद्रं

चतुर्विंशतिरालेख्यारेखाःप्रागुदक्षिणायताः कोणेषुशृंखलाःपंचपदावल्यंस्तुपार्श्वतः पदैर्नवभिरालेख्याश्चतुर्भिर्लघु
शृंखलाः लघुवल्यःपदैःषड्भिस्ततोष्टादशभिःपदैः कृत्वालिंगानिवाप्यस्युस्त्रयोदशभिरंतरा॥ ततोवीथीद्वयेनैवपीठंकुर्याद्वि
चक्षणः॥ तस्यपादाःपंचपदाद्वाराण्यपितथैवच एकाशीतिपदंमध्येपदंस्वस्तिकमुच्यते कोणेषुशृंखलाःकार्याःपदैस्त्रिभि
रतःपरं पदैश्चतुर्भिर्दिक्षुस्युर्भद्राण्येषांसमंततः एकादशपदावल्योमध्येष्टदलमालिखेत् पद्मंनवपदंह्येवंलिंगतोभद्रमु
च्यते शृंखलाःकृष्णवर्णेनवल्लीर्नीलेनपूरयेत् रक्तेनशृंखलालघ्वीर्वल्लीःपीतेनपूरयेत् लिंगानिकृष्णवर्णानिश्वेतेनाप्यथवापि-
काःपीठंसपादंश्वेतेनपीतेनद्वारपूरणं मध्येस्युःशृंखलारक्तावल्लीर्नीलेनपूरयेत् भद्राणिपीतवर्णानिपीतापंकजकर्णिका दलानिश्वे
तवर्णानियद्वाचित्राणिकल्पयेत् तिस्रोरेखाबहिःकार्याःसीतारक्तासिताक्रमात् अथचतुर्लिंगोद्भवलिंगे रेखास्त्वष्टादशप्रोक्ताश्चतुर्लि
गसमुद्भवे कोणेंदुस्त्रिपदश्वेतस्त्रिपदैःकृष्णाशृंखलाः वल्लीसप्तपदानीलाभद्रंरक्तंचतुष्पदं भद्रपार्श्वेमहारुद्रंकृष्णमष्टादशैःपदैः शि-
वस्यपार्श्वतोवापींकुर्यात्पंचपदांसितां पदमेकंतथापीतंभद्रवाप्योस्तुमध्यतः शिरसिशृंखलायाश्चकुर्यात्पीतंपदत्रयं लिंगा-

नांस्कंधतःकोष्टाविंशतीरक्तवर्णकाः परिधिःपीतवर्णैस्तुपदैःषोडशभिःस्मृतः पदैस्तुनवभिःपश्चाद्रक्तंपद्मंसकर्णिकं अ
थद्वादशलिंगोद्भवं प्रागुदीच्यायतारेखाःषट्त्रिंशाद्विप्रकल्पयेत् पदानिद्वादशशतंपंचविंशतिरेवच खंडेंदुस्त्रिपदःकोणे
शृंखलाःषट्पदैःस्मृताः त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः त्रयोदशपदावापीलिंगमष्टादशंस्मृतं लिंगत्रयस्यपंक्तौतुशोभा
कोष्टाश्चतुर्दश तेषामुपरिपंक्तौतुकोष्टाःसप्तदशैवतु पूजापंक्तिरुक्ताविज्ञेयोपरितःपरिकीर्तिता पूजापंक्त्यंतरापंक्तौकोष्टाद्यशी
तिसंख्यया परिधिःसचविज्ञेयोमंडलेरंतराद्वयोः परिध्यंतरकोष्टेषुसर्वतोभद्रमालिखेत् विशेषश्चात्रविज्ञेयोशृंखलाष
ट्पदाभवेत् त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः पंचविंशत्पदावापिपरिधिःषोडशात्मकः मध्येनवपदंपद्मंकर्णिकाकेस
रान्वितं सत्वरजस्तमोवर्णाःपरितोमंडलस्यतु त्रयःपरिधयःकार्यास्तत्रद्वाराणिकारयेत् सितेंदुःशृंखलाकृष्णावल्लीनीला
प्रकीर्तिता भद्रंचैवारुणंज्ञेयंवापीस्याच्छ्वेतकर्णिका लिंगानिकृष्णवर्णानिपार्श्वतोद्वादशैवतु परिधिःपीतवर्णःस्यात्कम
लंपंचवर्णकं इतिसर्वतोभद्रलिंगतोभद्रादिमंडलानि अथसर्वतोभद्रमंडलविधिरुच्यते शिवव्रतंविनासर्वव्रतो
द्यापनेषुसर्वतोभद्रमंडलंकारयेत् तत्रकारिका बाहुमात्रांयदावेदींकुर्याच्छुद्धमृदाबुधः तद्वेद्यांसर्वतोभद्रंमंडलंविलिखेत्त
तः विलिखेत्सर्वतोभद्रंवेदिकायांतुसुंदरं तत्रैवशिवव्रतेषुलिंगतोभद्रंलिखेत् तन्मध्येस्थापयेद्देवान्ब्रह्माद्यांश्चसुरेश्वरान्
अथमंडलदेवताप्रारंभः तन्मध्येब्रह्माणं ब्रह्मजज्ञानंगौतमोवामदेवोब्रह्मात्रिष्टुप् मध्येब्रह्मावाहनेविनियोगः

ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः सबुध्निया उपमा अस्यविष्ठाःसतश्चयोनिमसतश्चविवः भोब्रह्मन्
इहागच्छ इहतिष्ठपूजांगृहाणममसंमुखःसुप्रसंनोवरदोभव इत्येवप्रकारेणसर्वत्रदेवतानांज्ञेयं ततःउदीचीमारभ्यवायवीप
र्यंतंसोमादयोवाय्वंताष्टौलोकपालाः स्थापनीयाः १तत्रआप्यायस्वराहूगणोगोतमःसोमोगायत्री उत्तरेसोमावाहनेविनि
योगः ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् भवावाजस्यसंगथे २ अभित्वाजीगर्तिःशुनःशेपईशानोगायत्री ई-
शान्यांईशानावा० अभित्वादेवसवितरीशानंवार्याणां सदावन्भागमीमहे ३ इंद्रंवोमधुच्छंदाइंद्रोगायत्री पूर्वेइंद्रावाहने०
ॐ इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः अस्माकमस्तुकेवलः ४ अग्निंदूतंकाण्वोमेधातिथिरग्निर्गायत्री आग्नेय्यांअग्न्या
वाह० ॐ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं अस्ययज्ञस्यसुक्रतुं ५ यमायसोमंवैवस्वतोयमोनुष्टुप् दक्षिणेयमावाह
ने० ॐ यमायसोमंसुनुतयमायजुहुताहविः यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः ६ मोषुणोघोरःकण्वोनिर्ऋतिर्गायत्री निर्ऋ
त्यांनिर्ऋत्यावाहने० ॐ मोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् पदीष्टतृष्णयासह ७ तत्वायामिशुनःशेपोवरुणस्त्रिष्टुप्
पश्चिमेवरुणावा० ॐ तत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः अहेळमानोवरुणेहबोध्युरुशंसमान आयुः
प्रमोषीः ८ वायोशतंवामदेवोवायुरनुष्टुप् वायव्यांवाय्वावा० ॐ वायोशतंहरीणांयुवस्वपोष्याणां उतवातेसहस्त्रिणोरथआ
यानुपाजसा ९ वायुसोमयोर्मध्येअष्टौवसवः ज्मयाअत्रमैत्रावरुणोवसवस्त्रिष्टुप् वायुसोमयोर्मध्येवस्वावा० ॐ ज्मया

भत्रवसवोरंतदेवा उरावंतरिक्षेमर्जयंतंशुभ्राः अर्वाक्पथउरुज्रयः कृणुध्वंश्रोतादूतस्यजग्मुषोनोअस्य १० आरुद्रासःत्र्या
वाश्व एकादशरुद्राजगती सोमेशानयोर्मध्येएकादशरुद्रावाह॰ ॐ आरुद्रासइंद्रवंतःसजोषसोहिरण्यरथाः सुविताय गंतन
इयंवोअस्मत्प्रतिहर्यतेमतिस्तृष्णजेनदिवउत्साउदन्यवे ११ त्यांनुमत्स्यःसांमदोद्वादशादित्यागायत्री ईशानेंद्रयोर्मध्येद्वादशा
दित्यावाहने॰ ॐ त्यांनुक्षत्रियांअवआदित्यान्याचिषामहे सुमृळीकां अभिष्टये १२ अश्विनावर्तिराहूगणोगोतमोश्विनावु
ष्णिक् इंद्राग्न्योर्मध्ये अश्विनावाह॰ अश्विनावर्तिरस्मदागोमद्दस्राहिरण्यवत् अर्वाग्रथंसमनसानियच्छतं १३ ओमासोम
धुछंदाविश्वेदेवागायत्री अग्नियमयोर्मध्येविश्वेदेवावाह॰ ॐ ओमासश्चर्षणीधृतोविश्वेदेवासआगत दाश्वांसोदाशुषः
सुतं १४ अभित्यंदेवंगोतमोवामदेवःसप्तयक्षाअष्टी यमनिर्ऋत्योर्मध्येसप्तयक्षावाह॰ ॐ अभित्यंदेवंसवितारमोण्योःक
विक्रतुमर्चामिसत्यसवंरत्नधामभिप्रियंमतिंकविं ऊर्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृ
पास्वः १५ आयंगौःसार्पराज्ञीसर्पागायत्री निर्ऋतिवरुणयोर्मध्येसर्पावा॰ ॐ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः पितरं
चप्रयन्स्वः १६ अप्सरसामैतशऋष्यशृंगोगंधर्वाप्सरसोनुष्टुप् वरुण वाय्वोर्मध्येगंधर्वाप्सरसावा॰ ॐ अप्सरसांगंधर्वाणां
मृगाणांचरणेचरन् केशीकेतस्यविद्वान्सखास्वादुर्मदिंतमः १७ यदक्रंदऔचथ्योदीर्घतमास्कंदस्त्रिष्टुप् ब्रह्मसोमयोर्म
ध्येस्कंदावाहने॰ ॐ यदक्रंदःप्रथमंजायमानउद्यन्त्समुद्रादुतवापुरीषात् श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहिजातंतेअर्व

न् १८ तत्रैवऋषभमृषभोवैराजोनंदीश्वरोनुष्टुप् ब्रह्मसोमयोर्मध्येनंदीश्वरावा० ऋषभंमासमानानांसपत्नानांवृषास
हिं हंतारंशत्रूणांकृधिविराजंगोपतिंगवां १९ कद्रुद्रायघोरःकण्वःशूलोगायत्री तत्रैवशूलावाहनेविनियोगः कद्रुद्रायप्रचेत
सेमीढुष्टमायतव्यसे वोचेमशंतमंहृदे २० कुमारंकुमारोमहाकालस्त्रिष्टुप् तत्रैवमहाकालावाह० ॐकुमारंमातायुवतिः
समुब्धंगुहाबिभर्षिनददातिपित्रे अनीकमस्यनमिनज्जनासःपुरःपश्यंतिनिहितमरतौ २१ अदितिर्लौक्योबृहस्पतिर्दक्षो
नुष्टुप् ब्रह्मेशानयोर्मध्ये दक्षावाहने० अदितिर्ह्यजनिष्टदक्षयादुहितातव॥ तान्देवाअन्वजायंतभद्राअमृतबंधवः भोद
क्षादिसप्तगणान् २२ तामग्निवर्णांसौभरीदुर्गात्रिष्टुप् ब्रह्मेंद्रयोर्मध्येदुर्गावाह० तामग्निवर्णांतपसाज्वलंतींवैरोच-
नींकर्मफलेषुजुष्टां दुर्गांदेवींशरणमहंप्रपद्येसुतरसितरसेनमः २३ इदंविष्णुःकाण्वोमेधातिथिर्विष्णुर्गायत्री ब्रह्मेंद्रयो
र्मध्येविष्णवावाहनेविनि० इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं समूढमस्यपांसुरे २४ उदीरतामवरशंखःस्वधापित
रस्त्रिष्टुप् ब्रह्माग्न्योर्मध्येस्वधावा० ॐउदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः असुंयईयुरवृकाऋतज्ञा
स्तेनोवंतुपितरोहवेषु २५ परंमृत्योःसंकुशिकोमृत्युरोगास्त्रिष्टुप् ब्रह्मयमयोर्मध्येमृत्युरोगावाहने० ॐपरंमृत्योअ-
नुपरेहिपंथांयस्तेस्वइतरोदेवयानात् चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान् २६ गणानांत्वाशौनकोगृ
त्समदोगणपतिर्जगती ब्रह्मनिर्ऋत्योर्मध्येगणपत्यावाहनेविनियोगः ॐगणानांत्वागणपतिंहवामहेकविंक वीनामुपम

श्रवस्तमं ज्येष्ठराज्यंब्रह्मणांब्रह्मणस्पतआनःश्रृण्वन्नूतिभिःसीदसादनं २७ शंनोदेवीरांबरीषःसिंधुद्वीपआपोगायत्री ब्रह्मवरुणयोर्मध्येअपावाहनेविनियो॰ ॐशंनोदेवीरभिष्टयआपोभवंतुपीतये शंयोरभिस्रवंतुनः २८ मरुतोयस्यराहूगणोगौतमोमरुतोगायत्री ब्रह्मवाय्वोर्मध्येसरुदावाह॰ मरुतोयस्यहिक्षयेपाथादिवोविमहसः सस्कगोपातमोजनः २९ स्योनापृथिवीकाण्वोमेधातिथिर्भूमिर्गायत्री ब्रह्मणःपादमूलेकर्णिकाधःपृथिव्यावाहने॰ ॐस्योनापृथिविभवान्रृक्षरानिवेशनी यच्छानःशर्मसप्रथः ३० इमंमेगंगेसिंधुक्षित्प्रैय्यमेधोगंगादिनद्योजगती तत्रैवगंगादिनद्यावा॰ ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेश्रृणुह्यासुषोमया ३१ धाम्नोगौतमोवामदेवःसप्तसागरानुष्टुप् तत्रैवसप्तसागरावा॰ ॐधाम्नोधाम्नोराजन्नितोवरुणनोमुंच यदापोअघ्न्याइतिवरुणेतिशपामहेततोवरुणनोमुंच मयिवापोमोषधीर्हिंसीरतोविश्वव्यचाभूस्त्वेतोवरुणनोमुंच ३२तदुपरिमेरुंनाममंत्रेणपूजयेत् मेरवेनमः मेरुमावाहयामि ततोमंडलाद्बहिः सोमादिसंनिधौआयुधान्यावाहयेत् सोमसमीपेगदां ईशानसमीपेत्रिशूलं इंद्रसमीपेवज्रं अग्निसमीपेशक्तिं यमसमीपेदंडंनिर्ऋति समीपेखड्गं वरुणसमीपेपाशं वायुसमीपेअंकुशं८ तद्बाह्येउत्तरे गौतमायन॰गौतमंआ॰ ईशान्यांभरद्वाजं पूर्वेविश्वामित्रं आग्नेयांकश्यपं दक्षिणेजमदग्निं नैर्ऋत्यांवसिष्ठं पश्चिमेअत्रिं वायव्यांअरुंधतीं तद्बाह्येपूर्वादिक्रमेण ऐंद्रींकौमारीं॰ब्राह्मीं॰वाराहीं॰चामुंडां॰वैष्णवीं॰मा

हेश्वरीं वैनायकीं॰ इत्यष्टौशक्तीः ८ प्रतिष्ठाप्यप्रत्येकंसहवापूजयेत् इतिमंडलदेवताः अथलक्षपूजनोद्यापनविधि
रुच्यते अद्येत्यादिपूर्वोच्चरितएवंगुणविशेषणविशिष्टायांपुण्यतिथौ॰ मयाकृतस्यअमुकदेवताप्रीत्यर्थंलक्षसंख्या
मुकपूजनकर्मणःसांगतासिध्यर्थंतदुद्यापनंकरिष्ये तदंगत्वेनस्वस्तिवाचनंआचार्यवरणंचकरिष्ये तत्रादौनिर्विघ्नता
सिध्यर्थंगणपतिपूजनंकरिष्ये अस्यलक्षपूजनोद्यापनकर्मणःपुण्याहंभवंतोब्रुवंतु अस्तुपुण्याहं एवंस्वस्तिभवंतोब्रु
वंतु आयुष्मतेस्वस्ति ऋद्धिंभवंतोब्रुवंतु ऋध्यतां श्रीरस्त्वितिभवंतोब्रुवंतु अस्तुश्रीः श्रीलक्ष्मीनारायणौप्रीयेतां
तत्रगोत्रनामोच्चारणपूर्वकंअसुकगोत्र अमुकशर्मा अहंयजमानः अमुकगोत्रंअमुकशर्माणंस्वशाखाध्यायिनंब्राह्मणं
अस्मिन्लक्षपूजनोद्यापनाख्येकर्मणि आचार्यत्वामहंवृणे आचार्यत्वेनवृतोस्मियथाज्ञानेनकर्मकरिष्यामि आचार्य
स्तुयथास्वर्गेशक्रादीनांबृहस्पतिः तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत गंधादिनाआचार्यपूजनं तथैवब्रह्माणंवृणु
यात् यथाचतुर्मुखोब्रह्मास्वर्गेलोकेपितामहः तथात्वंममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम अस्ययागस्यनिष्पत्तौ॰आचार्यःआचम्यप्राणा
नायम्यअमुककर्मकरिष्ये कर्माधिकारार्थंआत्मनःशुद्ध्यर्थंचपुरुषसूक्तजपमहंकरिष्ये पृथ्वीत्यस्यमंत्रस्य मेरु
पृष्ठऋषिःकूर्मोदेवता सुतलंछंदः आसनोपवेशनेविनियोगः पृथ्वीत्वयाधृतालोका॰ पुरुषसूक्तजपांतेकलशपूजनं
सर्वतोभद्रेलिंगतोभद्रेवाब्रह्मादीनावाह्यपूजयेत् ततःमूर्तौअग्न्युत्तारणं अस्यांमूर्तौ अवघातादिदोषपरिहारार्थंअ

ग्र्युत्तारणंदेवतासान्निध्यार्थंप्राणप्रतिष्ठांचकरिष्ये अग्निःसप्तिमितिसूक्तं अग्निपदरहितंसहितंचपठेत्  अग्निः
सप्तिंवाजंभरंददात्यग्निर्वीरंश्रुत्यंकर्मनिष्ठां अग्नीरोदसीविचरत्समजन्नग्निर्नारींवीरकुक्षिंपुरंधिं अग्नेरप्नसःसमिदस्तुभद्राअ
ग्निर्महीरोदसीआविवेश अग्निरेकंचोदयत्समत्स्वग्निर्वृत्राणिदयतेपुरूणि अग्निर्हत्यंजरतःकर्णमावाग्निरद्भ्योनिरदहज्जरूथं
अग्निरत्रिंघर्मउरुष्यदंतरग्निर्नृमेधंप्रजयासृजत्सं अग्निर्दाद्द्रविणंवीरपेशाअग्निर्ऋषिंयःसहस्रासनोति अग्निर्दिविहव्यमाततना
ग्नेर्धामानिविभृतापुरुत्रा अग्निमुक्थैर्ऋषयोविह्वयंतेग्निंनरोयामनिबाधितासः अग्निंवयोअंतरिक्षेपतंतोग्निःसहस्रापा
रियातिगोनां अग्निंविशईळतेमानुषीर्याअग्निंमनुषोनहुषोविजाताः अग्निर्गांधर्वींपथ्यामृतस्याग्नेर्गव्यूतिर्घृतआनिषत्ता अ
ग्नयेब्रह्मऋभवस्ततक्षुरग्निंमहामवोचामासुवृक्तिं अग्नेप्रावजरितारंयविष्ठाग्नेमहिद्रविणमायजस्व  इतिअग्न्युत्तारणं
अथषोडशोपचारपूजनं  सहस्रशीर्षेत्यावाहनं पुरुषएवेदमित्यासनं एतावानस्येतिपाद्यं त्रिपादूर्ध्वइत्यर्घ्यं तस्माद्विरा
ळेत्याचमनीयं यत्पुरुषेणेतिस्नानं तंयज्ञमितिवस्त्रं तस्माद्यज्ञात्सर्वहुतःसंभृतमित्युपवीतं तस्माद्यज्ञात्सर्वहुतऋचइतिगंधं तस्मादश्वेति
पुष्पं यत्पुरुषंव्यदधुरितिधूपं ब्राह्मणोस्येतिदीपं चंद्रमामनसइतिनैवेद्यं नाभ्याआसीदितिप्रदक्षिणाःसप्तास्येतिनमस्कारा
न् यज्ञेनयज्ञमितिमंत्रपुष्पांजलिं इतिषोडशोपचारपूजा व्रीह्यादिधान्ययवतिलैःत्रिकूटंकृत्वातत्रमहीद्यौरित्यादिनाअव्रणं
कलशंसंस्थाप्य कलशोपरिउपपात्रंसंस्थाप्य तस्योपरित्र्यंबकमंत्रेणउमयासहत्र्यंबकंचाविष्णुमंत्रेणालक्ष्म्यासहविष्णुंसिद्धि

१४

त्र्यंगुलंपरिधिकंफलितमष्टादशांगुलविस्तृतंहोमानुसारेणतदधिकंवानतुततोन्यूनंमध्योन्नतंस्थंडिलंकुर्यात् तदंगंस्थंडिलउल्ले
पनउल्लेखनाग्निप्रतिष्ठापनंकरिष्ये गोमयादिलिप्तेशुद्धेदेशेस्थंडिलंकुर्यात् स्थंडिलंतद्गोमयेनप्रदक्षिणमुपलिप्य दक्षिणोदी
उदीच्यांद्वेप्रतीच्यांचतुःप्राच्यामर्धभित्त्यंगुलानित्यक्त्वा दक्षिणोपक्रमामुदक्संस्थांप्रादेशमात्रामेकांलेखांतस्यादक्षिणोत्तयोः
प्रागायतेपूर्वरेखायाः असंस्पृष्टप्रादेशसंस्थमितेद्वेलेखेलिखित्वानयोर्मध्येपरस्परमसंस्पृष्टाउदक्संस्थाःप्रागायताःप्रादे
शसंमितास्तिस्रइतिषट्लेखायज्ञियशकलमूलेनदक्षिणहस्तेनोल्लिख्यलेखाकृतच्छकलमुदगग्रंनिधायस्थंडिलमद्भिरभ्यु
क्ष्यशकलमाग्नेय्यांनिरस्य पाणिंप्रक्षाल्यवाग्यताभवेत् तैजसादिपात्रेपिधानसहितमग्निमानीय स्थंडिलादाग्नेय्यांदि
शिनिधाय जुष्टोदमूनाआत्रेयोवसुश्रुतोग्निस्त्रिष्टुप् अग्न्यावाहने॰ ॐ जुष्टोदमूनाअतिथिर्दुरोणइमन्नोयज्ञमुपयाहि
विद्वान् विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि एह्यग्नइत्यस्यमंत्रस्यराहूगणोगौतमऋषिः अग्निर्देवता
त्रिष्टुप्छंदः अग्न्यावाहनेविनियो॰ ॐ एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः अवतांत्वारोदसीविश्वमिन्वेयजामहे-
त्पत्नेसायदेवान् इत्यक्षतैरावाह्य आच्छादनंदूरीकृत्यसमस्तव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती अग्निप्रति
तेष्ठोविनियोगः ॐ भूर्भुवःस्वरोमित्यग्निंप्रतिष्ठाप्य चत्वारिशृंगागौतमोवामदेवोग्निस्त्रिष्टुप् अग्निमूर्तिध्यानेविनि
योगः ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँआविवेश

[illegible]तश्चतुःशृंगःसप्तजिव्होद्विशीर्षकः त्रिपात्प्रसन्नवदनःसुखासीनः शुचिस्मितः स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा
[illegible]द्दक्षिणहस्तेस्तुशक्तिमन्नंस्रुचंस्रुवं तोमरंव्यजनंवामेघृतपात्रंचधारयन् आत्माभिमुखमासीनएवंरूपोहुताशनः एषहि
[illegible]प्रदिशोनुसर्वाः पूर्वोहिजातःसउगर्भेअंतः सविजायमानःसजनिष्यमाणःप्रत्यङ्मुखास्तिष्ठतिविश्वतोमुखः अग्नेवै
श्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखममसंमुखोवरदोभव तदंगमन्वाधानंकरिष्ये आचम्यप्राणानायम्यदेवतापरिग्र
[illegible]अस्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेनप्रजापतिंप्रजापतिंचाघारदेवते आज्येन अग्नीषोमौचक्षुषीआज्येनात्रप्र
धानदेवताः असुकहोमद्रव्येणब्रह्मा ध्यावाहितदेवताश्चनाममंत्रेणएकैकयाज्याहुत्यायक्ष्येशेषेणस्विष्टकृतमग्निमिध्मसंन्न
हनेनरुद्रं अयासमग्निंदेवान्विष्णुंअग्निंवायुंसूर्यंप्रजापतिंचएताःप्रायश्चित्तदेवताः आज्यद्रव्येण ज्ञाताज्ञानदोषपरिहारा
र्थंप्रचारमग्निंसकृतमरुतश्चाज्येन अंगदेवताःप्रधानदेवताःसर्वाःसन्निहिताःसंतुएवंसांगोपांगेनकर्मणासमिद्भिःसद्योय-
क्ष्ये व्याहृतीनांप्रजापतिःप्रजापतिरग्निर्वायुःसूर्यःप्रजापतिर्देवताःगायत्र्युष्णिगनुष्टुप्बृहत्यश्छंदांसि अन्वाधानसमिद्धोमे
विनियोगः ॐभूर्भुवःस्वःस्वाहा प्रजापतयइदं० परिसमूहनं ३ इध्मबर्हिषोश्चसन्नहनं अग्नेःषोडशभिर्दर्भैःप्राच्यादिषुप
रिस्तृतिःपरिस्तरणं पर्युक्षणं पवित्रकरणं पात्रासादनं चरुस्थालीप्रोक्षिण्योदर्वीस्रुवौप्रणीताआज्यपात्रेइध्माबर्हिषि ए
तानासादयामि प्रोक्षणीपात्रमुत्तानंकृत्वाप्रादेशमात्रेद्वेपवित्रेनिधाय ऽअद्भिःपूरयित्वा गंधपुष्पाक्षतान्निक्षिप्य अंगुष्ठो

बुद्धिसहितंगणेशं अथवापत्न्यासहितंसूर्यंवाभवानींतत्तन्मंत्रेणआवाह्य शिवस्यदक्षिणेलक्ष्म्यासहविष्णुंआवाहयेत् शिवस्यउ
त्तरेसावित्र्यासहब्रह्माणं एवंविष्ण्वादीनामपि देवेप्राणप्रतिष्ठांकृत्वा अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्म विष्णुमहेश्वरा
ऋषयः ऋग्यजुःसामाथर्वाणि छंदांसि क्रियामयवपुःप्राणाख्यादेवता आंबीजं ह्रींशक्तिः क्रोंकीलकं अस्यांमूर्तौप्राणप्र
तिष्ठापनेविनियोगः ॐ आंह्रींक्रों अंयंरंलंवंशंषंसंहंळंक्षं अः क्रोंह्रीं आंहंसः सोहं अस्यांमूर्तौप्राणइहप्राणाः तिष्ठंतुः पुनः
अस्यांमूर्तौजीवइहस्थिताः पुनः० अस्यांमूर्तौसर्वेंद्रियाणिवाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानीहा
गत्यस्वस्तिसुखंचरंतिष्ठंतुस्वाहा असुनीतेपुनरस्मासु० स्वस्ति गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तिंकरि
ष्ये रक्तांबोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशांकोदंडमिक्षूद्भवगुणमथचाप्यंकुशंपंचबाणान् बिभ्राणा
सृक्कपालंत्रिनयनलसितापीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः षोडशोपचारैः पंचामृतैश्च
वैदिकमंत्रैः पुराणोक्तमंत्रैः संपूज्य रात्रौजागरणंकुर्यात् प्रातःनित्यकृत्यंविधाय तस्यलक्षपूजनस्यवाव्रतांचरितस्य
सांगतासिद्ध्यर्थंपूजनदशांशेनतिलयवव्रीहिभिः पायसादिभिर्वाहोमंकरिष्ये होमस्तुवेदोक्तेनमूलमंत्रेणपौराणोक्ते
नवाकुर्यात् अथाग्निमुखं आचम्यतिथ्यादिसंकीर्त्य एवंगुणविशेषणविशिष्टायांपुण्यतिथौ अमुककर्मांगतया
विहितं अमुकहवनमहंकरिष्ये शूद्रमृदाईशान्यामारभ्यउदकसंस्थंचतुरंगुलोन्नतंचतुर्दिक्षमिलितंकृत्वाद्विसप्त

पर्कानिष्ठिकाभ्यांउदगग्रेपृथक्पवित्रेधृत्वाऽपस्त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा इध्मंचविस्रस्य सर्वाणिपात्राणित्रिःप्रोक्षेत्
ताआपःकिंचित्कमंडलोक्षिपेदित्येके प्रणीतापात्रमग्नेःप्रत्यङ्निधाय तत्रपवित्रेनिधाय उदकेनपूरयित्वा गंधपुष्पाक्षतान्निक्षि
प्य अस्मिन्कर्मणिब्रह्मत्वेनत्वामहंवृणे पाणिनापाणिंस्पृष्ट्वा ततोब्रह्मावृतोस्मिइत्युक्त्वा आन्वग्नेर्दक्षिणतस्तिष्ठन् ततोब्र
ह्मणेइदमासनं निरस्तःपरावसुः इदमहमर्वावसोःसदनेसीदामि ॐ ब्रह्मन्नपःप्रणेष्यामि बृहस्पतिर्ब्रह्माब्रह्मसदनआशि-
ष्यतेबृहस्पतेयज्ञंगोपायसयज्ञंपाहिसयज्ञपतिंपाहिसमांपाहि ॐ भूर्भुवःस्वर्बृहस्पतिप्रसूतः ॐप्रणय यदिब्रह्मानभ-
वेत्तदास्वयमेवतत्प्रणीतापात्रंनासिकासमीपंनीत्वा उत्तरतोग्नेर्निधाय अन्यैर्दर्भैराच्छादयेत् ततःपवित्रंआज्यपात्रेनिधाय
ततःपरिस्तरणाद्बहिरुत्तरतोंगारानपोह्यतदुपरिआज्यपात्रंनिधाय विलीनाज्यंनिक्षिप्य वामहस्तेदर्भाग्रद्वयंधृत्वा एकेन
वोल्मुकेनावज्वल्यदर्भाग्रद्वयंनिक्षिप्य उल्मुकेनप्रधानद्रव्यंसहितंत्रिभिःपर्यग्निकृत्वा उल्मुकंनिरस्यांगारानग्नौक्षिपेत् अं
गुष्ठोपकनिष्ठिकाभ्यांपवित्रेगृहीत्वा सवितुष्ट्वेतिमंत्रस्यहिरण्यगर्भस्तूपऋषिःसवितादेवता पुरउष्णिक्छंदः आज्यस्यो
[illegible]विनियोगः ॐ सवितुष्ट्वाप्रसवउत्पुनाम्यच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिः प्रागुत्पुनाति सकृन्मंत्रेणद्विस्तूष्णीं
[illegible]त्रेअद्भिःप्रोक्ष्य अग्नौप्रहरेत् स्कंदायस्वाहा स्कंदायेदंनमम ततआत्मनोग्रतोभूमिंप्रोक्ष्य तत्रबर्हिःसन्नहनींरज्जुमु
द[illegible]प्रसार्य तत्रबर्हिरास्तरणं तदुपरिआज्यपात्रंनिधाय कुशान्स्रुक्स्रुवौच दक्षिणहस्तेवामहस्तेचगृहीत्वा अग्नौ

प्रताप्य दर्भान्निधाय स्रुवं वामहस्तेन गृहीत्वा स्रुवबिलं दर्भाग्रेण त्रिः संमृज्य तथैव स्रुवपृष्ठं दर्भाग्रेण आत्माभिमुखं त्रिः संमृज्य
कुशमूलेन पृष्ठादारभ्य बिलपर्यंतं त्रिस्त्रिः संमृज्य प्रोक्ष्य प्रताप्य घृतादुत्तरतः स्थापयेत् पुनस्तथैव स्रुचं निःसंमृज्य प्रोक्ष्य प्रताप्य
स्रुवोत्तरतः स्थापयेत् दर्भान्संमृज्य अग्नौ प्रहरेत् स्रुवेणाज्यं गृहीत्वा होमद्रव्यमभिघार्य उदगुद्वास्य अग्न्याज्ययोर्मध्येन
नीत्वा आज्याद्दक्षिणतो बर्हिषि सांतरमासाद्य तन्मध्ये एकपात्रं निधाय अग्निमलंकृत्वा ॐ विश्वानिन इत्यनयोर्वसुश्रुतो
ग्निस्त्रिष्टुप् द्वाभ्यामर्चने अंत्योपस्थाने विनियोगः ॐ विश्वानिनो दुर्गहा जातवेदः सिंधुं न नावा दुरिताति पर्षि अग्ने अत्रिवन्न
मसा गृणानो ३ स्माकं बोध्यविता तनूनां यस्त्वा हृदा कीरिणा मन्यमानो मर्त्यं मर्त्यो जोहवीमि जातवेदो यशो अस्मासु धेहि प्र
जाभिरग्ने अमृतत्वमश्यां यस्मै त्वं सुकृते जातवेद उलोकमग्ने कृणवः स्योनं अश्विनं स पुत्रिणं वीरवंतं गोमंतं रयिं नशते स्वस्ति
अष्टदिक्षु गंधपुष्पादिभिरायतनं आत्मानं चालंकृत्य एकयोयस्थाप्य ततो पाणिना इध्ममादाय त्रिरभिघार्य अयंत इध्म
इत्यस्य मंत्रस्य वामदेव ऋषिः जातवेदोग्निर्देवता त्रिष्टुप् छंदः इध्महवने विनियोगः ॐ अयंत इध्म आत्मा जातवेदस्तेनेध्यस्व
वर्धस्व चेद्ध वर्धय चास्मान्प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा अग्नये जातवेदसे इदं न मम स्रुवेणाज्यं गृहीत्वा
वायव्यां दिशि मारभ्य आग्नेदिक्पर्यंतं आज्यधारां जुहुयात् प्रजापतये मनसा ध्यायन् स्वाहेति जुहुयात् स्वाहेति मुखेन स्मृ
त्वा तथैव निर्ऋति दिशि मारभ्य ईशान दिशि पर्यंतं जुहुयात् उभयत्र प्रजापतय इदं उत्तरे अग्नये स्वाहा अग्नय इदं दक्षि-

णेसोमायस्वाहा सोमायेदं॰॥ अथप्रधानहोमंकुर्यात् ब्रह्मादिदेवतानाममंत्रेणएकैकयाज्याहुत्या॰ ब्रह्मणेसोमाय॰ ईशानाय
स्वा॰ रुद्रायस्वा॰ अग्नयेस्वा॰ यमाय॰ निर्ऋतये॰ वरुणाय॰ वायवे॰ अष्टौवसुभ्यः॰ एकादशरुद्रेभ्यः॰ द्वादशादित्ये॰ अश्विभ्यां॰
विश्वेभ्योदेवे॰ सप्तयक्षेभ्यः॰ भूतनागेभ्यः॰ गंधर्वाप्सरोभ्यः॰ स्कंदाय॰ नंदीश्वराय॰ शूलाय॰ महाकालाय॰ दक्षादिसप्तगणे॰ दुर्गायै॰ वि
ष्णवे॰ स्वधायै॰ मृत्युरोगाभ्यां॰ गणपतये॰ अद्भ्यः॰ मरुद्भ्यः॰ पृथिव्यै॰ गंगादिनदीभ्यः॰ सप्तसागरेभ्यः॰ मेरवेस्वाहा गदा
यै॰ त्रिशूलाय॰ वज्राय॰ शक्तये॰ दंडाय॰ खड्गाय॰ पाशाय॰ अंकुशाय॰ गौतमाय॰ भरद्वा॰ विश्वामित्राय॰ कश्यपाय॰ जम
दग्नये॰ वसिष्ठाय॰ अत्रये॰ अरुंधत्यै॰ ऐंद्र्यै॰ कौमार्यै॰ ब्राह्म्यै॰ वाराह्यै॰ चामुंडायै॰ वैष्णव्यै॰ माहेश्वर्यै॰ वैनायक्यै॰ स्वाहां
तं अथस्विष्टकृद्धोमः यदस्यकर्मणोइत्यस्यमंत्रस्याहिरण्यगर्भऋषिः अग्निर्देवता अतिधृतिछंदः स्विष्टकृद्धोमेविनियो
गः ॐ यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं अग्निष्टत्स्विष्टकृद्विद्वान्सर्वंस्विष्टंसुहुतंकरोतुमे अग्नयेस्विष्टकृतेसुहुतहु
तेसर्वप्रायश्चित्ताहुतीनांकामानांसमर्धयित्रेसर्वान्नःकामान्समर्धयस्वाहा अग्नयेस्विष्टकृतइदं त्रिसंधानं रुद्रायपशुपत
येस्वाहा पशुपतेरुद्रायेदं अपउपस्पृश्य स्रुवेणप्रायश्चित्ताज्याहुतीःसप्तजुहुयात् तत्रमंत्रः अयाश्चेत्यस्यमंत्रस्यविमद
ऋषिःपंक्तिश्छंदः अग्निर्देवता पंक्तिछंदः सर्वप्रायश्चित्ताज्यहोमेविनि॰ ॐ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि अया
सानसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा अयसेग्नयइदं अतोदवाइतिद्वयोःकाण्वोमेधातिथिर्ऋषिआद्यादेवा

१७

देवत्[illegible]इत्नीयाविष्णुर्देवता गायत्रीछंदः प्रायश्चित्ताज्याहुतिहोमेविनियोगः अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे पृथिव्याः

स[illegible]धामभिःस्वाहा देवेभ्यइदं इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं समूळ्हमस्यपांसुरेस्वाहा विष्णवइदं व्यस्तसमस्तव्याहृतीनां

विश्वामित्रजमदग्निभरद्वाजभृगवऋषयः अग्निवायुसूर्यप्रजापतयोदेवताः गायत्र्युष्णिगनुष्टुप्बृहत्यश्छंदांसि सर्वप्राय

श्चित्ताज्यहोमेवि॰ ॐभूःस्वाहा अग्नयइदं भुवःस्वाहा वायवइदं स्वः स्वाहा सूर्यायेदं॰ ॐभूर्भुवःस्वःस्वाहा प्रजापतयइ

दं॰ ततोब्रह्माकर्तारंपरीत्याग्नेर्वायव्यदेशेतिष्ठन्नेताएवसमाहुतीर्जुहुयात् त्यागःयजमानः अत्रकुर्यात् अनाज्ञातमिति

मंत्रद्वयस्यहिरण्यगर्भऋषिः अग्निर्देवतात्रिष्टुप्छंदः ज्ञाताज्ञातदोषपरिहारार्थंप्रायश्चित्ताज्यहोमेविनियोगः ॐअनाज्ञा

तंयदाज्ञातंयज्ञस्यक्रियतेमिथु अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथं स्वाहा अग्नयइदं ॐ पुरुषसंमितोयज्ञोयज्ञःपुरुष

संमितः अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथं स्वाहा अग्नयइदं यत्पाकत्रेत्यस्यमंत्रस्यआप्तस्त्रितऋषिः अग्निर्देवता

त्रिष्टुप्छंदः न्यूनातिरिक्तदोषपरिहारार्थंप्रायश्चित्ताज्यहोमेवि॰ ॐ यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्त्यासः अ

ग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाँऋतुशोयजातिस्वाहा अग्नयइदं यद्वोदेवाइत्यस्यअभितपाऋषिः मरुतोदेवता त्रि

ष्टुप्छंदः मंत्रविपर्यासादिनिमित्तकप्रायश्चित्ताज्यहोमेविनियोगः ॐ यद्वोदेवाअतिपानयानिवाचाचप्रयुतीदेवहेळनं अ

रायोअस्माँअभिदुच्छुनायतेन्यत्रास्मिन्मरुतस्तंनिधेतनस्वाहा मरुद्भ्यइदं पूजास्विष्टंनवाहुत्याबलिंपूर्णाहुतिंचरेत् श्रेयःसं

पाद्यदानंच अभिषेकोविसर्जनं पूर्णाहुतिमुत्तमाहुतिंजुहोति सर्वंवैपूर्णाहुतिः सर्वमेवाप्नोति अथोइयंवैपूर्णाहुतिः अस्या
मेवप्रतितिष्ठति इदमग्नयेवैश्वानरायशतक्रतवेसप्तवतेअद्यश्वनमम वसोर्धारांकुर्यात् धामंतेवामदेवआपोजगती पूर्णा
हुतिहोमेविनियोगः धामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यंतरायुषि अपामनीकेसमीथेयआभृतस्तमश्याममधुमंतं
तऊर्मिस्वा० अद्यइदं० बर्हिषिपूर्णपात्रंनिनयेत् पूर्णमसिपूर्णंमेभूयाःसुपूर्णमसिसुपूर्णंमेभूयाःसदसिसन्मेभूयाःसर्वमसि
सर्वंमेभूयाः अक्षितिरसिमामेक्षेष्ठाः प्राच्यांदिशिदेवाऋत्विजोमार्जयंतां दक्षिणस्यांदिशिमासाःपितरोमार्जयंतां प्रतीच्यां
दिशिगृहाः पशवोमार्जयंतां उदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतां ऊर्ध्वायांदिशियज्ञः संवत्सरः प्रजापतयोमा
र्जयंतां आपोअस्मानित्यस्यदेवश्रवाआपस्त्रिष्टुप् मार्जनेविनियोगः ॐ आपोअस्मान्मातरःशुंधयंतुघृतेननोघृतप्वःपुनं
तु विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि इदमापःप्रवहतयत्किंचदुरितंमयि यद्वाहमभिदुद्रोहयद्वाशेपउ
तानृतं सुभिन्यानआपओषधयःसंतु इत्येतैर्मंत्रैर्मार्जनंकृत्वा दुर्मित्रास्तस्मैसंतु योस्मान्द्वेष्टियंचवयंद्विष्मः तंहन्मी
तिनिर्ऋतिदेशेकुशाग्रैरपःक्षिपेत् माहंप्रजांपरासिचंयानःसयावरीस्थन समुद्रेवोनिनयानः संपाथोअपीथ शांतिःपु
ष्टिस्तुष्टिश्चास्तु आग्नेय्याभिमुखस्तिष्ठन् अग्निपूजनं विश्वानिनोदुर्गहाजातवे० अग्न्योपस्थानंजस्वा अग्नेनय
सुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् युयोध्य१स्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम बोधानोअस्य

अस्यवचसोयविष्ठमंहिष्ठस्यप्रभृतस्यस्वधावः पीयतित्वोअनुत्वोगृणातिवंदारुस्तेतन्वंवंदेअग्ने नमस्कारः मानस्तोकेति
मंत्रस्य कुत्सऋषिः रुद्रोदेवता जगतीछंदः विभूतिग्रहणेविनियोगः ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानो
अश्वेषुरीरिषः वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे त्र्यायुषंजमदग्नेरितिललाटे कश्यपस्यत्र्यायुष
मितिकंठे अगस्त्यस्यत्र्यायुषमितिनाभौ यद्देवानांत्र्यायुषमितिदक्षिणस्कंधे तन्मेअस्तुत्र्यायुषमितिवामस्कंधे सर्वम
स्तुशतायुषमितिशिरसि इतिविभूतिधारणं परिस्तरणान्युत्तरेविसृजेत् परिसमुह्यपर्युक्ष्य ॐ चमेस्वरश्चमेयज्ञो
पचतेनमश्च यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः स्वस्तिश्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं आयुष्यंतेज-
आरोग्यंदेहिमेहव्यवाहन यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं प्रमादात्कु
र्वतांकर्मप्रच्यवेताध्वरेषुयत् स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः अनेनकर्मणाश्रीपरमेश्वरःप्रीयताम् गच्छग
च्छसुरश्रेष्ठस्वस्थानेपरमेश्वर यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन होमंसंपाद्य उत्तरपूजांकृत्वा आचार्यंसंपूज्यगां
दद्यात् यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी विश्वरूपधरोदेवःप्रीयतामनयागवा ब्राह्मणभोजनंसंकल्प्य
यांतुदेवगणाःसर्वेपूजामादायपार्थिवीं इष्टकामप्रसिध्यर्थंपुनरागमनायच इतिअग्निमुखः अथमुद्रालक्षणम्
हेमाद्रौ संमुखीकृत्यहस्तौद्वौकिंचित्संकुचितांगुली मुकुलीतुसमाख्यातापंकजप्रसृतेवसा पूर्वोक्तामुकुलीयाचप्रादे-

श्योनिः सृतांगुलिः व्याकोशमुद्रा मुकुलापद्ममुद्रांप्रदर्शयेत् अंगुष्ठौकुंचितौ तौतुस्वकीयांगुलिचेष्टितौ उच्चोवाभिमुखो-
हस्तौयोजयित्वातु निष्ठुरा तर्जन्योकुंचितेकृत्वा तथैव चकनीयसी अधोमुखीदृष्टनखास्थितामध्येकरस्यतु चतस्र श्चो
त्थिताः पृष्ठे अंगुष्ठावेकतःकुरु नालंव्यवस्थितौ द्वौतुव्योममुद्राप्रकीर्तिता तत्रांतरेसर्वदेवतापूजनसाधारण्येनषण्मुद्राउच्य
ते देवताननसंतुष्टासर्वदासंमुखीभवेत् अंगुष्ठौनिक्षिपेत्सेयंमुद्रात्वावाहनीमता संग्रथ्यनिक्षिपेत्सेयंमुद्रात्वावाहनीस्मृ
ता अधोमुखीत्वियंचेत्स्यात्स्थापनीमुद्रिकामता उच्छ्रितावुच्छ्रितौकुर्यात्संमुखीकरणीभवेत् प्रसृतांगुलिकौहस्तौ
मिथः श्लिष्टौतु संमुखौ कुर्यात्स्वहृदयंसेयंमुद्राप्रार्थनसंज्ञिका इत्येवंसर्वदेवानांपूजनेषट्प्रदर्शयेत् शिवपूजनेलिंग
मुद्रा उच्छ्रितंदक्षिणांगुष्ठंवामांगुष्ठेनबंधयेत् वामांगुलीर्दक्षिणाभिरंगुलीभिश्चवेष्टयेत् लिंगमुद्रेतिविख्याताशिवसा
न्निध्यकारिणी श्रीकामः शीर्ष्णिकुर्वीतराज्यकामस्तुनेत्रयोः मुखेत्वन्नाद्यकामस्तुग्रीवायांरोगशांतिकृत् हृदयेसर्वकामी
चज्ञानार्थीनाभिमंडलं राज्यकामस्तुगुह्येचराष्ट्रकामस्तुपादयोः रामपूजनेसप्तदशमुद्राः तथाचरामार्चनचंद्रिका
यां अगस्त्यः आवाहनीस्थापनीचसंनिधिकरणीतथा सुसंनिरोधिनीमुद्रासंमुखीकरणीतथा संकलीकरणीचैवमहा
मुद्रातथैवच शंखचक्रगदापद्मधेनुकौस्तुभगारुडाः श्रीवत्सवनमालेचयोनिमुद्रांप्रदर्शयेत् एताभिः सप्तदशभिर्मुद्रा-
भिस्तुविचक्षणः योराममर्चयेन्नित्यंमोदयेत्सुरेश्वरं द्रावयेदपिविप्रेंद्र ततःप्रार्थितमाप्नुयात् मूलाधाराद्द्वादशांतमा

नीतः कुसुमांजलिः त्रिस्थानगततेजोभिर्विनीतः प्रतिमादिषु आवाहनीच मुद्रास्याद्देवार्चनविधौमुने एषैवाधोमुखीमुद्रास्था
पनेशस्यतेपुनः उन्नतांगुष्टयोगेनमुष्टीकृतकरद्वयं सन्निधीकरणीमुद्रादेवार्चनविधौमुने अंगुष्ठगर्भिणीसैवमुद्रास्यात्सं-
निरोधिनी उत्तानमुष्टीयुगलासंमुखीकरणीमता अंगैरेवांगविन्यासः संकलीकरणीभवेत् अन्योन्यांगुष्ठसंलग्नविस्ता
रितकरद्वयं महामुद्रेयमाख्यातान्यूनाधिकसमापनी कनिष्ठानामिकामध्यांतस्थांगुष्टान्तदग्रतः गोपितांगुष्ठमूलेनसन्नधा
मुकुलीकृता करद्वयेनमुद्रास्याच्छंखाख्येयंस्मरार्चने अन्योन्याभिमुखस्पर्शव्यत्ययेनतुवेष्टयेत् अंगुलीभिः प्रयत्नेनमंडली
करणंमुने चक्रमुद्रेयमाख्यातागदामुद्राततःपरं अन्योन्याभिमुखाश्लिष्टाततः कौस्तुभसंज्ञका कनिष्ठेन्योन्यसंलग्नेभिमु
खंहिपरस्परं वामस्यतर्जनीमध्येमध्यानामिकयोरपि वामनाभिकसंस्पृष्टातर्जनीमध्यशोभिता पर्यायेणानतांगुष्ठद्वयीकौ
स्तुभलक्षणा कनिष्ठान्योन्यसंलग्नविपरीतंतुयोनितः अधस्तात्स्थापितांगुष्ठामुद्रागरुडसंज्ञिता तर्जन्यंगुष्ठमध्यस्थाम
ध्यमानामिकाद्वयी कनिष्ठानामिकामध्यतर्जन्यग्रकरद्वयी मुने श्रीवत्समुद्रेयंवनमालाभवेत्ततः कनिष्ठानामिकामध्यामु
ष्टीरुन्नततर्जनी परिभ्रांताशिरस्युच्चैस्तर्जनीभ्यांदिवौकसः योनिमुद्रासमाख्याताद्योतत्करद्वयाश्रिता तर्जन्यांगुष्टम
ध्यांतोस्थितानामिककम्पिका मध्यस्थलस्थितांगुष्ठासेयंशस्तामुनेर्चने इतिमुद्रालक्षणम् अथोपचाराः

पदार्थादर्शेज्ञानमालायाम् अष्टत्रिंशत्षोडशवादशपंचोपचारकाःतान्विभज्यप्रवक्ष्यामिकेतेतैश्चकृतेश्चकिं अर्घ्यपाद्यमाचम
नंमधुपर्कमुपस्पृशाम् स्नानंनीराजनंवस्त्रं आचमंचोपवीतकम् पुनराचमभूषेचदर्पणालोकनंततः गंधपुष्पेधूपदी
पौनैवेद्यंचततःक्रमात् पानीयंतोयमाचामंहस्तवासस्ततःपरम् हस्तवासःकरोद्वर्तनं तांबूलमनुलेपंचपुष्पदानंततः
पुनः गीतंवाद्यंतथानृत्यंस्तुतिंचैवप्रदक्षिणाः पुष्पांजलिनमस्कारावष्टत्रिंशत्समीरिताः इत्यष्टत्रिंशदुपचाराः अन्य
च्च आसनंस्वागतंचार्घ्यंपाद्यमाचमनीयकम् मधुपर्कासनस्नानवसनाभरणानिच सुगंधःसुमनोधूपोदीपमन्नेनभोज
नम् ‘‘ल्यानुलेपनेचैवनमस्कारविसर्जने इतिषोडशउपचाराः अर्घ्यपाद्यंचाचमनंस्नानंवस्त्रनिवेदनम् गंधाद
योनैवेद्यांताउपचारादशक्रमात् शारदातिलकेषोडशोपचाराउक्ताः तथाच आसनस्नानवस्त्राणिभूषणंचविवर्ज
येत् रात्रौदेवार्चनेतेश्चपदार्थैर्हृदंशैःक्रमात् पूजनंकपिलेनोक्तंतत्सर्वंचविसर्जयेत् गंधतैलमथोदद्याद्देवस्याप्रतिमंततः
दूर्वाचविष्णुक्रांताचश्यामाकंपद्ममेवच पाद्यांगानिचचत्वारिकथितानिसमासतः कर्पूरमगरुपुष्पंद्रव्याण्याचमनीयके
सिद्धार्थमक्षतंचैवदूर्वाचतिलमेवच यवगंधंफलंपुष्पंअष्टांगंत्वर्घ्यमुच्यते स्नानेवस्त्रे तथाभक्षे दद्यादाचमनीयक
म् उद्वर्तनमपितत्रैव रजनीसहदेवीचशिरीषंलक्ष्मणापिच सहाभद्राकुशाग्राणिउद्वर्तनमिहोच्यते मंत्रतंत्रप्रकाशे
अक्षतागंधपुष्पाणिस्नानपात्रेतथात्रयम् द्रव्याभावेप्रदातव्याःक्षालितास्तंदुलाःशुभाः तंत्रैवोक्तम् अगस्त्यसं

ि [illegible] थाचमनपात्रेपिदद्याज्जातीफलंमुने लवंगमपिकंकोलंशस्तमाचमनीयकम् द्रव्याभावेतंत्रांतरेउक्तम् तंदुला
[illegible] नेषुद्रव्याभावेतुतत्स्मरन् प्रयोगपारिजातेव्यासः प्रतिमापटयंत्राणांनित्यंस्नानंनकारयेत् कारयेत्पर्वदिवसे
[illegible] मलधारणम् ज्ञानमालायां नाक्षतैरर्चयेद्विष्णुंनतुलस्यागणाधिपम् नदूर्वयायजेद्देवींबिल्वपत्रैश्चभास्करम्
[illegible] र्कपुष्पंचविष्णोर्वर्ज्यंसदाबुधैः अक्षतास्तुयवाःप्रोक्ताइतिपदार्थादर्शेउक्तत्वाद्यवानामेवाऽयंप्रतिषेधोनतंदुलानां
तं [illegible] र महाभिषेकंसर्वत्रशंखेनैवप्रकल्पयेत् सर्वत्रैवप्रशस्तोऽब्जःशिवसूर्यार्चनंविना अथव्रतोद्यापनानुक्तौ पृथ्वी
चंद्रो [illegible] नंदिपुराणे कुर्यादुद्यापनंतस्यसमासोयदुदीरितं उद्यापनंविनायत्तुतद्व्रतंनिष्फलंभवेत् यत्रचोद्यापनंनोक्तंव्रता
नुगुणतश्चरेत् वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते गांचैवकांचनंदद्याद्व्रतस्यपरिपूर्तये समाप्तावुद्यापनमनुक्तोद्यापन वि
षयं उक्तोद्यापनेतु आदौमध्येथवाप्यंतेव्रतस्योद्यापनंभवेत् तद्व्रतोद्यापनंकार्यंसंपूर्णफलमाप्नुयात् अथव्रतभंगेसं
पूर्णतायांविधिः हेमाद्रौभविष्ये युधिष्ठिरउवाच संपूर्णतामनुष्ठानंव्रतानांनंदनंदन कुरुप्रसादंगुह्यार्थमेतन्मेव
क्तुमर्हसि श्रीकृष्णउवाच साधुसाधुमहाबाहोकुरुराजयुधिष्ठिर रहस्यानांरहस्यंतेकथयामिव्रतेतव संपूर्णता
कृतायत्रतत्रसम्यक्फलप्रदम् यच्चीर्णंनरनारीभिर्भवेत्संपूर्णकारकम् अवश्यंतच्चकर्तव्यंसंपूर्णफलकांक्षिभिः किंचिद्भ
ग्नंप्रमादेनयद्व्रतंव्रतिनांस्थितम् तत्सपूर्णंभवेत्सर्वंव्रतेनानेनपांडव उपद्रवैर्बहुविधैर्महामोहाच्चपांडव यद्भग्नंकिंचिदं

वस्याद्व्रतंविघ्नविनाशनं तत्संपूर्णंभवेत्पार्थसत्यंसत्यंनसंशयः कांचनंरूप्यकंरूपंशिल्पिनातुघटापयेत् भग्नंव्रतस्ययोदेव
स्तस्यरूपंविनिर्दिशेत् व्रतंस्त्रीपुरुषयोःपार्थप्रारब्धंयद्व्रतंकिल नचनिष्पादितंकिंचिद्दैवात्सर्वंतथास्थितं द्विभुजंपंकजारूढं
सौम्यंप्रहसिताननं निष्पादितंशिल्पिनाचतस्मिन्नेवदिनेपुनः तच्चानेतुमनःप्राप्तेब्राह्मणैर्विधिनागृहे स्नापयेत्स्वयसादध्याघृत-
क्षौद्रसांबुभिः वस्त्रचंदनपुष्पैश्चपूजांकुर्यात्समाहितः तोयपूर्णस्यकुंभस्यमुखेविन्यस्यदेवतां धूपदीपाक्षतैर्वस्त्रैरलैर्ब-
हुप्रकारकैः अर्घ्यंप्रदद्यात्तन्नाम्नामंत्रेणानेनपांडव उपासनस्यदानस्यप्रायश्चित्तंकृतंजले शरणंवःप्रपन्नास्मःकुरुध्वंदया
मम यन्छिद्रंतपछिद्रंयछिद्रंव्रतकर्मणि तत्सर्वंत्वत्प्रसादेनसंपूर्णंजायतांमम कुरुप्रसादंसंपूर्णंव्रतंसंजायतांमम पूर्वदक्षिणप
श्च[illegible]उत्तरेचबलिंहरेत् उपर्यधस्तात्सर्वेभ्योदिक्पालेभ्योनमोनमः इदमर्घ्यमिदंपाद्यंतेभ्यस्तेभ्योनमोनमः पादौचजानुनी
वे[illegible]शीशीर्षकवक्षसी कुक्षितुहृदयंपृष्ठंवाक्चक्षुश्चशिरोरुहान् पूजयित्वातुदेवस्यततःपश्चात्क्षमापयेत् पूजितस्त्वंयथाश
[illegible]मस्तेस्तुस्करोत्तम ऐहिकामुष्मिकींदेव कार्यसिद्धिंदिशस्वमे॥ एवंक्षमापयित्वातुप्रणमेच्चप्रयत्नतः तन्मूर्तिंचद्वि
[illegible]योविधिवत्प्रतिपादयेत् स्थित्वापूर्वमुखोविप्रोगृण्हीयाद्दर्भपाणिना विप्रहस्तेप्रयछेच्चदाताचैवोत्तरामुखः मंत्रेणा
[illegible]यसोपवासप्रयत्नतः इदंव्रतंमयाखंडंकृतमासीत्सुराद्विज तत्सर्वंपूर्णमेवास्तुनवमूर्तिप्रदानतः ब्राह्मणोपिप्रय
[illegible]त्रेणानेनतद्व्रतम् वाक्यंपूर्णमतःपूजाव्रतेनानेनतेपुरा संपूर्णंस्यात्प्रसादेननतवपूर्णामनोरथाः ब्राह्मणायत्प्र-

स्तायां तमन्यंतेदिवौकसः सर्वदेवमयाविप्रानतद्वचनमन्यथा जलधिःक्षारतांनीतः पावकः सर्वभक्षतां सहस्रनेत्रः शक्रोपिकृ
त्प्रक्षिपे त्मभिः ब्राह्मणानांतुवचनाद्ब्रह्महत्याविनश्यति अश्वमेधफलंसाग्रंलभतेनात्रसंशयः व्यासवाल्मीकवचनात्पराशरव-
यदावा र्गगोतमधौम्यात्रिवामदेवपुलस्त्ययोः वचनान्नारदादीनांपूर्णभवतुमेव्रतं एवंविधिविधानेनगृहीत्वाब्राह्मणोव्रजेत्
उन्मत्तभ येत्सर्वब्राह्मणस्यगृहंस्वयं ततः पंचमहायज्ञान्कृत्वावैभोजनादिकं एवंयःकुरुतेभक्त्याव्रतमेतंनरोत्तम तस्यसंपू
र्णतांय...तेतद्व्रतंयत्सुराकृतं खंडंसंपूर्णतांयातिप्रसन्नेव्रतदैवते भग्नानियानिमदमोहवशाद्गृहीत्वाजन्मांतरेष्वपिनरेणसमत्सरे
ण संपूर्णपूजनपरस्यपुरोभवंतिसर्वव्रतानिपरिपूर्णफलप्रदानि अथसर्वव्रतेषुसामान्यतः पूजाविधिः सह
स्रशीर्षेत्यावाहनं१ आगच्छागच्छदेवेशतेजोराशेजगत्पते क्रियमाणांमयापूजांगृहाणसुरसत्तम पुरुषएवेदमित्यासनं
२ नानारत्नसमायुक्तंकार्तस्वरविभूषितं आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यतां एतावानस्येतिपाद्यं ३ गंगादिसर्वती
र्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां त्रिपादूर्ध्वइत्यर्घ्यं ४ नमस्तेदेवदेवेशनमस्तेध
रणीधर नमस्तेकमलाकांतगृहाणार्घ्यंनमोस्तुते तस्माद्विराळित्याचमनीयं ५ कर्पूरवासितंतोयंमंदाकिन्याःसमाहृ
तं आचम्यतांजगन्नाथमयादत्तंहिभक्तितः यत्पुरुषेणेतिस्नानं ६ गंगाचयमुनाचैवनर्मदाचसरस्वती कृष्णाचगौतमी
वेणीक्षिप्रासिंधुस्तथैवच तापीपयोष्णीरेवाचताभ्यःस्नानार्थमाहृतं तोयमेतत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यतां पंचा

मृतस्नानंपंचमंत्रैः ५ पृथक्कुर्यात् तंयज्ञमितिवस्त्रं सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससी
प्रतिगृह्यतां वस्त्रंचसोमदैवत्यंलज्जायास्तुनिवारणं मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां तस्माद्यज्ञादितियज्ञोपवी
तं दामोदरनमस्तेस्तुत्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम तस्माद्यज्ञात्सर्वहुतइतिगंधं श्रीखंडं
चंदनंदिव्यंगंधाढ्यंसुमनोहरं विलेपनंसुरश्रेष्ठप्रीत्यर्थंप्रतिगृह्यतां अक्षताश्चसुरश्रेष्ठाः कुंकुमोक्ताःसुशोभनाःमयानिवे
दिताभक्त्यागृहाणपरमेश्वर तस्मादश्वेतिपुष्पं माल्यादीनिसुगंधी० यत्पुरुषंव्यदधुरितिधूपं वनस्पतिरसोद्भू० ब्रा
ह्मणोस्येतिदीपं० साज्यंचवर्तिसंयुक्तं० चंद्रमामनसेइतिनैवेद्यं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं भक्ष्यभो-
ज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां इदंफलमितिफलं नाभ्याआसीदितितांबूलं पुगीफलंमहद्दिव्यंनागवल्यादलैर्युतं कर्पू
रादिसमायुक्तंतांबुलंप्रतिगृह्यतां सप्तास्येतिप्रदक्षिणा हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलद
मतःशांतिंप्रयच्छमे चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वज्योतींषिआर्तिक्यंप्रतिगृह्यतां नीराजनं य
ज्ञेनयज्ञमितिपुष्पांजलिः नमस्तेपुंडरीकाक्षनमस्तेस्त्वमरप्रिय नमस्तेकमलाकांतवासुदेवनमोस्तुते यानिकानिच
पापानिब्रह्महत्यासमानिच तानितानिविनश्यंतिप्रदक्षिणपदेपदे प्रदक्षिणाः नमःसर्वहितार्थायजगदाधारहे
तवे साष्टांगोयंप्रणामोस्तुप्रणामेनमयाकृतः इतिनमस्कारः इतिसामान्यपूजाविधिः इतिश्रीव्रतार्कपरिभाषासमाप्ता ॥

श्रीगणेशायनमः   अथचतुर्थीव्रतानिलिख्यंते   तत्रश्रावणकृष्णाचतुर्थीसंकष्टचतुर्थीव्रतम् तत्रचंद्रोदयव्यापिन्यांकार्यम् श्रावणेबहु
लपक्षेचतुर्थ्यांतुविधूदये गणेशंपूजयित्वातुचंद्रायार्घ्यंप्रदापयेत् १ दिनद्वयेतद्व्याप्तौपूर्वैव मातृविद्धागणेश्वरइतिवचनात् दिनद्वयेअव्याप्तौप
रैव हेमाद्रौ चंद्रोदयाभावेचतुर्थीनिशिषड्घटिव्याप्तायांपरेवग्राह्येत्इति   अथव्रतविधिः   मासपक्षाद्युल्लिख्य तिथौममविद्याधनपुत्रपौत्र
प्राप्त्यर्थंसमस्तरोगमुक्तिकामःश्रीगणेशप्रीत्यर्थंसंकष्टचतुर्थीव्रतमहंकरिष्ये   तत्रादौस्वस्तिवाचनंगणपतिपूजनंकरिष्ये कलशार्चनंचक-
रिष्ये सौवर्णरौप्यताम्रमृन्मयाद्यन्यतमांगणपतिमूर्तिंकृत्वाजलपूर्णवस्त्रयुतंकुंभंतस्याग्रेस्थापयित्वाषोडशोपचारैःपूजयेत् आदौध्यानंत
द्यथा   लंबोदरंचतुर्बाहुंत्रिनेत्रंरक्तवर्णकम् नानारत्नैःसुवेषाढ्यंप्रसन्नास्यंविचिंतयेत् १ ध्यायेद्गजाननंदेवंतप्तकांचनसुप्रभम् चतु
र्बाहुंमहाकायंसूर्यकोटिसमप्रभम् २   इतिध्यानम्   आगच्छत्वंजगन्नाथसुरासुरनमस्कृत अनाथनाथसर्वज्ञविघ्नराजकृपांकुरु सहस्र
शीर्षेत्यावाहनम् गजास्याय० आवाहयामि   गोप्तारंसर्वलोकानामिंद्रादीनांविशेषतः भक्त्यादारिद्र्यविच्छेत्ताएकदंतनमोस्तुते   पुरुष
एवेदमित्यासनम्   विघ्नराजाय० आसनम्   मोदकान्धारयन्हस्तेभक्तानांवरदायक देवदेवनमस्तेस्तुभक्तानांफलदोभव   एतावानस्ये-
तिपाद्यम् लंबोदराय० पाद्यं०   महाकायमहारूप अनंतफलदायक देवदेवनमस्तेस्तुसर्वेषांपापनाशन त्रिपादूर्ध्वइत्यर्घ्यम्   शंकर
सूनवे० अर्घ्यं०   कुरुष्वाचमनंदेवसुरवंद्यसुवाहन सर्वाघदलनस्वामिन्नीलकंठनमोस्तुते   तस्माद्विराळेत्याचमनीयम् उमासुताय० आ
चमनीयम्   स्नानंपंचामृतैनैवगृहाणगणनायक अनाथनाथसर्वज्ञनमोमूषकवाहन पयोदधिघृतंचैवशर्करामधुसंयुतम् पंचामृतेनेस्न
पनंप्रीयतांगणनायक   वक्रतुंडाय० पंचामृतस्नानम्   गंगाचयमुनाचैवगोदावरीसरस्वती नर्मदासिंधुकावेरीजलंस्नानायकल्पितम्

यत्पुरुषेणस्नानम् हरजाय॰ स्नानं॰ रक्तवस्त्रद्वयुग्मंच देवानामपिदुर्लभम् गृहाणमंगलंदेवलंबोदरहरात्मज तंयज्ञमितिवस्त्रम् शूर्पकर्णाय॰ व
स्त्रं॰ ब्रह्मसूत्रंसोत्तरीयंगृहाणगणनायक आरक्तंब्रह्मसूत्रंचकनकस्योत्तरीयकम् तस्माद्यज्ञाद्यपवस्त्रम् कुब्जाय॰ यज्ञोपवीतं॰ गृहाणेश्वर
सर्वज्ञदिव्यचंदनमुत्तमम् करुणाकरअज्ञाक्षगौरीसुतनमोस्तुते तस्माद्यज्ञात्सर्वहुतऋचेतिगंधम् गणेश्वराय॰ गंधं॰ अक्षताश्चसुरश्रेष्ठ
कुंकुमाक्ताःसुशोभिताः मयानिवेदिताभक्त्यागृहाणगणनायक अक्षतान् सुगंधिदिव्यमाल्यांचगृहाणगणनायक विनायकनमस्तुभ्यं
शिवसूनोनमोस्तुते मालाम् माल्यादीनिसुगंधीनि॰ तस्मादश्वेतिपुष्पम् विघ्ननाशिने॰ पुष्पाणि॰ अथांगपू॰ गणेश्वराय॰ पादौपूजया-
मि विघ्नराजा॰ जानुनीपू॰ अखुवाहनाय॰ ऊरूपू॰ हेरंबाय॰ कटिंपू॰ कामहारिसूनवे॰ नाभिंपू॰ लंबोदराय॰ उदरंपू॰ गौरीसुता॰ स्तनौपू॰ ग
णनायकाय॰ हृदयंपू॰ स्थूलकंठाय॰ कंठंपू॰ स्कंदाग्रजाय॰ स्कंधौपू॰ पाशहस्ताय॰ हस्तौपूज॰ गजवक्त्राय॰ वक्त्रंपू॰ विघ्नहर्त्रे॰ ललाटंपू॰ सर्वे
श्वराय॰ शिरःपू॰ श्रीगणाधिपाय॰ सर्वांगंपू॰ दशांगंगुग्गुलुंधूपंउत्तमंगणनायक गृहाणदेवदेवेशउमासुतनमोस्तुते यत्पुरुषेणेतिधूपं
विकटाय॰ धूपं॰ सर्वज्ञसर्वरत्नाढ्यसर्वेशविबुधप्रिय गृहाणमंगलंदीपंघृतवर्त्तिसमन्वितम् ब्राह्मणोस्येतिदीपं॰ वामनाय॰ दीपं॰ नैवेद्यंगृ
ह्यतांदेवनानामोदकसंयुतम् सर्वान्नफलसंयुक्तं षड्रसैश्चसमन्वितम् चंद्रमामनसोनैवेद्यं सर्वाय॰ नैवेद्यं॰ कृष्णावेण्यागोतमीनांपयोष्णी
रवयोजलैः आचम्यतांगृहाणेदंप्रसन्नोभवसर्वदा आचमनं॰ फलान्यमृतकल्पानिसुगंधीन्यघनाशन आनीतानियथाशक्त्यागृहाणगण
नायक सर्वार्त्तिनाशिने॰ फलं॰ तांबूलंगृह्यतांदेवनागवल्याद्दलैर्युतम् कर्पूरेणसमायुक्तंसुगंधंमुखभूषणम् विघ्नहर्त्रेन॰ तांबूलं॰ सर्वदेवा-
धिदेवायसर्वसिद्धिप्रदायक भक्त्यादत्तांमयादेवगृहाणजगदीश्वर सर्वेश्वराय॰ दक्षिणां॰ पंचार्त्तिःपंचवर्तीभिर्वह्निनायोजितंमया गृहाणमं

गलंदीपंविघ्नराजनमोस्तुते नीराजनं॰ यानिकानिचपापानि भाष्याआसीतिप्रदक्षिणा नमोस्त्वनंताय॰ सहस्रेतिनमस्कारः यज्ञेनयज्ञमिति-
मंत्रपुष्पांजलिं॰ एवंपूजाप्रकर्तव्याषोडशैरुपचारकैः मोदकान्कारयेदेवमेकविंशतिसंख्यया तेषांमध्येप्रदातव्यादशसंख्याश्चपार्वति देवाग्रेस्था
पयेत्पंचपंचविप्रायकल्पयेत् पूजयित्वातुतविप्रंभक्तिभावेनदेववत् दक्षिणांचयथाशक्त्यादत्वावैपंचमोदकान् पूजयेन्निशिचंद्रंच अर्घ्यंदत्वा
यथाविधि क्षीरसागरसंभूतसुधारूपनिशाकर गृहाणार्घ्यंमयादत्तंगणेशप्रीतिवर्द्धन रोहिणीसहितचंद्रमसेन॰ इदमर्घ्यं॰ क्षीरोदार्णव
संभूतसुधारूपनिशाकर गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशी रोहिणीसहितचंद्रा॰ इदमर्घ्यं॰ गणेशायनमस्तुभ्यंसर्वसिद्धिप्रदाय
क संकष्टान्हरमेदेवगृहाणार्घ्यंनमो कृष्णपक्षेचतुर्थ्यांतुसपूजितविधूदये क्षिप्रंप्रसादितोदेवगृहाणार्घ्यंन॰ संकष्टहरगणेशाय॰ इदमर्घ्यं॰
तिथीनामुत्तमेदेविगणेशप्रियवल्लभे सर्वसंकष्टनाशायचतुर्थ्यर्घ्यंनमोस्तुते वायनमंत्रः विप्रवर्यनमस्तुभ्यंमोदकान्वैददाम्यहम्
मोदकान्सफलान्पंचदक्षिणाभिःसमन्वितान् आपदुद्धारणार्थायगृहाणद्विजसत्तम प्रार्थना अबुद्धमतिरिक्तंवाद्रव्यहीनंमयाकृतम् त
त्सर्वंपूर्णतांयातुविप्ररूपगणेश्वर ब्राह्मणान्भोजयेदेवंयथासंख्यं यथासुखम् स्वयंभुंजीतमौनेनमोदकान्ब्राह्मणैःसह अशक्तश्चैकमन्नं
चभुंजीतदधिसंयुतम् अथवाभोजनंकार्यंएकवारंहिमाद्रिजे प्रतिमांगुरवेदद्यादाचार्यायसदक्षिणाम् वस्त्रकुंभसमायुक्तामादौमंत्रमिमं-
जपेत् ॐनमोहेरंबमदमोदितसंकष्टान्निवारयनिवारय इतिमूलमंत्रंएकविंशतिवारंजपेत् विसर्जनमंत्रः गच्छगच्छसुरश्रेष्ठस्व
स्थानेत्वंगणेश्वर व्रतेनानेनदेवेशयथोक्तफलदोभव इतिपूजा अथकथा ऋषयऊः दारिद्र्यशोककष्टाद्यैःपीडितानां
चवैरिभिः राजभ्रष्टैर्नृपैःसर्वैःक्रियतेकिंशुभार्थिभिः धनहीनैर्नरस्कंदसर्वोपद्रवपीडितैः विद्यापुत्रगृहभ्रष्टैर्योगयुक्तैःशुभार्थिभिः कर्त

व्यंकिंवदोपायंपुनःक्षेमार्थसिद्धये स्कंद उ॰ शृणुध्वंमुनयःसर्वेव्रतानामुत्तमव्रतम् संकष्टतरणंनामसंपत्तिसुखदायकम् येनोपायेनसं
कष्टंतरंतिशुविदेहिनः यद्वृत्तंदेवकीपुत्रः कृष्णोधर्मायदत्तवान् अरण्येक्लिश्यमानायपुनःक्षेमार्थसिद्धये यथाकथितवान्पूर्वंगणेशोमातरंप्रति
तथाकथितवान्श्रीशोह्यपरेपांडवान्प्रति ऋषयऊचुः कथंकथितवानंबांपार्वतींश्रीगणेश्वरः तथापृच्छंतिमुनयोलोकानुग्रहकांक्षि
णः स्कंद उ॰ पुराकृतयुगेपुण्येहिमाचलकृतासती तपस्तप्तवतीभूरितेनालब्धःशिवःपतिः तदास्मरत्साहेरंबंगणेशंपूर्वजंकृतम् तत्क्ष-
णादागतंदृष्ट्वागणेशंपरिपृच्छति पार्वत्यु॰ तपस्तप्तंमयाघोरंदुश्चरंलोमहर्षणम् नप्राप्तःसमयाकांतोगिरीशोममवल्लभः संकष्टतर
णंदिव्यंव्रतंनारदउक्तवान् त्वदीयंयद्वृत्तंतावत्कथयस्वपुरातनम् तच्छ्रुत्वापार्वतीवाक्यंसंकष्टतरणव्रतम् प्रीत्याकथितवान्देवोगणेशोज्ञा
नसिद्धिदः गणेश उ॰ श्रावणेबहुलेपक्षेचतुर्थ्यांतुविधूदये गणेशंपूजयित्वातुचंद्रायार्घ्यंप्रदापयेत् पार्वत्यु॰ क्रियतेतेनविधि
नाकिंकार्यंकिंचपूजनम् उद्यापनंकदाकार्यंमंत्राःकेस्युःस्तुपूजने किंध्यानंश्रीगणेशस्यगणेशवदविस्तरात् गणेश उ॰ चतुर्थ्यांप्रातरु-
त्थायदंतधावनपूर्वकम् ग्राह्यंव्रतमिदंपुण्यंसंकष्टतरणंशुभम् कर्तव्यमितिसंकल्प्यव्रतेस्मिन्नाणपंस्मरेत् स्वीकारमंत्रः निराहारो
स्मिदेवेशयावच्चंद्रोदयोभवेत् भोक्ष्यामिपूजयित्वाहंसंकष्टात्तारयस्वमाम् एवंसंकल्प्यराजेंद्रस्नात्वाकृष्णतिलैःशुभैः आह्निकंतुविधा
येवपश्चात्पूज्योगणाधिपः त्रिभिर्माषैस्तदर्धेनतृतीयांशेनवापुनः यथाशक्त्यातुवाहेमीप्रतिमाक्रियतेमम माषमात्रात्तदर्धेस्यतृतीयांशेन
वापुनः यथाशक्त्यातुवाहेमीताम्रस्यापियथासुखम् सर्वथैवदरिद्रेणक्रियतेमृन्मयीशुभा वित्तशाठ्यंनकर्तव्यंकृतेकार्यंविनश्यति जल
पूर्णवस्त्रयुतंकुंभंतस्याग्रतोन्यसेत् पद्ममष्टदलंकार्यंगंधपुष्पैःप्रपूजयेत् एवंव्रतंप्रकर्तव्यंचतुर्थ्यांश्रावणेसिते स्वीकार्यश्चतथाचार्यःसं

कष्टहरणेतियो गणाधीशंतथाचार्यंसर्वशास्त्रविशारदम् श्रद्धयाप्रार्थयेदादौतेनोक्तंविधिमाचरेत् एकविंशतिविप्रांश्चवस्त्रालंकारभूषणैः
पूजयेद्भोहिरण्याद्येर्हुत्वाग्नौविधिपूर्वकम् होमद्रव्यंमोदकाश्चतिलयुक्ताघृतप्लुताः अष्टोत्तरंसहस्रंवानोचेदष्टोत्तरंशतम् अष्टाविंशतिसं-
ख्याकैर्मोदकैर्वासशर्करैः अशक्तोष्टौसुभान्स्थूलान्जुहुयाज्जातवेदसि वैदिकेनचमंत्रेणआगमोक्तेनवातथा अथवानाममंत्रेणहोमंकुर्या
द्यथाविधि पुष्पमंडिपिकाकार्यागणेशाल्हादकारिणी पूजयेत्तत्रगणपंभक्तसंकष्टनाशनम् गीतवादित्रनिनदैर्भक्तिभावपुरस्कृतैः पुराणवेद
दनिर्घोषैस्तोषयेच्चगणेश्वरम् एवंजागरणंकार्यंशक्त्यादानादिकंतथा सपत्नीकमथाचार्यंतोषयेद्वस्त्रभूषणैः उपानच्छत्रगोदानंकमंड
लुजलादिभिः यथाशक्त्याप्रकर्त्तव्यंदारिद्र्याभावमिच्छता एकविंशतिविप्रांश्चभोजयेन्नामभिर्मम गजास्योविघ्नराजश्चलंबोदरशि
वात्मजो वक्रतुंडःशूर्पकर्णःकुब्जश्चैवविनायकः विघ्ननाशोहिविकटोवाममःसर्वदैवतु सर्वार्त्तिनाशीभगवान्विघ्नहर्त्ताचधूम्रकः सर्वदे
वाधिदेवश्चसर्वेषोडशवैस्मृताः एकदंतःशूर्पकर्णोभालचंद्रोगणेश्वरः गणपश्चैकविंशश्चसर्वेएतेगणेश्वराः दुर्गापिंडश्चरुद्रश्चकुलदे
व्याधिकंभवेत् विशेषेणाष्टसंख्याकैर्मोदकैर्हवनंस्मृतम् एवंकृतविधानेनप्रसन्नोहंनसंशयः ददामिवांछितान्कामांस्तद्व्रतंमत्प्रियंकुरु श्री
कृष्णउ॰ एवंतुकथितंसर्वंगणेशेनस्वयंनृप पार्वत्यातत्कृतंराजन्व्रतंसंकष्टनाशनम् व्रतेनानेनसार्ध्दाब्देप्रापपशंभुपतिंस्वकम् त्वंकुरु
ष्व महाराजव्रतंसंकष्टनाशनम् चतुर्थीसंकटानामस्कंदेनकथिताऋषीन् ऋषिभिर्लोककामैस्तैर्लोकेषुनदिदंव्रतम् सूतउ॰ कृ
तंयुधिष्ठिरेणैतद्राज्यकामेनवैद्विज तेनशत्रून्निहत्याजौस्वराज्यंप्राप्तवान्स्वयम् तस्मात्सर्वप्रयत्नेनव्रतंकार्यंविचक्षणैः येनधर्मार्थका
माश्चमोक्षश्चापिभवेत्किल यःकरोतिव्रतंविप्राःसर्वकामार्थसिद्धिदम् सर्वांछितफलंप्राप्यपश्चाद्गणपतिंव्रजेत् यदायदाव्रतंविप्रा-

नरः प्राप्नोति संकटम् तदा तदा प्रकर्तव्यं व्रतं संकष्टनाशनम् त्रिपुरं हंतुकामेन कृतं देवेन शूलिना त्रैलोक्यभूतिकामेन महेंद्रेण तथा कृतम् रावणेन कृतं पूर्वं बलिबं
धनसंकटे स्वकीयं प्राप्तवान्राज्यं गणेशस्य प्रसादतः सीतान्वेषणकामेन कृतं वायुसुतेन च संकल्प्य दृष्टवान्सोयं सीतां रामप्रियां पुरा दमयंत्या कृतं पूर्वं नला-
न्वेषणकारणात् सापि निंनैषधं लेभे पुण्यश्लोकं द्विजोत्तमाः अहल्यापि पतिं लेभे गौतमं प्राणवल्लभम् विद्यार्थी लभते विद्यां धनार्थी धनमाप्नुयात् पुत्रा
र्थी पुत्रमाप्नोति रोगी रोगात्प्रमुच्यते इति श्रीस्कंदपुराणे संकष्टचतुर्थी श्रावणी व्रतोद्यापनं संपूर्णम् अथ श्रावणे कार्तिके वा शुक्लचतुर्थ्यां दूर्वाग
णपतिव्रतम् मदनरत्ने सौरपुराणे स्कंद उ॰ केन व्रतेन भगवन्सौभाग्यमतुलं भवेत् पुत्रपौत्रैर्धनैश्वर्यैर्मनुजः सुखमेधते तन्मे वद महादेव व्रतानामुत्त
मव्रतम् अस्ति दूर्वागणपतेर्व्रतं त्रैलोक्यविश्रुतम् भगवत्या पुराचीर्णं पार्वत्या श्रद्धया सह सरस्वत्या च इंद्रेण विष्णुना धनदेन च अन्यैश्च दैवैर्मुनिभिर्गंधर्वैः किं
नरैस्तथा चीर्णमेतद्व्रतं सर्वैः पुराकल्पे षडानन चतुर्थी या भवेच्छुक्ला नभोमासस्य पुण्यदा तस्यां व्रतमिदं कुर्यात्कार्तिके वा षडानन कार्तिके शुक्लपक्षे तु चतुर्थीमु
त्तमं व्रतम् गजाननं चतुर्बाहुं एकदंतं विपाटितं विधाय हेम्ना विघ्नेशं हेमपीठासनस्थितं तथा हेममयीं दूर्वां नदाधारे व्यवस्थितां संस्थाप्य विघ्नकर्तारं कलशे ताम्रभा
जने वेष्टितं रक्तवस्त्रेण सर्वतोभद्रमंडले पूजयेद्रक्तकुसुमैः पत्रिकाभिश्च पंचभिः बिल्वपत्रमपामार्गशमीदूर्वा हरिप्रियाः गंधपुष्पैश्च धूपैश्च कुसुमैश्च सुगंधि
भिः फलैश्च मोदकैः पश्चादुपहारं प्रकल्पयेत् उपहारैस्तु विधिना पूजयेद्द्विजसत्तम उमासुत नमस्तुभ्यं विश्वव्यापिन्सनातन विघ्नौघांश्छिंधि सकलान्सर्वमाद्यं वदा
मि ते गणेश्वराय देवाय उमापुत्राय वेधसे पूजयेच्च महादेव गृहाण भगवन्मम विनायकाय शूराय वरदाय गजानन उमासुताय देवाय सर्वविघ्नौघहारिणे उमांगमल
संभूतो दानवानां वधाय वै अनुग्रहाय लोकानां स देवः पातु विश्वधृक् परंज्योतिःप्रकाशाय सर्वसिद्धिप्रदायक दीपं तुभ्यं प्रदास्यामि महादेवाय ते नमः गणेश्वर
गणाध्यक्ष गौरीपुत्र गजानन व्रतं संपूर्णतां यातु त्वत्प्रसादादिभानन एवं संपूज्य विघ्नेशं यथाविभवविस्तरैः सोपस्करं गणाध्यक्षं आचार्याय निवेदयेत् गृ

ह्राणभगवन्ब्रह्मन्गणराजंसदक्षिणम् व्रतंत्व हृच्चनादघसपूर्णंभातुसव्रत दानं श्रावणेशुक्लपक्षस्यचतुर्थ्यातुजितेंद्रियः कुर्याद्वर्षत्रयंत्वेवं
सर्वसिद्धिप्रदायकम् एवंयःपंचवर्षाणि कृत्वोद्यापनमाचरेत् ईप्सितान्लभतेकामान्देहान्तेशांकरंपदम् उद्यापनंविनायस्तुकरोतिव्रतमुत्त
मम् तेनशुक्लतिलैःकार्यप्रातःस्नानंषडानन हेम्नावाराजतेनापिकृत्वागणपतिंबुधः पंचगव्यैस्तुसंस्नाप्यदूर्वाभिःसंप्रपूजयेत मंत्रैस्तुदश
भिर्भक्त्यादूर्वायुग्मैःशिखिध्वज दूर्वायुग्मैःपंचगव्यैःपूजनंदशमंत्रकैः गणाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेभवक्त्रेतितथामू
षकवाहन विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक कुमारगुरवेतुभ्यंगणेशायप्रपूजयेत् इत्येवंकथितंसम्यक्सर्वसिद्धिप्रदंशुभम् व्रतंदूर्वा
गणपतेःकिमन्यच्छ्रोतुमिच्छसि इतिसौरपुराणोक्तंदूर्वागणपतिव्रतोद्यापनम् अथैकविंशतिदिनगणपतिपूजनम् तत्रश्रा
वणशुक्लचतुर्थीमारभ्यश्रावणकृष्णदशमीपर्यंतंगणपतिपूजनं सामध्यान्हव्यापिनीकार्या एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजम् पाशां
कुशधरंदेवंमोदकंबिभ्रतंकरे ध्यानं॰ आगच्छजगदाधारसुरासुरवरार्चित अनाथनाथसर्वज्ञगीर्वाणपरिपूजित आवाहनं स्वर्ण
सिंहासनंदिव्यंनानारत्नसमन्वितं समर्पितंमयादेवतत्रत्वंसमुपाविश आसनं देवदेवेशसर्वेशसर्वतीर्थहृतंजलम् पाद्यंगृहाणगणपगंध
पुष्पाक्षतैर्युतम् पाद्यं प्रवालमुक्ताफलपूगरत्नतांबूलजांबूनदमष्टगंधम् पुष्पाक्षतायुक्तममोघशक्तेदत्तंमयार्घ्यंसफलीकुरुष्व अर्घ्यं गं
गादिसर्वतीर्थेभ्यःप्रार्थितंतोयमुत्तमम् कर्पूरैलालवंगैश्चयुक्तमाचम्यतांविभो आचमनं चंपकाशोकबकुलमालतीमोगरादिभिः वासितं
स्निग्धताहेतुस्तैलंचारुप्रगृह्यताम् अभ्यंगस्नानं॰ कामधेनुसमुद्भूतंसर्वेषांजीवनंपरम् पावनंयज्ञहेतुस्तुपयस्नानार्थमर्पितम् पयस्नानं
पयसस्तुसमुद्भूतंहिमादिद्रव्ययोगतः दध्यानीतमयादेवस्नानार्थंप्रतिगृह्यताम् दधिस्नानं॰ नवनीतसमुत्पन्नंसर्वसंतोषकारकम् यज्ञां

गंदेवताहेतोर्घृतंस्नानार्थमर्पितम्     घृतस्नानं॰ पुष्पसारसमुद्भूतंमक्षिकैरानितंत्वयत् सर्वतुष्टिकरंदेवमधुस्नानार्थमर्पितम् मधुस्नानं॰ इक्षुरससमुद्भूतंशर्करास्मनोहरम् मलापहरणस्नानंगृहाणत्वंमयार्पितम् शर्करास्नानं॰ सर्वमाधुर्यताहेतुःस्वादुःसर्वप्रियंकरः पुष्टिकृत्स्नातुमानीतइक्षुसारभवोगुडः गुडस्नानं॰ कांस्येकांस्येनपिहितंदधिमधुघृतंपयः मधुपर्कोमयानीतःपूजार्थंप्रतिगृह्यताम् मधुपर्कस्नानं॰ सर्वतीर्थाहृतंतोयंमयाप्रार्थनयाविभो सुवासितंगृहाणेदंसम्यक्स्नातुंसुरेश्वर स्नानं॰ रक्तवस्त्रयुगंदेवलोकलज्जानिवारण अनर्घ्यमतिसूक्ष्मंचगृहाणेदंमयार्पितम् वस्त्रं राजतंब्रह्मसूत्रंचकांचनंरत्नसंयुतम् भक्त्योपपादितंदेवगृहाणपरमेश्वर यज्ञोपवीतं॰ अनेकरत्नयुक्तानिभूषणानिबहूनिच तत्तदंगेकांचनानि योजयामितवाज्ञया भूषणं॰     पूर्वादिक्रमेणअष्टौदिक्पालानावाहयेत् इष्टगंधसमायुक्तरक्तचंदनमिश्रितम् द्वादशांगेषुतेदेवलापयामिकृपांकुरु चंदनं॰ रक्तचंदनसंमिश्रांस्तंदुलांस्तिलकोपरि शोभायैसंप्रदास्यामिगृहाणजगदीश्वर अक्षतान् पाटलंकर्णिकारंचबंधूकंरक्तपंकजम् मोगरमालतीपुष्पंगृह्यतांभुवनेश्वर पुष्पाणि नानापंकजपुष्पैश्चग्रथितांपल्लवैरपि बिल्वपत्रयुतांमालांगृहाणस्मनोहराम् मालां॰     अथांगपूजा     गणेशायनमः पादौपूजयामि गौरीपुत्राय॰ गुल्फौपू॰ विश्वेश्वरा॰ जानुनीपू॰ गजानना॰ ऊरूपू॰ लंबोदरा॰ वक्षस्थलंपू॰ गणनाथाय॰ स्तनौपू॰ द्वैमातुराय॰ कंठंपू॰ वक्रतुंडाय॰ शिरःपूजयामि     अथैकविंशतिपत्रपूजा     गणाधिपाय॰ भृंगराजपत्रंस॰ उमापुत्रा॰ बिल्वपत्रं॰ गजानना॰ दूर्वापत्रं॰ लंबोदराय॰ बदरीप॰ ॰ हरसूनवे॰ मधुपत्रं॰ गजवक्त्रा॰ तुलसीप॰ गुहाग्रजा॰ अपामार्गप॰ एकदंताय॰ बृहतीपत्रं॰ इभवक्त्राय॰ शमीपत्रं॰ विकटा॰ करवीरपत्रं॰ विनायकाय॰ अश्वत्थपत्रं॰ कपिलाय॰ अर्कपत्रं॰ बटवेन॰ चंपकपत्रं॰ अभयप्रदा॰ अर्जुनपत्रंपत्नीहीना॰ विष्णुक्रांतपत्रं॰

सुराधिपतये॰ देवदारुपत्रं॰ भालचंद्राय॰ अश्वत्थपत्रं॰ हेरंबाय॰ श्वेतदूर्वापत्रं॰ शूर्पकर्णायन॰ जातीपत्रं॰ सुरनाथाय॰ धत्तूरपत्रं॰ एकदंताय॰
केतकीपत्रं [illegible] अथैकविंशतिनामपूजा गजाननाय॰ विघ्नराजाय॰ लंबोदराय॰ शिवात्मजा॰ वक्रतुंडाय॰ शूर्पकर्णाय॰ कुब्जाय॰
विनायका॰ [illegible] विघ्ननाशना॰ विकटाय॰ वामनाय॰ सर्वार्तिनाशिने॰ भगवतेन॰ विघ्नहर्त्रेन॰ धूम्रकाय॰ सर्वदेवाधिदेवा॰ एकदंताय॰ कृष्णपिं
गाय॰ भालचंद्राय॰ गणेश्वराय॰ गणपाय॰ पुष्पंस॰ २१ दशांगंगुग्गुलुंधूपंसर्वसौगंधिकारकम् सर्वपापक्षयकरंगृहाणत्वंमयार्पितम्
धूपं॰ सर्वज्ञसर्वलोकेशतमोनाशमनुत्तमम् गृहाणमंगलंदीपंदेवदेवनमोस्तुते दीपं॰ नानापक्वान्नसंयुक्तंपायसंशर्करान्वितम् राजिका
धान्यसंयुक्तंमेथीपिष्टंसतक्रकम् हिंगुजीरककूष्मांडैर्मरीचीमाषपिष्टकैः संपादितैःसूपकैश्चभर्जितैर्वटकैर्युतम् मोदकापूपलड्डुक
शष्कुलीवटकादिभिः पर्पटरससंयुक्तंनैवेद्यममृतान्वितम् हरिद्राहिंगुलवणसहितंसूपमुत्तमम् ससाज्यंद्रंगृहाणेदंभोजनंकुरुसादरम्
मयानिवेदितंतुभ्यंगृहाणजगदीश्वर नैवेद्यं॰ सुदीप्तदीपितंतोयंसुगंधंचपिबेच्छया त्वयितृप्तेजगत्तृप्तंनित्यतृप्तेमहात्मनि मध्ये
पानीयं॰ उत्तरापोशनार्थंतेदद्मितोयंसुवासितम् मुखपाणिविशुद्ध्यर्थंपुनस्तोयंददामिते दाडिमंमधुरंनिंबूर्जंब्वाम्रपनसादिकम्
द्राक्षारंभाफलंपक्वंकर्कंधूःखार्जुरंफलम् नारिकेरंचनारिंगंकलिंगंमांजिरंतथा उर्वारुकंचदेवेशफलान्येतानिगृह्यताम् फलानि गृ
हाणचंदनंचारुकरांगोद्वर्त्तनंशुभम् नानापरिमलैर्द्रव्यैर्निर्मितंचूर्णमुत्तमम् अबीरनामकंपुण्यंगंधिचारुप्रगृह्यताम् चारुचाल्वसंभू
तंवंशसारसमुद्भवम् सचंद्रपूगचूर्णाढ्यंखादिरेणचसंयुतम् एलालवंगसंमिश्रंतांबूलंप्रतिगृह्यताम् न्यूनातिरिक्तपूजायांसंपूर्णफ
लहेतवे दक्षिणांकांचनंदेवस्थापयामितवाग्रतः दक्षिणां॰ सीतपीतैस्तथारक्तैर्जलजैःकुसुमैः शुभैः ग्रथितांसुंदरांमालां गृहाणपर

मेश्वर माळां हरिताश्वेतवर्णावापंचत्रिपत्रसंयुताः दूर्वांकुरामयादत्ताएकविंशतिसंमिताः गणाधिपाय॰ दूर्वांकुरांस॰ उमापुत्राय॰
अभयप्रदाय॰ एकदंता॰ मूषकवाहना॰ विनायकाय॰ ईशपुत्राय॰ इभवक्त्राय॰ सर्वसिद्धिप्रदायकाय॰ लंबोदराय॰ विघ्नराजाय॰ विकटा
य॰ मोदकप्रियाय॰ विघ्नविध्वंसकर्त्रेन॰ विश्ववंद्याय॰ अमरेशाय॰ गजकर्णकाय॰ नागयज्ञोपवीतिनेन॰ भालचंद्राय॰ विद्याधिपाय॰ वि
द्याप्रदाय॰ इतिदूर्वा गणेशंहृदयेध्यात्वासर्वसंकष्टनाशनम् एकविंशतिसंख्याकाः करोमिचप्रदक्षिणाः प्रदक्षिणां॰ औदुंबरे
राजतेवाकांस्येकांचनसंभवे पात्रेप्रकल्पितान्दीपान्गृहाणचक्षुरर्पितान् पंचार्तिपंचदीपेश्वदीपितांपरमेश्वर चारुचंद्रप्रभंदीपंगृ
हाणपरमेश्वर पंचार्ति॰ कर्पूरस्यमयादेवदीपस्तत्त्वनिवेदितः यथास्यनेक्षतेभस्मतथापापंविनाशय कर्पूरदीपं॰ स्तोत्रैर्नाना
विधैःसूक्तैःसहस्रनामभिस्ततः उपविश्यस्तवीनेनंकृत्वास्थिरतरंमनः दीनानाथदयानिधेसुरगणैःसंसेव्यमानद्विजब्रह्मेशानमहेंद्रशे
षगिरिजागंधर्वसिद्धैस्तुतः सर्वारिष्टनिवारणैकनिपुणत्रैलोक्यनाथप्रभोभक्तिंमेसफलांकुरुष्वसकलांक्षंत्वापराधान्मम आवाह
नंनजानामिनजानामितवार्चनम् विसर्जनंनजानामिक्षम्यतांजगदीश्वर क्षमापनं॰ गौरीसुतनमस्तेस्तुसर्वसिद्धिप्रदायक सर्वसंक
ष्टनाशार्थंअर्घ्यंमेप्रतिगृह्यताम् अनेनएकविंशतिअर्घ्याणि कृतपूजायाःसांगतासिध्यर्थंब्राह्मणायवायनप्रदानंकरिष्ये ब्रा-
ह्मणपूजनं दशमोदकसंयुक्तंवायनंच फलप्रदम् गणेशप्रीणनार्थायगृहाणत्वंद्विजोत्तम वायनं सांगतासिद्ध्यैब्राह्मणान्भोजयेत्
इत्येकविंश॰ दिनगणपतिपूजा अथैकविंशतिदिनगणपतिकथा शौनकउ॰ सूतसूतमहाप्राज्ञव्यासविद्याविशारद संक
टेचसमुत्पन्नकार्यसिद्धिःकथंनृणाम् सूतउ॰ श्रृणुध्वंमुनयःसर्वेशौनकप्रमुखानघाः संकष्टनाशनंपुण्यंव्रतंवक्ष्मियथाश्रुतम् यत्कृ

त्वासर्वकार्याणिसिद्धिंयांतिनसंशयः पूजयित्वागणेशंहिएकविंशद्दिनावधिशौनकउ॰ कथंपूज्योगणाध्यक्षोविघ्नहर्तागणाधिपः
केनचादौपु॰ ीर्णव्रतंविघ्नहरस्यच वदसर्वंमहाप्राज्ञअस्माकंविधिपूर्वकम् प्राप्तोसित्वंमहाभाग्याद्दरण्येसत्रमंडपे सूतउवाच ए
वमेवपुराषृष्टः षण्मुखोवदतांवरः सनत्कुमारमुनिनाब्रह्मपुत्रेणयोगिना सनत्कुमारउ॰ कार्त्तिकेयमहाप्राज्ञदेवसेनाधिपप्रभो सं
कटान्नुकथंमुच्येज्जनोविज्ञानदुर्लभः श्रुत्वावाक्यंब्रह्मसूनोःसर्वेषांकार्यगौरवम् सेनानीस्तत्तदाहर्षान्नमस्कृत्यमहामुनिम् स्कंदउ॰
विप्रवर्यमहायोगिन्पार्वत्यामुखतःश्रुतम् वदामितद्व्रतंतुभ्यंशृणुसर्वंमहामुने कैलासभवनेरम्येवसमानोमहेश्वरः स्नातुंजगामभगवा
न्भोगावत्यांयथासुखम् तस्मिन्नेवदिनेअंबाअभ्यंगस्नानमारभत् स्वशरीरान्मलंगृह्यतस्यमूर्त्तिमकल्पयत् सजीवंचपुनःकृत्वाएणहिपुत्रे
त्यचोदयत् अवदद्धैततोनामबल्लुवस्त्वंविनायकः पुत्रगच्छबहिर्द्वारेतिष्ठतत्रदृढायुधः आयास्यतिकदाचिद्धैपुरुषोभवनांतरे तन्निवार
यितुंशक्तोयावत्स्नानंकरोम्यहम् ममाज्ञांगृह्यपश्चात्त्वंप्रविष्टुंअर्हसिध्रुवम् मात्राज्ञांगृह्यशिरसि अगमद्द्वारदेहलीम् मुद्गरंतुसमा
दायहस्तेबल्लुवनामकः अरक्षद्द्वारदेशंसपार्वत्याज्ञांस्मरन्बलात् तदानीमेवआयातंविभूत्याचर्चितंविभुम् संप्राप्तेभवनद्वारेशंभुः
सर्वेश्वरोहरः देहलींप्रविशन्यावद्वारयन्द्वारपोबली द्वारपालउ॰ कोसित्वंचकिमर्थंहिगम्यतेभवनेशुभे मात्राज्ञायातियावत्वं
स्थातव्यंतावदेवहि शंभुरु॰ द्वारपालवचःश्रुत्वाशंभुःकोपमथाकरोत् कस्याज्ञाचमयाग्राह्याकोसित्वंभाषसेकथम् गृहीत्वाड
मरुंहस्तेद्वारपालशिरोहनत् प्रविशच्चततस्तूर्णंस्वगृहंपार्वतीपतिः दृष्ट्वानाथंसकोपंसाचिंतयत्पार्वतीहृदि बहुधाबाधतेस्कंदेहेशं
करेकोपकारणम् अलंकृताचस्नातापार्वतीजगदंबिका पायसेनतुपूर्णेद्धैभक्ष्यभोज्येनसंयुते संस्थाप्यचैवपीठाग्रेघृतेनसित-

यान्विते पात्रद्वयंसमालोक्य अथ दृष्ट्वापार्वतींशिवः शंभुरुवा॰ दिव्यकांचनसंभूतानिदर्वीभ्यांचसुलोचने भोज्यपात्रंतुकस्येदंस्थापि
तंचद्वितीयकम् भोजनार्थंद्वितीयोयःकोयातिवदवल्लभे नायातित्वरयाचात्रविलंबेकारणंवद इतिश्रुत्वावचःशंभोःसर्वेशस्यम-
हासती प्रीतिहर्षसमायुक्तासर्वज्ञमवदत्तदा पार्वत्युवा॰ ममाद्यस्नानसमयेउद्वर्तनमलोद्भवम् पुत्रोविरच्यत्वद्द्वारेदेहल्यां
स्थापितोमया तदर्थंचद्वितीयंवैभोजनंस्थापितंध्रुवम् इतिश्रुत्वावचस्तस्याश्चकंपेप्राकृतोयथा शिवउ॰ प्रविशंतंचमांद्वारे
तवपुत्रोन्यवारयत् कोसित्वंचमयापृष्टस्तेनेनोक्तंत्ववाभिधा कोपेनचततस्तस्यशिरस्थित्वानिपातितम् इतिश्रुत्वाततोदेवीविह्वला
पतिताभुवि पार्वत्युवा॰ पुत्रंजीवयसेदेवनहिभोक्ष्येमहेश्वर तथैवचममप्राणागमिष्यंतिनसंशयः इत्युक्त्वाचततोदेवीहाकष्टमि
तिवादयन् पुनःपपातसाभूमौवातेनकदलीयथा शिवउ॰ उत्तिष्ठभद्रेकिंदुःखंपुत्रार्थंमाकुरुप्रिये अधुनातवपुत्रंहिजीवया-
मिशिरोविना प्रियामेवंचआश्वास्यगतोद्वारेस्वयंविभुः इतस्ततोवलोक्याथगजोदृष्टोमृतस्तदा निकृत्यचनागशिरोबल्लुवप्रयोज
यद्विभुः संजीव्यबलवंपुत्रंपार्वत्यांविनिवेदयत् दृष्ट्वागजशिरंपुत्रंपार्वतीहर्षनिर्भरा भोजयित्वापतिपुत्राभ्यांस्वर्णपात्रेसुशोभने
नमस्कृत्यततोदेवंपतिपात्रेउपाविशत् बुभुजेतुततोदेवीपतिशेषंतुभोजनम् कैलासभवनेरम्येपार्वत्यानिवसन्बहु अटन्विभुःक
दाचित्सवृषभेणबलीयसा पार्वत्यासहितोदेवःप्रापसवान्नर्मदातटम् रम्यंरेवातटंदृष्ट्वापार्वतीशंकरंवदत् पार्वत्युवाच देवदे
वमहादेवशंकरप्राणवल्लभ अक्षैःक्रीडतुकामाहंत्वयासाकंसुरेश्वर शंकरउ॰ अक्षैःक्रीडतुकात्वंमाआसनेस्मिन्स्थिराभव
जयेपराजयेचात्रसाक्ष्यर्थंयोजयप्रिये स्वामिवाक्यंचसाश्रुत्वाएरकांगृह्यसुष्टिना नराकृतिमथाकल्प्यप्राणान्सासमयोजयत् देहंत

स्यचसास्पृश्यपाणिपद्मेनसांभसातसुवाचनतोबालं अक्षक्रीडांविलोकय    अवाभ्यांक्रीडमानाभ्यांकोजेष्यतिवदध्रुवम् इतिमातुर्वचः श्रुत्वाबा
लकोवैतथेतिभोः अक्षक्रीडासमारब्धापार्वत्याशंकरेणच जयोजातश्चपार्वत्याश्शंकरस्तुपराजितः शंकरस्तुतदाप्रच्छत्कोजितोवदबालक
अवदद्बालकोतत्रजितंदेवेनशूलिना पुनः क्रीडांप्रवृत्तासासाक्षीकृत्वाचबालकम् पुनर्जितंतुपार्वत्याशंकरस्तुपराजितः बालंपप्रच्छसा
देवीजितंकेनवदाधुना पुनरप्याहबालोसौजितंदेवेनशूलिना हर्षेणचसमायुक्तःपार्वतीमाह शंकरः क्रीडांकुरुमहादेविरोषंत्यजशुभानने
क्रीडितासापुनर्देवीजितोदेव्यासशंकरः लज्जितःशंकरोबालंकोजितोवदनिश्चितम् शंकरंप्राहबालाख्योजितस्त्वंभुवनाधिप बालवा-
क्यंसमाकर्ण्यपार्वतीकोपनिर्भरा मिथ्यावंदसिदुष्टात्मन्यादहीनोत्रकर्दमे पच्यमानोतिदुःखेनभविष्यसिनसंशयः  बालउ॰ विशापं
कुरुमांमातर्बालभावान्ममेरितम् इतिश्रुत्वावचस्तस्य मातृभावाद्दयान्विता  पार्वत्युवा॰  नागकन्यायदापुत्रपूजार्थंचत्तटेशुभे
गणेशंपूजयंत्यात्मानवसान्निध्यगोभवेत् तासांश्रुत्वावचोदिव्यंतवभक्तिर्भविष्यति गणेशंपूजयित्वातुममसान्निध्यमेष्यसि इत्यु
क्त्वासाततोदेवीहिमाचलमगाद्रुषा व्यतीतेवत्सरेपूर्णेश्रावणेमासिचागते गणेशपूजनार्थंतानागकन्याःसमागताः दृष्टवान्नर्मदाती
रेस्त्रीवृंदंबहुभूषितम्  बालउ॰ किमर्थंचागताबालाःकिंचात्रक्रियतेधुना भवतीभिःपूज्यतेकःकिंफलंवदताद्यमे नागकन्या
ऊ॰ वत्सपूजागणेशस्यक्रियतेस्माभिरुत्तमा पूजितेतुजगन्नाथेलभतेवांछितंध्रुवम्  बालउ॰ कथंपूज्योगणाध्यक्षःकियत्
कालंवदाद्यभोः कोविधिःकेचसंभाराःकदापूज्योगणेश्वरः  नागकन्याऊचुः  श्रावणेमासिसंप्राप्तेचतुर्थ्यांचरवणोदये तिलामल
ककल्केनस्नानंकुर्याज्जलाशये शुक्लपक्षसमारभ्ययावत्कृष्णायादृशीभवेत् मध्याह्नेपूजयेत्तावदेकविंशद्दिनावधि एकविंशतिदूर्वाभिःताव

सुधैः शुभैःसदा मोदकैरेकविंशैश्चपूजयेत्प्रत्यहंजनैः मोदका दशविप्रायदातव्याश्चसदक्षिणाः एकंगणाधिपेदद्यात्स्वयंचाद्याद्द्वेशेषत्तु पूजामौनेनकर्त्तव्याभोजनंचतथानघ ब्रह्मचारीभूमिशायीशूद्रभाषणवर्जितः हविष्याशीतथाभूयाच्छुचिरंतर्बहिःसदा एवंन्नियममास्थायपूजांकुर्यात्सदाव्रती ताम्रपात्रेजलंगृह्यगंधपुष्पसमन्वितम् फलरत्नसमायुक्तं अर्घ्यंतद्याद्गणाधिपे दक्षिणांतेसदावत्सएकविंशनिवेदयेत् पूजासमाप्तौविप्रायवायनंचसमर्पयेत् गणेशायनमस्तेस्तुपार्वतीनंदनायच गंधपुष्पसमायुक्तंअर्घ्यंगृण्हनमोस्तुते गणेशप्रीतयेतुभ्यंवायनंदशमोदकम् दक्षिणाफलसयुक्तंवंशपात्रेसुकल्पितम् गणेशःप्रतिगृण्हातिगणेशोवैददातिच गणेशःस्तारकोभाभ्यांगणेशायनमोनमः एवंपूज्योगणाध्यक्षोनार्मदोभक्तितःशुभः गणेशेपूजितेवत्सतवसिद्धिर्भविष्यति एवमुक्त्वागतादेव्योनागकन्याः शुचिस्मिताः बालकेनकृतंपश्चादन्यस्मिन्वत्सरेततः श्रावणेमासिसंप्राप्तेशुक्लपक्षेतिथौशुभे चतुर्थ्यांकृतसंभारोव्रतंजग्राहबालकः गणेशंनार्मदंतत्रएकविंशद्दिनावधि विधिवत्पूजयामासनमस्कृत्यगणेश्वरम् गणेशोवरदोजातोयाचयस्वयदीप्सितम् श्रुत्वावाक्यंगणेशस्यहर्षनिर्भरमानसः बालउ॰ नमस्कृत्यगणेशानंवरंदेहिनमोस्तुते पादयोर्मेबलंदेहिवासंशंकरसन्निधौ गणेशउ॰ यथेच्छसितथैवास्तुपार्वत्याप्रीतिरस्तुतेइत्युक्त्वातुगणेशोसौतत्रैवांतर्दधेविभुः दृढपादश्चबालोसौकैलासमगमत्ततः दृष्ट्वाहरस्यचरणौशिरसाजगृहेशुभौ शिवउ॰ उत्तिष्ठवत्सतेपादौकथंजातौदृढौवद कस्यप्रसादात्त्वमिह आगतो-सिममालयम् बालउ॰ कृतंमयागणेशस्यएकविंशद्दिनात्मकम् श्रुतंचनागकन्याभ्यस्तद्व्रतंपूजनंमया तेनपुण्यप्रभावेनप्राप्तोहंतवसंन्निधौ गणेशस्यप्रसादेनशरीरंदृढतांगतम् शिवउ॰ कीदृशंतद्व्रतंब्रूहिकरिष्येहंचतद्व्रतम् वल्लभायादर्शना

र्थपार्वत्यारोषशांतये बालउ॰ श्रावणेशुक्लपक्षेतुचतुर्थ्यांचसमारभेत् श्रावणेबहुलेपक्षेदशम्यांचसमापयेत् गणेशंपूजये
न्नित्यं एकविंशद्दिनावधि एकविंशतिदूर्वाभिःपुष्पैरर्पितयैवच कर्त्तव्यामोदकास्तत्र एकविंशतिसंख्यकाः दशविप्रायदत्वातुए
कंदेवेनियोजयेत् अवशिष्टास्वयंभक्ष्याःश्रुतमेवंमयाविभो किंमयाद्यत्वयाज्ञप्तंवक्तव्यंवर्त्ततेविभो आचरच्छंभुरप्येवंगणेशस्यव्र
तंशुभम् पूजनात्तुगणेशस्यपार्वत्याश्चलितंमनः हिमाचलंनमस्कृत्यवचनंचेदमब्रवीत् पार्वत्युः॰ गम्यतेद्यमयातातकैलासं
निजमंदिरम् शिवस्यचरणोद्रष्टुमुत्सुकंमेमनोभवत् शीघ्रंदेहिममाज्ञांभोःक्षणंस्थातुंनशक्यते हिमाचलउ॰ प्रेषयिष्येक्षणं
तिष्ठविमानेनार्कवर्चसा सैन्यंददामिरक्षार्थेनवमार्गेशुचिस्मिते पितृवाक्यंसमाकर्ण्यविमानंचारुरोहसा क्षणमात्रेणसायाताकै
लासभवनोत्तमम् दृष्ट्वामहेश्वरंदेवंप्रणनामविहस्यच किंकृतंभोनजानीममनोमेचाहृतंत्वया वाक्यंश्रुत्वाप्रियायाश्चमनसाचा
लिलिंग्यताम् अवदत्कारणंतस्याहरणेमनसोध्रुवम् शिवउ॰ कृतंमयागणेशस्यपूजनंतवहेतवे तेनपुण्यप्रभावेनआगतात्वं
ममांतिकम् पार्वत्युः॰ कथंपूज्योगणाध्यक्षोवदमह्यंजगद्विभो अहमद्यकरिष्यामिसेनानीदर्शनायच शंकरउ॰ कुरु
देविगणेशस्यपूजनंचयथाविधि एकविंशतिदूर्वाभिःपुष्पैर्नानाविधैःशुभैः मोदकैरेकविंशैश्चएकविंशद्दिनानिच अर्घ्यैस्तावत्ति
संख्याकैस्तथाब्राह्मणतर्पणैः त्रिलोचनमुखाच्छ्रुत्वागणेशःपूजितस्तया एकविंशद्दिनात्पश्चात्कुमारोभ्यगमत्स्वयम् स्कंदंदृष्ट्वातदादे
व्यास्तनाभ्यांनिर्झरावभुः सुतमालिंग्यसादेवीचुचुंबेचमुखंपुनः वत्साद्यचमुखंदृष्टंगणेशस्यप्रसादतः बहुकालंचमांत्यक्त्वागतःषण्मुख
बालक कृतकृत्साद्यजातास्मिदर्शनात्तेनसंशयः रोषंत्यजमहाबुध्देशपथस्तेवदाम्यहम् स्कंदउ॰ मातर्वदगणेशस्यपूजनंचयथा

श्रुतम् विश्वामित्रंचराजानममममित्रंवदाम्यहम् पार्वत्युः वदमित्रंगणेशस्यपूजनंकुरुभक्तितः एकविंशतिदूर्वाभिःपुष्पैरप्येक
विंशतिः कर्त्तव्यामोदकास्तत्रएकविंशतिसंख्यकाः दशविप्रायदातव्याः स्वयंचाद्याद्दशैवच एकंगणाधिपेदत्वा अर्घ्याण्यर्पितथैवच पू
जयस्वगणाध्यक्षंएकविंशद्दिनावधि इदंव्रतंगणेशस्यभक्तितोयःकरिष्यति तस्यकार्याणिसिध्यंतिमनसाचिंतितानिच व्रतराजविधिं
श्रुत्वासेनानीश्चतथाकरोत् सेनानीनामाग्रणीत्वंसमवाप्यशुचिव्रतः कथयामासविप्रायविश्वामित्रेनराधिपे सोपिराजानमस्कृत्यव्रतं
तत्स्वयमाचरत् गणेशउः गणेशोवरदोजातोविश्वामित्रायतत्क्षणात् वदराजन्किमिच्छास्तिददामितवयाचितम् वि
श्वामित्रउः देहिदेवप्रसन्नश्चेत्प्राग्विप्रर्षित्वमस्त्विति प्राप्तेनविप्रर्षित्वेनसर्वेप्राप्तामनोरथाः गणेशउः विप्रर्षिस्त्वंचराजेंद्र
प्राप्स्यसिब्रह्मपुत्रतः वसिष्ठाद्ब्राह्मणःश्रेष्ठान्ममवाक्यंनसंशयः एवमुक्त्वागणेशोसौपूजितोभूमिपेनसः पुनरन्यंवरंचादात्पूज
कानांहितायवै यदायदाचराजेंद्रसंकटंचकलौभुवि भविष्यतिजनानांहिकर्त्तव्यंपूजनंमम स्मरिष्यंतिचमांभक्त्यानमस्कृत्यपु
नःपुनः तेषांदुःखानिसर्वाणिनाशयामिनसंशयः एवंदत्वावरान्सम्यक्तत्रैवांतर्हितोभवत् सनत्कुमारयोगींद्रपार्वत्यामुखपद्म
तः श्रुतंमयाचत्रेतायांगणेशस्यव्रतंमहत् निवेदितंचतत्सर्वंकुरुविप्रतपोनिधे सनत्कुमारउः महदाख्यानकंश्रुत्वात्व-
मोहंतन्नसंशयः एवमुक्त्वागतोयोगीनमस्कृत्यषडाननम् सनत्कुमारसेनानीसंवादंचयथाश्रुतम् व्यासप्रसादाच्छ्रुतवान्त-
थातुभ्यंनिवेदितः इदंव्रतंगणेशस्यकरिष्यतिचमानवः तस्यकार्याणिसर्वाणिसिद्धिंयास्यंतिसत्वरम् किमन्यच्छ्रोजनश्रेष्ठाःश्रो
तुकामास्तपोधनाः तत्सर्वंकथयिष्यामिवक्तव्यंयदिवेच्छथ यइदंशृणुयाद्भक्त्याआख्यानंचसमाहितः तदीप्सितानिकार्याणिस

लभेन्निश्चितंभुवि शौनकाद्याऋषिगणाःश्रुत्वासूतवचोद्भुतम् पौराणिकंनमस्कृत्यविरराभासनेशुभे इतिश्रीभविष्योत्तरपुरा
णेस्कंदसनत्कुमारसंवादेतृतीयोल्लासेएकविंशदिनगणपतिव्रतकथासमाप्ता अन्यच्चश्रावणशुक्लचतुर्थीमारभ्यमाघशुक्लच
तुर्थीपर्यंतंदूर्वागणपतिव्रतंस्कांदे तत्रविधिः मासपक्षाद्युल्लिख्यसमस्तपापक्षयपूर्वकसप्तजन्मराज्यसौभाग्यादिविवृद्धये
उमामहेश्वरसायुज्यताप्रसिध्यर्थंषण्मासपर्यंतंगणपतिप्रीत्यर्थंदूर्वाव्रतंकरिष्ये षोडशोपचारैःपूजयेत् सूतउ॰ कैलासशि-
खरेरम्येसर्वदेवनिषेविते सिद्धसंघसमाकीर्णेगंधर्वगणसेविते देव्यासहमहादेवोदिव्यंरत्यक्षैर्विनोदतः जितासित्वंजितेत्याहपा
र्वतींपरमेश्वरः सापित्वंजितइत्याहसविवादस्तयोरभूत् चित्रनेमिस्तदाद्रष्टामृषावादमभाषत तदाक्रोधसमाविष्टागौरीशापं
ददौततः प्रसादितातदस्तेनविशापंकुरुपार्वति पार्वत्यु॰ यदासरोवरेरम्येचरिष्यतिभवान्भुवि तदास्वर्गणिकाःसर्वाश्चैष्यंति
त्वांसमागताः तदाभवविशापस्त्वमित्युक्त्वासपपातह ततःकतिपयाहोभिःकृष्णोनंतसरोवरे कृष्णोभूत्वावसंस्तत्रददर्शस्वर्विलासि
नीः ततस्तत्सागरंगत्वापप्रच्छप्रणिपत्यताः क्रियतेकिंमहाभागाःपूजायांवांछितंचकिम् ततस्ताअब्रुवंस्तस्मैदूर्वाविघ्नेश्वरव्रतम् क्रि
यतेस्माभिरिहचपरत्राभीष्टसिद्धये ततोब्रवीच्चित्रनेमिर्व्रतंमेदातुमर्हथ येनाहंगिरिजाशापान्मुच्यतेचिरदुःखितः ततस्ताअब्रुवन्स
र्वाव्रतमेतदनुत्तमम् दूर्वाविघ्नेश्वरोयत्रपूज्यतेसर्वसिद्धिदः शुक्लपक्षेचतुर्थीयाभानुवारेणसंयुता तस्यांतिथौसमारभ्यषण्मासं
व्रतमाचरेत् प्रत्यहंषट्नमस्काराःषड्दूर्वाःषट्प्रदक्षिणाः शुक्लपक्षेचतुर्थ्यांचप्रत्येकंचैकविंशतिः एकभक्तंचकर्तव्यंकथांचशृणुया
दिमाम् ध्यायेद्विनायकंदेवंसमाहितमनाःशृणु तरुणारुणसंकाशंसर्वाभरणभूषितम् जटाकलापसंभग्नंकुंकुमेनापराजितम् गजा

ननंप्रसन्नास्यंसिंदूरतिलकांकितम् विशालवक्षसंभानुमुक्तामणिविभूषितम् चतुर्भुजमुदारांगंकिंकिणीकंकणैर्युतम् पाशांकुशध
रंदेवंदंतमोदकधारिणम् महोदरंमहानागंबद्धकुक्षिंमुदान्वितम् रक्तदरांशुकसंवीतमिभास्यमपराजितम् प्रणतामरसंदोहमौलि
माणिक्यरश्मिभिः विराजितांघ्रिकमलंसर्वदेवनमस्कृतम् अभीष्टफलदंदेवंसर्वभूतोपकारकम् एवंध्यात्वाजपेन्नित्यंविनायकम
तंद्रितः एवंचरित्वाषण्मासान्शुचिःसत्यपरायणः पश्चाद्गंधादिदूर्वाभिरर्चयेत्तंसदापुनः उद्यापनंचकर्तव्यंदेशकालानुसारतः
ततोमगधदेशस्यमानेनयवपिष्टकम् दशमानकमादायदशाष्टावपिमोदकान् कृत्वाघृतप्लुतान्सम्यक्षड्देवायषडात्मने षड्विप्रायदा
तव्याः श्रोत्रियायकुटुंबिने विनायकोगणाध्यक्षोविघ्नेशःश्रीगणाधिपः वरदःसुमुखश्चैवदूर्वाषड्भिःप्रपूजयेत् षड्दूर्वाश्चतथादद्या
न्महापूजांप्रकल्पयेत् एवंकुरुमहेशानप्राप्स्यर्थमभिवांछितम् तथेत्युक्त्वाचित्रनेमिःप्रीणयित्वाविनायकम् शापान्मुक्तस्ततःशं
भुमभ्यगात्प्रहसन्निवशंकरेणततःपृष्टश्चित्रनेमिस्तथाजगौ व्रतंश्रुत्वाततःशंभुर्गणेशस्यकुतूहलात् गौरीकोपप्रसादायशिवोपि
कृतवानथ शिवोनोक्तंव्रतंचक्रेगणेशस्यप्रसादजम् कार्त्तिकेयोपिसंप्राप्तःसेनानीत्वंचतन्महत् व्रतंचकारनंदीचकार्त्तिकेयोत्तमा
द्रसात् सोपिराजाप्रसादायपुत्रार्थंचचकारह ततःक्रमेणलोकेस्मिन्प्रचुरीभूतमुत्तमम् व्रतंदूर्वागणेशस्यसर्वसिद्धिकरंपरम् शोक
व्याधिभयोद्वेगबंधव्यसनवर्जितः विमुक्तःपुत्रपौत्रादिधनधान्यसमावृतः इहलोकेसुखीभूत्वापश्चाच्छिवपुरंव्रजेत् व्रतेनानेन
दुर्वाख्यविघ्नेशस्यप्रसादतः यःपठेत्परयाभक्त्याकथामेतांदिनेदिने शृणुयाद्वापिसततंसर्वसिद्धिमवाप्नुयात् इतिस्कंदपु
राणोक्तंदूर्वागणपतिव्रतोद्यापनंसंपूर्णम् अथभाद्रपदशुक्लचतुर्थ्यांसिद्धिविनायकव्रतंहेमाद्रौस्कांदे तच्चमध्यान्हव्या

पिन्यं [illegible] तःशकूनिलैः स्नात्वा मध्याह्ने पूजयेन्नृप पार्थिवस्य गणेशस्य तत्रैव पूजनं चरेत् दिनद्वये तद्व्याप्तौ एकदेशव्याप्तौ वा पूर्वा ऽन्यथापरा चतुर्थ [illegible] थस्य मातृविद्धा प्रशस्यते मध्याह्नव्यापिनी सा तु परतश्चेत्परे ऽहनि इति बृहस्पत्युक्तेः अथ व्रतविधिः मासपक्षाद्युल्लिख्य मम इह जन्मजन्मनि पुत्रपौत्रधनविद्याजययशःश्रीकामायुष्याभिवृध्यर्थं सिद्धिविनायकप्रीत्यर्थं यथाज्ञानेन पुरुषसूक्तपुराणोक्तमं-त्रैर्ध्यानावाहनादिषोडशोपचारैः पंचामृतैः सह पार्थिवपूजनं करिष्ये तथा च मूर्तौ प्राणप्रतिष्ठादिकं आसनादिकलशाराधनं पुरुषसूक्त-न्यासांश्च करिष्ये पार्थिवमूर्तौ देवस्थापनं हेरंबाय० मृदाहरणं सुमुखाय० संघट्टनं गौरीसुताय० स्थापनं अथ प्राणप्रतिष्ठां कुर्यात् अस्य श्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामाथर्वाणि छंदांसि क्रियामयवपुः प्राणाख्या देवता आंबीजं ह्रीं शक्तिः क्रौं कीलकं अस्यां मूर्तौ प्राणप्रतिष्ठापने विनियोगः ॐ आं ह्रीं क्रौं अं यं रं लं वं शं षं सं हं ळं क्षं अस्यां मूर्तौ प्राणास्तिष्ठंतु पुनः नः आं० अस्यां मूर्तौ जीव इह स्थितः पुनः ॐ आं० अस्यां मूर्तौ सर्वेंद्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्था-नि इहैवागत्य सुखं चिरं तिष्ठंतु स्वाहा असुनीते पुनरिति ऋचं पठित्वा गर्भाधानादि पंचदशसंस्कारसिद्ध्यर्थं पंचदश प्रणवावृत्तीः करिष्ये ॐ १५ तच्चक्षुर्देवहितं० देवस्याज्येन नेत्रोन्मीलनं कृत्वा पंचोपचारपूजनं अथ ध्यानं एकदंतं शूर्पकर्णं गजव-क्त्रं चतुर्भुजं पाशांकुशधरं देवं ध्यायेत्सिद्धिविनायकं ध्यायेद्देवं महाकायं तप्तकांचनसंनिभं दंताक्षमालापरशुपूर्णमोदकह-स्तकं मोदकासक्तशुंडाग्रमेकदंतं विनायकम् ध्यानं आवाहयामि विघ्नेश सुरराजार्चितेश्वर अनाथनाथ सर्वज्ञ पूजार्थं गण-नायक सहस्रशीर्षा० आवाहनं० विचित्ररत्नरचितं दिव्यास्तरणसंयुतं स्वर्णसिंहासनं चारु गृहाण सुरपूजित पुरुष एवेदं०

आसनं सर्वतीर्थसमुद्भूतंपाद्यंगंधादिसंयुतं विघ्नराजगृहाणेदंभगवन्भक्तवत्सल एतावा॰ पाद्यं॰ अर्घ्यंचफलसंयुक्तंगंधपु
ष्पाक्षतैर्युतं गणाध्यक्षनमस्तेस्तुगृहाणकरुणानिधे त्रिपादूर्ध्वं॰ अर्घ्यं॰ दध्याज्यमधुसंयुक्तंमधुपर्कंमयाहृतं गृहाणसर्व
लोकेशगणनाथनमोस्तुते मधुपर्कं॰ विनायकनमस्तुभ्यंत्रिदशैरभिवंदित गंगोदकेनतोयेनशीघ्रमाचमनंकुरु तस्माद्विरा-
डाचमनीयं॰ पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनंप्रीयतांगणनायक पंचामृतस्नानं गंगाचयमुनाचैवगो-
दावरिसरस्वति गंधतोयसुमापुत्रगृण्हीष्वाभीष्टदायक यत्पुरुषेणस्ना॰ रक्तवस्त्रमिदंदेवदिव्यकांचनसंभवं सर्वप्रदगृहाणे-
दंलंबोदरहरात्मज तंयज्ञमितिवस्त्रं॰ राजतंब्रह्मसूत्रंचकांचनंचोत्तरीयकं गृहाणचारुसर्वज्ञभक्तानांवरदोभव तस्माद्यज्ञा
द्युपवस्त्रं॰ यज्ञोपवीतं उद्यद्भास्करसंकाशंसंध्यावदरुणंप्रभो वीरालंकरणंदिव्यंसिंदूरंप्रतिगृह्यतां सिंदूरं नानाविधानिदि
व्यानिनानारत्नोज्वलानिच भूषणानिगृहाणेशपार्वतीप्रियनंदन आभरणानि कस्तूरिचंदनंचैवकेशरेणसमन्वितं विले
पनंसुरश्रेष्ठचंदनंप्रतिगृह्यतां तस्माद्यज्ञात्सर्वहुतेतिगंधं रक्ताक्षताश्चदेवेशगृहाणद्विरदानन ललाटपटलेचंद्रस्तस्योपर्यव
धार्यतां अक्षताः माल्यादीनिसुगंधीनिमालत्यादीनिवैप्रभो मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यतां करवीरैर्जातिकुसुमैश्च
पकैर्बकुलैःशुभैः शतपत्रैश्चकल्हारैरर्चयेद्गणनायकं तस्मादश्वेतिपुष्पाणि अथांगपूजा गणेश्वराय॰ पादौपू॰ विघ्नरा
जाय [illegible] नुनीपू॰ अखुवाहनाय॰ उरूपू॰ हेरंबाय॰ कटिंपू॰ कामचारिसूनवेन॰ नाभिंपू॰ लंबोदराय॰ उदरंपूज॰ गौरीसुता
य॰ [illegible] गणनाय॰ हृदयं॰ स्थूलकर्णाय॰ कंठंपू॰ स्कंदाग्रजाय॰ स्कंधौपू॰ पाशहस्ताय॰ हस्तौ॰ गजवक्त्रायन॰ वक्त्रं॰ विघ्नह

त्रैनाकार्यं भारं॰ सर्वेश्वरा॰ शिरःपू॰ गणाधिपा॰ सर्वांगंपूज॰ अथपत्र पूजा सुमुखाय॰ मालतीप॰ गणाधिपाय॰ भृंगराज
प॰ उंगणनाय॰ बिल्वपत्रं॰ गजाननाय॰ श्वेतदूर्वाप॰ लंबोदराय॰ बदरीपत्रं॰ हरसूनवे॰ धत्तूरपत्रं॰ गजकर्णकाय॰ तुलसीप॰
वक्रतुंडाय॰ शमीप॰ गुहाग्रजाय॰ अपामार्गप॰ एकदंताय॰ बृहतीप॰ विकटाय॰ करवीरप॰ कपिलाय॰ अर्कप॰ गजदंताय॰ अ
र्जुनप॰ विघ्नराजाय॰ विष्णुक्रांताप॰ बटवेन॰ दाडिमीप॰ सुराग्रजा॰ देवदारुप॰ भालचंद्राय॰ मरुप॰ हेरंबाय॰ अश्वत्थप॰ चतु
र्भुजा॰ जातीपत्रं॰ विनाय॰ केतकीप॰ सर्वेश्वरा॰ अगस्तिप॰ २१ दशांगंगुग्गुलंधूपंसुगंधंचमनोहरं गृहाणसर्वदेवेशउमापुत्र
नमोस्तुते यत्पुरुषंव्यदधु॰ धूपं॰ सर्वज्ञंसर्वलोकेशत्रैलोक्यतिमिरापह गृहाणमंगलंदीपंरुद्रप्रियनमोस्तुते ब्राह्मणोस्य॰ दीपं
नैवेद्यंगृह्यतांदेवभक्तिंमेह्यचलांकुरु ईप्सितंमेवरंदेहिपरत्रचपरांगतिं चंद्रमामनसो॰ नैवेद्यं॰ नानारवाद्यमयंदिव्यंतुष्ट्यर्थं
तेनिवेदितं मयाभक्त्याशिवापुत्रगृहाणगणनायक मध्येपानीयं उत्तरापोशनं॰ मुखप्रक्षालनं मलयाचलसंभूतंकर्पूरेणसम
न्वितं करोद्वर्तनकंचारुगृह्यतांजगतःपते करोद्वर्तनं बीजपुराम्रपनसखर्जूरीकदलीफलं नारिकेलफलंदिव्यंगृहाणगणनाय
क इदंफलंमया॰ फलं एकविंशतिसंख्याकान्मोदकान्घृतपाचितान् नैवेद्यंसफलंदद्यान्नमस्तेविघ्ननाशिने गणेशाय॰ मोदका
र्पणं पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतं कर्पूरेलासमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं हिरण्यगर्भेतिदक्षिणां वज्रमाणि
क्यवैदूर्यमुक्ताविद्रुममंडितं पुष्परागसमायुक्तभूषणंप्रतिगृह्यतां भूषणानि दूर्वायुग्मंगृहाणेदंगंधपुष्पाक्षतैर्युतं पूजयेत्
सिद्धिविघ्नेशंप्रत्येकंपूर्वनामभिः गणाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेभवक्त्रेतितथामूषकवाहन विनायकेशपुत्रेति

सर्वसिद्धिप्रदायक कुमारगुरवेतुभ्यंपूजनीयाःप्रयत्नतः इतिदूर्वार्पणं चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वतेजांसिआर्तिक्यंप्रतिगृह्यतां नीराजनं विघ्नेश्वरविशालाक्षसर्वाभीष्टफलप्रद प्रदक्षिणांकरोमित्वांसर्वान्कामान्प्रयच्छमे नाभ्याआसीतिप्रदक्षिणां॰ नमस्तेविघ्नसंहर्त्रेनमस्तेईप्सितप्रद नमस्तेदेवदेवेशनमस्तेगणनायक समस्यासन्॰ नमस्कारः विनायकेशपुत्रेतिगणराजसुरोत्तम देहिमेसकलान्कामान्वंदेसिद्धिविनायक यज्ञेनयज्ञ॰ मंत्रपुष्पांजलिं॰ अथैकविंशतिंगृह्यमोदकान्घृतपाचितान् स्थापयित्वागणाध्यक्षसमीपेकुरुनंदन दशविप्रायदातव्यास्थापयेद्दशआत्मनि एकंगणाधिपेदद्यात्स घृतंमोदकंशुभं दशानांमोदकानांचफलदक्षिणयायुतं विप्रायतवतुष्ट्यर्थंवायनंतेददाम्यहं वायनमंत्रः विनायकस्यप्रतिमांवस्त्रयुग्मेनवेष्टितां तुभ्यंसंप्रददेविप्रप्रीयतांमेजनार्दनः विनायकगणेशानसर्वदेवनमस्कृत पार्वतीप्रियविघ्नेशममविघ्नंविनाशय इतिप्रार्थना अथकथा शौनकाद्याऋषिगणानैमिषारण्यवासिनः सूतंपौराणिकश्रेष्ठमिदमूचुर्वचस्तदा ऋषयऊचुः निर्विघ्नेनतुकार्याणिकथंसिध्यंतिसूतज अर्थसिद्धिःकथंनृणांपुत्रसौभाग्यसंपदः दंपत्योःकलहेचैवबंधुभेदेतथानृणां उदासीनेषुलोकेषुकथंसुमुखताभवेत् विद्यारंभेतथानृणांवाणिज्येचकृषौयथा नृपतेःपरचक्रस्यजयासिद्धिःकथंभवेत् कांदेवतांनमस्कृत्यकार्यसिद्धिर्भवेन्नृणां एतत्समस्तंविस्तार्यब्रूहिमेसूतपृच्छतः सूतउवाच सन्नद्धयोःपुराविप्राःकुरुपांडवसेनयोः पृष्टवान्देवकीपुत्रंकुंतीपुत्रोयुधिष्ठिरः युधिष्ठिरउवाच निर्विघ्नेनजयंयमस्त्वंवदत्वंदेवकीसुत कांदेवतांनमस्कृत्यसम्यग्राज्यंलभेमहि कृष्णउवाच पूजयस्वगणाध्यक्षमुमामलसमुद्भवं तस्मिन्

संपूजितेदेवेध्रुवंराज्यमवाप्स्यसि युधिष्ठिरउवा० मासिभाद्रपदेशुक्लेचतुर्थ्यांपूजयेन्नृप मासिमाघेश्रावणेवामार्गशीर्षेतथा
भवेत् गजवक्त्रंतुशुक्लायांचतुर्थ्यांपूजयेन्नृप यदाचोद्भवतेभक्तिस्तदापूज्योगणाधिपः प्रातःशुक्लतिलैःस्नात्वामध्याह्नेपूजये
न्नृप निष्कमात्रसुवर्णेनतदर्धार्धेनवापुनः स्वशक्त्यागणनाथस्यस्वर्णरौप्यमयाकृतिं अथवामृन्मयंकुर्याद्वित्तशाठ्यंनकारये
त् एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजं पाशांकुशधरंदेवंध्यायेत्सिद्धिविनायकं कृत्वापूजांप्रयत्नेनस्नाप्यपंचामृतैःपृथक् गणा
ध्यक्षेतिनाम्नावैगंधंदद्याच्चभक्तितः आवाहनार्घ्यपाद्यंचदत्वापश्चात्प्रयत्नतः रक्तवस्त्रयुगंचैवदद्याद्देवायभक्तितः विनाय
केतिपुष्पाणिधूपंचोमासुतायच दीपंरुद्रप्रियायेतिनैवेद्यंविघ्ननाशिने किंचित्सुवर्णपूजांचतांबूलंचसमर्पयेत् ततोदूर्वांकु
रान्गृह्यविंशतिंचैकमेवहि पूजनीयोप्रयत्नेनएभिर्नामपदैःसह गणाधिपनमस्तेस्तुउमापुत्राघनाशन विनायकेशपुत्रेति
सर्वसिद्धिप्रदायक एकदंतेभवक्त्रेतितथामूषकवाहन कुमारगुरवेतुभ्यंपूजनीयाःप्रयत्नतः दूर्वायुग्मंगृहीत्वातुगंधपुष्पाक्ष
तैर्युतं एकैकेनतुनाम्नावैदत्वैकंसर्वनामभिः अथैकविंशतिंगृह्यमोदकान्घृतपाचितान् स्थापयित्वागणाध्यक्षंसमीपेकुरु
नंदन दशविप्रायदातव्यास्स्वयंग्राह्यास्तथादश एकंगणाधिपेदद्यात्सनैवेद्यंनृपोत्तम विनायकस्यप्रतिमांब्राह्मणायनिवेदये
त् तुभ्यंसंप्रददेदेवप्रीयतांमेगजानन विनायकगणेशायसर्वदेवनमस्कृत पार्वतीप्रियविघ्नेशममविघ्नंविनाशय गणे
शःप्रतिगृह्णातिगणेशोवैददातिच गणेशस्तारकोभाभ्यांगणेशायनमोनमः कृत्वानैमित्तिकंकर्मपूजयेदिष्टदेवतां ब्रा
ह्मणान्भोजयेत्पश्चाद्भुंजीयात्तैलवर्जितः एवंकृतेधर्मराजेगणनाथस्यपूजनं विजयस्तेभवेन्नूनंसत्यंसत्यंमयोदितम्

वैष्णवीयासुदीक्षासु आदौपूज्योगणाधिपः तस्मिन्संपूजितेविष्णुरीशोभानुस्तथाह्युमा हव्यवाहमुखादेवाःपूजितास्युर्नसंशयः चंडि-
कायामातृगणाःपरितुष्टाभवंतिच तस्मिन्संपूजितेविप्राभक्त्यासिद्धिविनायके यइदंशृणुयान्नित्यंश्रावयेद्वासमाहितः सिध्यंति
सर्वकार्याणिविनायकप्रसादतः इतिसिद्धिविनायकव्रतंभविष्योक्तंसंपूर्णं मासिभाद्रपदेशुक्लेशिवलोकेप्रपूजिता तस्यांस्नानं
तथादानंउपवासोर्चनंतथा क्रियमाणंशतगुणंप्रसादाद्यातिकौनृप चतुर्थ्यात्प्रसंगतः अस्यामेवचंद्रदर्शनेदोषमाह पराशरः क-
न्यादित्येचतुर्थ्यांचशुक्लेचंद्रस्यदर्शनं मिथ्याभिदूषणंकुर्यात्तस्मात्पश्येन्नतंसदा तद्दोषशांतयेजाप्यंविष्णुनोक्तंसमंत्रकं सिंहः
प्रसेनमवधीत्सिंहोजांबवताहतः सकुमारकिमारोदीस्तवह्येषस्यमंतकः अथस्यमंतकोपाख्यानं नंदिकेश्वरउ॰ शृणुचै-
काग्रचित्तःसन्व्रतंगाणेश्वरंमहत् चतुर्थ्यांशुक्लपक्षेतुसदाकार्यंप्रयत्नतः सनत्कुमारयोगींद्रयदीच्छेच्छुभमात्मनः नारीवापुरुषो
वापियःकुर्याद्विधिवद्व्रतं मोचयत्याशुविप्रेंद्रसंकष्टाद्व्रतिनंमतं अपवादहरंचैवसर्वविघ्नप्रणाशनं कांतारेविषमेवापिरणेराजकु
लेथवा सर्वसिद्धिकरंविद्धिव्रतानामुत्तमंव्रतं गजाननप्रियंचाथत्रिषुलोकेषुविश्रुतं अतोनविद्यतेब्रह्मन्सर्वसंकष्टनाशनं सन
त्कुमारउ॰ केनचादौपुराचीर्णमर्त्यलोकेकथंगतं एतत्समस्तंविस्तार्यब्रूहिगाणेश्वरंमहत् नंदिकेश्वरउवाच चक्रेव्रतंजग
न्नाथोवासुदेवःप्रतापवान् आदिष्टोनारदेनैववृथालांछनमुक्तये सनत्कुमारउवाच षड्गुणैश्वर्यसंपन्नःसृष्टिसंहारका
रकः वासुदेवोजगद्व्यापीप्राप्तवान्लांछनंकथं एतदाश्चर्यमाख्यानंब्रूहित्वंनंदिकेश्वर नंदिकेश्वरउवाच भूमिभारनिवृत्य
र्थंवसुदेवसुतावुभौ रामकृष्णौसमुत्पन्नौपद्मनाभफणीश्वरौ जरासंधभयात्कृष्णोद्वारकांसमकल्पयत् विश्वकर्माणमाहूयपु

पुरींहाटकनिर्मितां तत्रषोडशसाहस्रंस्त्रीणांचैवशताधिकं भवनानिमनोज्ञानितेषांमध्येव्यकल्पयेत् पारिजाततरुंमध्येतासां
भोगायकल्पवृक्षंयादवानांगृहास्तत्रषट्पंचाशतकोटयः अन्येपिबहवोलोकावसंतिविगतज्वराः यत्किंचित्त्रिषुलोकेषुसुंदरंतत्रदृ-
श्यते सत्राजितप्रसेनाख्योपुत्रावुग्रस्यविश्रुतौ अंभोधितीरमासाद्यतन्मनस्कतयावसः सत्राजितस्तपस्तेपेसूर्यमुद्दिश्यबु-
द्धिमान् व्रतंनिरसनंगृह्यसूर्यसंबद्धलोचनः ततःप्रसन्नोभगवान्सत्राजितपुरस्थितः सत्राजितोपितुष्टावदृष्ट्वादेवंदिवाकरं तेजो
राशेनमस्तेस्तुनमस्तेसर्वतोमुख विश्वव्यापिनमस्तेस्तुहरिदश्वनमोस्तुते ग्रहराजनमस्तेस्तुनमस्तेचंद्ररोचिषे वेदत्रयनमस्तेस्तु
सर्वदेवनमोस्तुते प्रसीदपाहिदेवेशस्वदृष्ट्यामादिवाकर इत्थंसंस्तूयमानोसौदेवदेवोदिवाकरः स्निग्धगंभीरमधुरंसत्राजितमु
वाचह सूर्यउवाच वरंब्रूहिप्रदास्यामियत्तेमनसिवर्तते सत्राजितमहाभागतुष्टोहंतवनिश्चयात् सत्राजितउ॰ स्यमंत
कमणिंदेहियदितुष्टोसिभास्कर ददौतस्यचतद्रत्नंस्वकंठादवतार्यसः भास्करउ॰ भाराष्टकंशातकुंभंस्रवतेसौमहामणिः शु
चिष्मतासदाधार्यंरत्नमेतन्महोत्तमं सत्राजितक्षणेनैतदशुभंहंतिमानसं इत्युक्त्वांतर्दधेदेवस्तेजोराशिर्दिवाकरः तत्कंठरत्नज्व
लमानरूपीपुरींसकृष्णस्यविवेशसत्वरं दृष्ट्वातुलोकामनसादिवाकरंसंचिंतयंतोस्तमितस्तदृष्टयः समागतोयंहरिदश्वदीधिति
र्जनार्दनंद्रष्टुमसंशयेन नायंसहस्रांशुरितीहलोकाःसत्राजितोयंमणिकंठभास्वान् स्यमंतकंमहारत्नंदृष्ट्वातत्कंठमंडले स्पृहां
चक्रेजगन्नाथोनजहारमणिंततः सत्राजितोजातभयोयाचयिष्यतिमांहरिः प्रसेनायददौभ्रात्रेधार्योयंशुचिनात्वया एकदाकं
ठदेशेसौक्षिप्त्वातंमणिमुत्तमं मृगयाक्रीडनार्थायययौकृष्णेनसंयुतः अश्वारूढोशुचिश्चासौहतःसिंहेनतत्क्षणात् रत्नमादायसिं

ह्रोपिगछन्जांबवताहतः नीत्वासविवरेरत्नंददौपुत्रायजांबवान् पुरींविवेशकृष्णोपिस्वकैःसर्वैःसमावृतः प्रसेनोद्यापिनायातिह
नःकृष्णेननिश्चितं मणिलोभेनह्याकष्टंबांधवःपापिनाहतः द्वारकावासिनःसर्वेजनाऊचुःपरस्परं दृथापवादसंतप्तःकृष्णोपिनि
रगाच्छनैः सहैवतैर्ययारण्येदृष्ट्वासिंहेनपातितं प्रसेनंवाहनयुतंतत्पदानुचराःशनैः ऋक्षेणनिहतंदृष्ट्वाकृष्णाश्चर्क्षबिलंगतेः वि
वेशयोजनशतंअंधकारंस्वतेजसा निवारयन्ददर्शाग्रेप्रासादंबद्धभूमिकं तंकुमारंजांबवतोदोलायामितद्युतिं माणिक्यंलंब-
मानंचददर्शभगवान्हरिः रूपयौवनसंपन्नांकन्यांजांबवतींपुनः दोलांदोलयमानांचददर्शकमलेक्षणः महांतंविस्मयंचक्रे दृष्ट्वा-
तांचारुहासिनीं दोलांदोलयमानांचजगौगीतमिदंमुहुः सिंहःप्रसेनमवधीत्सिंहोजांबवताहतः सुकुमारकिमारोदीस्तवह्येषस्यमंत
कः मदनज्वरदाहार्तादृष्ट्वातंकमलेक्षणं उवाचललितंबालागम्यतांगम्यतामिति रत्नंगृहीत्वावेगेनयावच्छेतेतुजांबवान् इत्याक
र्ण्यहसन्शौरिः शंखंदध्मौप्रतापवान् आकर्ण्यसहसोत्थाययुयुधेऋक्षराट्ततः तयोर्युद्धमभूद्घोरंहरिजांबवतोस्तदा द्वारका
वासिनःसर्वेगतास्तेसप्तमेदिने मृतःकृष्णोनिरीक्षंतोनिःसंदिग्धंविचार्यच परलोकक्रियांचक्रुःपरेतस्यतुतेतदा एकविंशद्दि-
नंयावद्बाहुप्रहरणोविभुः युयुधेतेनऋक्षेणयुद्धकर्मणितोषितः जांबवान्प्राक्तनंस्मृत्वादृष्ट्वादेवबलंमहत् जांबवानुवाच
अजेयोहंसुरैःसर्वैर्यक्षराक्षसदानवैः त्वयाजितोहंदेवेशदेवस्त्वमसिनिश्चितं जानेत्वांवैष्णवंतेजोनान्यथाबलमीदृशं इतिप्र-
साद्यदेवेशंददौमाणिक्यमुत्तमं सुतांजांबवतींनामभार्यार्थेवरवर्णिनीं पाणिंवैग्राहयामासदेवदेवंचजांबवान् मणिमादाय
देवोपिजांबवत्यापिसंयुतः तद्वृत्तांतंसमाचष्टेद्वारकावासिनांस्वयं सत्राजितस्यमाणिक्यंदत्तवान्संसदिस्थितः मिथ्यापवाद

संश्रुत्यैतत्सबान्मधुसूदनः सत्राजितोपि संत्रस्तः कृष्णाय प्रददौ सुतां सत्यभामां महाबुद्धिर्ददौ सर्वगुणान्वितां शतधन्वाक्रूरमुख्या
यादवा दुष्टमानसाः सत्राजिता तेन ते वैरं चक्रू रत्नाभिलाषितः दुरात्मा शतधन्वापि गते कृष्णेथ पांडवान् सत्राजितं निहत्याशु मणिं जग्रा
ह पापधीः कृष्णा स्यपुरतः सत्या समाचष्टे विचेष्टितं अंतर्हृष्टो बहिः कोपि कृष्णः कपटनायकः बलदेवपुरो वाक्यमुवाच धरणीधरः
हत्वा सत्राजितं दुष्टो मणिमादाय गच्छति निहत्य शतधन्वानं गृहीत्वा रत्नमावयोः मम भोग्यं च तद्रत्नं भविष्यति स निश्चितं ए
तच्छ्रुत्वा भयत्रस्तः शतधन्वापि यादवः आहूयाक्रूरनामानं माणिक्यं प्रददौ च सः आरुह्य वडवां वेगान्निर्गतो दक्षिणां दिशं रथस्थाव
नुगच्छेतां तदा रामजनार्दनौ शतयोजनमात्रेण ममार वडवा तदा पलायमानो निहतः सह कृष्णोपदातिना रथस्थो बलदेवेतु हते
रत्नस्य लोभतः न दृष्टं तत्र तद्रत्नं बलदेवं पुरोवदत् तदाकर्ण्य महारोषादुवाच वचनं बली कपटी त्वं सदा कृष्ण लोभी पापी स नि
श्चितं अर्थाय स्वजनं हंसि कस्त्वां बधूं समाश्रयेत् अनेकशपथैः कृष्णो बलदेवं प्रसादयन् सोपि धिक्कष्टमित्युक्त्वा ययौ वैदर्भमंडलं
कृष्णोपि रथमारुह्य द्वारकां प्रययौ पुनः तथैवोचुर्जनाः सर्वे न साधीयान यं हरिः नि:काशितो रत्नलोभाज्ज्येष्ठो भ्राता बलो बली तच्छ्रु
त्वा दीनवदनः पापीयानिव संस्थितः वृथाभिशापासंतप्तो बभूव स जगत्पतिः अक्रूरोपि विनिष्क्रम्य तीर्थयात्रानिमित्ततः काशीं ग
त्वा स रवेनासौ यजन्यज्ञपतिं प्रभुं तोषमुत्पादयामास तेन द्रव्येण बुद्धिमान् स रालयग्रहैश्चित्रैर्नगरं समकल्पयत् न दुर्भिक्षं न वै
रोगा ईतयो न च विड्वरं शुचिनाधायते तत्र मणिः सूर्यस्य निश्चितं जानन्नपि हितत्सर्वं मानुषं भावमाश्रितः लोकाचारं तथा मायां मा
ज्ञानं च समाश्रितः बंधुवैरं समुत्पन्नं लांछनं समुपस्थितं वृथापवादबहुलं जायमानं कथं हरेत् इति चिंतातुरं कृष्णं नारदः समुपस्थि

तः गृहीत्वातत्कृतांपूजांसुखासनगतोब्रवीत् नारदउ॰ किमर्थंखिद्यसेदेवकिंवातेशोककारणं यथावृत्तंसमाचष्टेनारदायच
केशवः जानामिकारणंदेवयदर्थंलांछनंतव त्वयाभाद्रपदेशुक्लेचतुर्थ्यांचंद्रदर्शनं कृतंतेनसमुत्पन्नंलांछनंतुदृथैवहि श्रीकृष्णउ
वाच वदनारदमेत्वीघ्रंकोदोषश्चंद्रदर्शने किमर्थंतुद्वितीयायांतस्यकुर्वंतिदर्शनं नारदउ॰ गणनाथेनसंशप्तश्चंद्रमारूपगर्वतः
तद्दर्शनेनराणांहिवृथानिंदाभविष्यति श्रीकृष्णउवा॰ किमर्थंगणनाथेनशप्तश्चंद्रसुधामयः इदमाख्यानकंश्रेष्ठंयथावद्व
क्तुमर्हसि नारदउवाच गणानामाधिपत्येचरुद्रेणविहितःपुरा अणिमामहिमाचैवलघिमागरिमातथा प्राप्तिःप्राकाम्यमी
शत्वंवशित्वंचाष्टसिद्धयः भार्यार्थंप्रददौदेवोगणेशस्यप्रजापतिः पूजयित्वागणाध्यक्षंस्तुतिंकर्तुंप्रचक्रमे ब्रह्मोवाच
गजवक्त्रगणाध्यक्षलंबोदरवरप्रद विघ्नाधिराजदेवेशसृष्टिसंहारकारक संपूजयेद्गणाध्यक्षंमोदकाद्यैःप्रयत्नतः तेषांप्रजाय
तेसिद्धिर्निर्विघ्नेननसंशयः असंपूज्यगणाध्यक्षंयेवांछंतिसुरासुराः नतेषांजायतेसिद्धिः कल्पकोटिशतैरपि त्वद्भक्त्यातुगणाध्य
क्षविष्णुःपालयतेसदा रुद्रोपिसंहरत्याशुत्वद्भक्त्यैवकरोम्यहं इत्थंसंस्तूयमानोसौदेवदेवोगजाननः उवाचपरमप्रीतोब्रह्माणंज
गतांपतिः श्रीगणेशउवाच वरंब्रूहिप्रदास्यामियत्तेमनसिवर्तते ब्रह्मोवाच क्रियमाणस्यमेसृष्टिर्निर्विघ्नंजायतांप्र
भो एवमस्त्वितिदेवोसौगृहीत्वामोदकान्करे सत्यलोकात्समागत्यस्वेच्छयागगनेशनैः चंद्रलोकंसमासाद्यचलितोगणनायकः
उपहासंतदाचक्रेसोमोरूपमदान्वितः तंदृष्ट्वाकोपताम्राक्षोगणनाथःशशापह दर्शनीयःसुरूपोहंसुंदरश्चाहमित्यथ गर्वि
तोसिशशांककलंफलंप्राप्स्यसिसत्वरं अद्यप्रभृतिलोकास्त्वांनहिपश्यंतिपापिनं येपश्यंतिप्रमादेनत्वांनराभृगलांछनं मिथ्या

भिशापसंयुक्ताभविष्यंतीहतेध्रुवं हाहाकारोमहान्जातः श्रुत्वाशापंचभीषणं अत्यंतम्लानवदनश्चंद्रोजलमथाविशत् कुमुदंको
मुदीनाथःस्थितस्तत्रकृतालयः ततोदेवर्षिगंधर्वानिराशोद्विग्नमानसाः तुरासाहंपुरोधायजग्मुस्तेतंपितामहं देवंशसंकश्चंद्रस्य
गणेशस्यचचेष्टितं दत्तःशापोगणेशेनकथयामासुरादरात् विचार्यभगवान्ब्रह्मातान्सुरानिदमब्रवीत् गणेशशापोदेवेंद्र
शक्यतेकेनवान्यथा कर्तुंरुद्रेण नमयाविष्णुनाचापिनिश्चितं तमेवदेवदेवेशंव्रजध्वंशरणंसुराः सएवशापमोक्षंचकरिष्यति
नसंशयः देवाऊचुः केनोपायेनवरदोगजवक्त्रोगणेश्वरः पितामहमहाप्राज्ञ तदस्माकंवदप्रभो पितामहउवाच च
तुर्थ्यांदेवदेवोसौपूजनीयःसदैवहि कृष्णपक्षेविशेषेणानक्तंकुर्याच्चतद्व्रतं अपूपैर्घृतसंयुक्तैर्मोदकैःपरितोषयेत् मधुरान्नंहवि
ष्यंचस्वयंभुंजीतवाग्यतः स्वर्णरूपंगणेशस्यदातव्यंद्विजसत्तमैः शक्त्याचदक्षिणांदद्याद्वित्तशाठ्यंनकारयेत् एवंसमेत्यते
सर्वेप्रेषयामासगीष्पतिं सगत्वाकथयामासचंद्रायब्रह्मणोदितं व्रतंचक्रेततश्चंद्रोयथोक्तंब्रह्मणापुरा आविर्बभूवभगवा
न्गणेशोव्रततोषितः तंक्रीडमानंगणनायकंचतुष्टावदृष्ट्वातुकलानिधानः त्वंकारणंकारणकारणानांवेत्तासिवेद्यंचविभोप्रसी
द प्रसीददेवेशजगन्निवासगणेशलंबोदरवक्रतुंड विरिंचिनारायणपूज्यमानक्षमस्वमेगर्वकृतंचहास्यं येत्वामसंपूज्यगणेश
नूनंवांछंतिमूढाःकृतार्थसिद्धिं तेदैवनष्टाविस्मृतंचलोकेज्ञातोमयातेसकलःप्रभावः येचाप्युदासीनतरास्तुपापास्तेयांति
वासंनरकेसदैव हेरंबलंबोदरमेक्षमस्वदुश्चेष्टितंतत्करुणासमुद्र एवंसंस्तूयमानोसौचंद्रेणाथगजाननः गणेशउवाच
तुष्टोहंतवदास्यामिनैतद्देयंमयातव ततोब्रह्मादयःसर्वेसमाजग्मुर्भयार्दिताः विशापंकुरुदेवेशप्रार्थयामोवयंतव विशापमक

रोच्चंद्रंकमलासनगोरवात् शुक्लपक्षेचतुर्थ्यांतुयेपश्यंतिसदेवहि मिथ्यापवादमावर्षंप्राप्स्यंतीहनसंशयः मासादोपूर्वमेवत्वांये
पश्यंतिसदाजनाः चतुर्थ्यांशुक्लपक्षस्यतेषांदोषोनजायते तदाप्रभृतिलोकोयंद्वितीयायांकृतादरः पुनरेवतुपप्रच्छकलावान्गण
नायकं केनोपायेनदेवेशतुष्टोभवसित द्वद गणेशउवाच सदाकृष्णचतुर्थ्यांतुमोदकाद्यैःप्रपूज्यमां रोहिण्यासहितंत्वांचस
मभ्यर्च्यविधानतः यथाशक्त्याचमद्रूपंस्वर्णेनपरिकल्पितं दत्वाद्विजायमुक्त्वाथकथांश्रुत्वाविधानतः सदातस्यकरिष्यामिसंक
ष्टस्यनिवारणं भाद्रशुक्लचतुर्थ्यांतुमृन्मयीप्रतिमाशुभा हेमाभावेतुकर्तव्यानानापुष्पैःप्रपूज्यमां ब्राह्मणान्भोजयेसम्यक्
जागरंचविशेषतः स्थापयेदव्रणंकुंभंधान्यस्योपरिशोभितं यथाशक्त्याचमद्रूपंशातकुंभेननिर्मितं वस्त्रद्वयसमाछिन्नं मोदका
द्यैःप्रपूज्यमां रक्तांबरधरोमर्त्योब्रह्मचर्यव्रतःशुचिः राजतस्यतुरूपंमेयथाशक्त्याविनिर्मितं वस्त्रंशिवप्रियायेतिउपवस्त्रंगणा
धिपे गंधंलंबोदरायेतिपुष्पंसिद्धिप्रदायके धूपंगजमुखायेतिदीपंमूषकवाहने विघ्ननाथायनैवेद्यंफलंसर्वार्थसिद्धिदे तांबूलं
कामरूपायदक्षिणांधनदायचइक्षुदंडैर्मोदकैश्चहोमंकुर्याच्चनामभिः विसर्जनंततःकुर्यात्सर्वसिद्धिप्रदायकं एवंसंपूज्यविघ्नं
शंकथांश्रुत्वाविधानतः मंत्रेणानेनतत्सर्वंब्राह्मणायनिवेदयेत् दानेनानेनदेवेशप्रीतोभवगणेश्वर सर्वत्रसर्वदादेवनिर्विघ्नं
कुरुसर्वदा मानोन्नतिंचराज्यंचपुत्रपौत्रान्प्रदेहिमे गाश्चधान्यंचवासांसिदद्यात्सर्वंस्वशक्तितः दत्वातुब्राह्मणैःसर्वैःस्वयंभुं
जीतवाग्यतः मोदकापूपमधुरंलवणक्षारवर्जितं एवंकरोतियश्चंद्र त्तस्याहंसर्वदाजयं सिद्धिंचधनधान्येचददामिविपुलांप्र
जां इत्युक्त्वांतर्दधेदेवोविघ्नराजोविनायकः तद्व्रतंकुरुकृष्णात्वंततःसिद्धिमवाप्स्यसि नारदेनैवमुक्तश्च व्रतंचक्रेहरिःस्वयम्

मिथ्यापवादसंशुद्धि द्वितीयं कृष्णयाचितं येशृण्वंति तवाख्यानं स्यमंतकमणीयकं चंद्रस्य चरितं सर्वं तेषां दोषो न जायते भाद्रशुक्ल
चतुर्थ्यां तु यश्चित्त्वं चंद्रस्य दर्शनं जातं तत्परिहारार्थं श्रोतव्यं सर्वमेव हि यदायदा मनः कष्टं संदेह उपजायते तदा तदा च श्रोतव्यं आख्या
नं कष्टनाशनं एवमुक्त्वा गतो देवो गणेशः कृष्णतोषितः यदायदाश्रयेयसि कार्य उत्थितो नारी नरस्त्वाथ करोति तद्व्रतं सिध्यंति कार्या-
णि मनेप्सितानि किं दुर्लभं विघ्नहरे प्रसन्ने इति श्रीस्कंदपुराणे नंदिकेश्वरसनत्कुमारसंवादे स्यमंतकोपाख्यानं संपूर्णं अथ क
पर्दी विनायकव्रतं श्रावणस्य सिते पक्षे चतुर्थ्यामेकभुग्व्रती व्रतं कुर्याद्गणेशस्य मासमेकव्रतं चरेत् सर्वसिद्धिकरं नृणां स्क
स्कंदेचैव स्कंदेश्वर तद्विधिः तिथ्यादिस्मृत्वा मम चतुर्विध पुरुषार्थसिध्यर्थं कपर्दिगणेशव्रतमहं करिष्ये मूलमंत्रेण षडंगन्यासं
कृत्वा पूजां समारभेत् ॐ नमो भगवते सकलगुणात्मशक्तियुक्तानंतयोगपीठाय नमः अष्टदलं कारयेयुः ॐ तीव्रायैनमः ज्वा
लिन्यैनमः नर्मदायै० कामरूपिण्यै० उग्रायैनमः तेजोवत्यै० मध्ये विघ्ननाशिन्यै० अथ ध्यानं एकदंतं महाकायं लंबोदरगजा
ननं विघ्ननाशकरं देवं गणेशं प्रणमाम्यहं इमां पूजां गृहाणेश कपर्दिगणनायक आगच्छ इति त्रिवारं पठेत् विनायक नमस्तुभ्य
मुमामलसमुद्भव इमां मयाकृतां पूजां गृहाण सुरसत्तम सहस्रशीर्षेत्यावाहनं अलंकारसमायुक्तं मुक्तामणिविभूषितं स्वर्णसिं
हासनं चारु प्रीत्यर्थं प्रतिगृह्यतां पुरुष एवेदमासनं गौरीसुत नमस्तेस्तु शंकरप्रियकारक भक्त्या पाद्यं मया दत्तं गृहाण गणनायक
एतावानस्येति पाद्यं व्रतमुद्दिश्य विघ्नेश गंधपुष्पादिसंयुतं गृहाणार्घ्यं मया दत्तं सर्वसिद्धिप्रदायक तस्माद्विराळाचमनीयं अ-
नाथनाथ सर्वज्ञ गीर्वाणपरिपूजित स्नानं पंचामृतं देव गृहाण गणनायक आप्यायस्वेति दुग्धं दधिक्राव्णोइति दधिः घृतंमिमिक्षे

तिघृतं मधुवातेतिमधु स्वादुःपवस्वेतिशर्करा इतिपंचामृतस्नानं गंगाजलंसमानीतंहेमांभोरुहवासितं स्नानेस्वीकुरुविघ्नेश कपर्दिगणनायक यत्पुरुषेणेतिस्नानं हरिद्रास्वद्भूयंदेवदेवांगवसनोपमा भक्त्यादत्तंगृहाणेशलंबोदरहरात्मज तंयज्ञमितिव- स्त्रं नानालंकारसंयुक्तंनानारत्नविभूषितं अनेकदिव्याभरणंप्रीत्यर्थंप्रतिगृह्यतां आभरणानि राजतंब्रह्मसूत्रंचकांचनंचोत्तरीयकं भालचंदनमस्तुभ्यंगृहाणवरदोभव तस्माद्यज्ञादितियज्ञोपवीतं गंधकर्पूरसंयुक्तंदिव्यचंदनमुत्तमं विलेपनंसुरश्रेष्ठप्रीत्यर्थंप्रति गृह्यतां तस्माद्यज्ञात्सर्वहुतेतिगंधं अक्षतान्धवलान्देवसिद्धगंधर्वपूजित भक्त्यादत्तान्गृहाणेमान्सर्वसिद्धिप्रदायक अक्षता- न् सुगंधीनिचपुष्पाणिऋद्धिसिद्धिप्रदायक कपर्दिगणनाथेशश्वेतपुष्पंददाम्यहं तस्मादश्वेतिपुष्पं अथांगपूजा कपर्दिगण नाथाय॰ पादौपू॰ गणेशाय॰ जानुनीपू॰ गणनाथा॰ ऊरूपू॰ गणक्रीडाय॰ कटिंपू॰ वक्रतुंडाय॰ हृदयं॰ लंबोदराय॰ कंठपू॰ गजानना य॰ स्कंधौपू॰ हेरंबाय॰ हस्तौपू॰ विकटाय॰ मुखंपू॰ विघ्नराजाय॰ नेत्रेपू॰ धूम्रवर्णा॰ शिरःपू॰ कपर्दिनेन॰ सर्वांगं॰ अथावरणपू जा ईशानाय॰ अघोराय॰ तत्पुरुषा॰ वामदेवाय॰ सद्योजाताय॰ इतिप्रथमावरणं १ वक्रतुंडाय॰ एकदंता॰ महोदराय॰ गजाननाय॰ विकटाय॰ विघ्नराजा॰ धूम्रवर्णा॰ विनायका॰ द्वितीयावरणं २ ब्राह्म्यै॰ माहेश्वर्यैन॰ कौमार्यै॰ वैष्णव्यै॰ वाराह्यै॰ इंद्राण्यै॰ चामुंडायै॰ महालक्ष्म्यै॰ तृतीयावरणं॰ ३ इंद्राय॰ अग्नये॰ यमाय॰ निर्ऋतेन॰ वरुणा॰ वायवे॰ सोमाय॰ ईशाना॰ वरुणनिर्ऋतिमध्येअनंता य॰ इंद्रेशानयोर्मध्येब्रह्मणेन॰ इतिचतुर्थावरणं॰ ४ वज्रायनमः शक्तये॰ दंडाय॰ खड्गाय॰ पाशाय॰ अंकुशाय॰ गदायै॰ त्रिशू लाय॰ चक्राय॰ अब्जाय॰ इतिपंचमावरणं॰ ५ दशांगंगुग्गुलुंधूपंचंदनागरुसंयुतं उमासुतनमस्तुभ्यंगृहाणवरदोभव यत्पु

रुक्षैव्यदधुरितिधूपं गृहाणमंगलंदेवघृतवर्त्तिसमन्वितं दीपंज्ञानप्रदंचारुरुद्रप्रियनमोस्तुते ब्राह्मणोस्येतिदीपं नैवेद्यंगृ
ह्यतां॰ चंद्रमामनसो॰ नैवेद्यं आचमनं इदंफलमितिफलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां अग्निर्ज्योतिरविर्ज्योति
ज्योतिरग्निर्विभावसुः ज्योतिस्त्वंसर्वदेवानांगणाधिपनमोस्तुते नीराजनं यानिकानिचपा॰ नाभ्याआसीत्प्रदक्षिणा नमोस्त्व
नंतायसह॰ सप्तास्यासन्नितिनमस्कारः गणाधिपनमस्तेस्तुनमस्तेस्तुगजानन लंबोदरनमस्तेस्तुनमस्तेत्वविकासुत एकदं
तनमस्तेस्तुनमस्तेस्तुभवप्रिय स्कंदाग्रजनमस्तेस्तुनमस्तेस्त्वप्रसिलप्रद कपर्दिगणनाथेशसर्वसंपत्प्रदायिने यज्ञेनयज्ञमिति
मंत्रपुष्पांजलिः अथब्रह्मचारिपूजा आकर्णानमुष्टिगणकान्विंशत्यष्टौवराटकान् विप्रायबटवेदद्याद्गंधपुष्पार्चितायच तं
दुलान्वेतत्तोदद्यात्साकेचान्येचशोभनात् कपर्दीगणनाथोसौप्रीयतांतंदुलैःसदा कथांश्रुत्वाविधानेनदेवमुद्वासयेत्ततः इति
कपर्दीगणनाथपूजा अथकथा कदाचिदुपविष्टश्च पार्वत्यासहशंकरः द्यूतेच्छाकिंअस्तिदेविक्रीडितुंतवकिंशुभे दुरोदर
मिषाज्जेतुंवांछितंप्रत्युवाचसा ममापिअस्तिसापेक्षादीयतेचेत्पणोमम तवकिंकिमभीष्टंतुदास्यामिपरमेश्वरि लोकत्रयं
वाइच्छास्तेकिमन्यैर्वचनैर्वृथा पृच्छामित्वांवचोदेविदातव्यंकिंकिमिच्छसि विश्वासोयेनजायेततद्दाद्यशुभानने वाक्यमेवंवि
धंश्रुत्वाशर्वाणीचशिवांतिके नविश्वासोस्तितेवाक्येजित्वादास्यसिमत्पणः इतिश्रुत्वावचोदेव्याःशंकरःप्राहनिश्चयं पणः
प्रकल्प्यतांदेविदीयतेदंनसंशयः भावंसंचिंत्यदेवस्यसत्वराक्रीडितुंययौ आयुधानिततोदेवः पणेयोजितवान्हरः त्रि
शूलंत्रिदशाच्छर्वाज्जितवत्येववल्लभा तस्मिन्कर्मणितंजित्वापणमन्यंशिवाग्रहीत् एवंडमरुकादीनितान्यन्यान्यंग्रपत्त

रथक् दीनोभूत्वामहादेवोभवानीमब्रवीदिति शार्दूलचर्मतन्मध्येदेहिमेगिरिजेशुभे नचैवंवक्तुमुचितंमहादेवपणेगते पणेजि
तेनदास्यामिपूर्वमुक्तोसितत्स्मर अविचिंत्यब्रवीषित्वंजगदीशकृपानिधे इतिश्रुत्वावचोदेव्याः कुपितोसौमहेश्वरः आह्लादशदि
नंदेविनकरिष्यामिभाषणं इत्युक्त्वाचमहादेवस्तत्रैवांतरधीयत रक्षरक्षमहादेवकिंजीवनमतःपरं इतिसंचिंत्यसाद्रष्टुमुद्यानंप्र
त्यपद्यत गिरिजातत्रवनितावृंदंदृष्ट्वाब्रवीदिति किमर्थमागताःसर्वाः किमेतत्क्रियतेधुना कपर्दीगणनाथस्यव्रतंकर्तुमिहाग
ताः तस्यपूजांविहायादौइदानींश्रूयतेकथा किमर्थंतद्व्रतंनार्योयुष्माभिःक्रियतेवने फलमस्यकिमस्तीतिपार्वतीप्राहताःप्रति
पृच्छतेकिलयादेविनरैर्नारीभिरंबिके अभीष्टसिद्धिरस्मिंस्तुवर्ततेभुवनत्रये इतिश्रुत्वावचस्तासांपार्वतीप्राहताःप्रति मातःकु
पित्वाभगवान्निर्गतस्तुमहेश्वरः तस्यसंदर्शनायैवकरिष्येव्रतमुत्तमम् व्रतस्यैतस्यकिंदानंविधानंकीदृशंमम सर्वंविचिंत्यमनसा
कथयंतुसुरांगनाः कालोविधानंदानंचव्रतस्यास्यफलंतथा तत्सर्वंसावधानेनवक्ष्यामःशृणुपार्वति स्त्रियाऊचुः पातादि-
दोषरहितेसच्चतुर्भानुवासरे इषेमासिव्रतंसम्यक्गणेशार्पितमानसैः तैलतांबूलभोगादीन्वर्जयित्वाशिवप्रिये मंदवारेतुभुंजी
यादेकवारमितंयथा प्रातःकालेशुचिर्भूत्वास्नानंकुर्याद्विधानतः वापीकूपतडागेषुनद्यांशुक्लतिलैःसह संध्यादिकंयथाचितं
सर्वंन्निर्वर्त्ययत्नतः अर्चनागारमासाद्यगोमयेनोपलिप्यच गोचर्ममात्रंतन्मध्येकुर्याद्गंधेनमंडलं तन्मध्येष्टदलंपद्मंतन्मध्येगण
नायकं पूजयेत्स्वच्छकुसुमैर्हरिद्रामिश्रिताक्षतैः गांगींगूंगैंगौंगश्चन्यासंकृत्वाततःपरं मंत्रेणानेनकुसुमैर्देवमावाह्यनिक्षिपेत् अ
थवागणनाथस्यप्रतिमामथपूजयेत् ततःस्वस्थचित्तःसन्ध्यानंकुर्याद्विधानतः एकदंतंमहाकायंलंबोदरगजाननं विघ्ननाश

करदेवंहेरंबंप्रणमाम्यहं इमांपूजांगृहाणेशकपर्दिगणनायक आगच्छेतिनिरुच्चार्यकुर्यादावाहनादिकं पुराणमंत्रैरथवावेदमं
त्रैश्चषोडशैः पूजयेदुपचारैश्चमूलमंत्रेणपार्वति तत्तत्प्रकाशकैर्मंत्रैर्गंधपुष्पाक्षतादिभिः इंद्रादिलोकपालांश्चपूजयेद्देवसन्निधौ
लंबोदरनमस्तेस्तुनमस्तेस्त्वंविकासकृत एकदंतनमस्तेस्तुनमस्तेस्त्वीप्सितप्रद कपर्दीगणनाथस्यसर्वसंपत्प्रदायिनः पूजाप्र-
कारःकथितस्तवनाभिः शुचिस्मिते अकृणानंजलिमतान्हविष्यव्रीहितंडुलान् स्वछान्यत्नेनसंशोध्यचूर्णंकुर्यान्महेश्वरि शिवे
तुचूर्णंप्रथमेभानुवारेर्धचंद्रवत् कुर्याद्द्वितीयसंचूर्णंचंद्रवत्सिष्टकाष्टकं तृतीयेपायसान्नंचदध्यन्नंचचतुर्थके आनीयाष्टांशकंसम्य
क्देवंसंपूज्यभक्तितः कल्पितान्यानिविधिवद्द्विधंतेयानितानिवै तेषांतेषामष्टमांशंतस्मैसम्यक्समर्पयेत् ततः शुद्धायबटवेदद्या
देकंवराटकं सुष्वापितंतंडुलाश्चभुंजीयाद्भागसप्तकं याःकामयंतेयेभक्ताः पूजास्तेप्राप्नुवंतिहि इत्यूचुस्तांभवानींतुस्त्रियो
विगतकल्मषाः तासांतद्वचनंश्रुत्वातदानीमकरोद्व्रतं तत्रक्षणाच्चविश्वेशः प्रत्यक्षः समजायत त्रिलोकनाथदेवेशकरुणाकरशंक
र दीनामनन्यगतिकांभक्तवत्सलपाहिमां तुष्टश्चशंकरःप्राहकथयेतत्त्वयाकृतं कपर्दीगणनाथस्यमाहात्म्यात्किंनसिध्यति व्र
तस्यैतस्यमाहात्म्यंज्ञातुंवांछितवान्स्वयं उद्दिश्यागमनंविष्णोरकरोत्तद्व्रतंशिवः तदानींगरुडारूढः समागत्यतमब्रवीत् तदागम
निमित्तंकिंकिंकृतंशंकर त्वया ममापिज्ञापनीयंतदित्युक्तेज्ञापयच्छिवः अथैतदकरोद्विष्णुरुद्दिश्यागमनंविधेः आगतः सन्वि
धिःशीघ्रंममाज्ञापयमाधव प्रयोजनंचास्तिविधेतवागमनकारणं एकदंतव्रतंकिंतद्भवत्येवनसंशयः इंद्रागमनमुद्दिश्यतदानींते
नतत्कृतं आगत्यसहसासोपिममाज्ञापयविश्वसृट् हेरंबव्रतमाहात्म्यंदृष्टमेवंकृतंमया ममापिज्ञापनीयंतदित्युक्तोविधिनोदितं

विक्रमादित्यमुद्दिश्यवज्जीनदकरोत्त्वसः आगतोहंमनुष्यस्त्वांइंद्रमत्तकिमीप्सितं कपर्दीहस्तिवदनव्रतमाहात्म्यमीदृशं इतिज्ञातुं
मयाभीष्टं तल्लब्धंतदाब्रवीत् विधानंतस्यमाहात्म्यंज्ञापनीयंत्वयेतिमे पप्रच्छविक्रमादित्यउत्सुकश्चपुरंदरं पुरंदरमुखाज्ज्ञात्वान
त्सर्वंस्वपुरींप्रति सायुधःप्रययौराजापराक्रमपरायणः कपर्दीशव्रतंकृत्वामहिष्यापुरतोवदत् जेष्यामिसकलान्शत्रून्प्राप्स्यामि
चमहोन्नतिं तस्यव्रतस्यकिंदानंइतिसाप्राहविक्रमं प्रत्युवाचक्रियामर्कोदद्याद्देकंवराटकं एवंचेत्तत्रकर्तव्यंमद्गेहेपत्रकुत्रचित्
एवंराज्ञोमुखाच्छ्रुत्वादूषयामासतद्व्रतं कपर्दीगणनार्थेनकिंस्यान्ममस्फशोभनं नक्रियतेमयानाथकपर्दीरव्यंतुयद्व्रतं इत्यादिदू
षणादाशुकुष्टव्याधिमवाप्स्यसि कुष्टव्याधियुतांपत्नींदृष्ट्वाराजाब्रवीत्तदा नस्थातव्यंत्वयात्रेतिसर्वराज्यंविनश्यति अर्कस्य
वचनंश्रुत्वाशय्याश्रममगात्त्वसा परिचर्यावशात्तुष्टास्तस्याःसर्वेमुनीश्वराः निश्चित्ययोगमार्गेणसर्वेतामब्रुवन्सती कपर्दी
शव्रताक्षेपोदुःखंप्राप्तंत्वयाशुभे कुरुषतद्व्रतंसम्यक् सर्वंभद्रंभविष्यति ऋषीणामाज्ञयासाचकपर्दीशव्रतंमहत् तदानींराजम
हिषीदिव्यदेहमवापसा अस्मिन्नंतरितेकाले भवान्यासहशंकरः अगमद्वृषारूढोभुवनानिचतुर्दश मध्येमार्गेद्विजेंद्रस्यरोदनं
भववल्लभा श्रुत्वाब्राह्मणमारोदीःकिमर्थंतवरोदनं निकिमप्यस्तिमेदुःखंदारिद्र्याद्देवकेवलात् दुःखंचेत्तवविप्रेंद्रकपर्दीश
व्रतंकुरु एतत्कर्तुंव्रतंदेविसामर्थ्यंनास्तिमेधुना विक्रमार्कपुरेसर्ववैश्योदास्यतितत्कुरु कपर्दीशव्रतेनैवमंत्रित्वंप्राप्स्यसिध्रु
वं दारिद्र्यमोचनंसम्यक्भविष्यतिनसंशयः गृहंप्रतिसमागम्यगृहीत्वातंदुलान्द्विजः वैश्यान्गृहीत्वानत्सर्वंतदानीमकरोद्व्र
तं तस्मिन्नर्कपुरेविप्रस्तन्मंत्रित्वमवापसः आज्ञापयत्कपर्दीशव्रतंवैश्यस्यतत्क्षणात् अकरोत्स्वसुतायाश्चविक्रमःपतिरस्त्विति

व्रतप्रभावादादित्यसुपर्येमेविशःकृता अनेनैवविवाहेन परांप्रीतिमवापसा एवमंतरितेकालेमृगयार्थंप्रविश्यसः गहनंक्षुत्तृषार्त्तःशून्य
योसुनिवराश्रमं उपचारैःश्रमंनीत्वातथामकोमनोरमां रमणीयाश्रमेतस्मिन्दर्शयामासविक्रमःइष्ट्वापृच्छन्मुनीन्सर्वान्दयाचैषाममंग
ना तवेयंमहिषीत्वत्कानयेनास्मैसमर्पयत् समंमहिष्यास्वपुरींदिव्यनारीनरैर्युतां हृष्टःसन्विक्रमादित्यःसंप्रमासाहभूपतिः कपर्दी
गणनाथस्यव्रतंकृत्वास्त्रियासह अथजह्विक्रमादित्यःसकलंशत्रुमंडलं गणनाथव्रतेनैवपुत्रपौत्रवृतश्वसः धनधान्यादिसंपद्भिःकृत्वे
नन्यवसद्भुवि एतद्व्रतंयेकुर्वंतियाश्वकल्पविधानतः चतुर्णांपुरुषार्थानांतेषांप्राप्तिर्भवेध्रुवं हयमेधस्यविघ्नंतुसंजातेसगरःपुरा इद
मेवव्रतंकृत्वापुनरश्वंप्रलब्धवान् इमांकथांपंचवारंप्रथमेभानुवासरे द्वितीयेचतृतीयेचषड्वारंशृणयाद्व्रती इतिश्रीस्कंदपुराणे
कपर्दीविनायकव्रतकथासमाप्ता आश्विनकृष्णाचतुर्थ्यांदशरथललिताव्रतं पौर्णिमांतमासेनकार्तिकवद्यचतुर्थी देशकालौसं
कीर्त्य ममपुत्रपौत्रादिसकलकामनासिद्ध्यर्थंदशरथललिताप्रीत्यर्थंयथामीलितोपचारैःपूजनमहंकरिष्ये आसनादिकलशारा
धनंकरिष्ये आगच्छललितेदेविसर्वसंपत्प्रदायिनि यावत्पूजांकरिष्यामितावत्त्वंसन्निधौभव आवाहयामि नीलकौशेयवसनां
हेमाभांकमलासनां भक्तानांवरदांनित्यंललितांचिंतयाम्यहं ध्यायामि कार्तस्वरमयेदिव्येनानामणिसमन्विते अनेकरत्न
संयुक्तेआसनेसंविशस्वभो आसनं गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां पाद्यं
दक्षस्यदुहितासाध्वीरोहिणीनामविश्रुता पुत्रसंपत्तिकार्यार्थंगृहाणार्घ्यंनमोस्तुते अर्घ्यं क्षीरोदार्णवसंभूतलक्ष्मीबंधो
निशाकर गृहाणार्घ्यंशशांकेशरोहिण्यासहितःशशी अर्घ्यं पाटलोशीरकर्पूरसुरभिःस्वादुशीतलं तोयमाचमनीयार्थं शिशि

रंप्रतिगृह्यतां आचमनं पयोदधिघृतंमध्वाशर्करासुगुणान्वितं पंचामृतेनस्नपनंप्रीयतांपरमेश्वरी पंचामृतस्नानं मंदा
किन्याःसमानीतंहेमांभोरुहवासितं स्नानायतेमयाभक्त्यानीरंस्वीक्रियतांशिवे स्नानं सर्वसत्वाधिकेसौम्येलोकलज्जा
निवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां वस्त्रं मलयाचलसंभूतंघनसारंमनोहरं हृदयानंदनंचारुचंदनंप्रतिगृह्यतां चंद
नं हरिद्रांकुंकुमंचैवसिंदूरंकज्जलान्वितं सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्यं कूष्मांडैर्मालतीकाद्यैर्जातीपु-
ष्पैःसुगंधिभिः मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यतां पुष्पाणि॰ अथांगपूजा दशांगललितायैनमः पादौपूजयामि भवा
न्यै॰ गुल्फौपू॰ सिद्धेश्वर्यै॰ जंघेपू॰ भद्रकाल्यै॰ जानुनीपू॰ श्रियैनम॰ ऊरूपू॰ विश्वरूपे॰ कटीपू॰ देव्यै॰ नाभिंपू॰ वरदायै॰ कुक्षिंपू॰ शि
वायै॰ हृदयंपू॰ वागीश्वर्यै॰ स्कंधौपू॰ महादेव्यै॰ बाहू॰ भद्रायै॰ करौपू॰ पद्मिन्यै॰ कंठंपू॰ सरस्वत्यै॰ मुखं॰ कमलासनायै॰ नासिकां
पू॰ महिषमर्दिन्यै॰ नेत्रेपू॰ लक्ष्म्यै॰ कर्णौ॰ भवान्यै॰ ललाटंपू॰ विंध्यवासिन्यै॰ शिरःपू॰ सिंहवाहिन्यै॰ सर्वांगंपू॰ वनस्पतिरसो
द्भूतोगंधाढ्यश्चमनोहरः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां धूपं॰ साज्यंचवर्ति॰ दीपं॰ नैवेद्यं॰ मध्येपानीयं॰ इदंफलमि-
तिफलं पूगीफलंमहद्दिव्यं॰ तांबूलं हिरण्यगर्भेतिदक्षिणां कर्पूरगौरं॰ नीराजनं नमोदेव्यैमहादेव्यै॰ मंत्रपुष्पं यानिकानिच
पापानि॰ प्रदक्षिणां अन्यथाशरणंनास्तित्वमेवशरणंमम तस्मात्कारुण्यभावेनरक्षमेपरमेश्वरि दशरथनामयादेवीदशपु-
ष्पादशाक्षरा पुत्रार्थीकामयेदेविसर्वान्कामान्प्रयच्छमे प्रार्थना दशरथललितादेव्याव्रतंसंपूर्णहेतवे वाणकंद्विजवर्यायस
हिरण्यंददाम्यहं वायनं सवाहनाशक्तिसुतावरदापूजितामया ममानुग्रहकुर्वाणागच्छत्वंनिजमंदिरं अथकथा सूत

उवाच ॥ अरण्येवर्तमानास्तेपांडवादुःखकर्षिताः कृष्णंदृष्ट्वामहात्मानंप्रणिपत्ययथाक्रमं युधिष्ठिरउ० देवदेवजगन्नाथल
क्ष्मीप्रियजनार्दन कथयस्वसुरश्रेष्ठदशांगललिताव्रतं कथमेषासमुत्पन्नाकेनादौपूजिताभुवि पूजनात्किंफलावाप्तिःकथय
स्वसुरेश्वर. श्रीकृष्णउ० पुरात्रेतायुगेपार्थराजादशरथोमहान् तस्यभार्यातुकौसल्या अपुत्रासापतिव्रता अथाजगामक
स्मिंश्चिदृष्यशृंगऋषीश्वरः स्वागतंचकृतंराज्ञासोपविष्टोवरासने तेनराज्ञामुनिश्रेष्ठस्तोत्रैश्चबहुतोषितः तस्यभक्त्यातु
संतुष्टोऋषिर्वचनमब्रवीत् मुनिरुवाच तुष्टोहंतवराजेंद्रकौसल्याभार्ययासह ब्रूहित्वंचमहाभागकिंप्रियंतेकरोम्यहं द
शरथउवाच यदितुष्टोसिमेविप्र अपुत्रोहंऋषीश्वर तीर्थंवाव्रतमेकंवातद्वदस्वमुनीश्वर मुनिरुवाच शृणुराजन्नवहि
तोव्रतमेकंब्रवीमिते पुत्रकामव्रतंश्रेष्ठंकृतंराजन्सुरासुरैः रोहिणीनामचंद्रस्यभार्यापरमवल्लभा सचैवललितानाम्नीरोहिणी
तिनराधिप आश्विनस्यसितेपक्षेदशम्यादिप्रपूजयेत् दशम्यादिचतुर्थ्यंतंदिग्दिनानिव्रतंचरेत् आश्विनस्यसितेपक्षेचतु
र्थ्यांतुविशेषतः स्नात्वासायंतनेकालेसन्नमनभक्तिभावतः कूष्मांडैर्मातुलिंगाद्यैर्जातिपुष्पैःसुगंधिभिः गंधपुष्पैस्तथाधूपै
र्नैवेद्यैर्दशमोदकैः अर्घ्यंदद्याच्चदेव्यग्रेपूजयित्वाक्षमापयेत् ततोमंगलवाद्यैश्चगायद्भिश्चनरेश्वर चंद्रोदयेचसंप्राप्तेअर्घ्यंद
द्याद्युधिष्ठिरशंखेतोयंसमादायसपुष्पाक्षतचंदनैः जानुभ्यामवनींगत्वाचंद्रायार्घ्यंनिवेदयेत् पंचरत्नसमायुक्तंदशपुष्पैःसम
न्वितं अक्षतैश्चसमायुक्तंचंद्रायार्घ्यंनिवेदयेत् दशरथनामयादेवीदशपुष्पादशांजलिः चंद्रेणसहितेदेविगृहाणार्घ्यंनमोस्तुते
दशरथनामयादेवीनित्यमाराधितामया पुत्रार्थीकामयेदेविसर्वान्कामान्प्रयच्छमे दशसंख्यांश्चकरकान्शीतोदकसमन्वितान्

वर्षेवर्षेप्रदेयानिप्रत्येकंकरकानिच इत्थंप्रपूजयेद्देवींसर्वदातुप्रयत्नतः अर्वाक्पादशवर्षाणांपूजयेद्भक्तिभावतः नारीनरोवारा-
जेंद्रव्रतमेतत्करोतिवै यंयंचिंतयतेकामंव्रतस्यास्यप्रभावतः पुत्रपौत्रधनंधान्यंलभतेनात्रसंशयः इतिभविष्योत्तरपुराणेदशर
थललिताव्रतकथासंपूर्णा अथोद्यापनं उद्यापनविधिंवक्ष्येव्रतसंपूर्णहेतवे कृष्णपक्षेचतुर्थ्यांतुआश्विनेव्रतमाचरेत्
दशविप्रैःसपत्नीकैर्वेदवेदांगपारगैः स्नात्वासायंतनेकालेसर्वैस्तैर्भक्तिभावतः चतुस्तंभंचतुर्द्वारंकदलीस्तंभमंडितं तन्मध्येका
रयेत्पद्मंपंचवर्णैःसुशोभितं कलशंस्थापयेत्तत्रविधानेनसमन्वितं ताम्रंमृन्मयजंकुंभंवस्त्रयुग्मेनवेष्टयेत् तस्योपरिन्यसेद्देवं
रोहिण्यासहितंविधुं सुवर्णनिर्मितंदेवंचतुर्भुजसमन्वितं सौवर्णीरोहिणीकार्याचंद्रमारजतस्यच पूर्वोक्तेनविधानेनपूजांकृ
त्वासमाहितः एवंपूजाप्रकर्तव्याषोडशैरुपचारकैः मोदकान्कारयेद्राजन्तिलजानेकविंशतिं दशविप्रायदातव्याआत्मार्थेस्था
पयेद्दश एकोदेवायदातव्योललिताप्रीतयेव्रती दशरथललितादेव्याव्रतसंपूर्णहेतवे वाणकंद्विजवर्यायसहिरण्यंददाम्यहम्
दशरथनामयादेवीनित्यमाराधितामया पुत्रार्थीकामयेदेविसर्वान्कामान्प्रयच्छमे इतिसंप्रार्थ्यदेवेशीं चंद्रायार्घ्यंनिवेदयेत् स्व
गृह्योक्तविधानेनकृत्वाग्निस्थापयेत्ततः होमंनैवस्तुसंपाद्यतिलपायसलड्डुकैः अष्टोत्तरशतंसद्योअष्टाविंशतिमेववा जुहुयाच्चं
द्रमंत्रेणगणेशेनतथैवच एवंसमाप्यहोमंतुतत्राचार्यंप्रपूजयेत् सुहृद्भिर्दशयुग्मैश्चपक्वान्नैश्चप्रपूजयेत् विप्रायपीठदानंचततः
कुर्याद्विसर्जनं ततःपुत्राःप्रजायंतेधनधान्यसमन्विताः सौभाग्यंपुत्रसंपत्तिर्जायतेभूभृतांवर अवैधव्यंचलभतेसर्वान्कामानवा
प्नुयात् एतत्तेकथितंभूपकिमन्यच्छ्रोतुमिच्छसि कृतेदशरथेनास्मिन्कौसल्याभार्ययासह तुष्टादशरथादेवीगणेशेनसचंद्रमाः य

स्मात्कृत कृतोराजा भार्ययासहमोदते तस्माद्दशरथानाम ललितासुविकीर्तिना एतत्तेकथितंराजन् दशांगललिताव्रतं यइदंशृ
णुयान्नित्यंश्रावयेद्वासमाहितः अश्वमेधसहस्रस्यफलंतस्यध्रुवंभवेत् इति भविष्योत्तरपुराणे दशरथललिताव्रतोद्यापनं
संपूर्णं अथकार्तिककृष्णाचतुर्थ्यां अथवादक्षिणदेशेआश्विनकृष्णाचतुर्थ्यां करकचतुर्थीव्रतं तच्चलिख्यते अत्रस्त्रीणा
मेवाधिकारः तासामेवफलश्रुतेः आचम्यमासपक्षाद्युल्लिख्य ममसौभाग्यपुत्रपौत्रादिसुस्थिरश्रीप्राप्तयेकरकचतुर्थीव्रतंक
रिष्ये इतिसंकल्प्य चंद्रंविलिख्यततः अधस्ताच्छिवंषण्मुखयुक्तांगौरींलिखित्वा षोडशोपचारैःपूजयेत् पूजामंत्रः नमःशिवायै
शर्वाण्यैसौभाग्यंसंततिंशुभां प्रयच्छभक्तियुक्तानांनारीणांहरिवल्लभे ति ततः नमोंत नाममंत्रेणशिवषण्मुखगौरीगणपतीनां
पूजाकार्या ततःसपक्वान्नान् अक्षतसंयुक्तान्दशकरकान्ब्राह्मणायदद्यात् ततःपिष्टकंनैवेद्यंभोज्यंसर्वंनिवेदयेत् ततश्चंद्रो
दयोत्तरंचंद्रायार्घ्यंदद्यात् अथकथा मांधातोवाच अर्जुनेतुगतेनप्रभुंइंद्रकीलगिरिंप्रति विषण्णमानसासुभ्रूर्द्रौपदीस
मचिंतयत् अहोकिरीटिनाकर्मसमारब्धंसुदुष्करं बहवोविघ्नकर्तारोमार्गेवैपरिपंथिनः चिंतयित्वेतिसादेवीकृष्णाकृष्णंजगद्गुरुं
भर्तुःप्रियचिकीर्षंतीसापृच्छद्विघ्नवारणं द्रौपद्युवाच कथयस्वजगन्नाथव्रतमेवंसुदुर्लभं यत्कृत्वासर्वविघ्नानिविलयंयांति
तद्वद श्रीकृष्णउवाच एवमेवमहाभागेशंभुःपृष्टःकिलोमया तस्यास्तद्वचनंश्रुत्वाप्राहदेवोमहेश्वरः शृणुदेविवरारोहेवक्ष्या-
मित्वांमहेश्वरि सर्वविघ्नहरेत्याहकरकाख्याचतुर्थिका पार्वत्युवाच भगवन्कीदृशीप्रोक्ताचतुर्थीकरकाभिधा विधानंकीदृशंप्रो
क्तंकेनेयंचपुराकृता ईश्वरउवाच शक्रप्रस्थपुरेरम्येविद्वज्जनसमाकुले स्वर्णरूप्यसमाकीर्णेरत्नप्राकारशोभने दिव्यनारी

जनालोकेवशीकृतजगत्त्रये वेदध्वनिसमायुक्तेस्वर्गादपिमनोहरे वेदशर्मद्विजस्तत्रवसन्देशोविदांवरः पत्नीतस्यैवविप्रस्यनाम्ना-
लीलावतीशुभा तस्यांसंजनयामासपुत्रान्सप्तामितौजसः कन्यावीरवतीनाम्नीसर्वलक्षणसंयुता नीलोत्पलाभनयनापूर्णेंदु
सदृशानना ततःकालेशुभदिनेविधिवच्चद्विजोत्तमः ददौवेदांगविदुषेविप्रायविधिपूर्वकं अत्रांतरेतुसातत्रचक्रेगौर्याःशुभव्रतं-
चतुर्थ्यांकार्तिकस्याथकृष्णायांतुविशेषतः स्नात्वासायंतनेकालेसर्वान्तान्भक्तिभावतः विलिख्यवटवृक्षंचगौरींतस्यतलेलिखे
त् शिवेनविघ्ननाथेनषण्मुखेनसमन्वितां गंधपुष्पाक्षतैर्गौरींमंत्रेणानेनपूजयेत् नमःशिवायैशर्वाण्यैसौभाग्यंसंततिंशुभां
प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभे तस्याःपार्श्वेमहादेवंविघ्ननाथंषडाननं पुनःपुष्पाक्षतैर्धूपैरर्चयेच्चपृथक्पृथक् पक्वान्न
क्षतसंपन्नान्सदीपान्करकान्दश तथापिष्टकनैवेद्यंभोज्यंसर्वंन्यवेदयेत् प्रतीक्षंत्यःस्त्रियःसर्वाश्चंद्रोदयपरास्थिताः साबाला
विकलादीनाक्षुत्तृड्भ्यांपरिपीडिता निपपातमहीपृष्ठेरुरुदुर्बांधवास्तथा समाश्वास्यचतैस्तांस्तुमुखमभ्युक्ष्यवारिणा तद्भ्राता
चिंतयित्वैवमारुरोहमहावटं हस्तेचोल्कांसमादायज्वलंतींस्नेहपीडितः भगिन्यैदर्शयामासचंद्रंव्याजोदितंतदा तंदृष्ट्वाचार्तिमु
त्सृज्यबुभुजेभावसंयुता चंद्रोदयंतमज्ञाय अर्घ्यंदत्वाविधानतः तद्दोषेणमृतस्तस्याःपतिधर्मेणदूषितः [illegible]पतिंतथाविधं
दृष्ट्वाशिवमभ्यर्च्यसापुनः व्रतंनिराशनंचक्रेयावत्संवत्सरोगतः चक्रुःसंवत्सरेतीतेव्रतंतद्भ्रातृयोषितः पूर्वोक्तेनविधानेनसापिच
केशुभानना तदायाताशचीदेवीकन्याभिःपरिवारिता एतदेवव्रतंकर्तुमागतास्वर्गलोकतःवीरावत्यास्तदाभ्यासमगमद्भाग्यतः
स्वयं दृष्ट्वातांमानुषींदेवीपप्रच्छसकलंशची वीरावतीनदापृष्टाप्रोवाचविनयान्विता अहंपितृगृहंप्राप्तामृतोयंमेपतिःप्रभुः

नज्ञानेकर्मणः कस्यफलंप्राप्तंमयाधुना ममभाग्यवशाद्देवि आगतासिमहेश्वरि अनुगृण्हीष्वमांमातर्जीवयाशुपतिंमम इंद्राणी
उवाच त्वयापितृगृहेपूर्वंकुर्वत्याकरकव्रतं तद्देवार्घ्यंत्वयादत्तंविनाचंद्रोदयंशुभे तेनतेव्रतदोषेणस्वामीलोकांतरंगतः इदानीं-
कुरुयत्नेनकरकव्रतमुत्तमं पतिंतेजीवयिष्यामिव्रतस्यास्यप्रभावतः व्यासउवाच तस्यास्तद्वचनंश्रुत्वाव्रतंचक्रेविधानतः
प्रसन्नासाभवद्देवीशक्रस्यप्राणवल्लभा तयाव्रतेकृतेदेवीजलेनाभ्युक्ष्यतत्पतिं जीवयामासचेंद्राणीदेववच्चबभूवसः ततश्चा
गाद्गृहंस्वीयंरेमेसापतिनासह धनंधान्यंसुपुत्रांश्चदीर्घमायुश्चलब्धवान् तस्मात्त्वयापियत्नेनव्रतमेतद्विधीयतां सूतउवा
च द्वैपायनवचःश्रुत्वाचकारद्रौपदीव्रतं तद्व्रतस्यप्रभावेनजित्वातान्कौरवान्रणे लेभिरेराज्यमतुलंपांडवादुःखनाशनं ये
करिष्यंतिसुभगाव्रतमेतन्निशागमे ते षांपुत्रान्धनंधान्यंसौभाग्यंचातुलंयशः करकंक्षीरसंपूर्णंतोयपूर्णमथापिवा ददामिरत्न
संयुक्तंचिरंजीवतुमेपतिः इतिमंत्रेणकरकान्प्रदद्याद्द्विजसत्तमे सुवासिनीभ्योदद्याच्चआदद्यात्ताभ्यएवच एवंव्रतंयाकुरुते
नारीसौभाग्यकाम्यया सौभाग्यंपुत्रपौत्रादिलभतेसुस्थिरांश्रियं इतिवामनपुराणेकरकाभिधानचतुर्थीव्रतंसंपूर्णं अथमा
घशुक्लचतुर्थ्यांगौरीचतुर्थीव्रतं हेमाद्रौब्राह्मे उमाचतुर्थ्यांमाघेतुशुक्लायांयोगिनीगणैः प्राग्भक्षयित्वासुस्नात्वाचभूयस्त्वांगातव
कैर्गुणैः तस्मात्सातत्रसंपूज्यानरैःस्त्रीभिर्विशेषतः कुंदपुष्पैःप्रयत्नेनसम्यक्भक्त्यासमाहितैः कुंकुमालक्तकाभ्यांचरक्तसूत्रैःसकं
कणैः रक्तपुष्पैस्तथाधूपैर्दीपैर्बलिभिरेवच गुडार्द्रकाभ्यांपयसालवणेनाथपालकैः पालकंमृद्भांडंइतिहेमाद्रिः पूज्यास्त्रियश्च
विविधास्तथाविप्राश्चशोभनाः सौभाग्यवृद्धयेदेयंभोक्तव्यंबंधुभिःसह इतिगौरीचतुर्थीव्रतंब्रह्मपुराणोक्तं अथमाघशु

क्लचतुर्थीवरदचतुर्थीव्रतं तदुक्तंकाशीखंडे माघशुक्लचतुर्थ्यांतुनक्तव्रतपरायणाः येत्वांधुंडेर्चयिष्यंतितेर्च्यास्सुरासुरैर्दुहाः विधायवार्षिकींयात्रांचतुर्थींप्राप्यमाधवीं शुक्लान्तिलान्गुडैर्बध्वाप्राश्नीयाल्लुड्डुकान्व्रती अत्रनक्तग्रहणात्प्रदोषव्यापिनी ग्राह्येतिसिद्धं इतिवरदचतुर्थीव्रतं अथमाघकृष्णचतुर्थ्यांतिलचतुर्थीव्रतं अथपूजाविधिः येभ्योमाताएवापित्रे तिजपित्वा आगमार्थंतु॰ घंटानादंकृत्वा अपसर्पंत्विति छोटिकामुद्रां तीक्ष्णदंष्ट्रेतिक्षेत्रपालंसंप्रार्थ्य आचम्यप्राणाना यम्यममसहकुटुंबस्य क्षेमस्थैर्यविजयाभयआयुरारोग्यैश्वर्याभिवृध्यर्थंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिध्यर्थंश्री संकष्टहरगणेश्वरप्रीत्यर्थंनारदीयपुराणोक्तप्रकारेणपुरुषसूक्तविधानेनयथासंभावितनियमेनयथोपचारमीलितद्रव्यैः संकष्टचतुर्थीव्रतांगत्वेनगणपतिपूजनंकरिष्येकलशार्चनंशंखार्चनंकुर्यात् अथन्यासंकुर्यात् अस्यश्रीगणपतिमंत्रस्य शुक्लऋषिः श्रीसंकष्टहरगणपतिर्देवता अनुष्टुप्छंदः श्रीसंकष्टहरगणपतिप्रीत्यर्थेन्यासेविनियोगः ओंनमोहेरंब अंगुष्ठाभ्यांनमः मदमोदिततर्जनीभ्यां॰ ममसंकष्टंनिवारयमध्यमाभ्यां॰ निवारयअनामिकाभ्यां॰ हुंफट्कनिष्ठिकाभ्यां॰ स्वाहा करतलकरपृष्ठाभ्यां॰ एवंहृदयादि भूर्भुवस्वरोमितिदिग्बंधः ओंनमोहेरंबमदमोदितममसंकष्टंनिवारयहुंफट स्वाहा अथध्यानं श्वेतांगंश्वेतवस्त्रंसितकुसुमगणैःपूजितंश्वेतगंधैःक्षीराब्धौरत्नदीपैःसुरतरुविमलेरत्नसिंहासनस्थं दोर्भिःपाशांकुशेष्टाभयधृतरुचिरंचंद्रमौलिंत्रिनेत्रं ध्यायेच्छांत्यर्थमीशंगणपतिविमलंश्रीसमेतंप्रसन्नं लंबोदरंचतुर्बाहुंत्रिनेत्रंरक्तवर्णकं सर्वाभरणशोभाढ्यंप्रसन्नास्यंविचिंतयेत् ध्यायामि आगच्छविघ्नराजेंद्रस्थानेचात्रस्थितोभव आ

राधयिष्येभक्त्याहंमत्त्वंतंसर्वसिद्धये सहस्रशीर्षेत्यावाहनं गणेशायन॰ आवाहयामि अभीप्सितार्थसिध्यर्थंपूजितोसिसुरासु
रासुरैः सर्वविघ्नछिदेतस्मैगणाधिपतयेनमः पुरुषएवेदमासनं विघ्ननाशिने॰ आसनं गणाधिपनमस्तेस्तुसर्वसिद्धिकरप्रभो
पाद्यंगृहाणदेवेशसुरासुरसुपूजित एतावानस्ये॰ लंबोदराय॰ पाद्यं रक्तगंधाक्षतोपेतंरक्तपुष्पसमन्वितं अर्घ्यंगृहाणदेवेशमया
दत्तंहिभक्तितः त्रिपादूर्ध्व॰ चंद्रार्धधारिणेन॰ अर्घ्यं॰ सुरासुरसमाराध्यसर्वसिद्धिप्रदायक मयादत्तंसुरश्रेष्ठगृहाणाचमनीयकं
तस्माद्विराळ॰ विश्वप्रिया॰ आचम॰ पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनंकरिष्येसर्वसिद्धिद यत्पुरुषेणेति॰
ब्रह्मचारिणेन॰ पंचामृतस्नानं गंगादिसलिलंशुद्धंसुवर्णकलशेस्थितं सुवासितंपरिमलैःस्नापयामिगणेश्वर पुरुषसूक्तेनशु
द्धोदकस्नानं रक्तांबरंवस्त्रयुग्मंसर्वकार्यप्रसिद्धये मयादत्तंगणाध्यक्षगृह्यतामखिलार्थद तंयज्ञं॰ सर्वप्रदाय॰ वस्त्रयुग्मं कुं
कुमाक्तंमयादत्तंसौवर्णमुपवीतकं उत्तरीयेणसंयुक्तंगृहाणगणनायक तस्माद्यज्ञात्सर्वहुतःसंभृ॰ वक्रतुंडाय॰ यज्ञोपवी॰ चंद-
नागरुकर्पूरकुंकुमादिसमन्वितं गंधंगृहाणदेवेशसर्वसिद्धिप्रदायक तस्माद्यज्ञात्सर्वहुतेति॰ गणाध्यक्षाय॰ गंधं॰ अक्षताश्च
सुरश्रेष्ठाः कुंकुमाक्ताःसुशोभनाः गृहाणविघ्नराजेंद्रमयादत्ताहिभक्तितः गजवदना॰ अक्षतान् रक्तपुष्पाणिविघ्नेश एकविं
शतिसंख्यया गृहाणसुमुखोभूत्वामयादत्तान्युमासुत तस्मादश्वा॰ गुणशालिनेनमः पुष्पाणि॰ सुगंधादीनिमाल्यानि
गृहाणगणनायक विनायकनमस्तुभ्यंशिवसूनोनमोस्तुते विघ्ननाशिने॰ माल्यानि॰ एकविंशतिनामभिर्दूर्वाभिःपूजयेत्
ॐ गजानना॰ विघ्नराजाय॰ लंबोदरायनमः शिवात्मजा॰ वक्रतुंडाय॰ शूर्पकर्णाय॰ कुब्जाय॰ गणेशाय॰ विघ्ननाशिनेनमः वि

कटायन० वामदेवाय० सर्वदेवाय० सर्वार्तिनाशिने० विघ्नहर्त्रेन० धूम्राय० सर्वदेवाधिदेवा० उमापुत्रा० कृष्णपिंगला० भालचंद्रा० गणाधिपाय० एकदंताय० २१ एकविंशतिदूर्वापुष्पाणिसमर्पयामि अथांगपूजा संकष्टनाशिने० पादौपू० स्थूलजंघाय० जंघेपू० एकदंताय० जानुनीपू० अखुवाहनाय० ऊरूपू० हेरंबा० कटिंपू० लंबोदरा० उदरंपू० गणाध्यक्षाय० हृदयं० स्थूलकंठाय० कंठंपू० स्कंदाग्रजाय० स्कंधौपू० परशुहस्ताय० हस्तौपू० गजवक्त्राय० वक्त्रंपू० सर्वेश्वरा० शिरःपू० संकष्टनाशिने० सर्वांगंपूजया० अथावरणपूजा गणाधिपा० उमापुत्राय० अघनाशिने० हेरंबाय० लंबोदराय० गजवक्त्राय० एकदंताय० धूम्रकेतवेन० भालचंद्राय० ईशपुत्रायन० इभवक्त्राय० मूषकवाहना० कुमारगुरवे० सर्वसंकष्टनाशिने० इतिप्रथमावरणं १ विघ्नगणपतये० वीरगणपतये० शूर्पकर्णगणप० प्रसादगणप० वरदगणपत० इंद्रगणप० एकदंतगणप० लंबोदरगणप० क्षिप्रगणपत० सिद्धिगणप० इतिद्वितीयाव० २ रामाय० रामेशाय० वृषांकाय० रतिप्रिया० पुष्पबाणाय० महेश्वराय० वराहाय० श्रीसदाशिवाय० तृतीयावरणं ३ आदित्याय० चंद्राय० कुजाय० बुधाय० बृहस्पत० शुक्राय० शनैश्चराय० केतवेन० सिद्ध्यै० समृद्ध्यैन० कांत्यै० मदनरत्यैव० मदद्रावियैनमः वसुमत्यै० वैनायक्यै० चतुर्थाव० ४ इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० पंचमाव० ५ अथपत्रीपूजा गणाधिपा० पाचीपत्रं० समुखा० भृंगराज० उमापुत्राय० बिल्वपत्रं० गजवक्त्राय० श्वेतदूर्वाप० लंबोदराय० बदरीप० हरसूनवे० धत्तूरपत्रं० गुहाग्रजाय० तुलसीपत्रं० गजकर्णायन० अपामार्गपत्रं० एकदंताय० बृहतीप० इभवक्त्राय० शमी० मूषकवाहना० करवीरप० विनाय० वेणुपत्रं० कपिलाय० अर्कपत्रं० भिन्नदंताय० अ

र्जुनप॰ पत्नीहीना॰ विष्णुक्रांतप॰ बटवेन॰ दाडिमीप॰ भालचं॰ देवदारु॰ हेरंबा॰ मरुपत्रं॰ सिद्धिदाय॰ सिंदूरप॰ स्कंदाग्रजाय॰ जाती
पत्रं॰ विघ्नराजाय॰ केतकीप॰ इत्येकविंशतिपत्राणि अथपुष्पपूजा सुमुखाय॰ जातीपु॰ एकदंताय॰ शेवतीपु॰ कपिलाय॰ जु
ईपुष्पं॰ गजकर्णाय॰ चंपकपु॰ लंबोदरा॰ कल्हारपु॰ विकटाय॰ केतकीपु॰ विघ्ननाशिने॰ बकुलपु॰ विनाय॰ जपाकुसुमपु॰ धूम्रके
तवे॰ पुन्नागपु॰ गणाध्यक्षाय॰ धत्तूरपु॰ भालचंद्रा॰ मातुलिंगपु॰ पत्नीहीनाय॰ विष्णुक्रांतपु॰ उमापु॰ करवीरपुष्पं॰ गजानना॰
पारिजात॰ ईशपु॰ कमलपु॰ सर्वसिद्धिप्रदाय॰ गोकर्णिकापु॰ मूषकवा॰ मुकुंदपु॰ कुमारगुरवे॰ तगरपु॰ दीर्घशुंडा॰ सुगंधिरा
जपुष्पं॰ इभवक्त्राय॰ अगस्तिपु॰ संकष्टनाश॰ गुलाबपुष्पं॰ इत्येकविंशतिपुष्पाणि २१ अथाष्टोत्तरशतनामपूजा ॐ अ
स्यश्रीअष्टोत्तरशतविघ्नेश्वरदिव्यनामामृतस्तोत्रमंत्रस्य गृत्समदऋषिः गणपतिर्देवता अनुष्टुप्छंदः गंबीजं नं शक्तिः मं किलकं
श्रीगणपतिप्रसादसिध्यर्थेपूजनेविनियोगः ॐकारपूर्वकनामानि विनायकाय॰ विघ्नराजाय॰ गौरीपुत्राय॰ गणेश्वरा॰ स्कं
दाग्रजा॰ अव्ययाय॰ पूताय॰ दक्षाध्यक्षाय॰ द्विजप्रियाय॰ अग्निगर्वच्छिदेन॰ इंद्रश्रीप्रदाय॰ वाणीबलप्रदाय॰ सर्वसिद्धिप्रदाय॰
शर्वतनयाय॰ शर्वप्रियाय॰ सर्वात्मकाय॰ सृष्टिकर्त्रेन॰ देवानीकार्चिताय॰ शिवाय॰ शुद्धाय॰ बुद्धिप्रियाय॰ शांतायन॰ ब्रह्म
चारिणेन॰ गजाननाय॰ द्वैमातुराय॰ मुनिस्तुत्या॰ भक्तविघ्ननाशिने॰ एकदंता॰ चतुर्बाहवे॰ शक्तिसंयुताय॰ चतुराय॰ लंबोदरा
यन॰ शूर्पकर्णाय॰ हेरंबाय॰ ब्रह्मवित्तमायन॰ कालाय॰ ग्रहपन॰ कामिने॰ सोमसूर्याग्निलोचनाय॰ पाशांकुशधरा॰ चंडायन॰
गुणातीतायनमः निरंजना॰ अकल्मषाय॰ स्वयंसिद्धाय॰ सिद्धार्चितपदांबुजाय॰ बीजपूरकाय॰ अव्यक्ताय॰ वरदाय॰ शाश्वता

य॰ कृतिने॰ विद्वत्प्रिया॰ वीतभया॰ गदिने॰ चक्रिणेन॰ इक्षुचापधृते॰ अब्जोत्पलकराय॰ श्रीशाय॰ श्रीपतये॰ स्तुतिहर्षिताय॰ कु-
लाद्रिभृतेन॰ जटिने॰ चंद्रचूडाय॰ अमरेश्वरा॰ नागयज्ञोपवीतिने॰ श्रीकंठाय॰ रामार्चितपदा॰ व्रतिनेन॰ स्थूलकंठाय॰ त्रयीकर्त्रे न॰
सामघोषप्रिया॰ पुरुषोत्तमाय॰ स्थूलतुंडा॰ अग्रगण्याय॰ ग्रामण्याय॰ गणपाय॰ स्थिराय॰ वृद्धिदाय॰ सुभगदा॰ शूराय॰ वागीशाय॰
सिद्धिदायकाय॰ दूर्वाबिल्वप्रियायन॰ कांताय॰ पापहारिणेनमः कृतागमा॰ समाहिता॰ वक्रतुंडाय॰ श्रीपदाय॰ सौम्याय॰ भक्तकां
क्षितदाय॰ अच्युताय॰ केवलाय॰ सिद्धाय॰ सच्चिदानंदविग्रहाय॰ ज्ञानिनेन॰ मायायुक्ता॰ दांताय॰ ब्रह्मिष्ठाय॰ भयवर्जिता॰
१०॰ प्रमत्तदैत्यभयदाय॰ व्यक्तमूर्तये॰ अमूर्तकाय॰ पार्वतीशंकरोत्संगखेलनोत्सवलालसाय॰ समस्तजगदाधारा॰ वरदमूषकवा
हनाय॰ हृष्टचित्ताय॰ प्रसन्नात्मने॰ सर्वसिद्धिप्रदायकाय॰ १०८ ॥ अष्टोत्तरशतेनैवंनाम्नाविघ्नेश्वरस्यच तुष्टावशं
करःपुत्रंत्रिपुरंहंतुमुद्यतः यःपूजयेदनेनैवभक्त्यासिद्धिविनायकं दूर्वादलैर्बिल्वदलैःपुष्पैर्वाचंदनाक्षतैः सर्वकामानवाप्नोति
सर्वापद्भ्यःप्रमुच्यते इतिभविष्यपुराणेविघ्नेश्वरस्याष्टोत्तरशतदिव्यनामस्तोत्रंसंपूर्णं वनस्पतिरसोद्भूतंदशांगंगुग्गुलान्
वितं गृहाणसर्वकामार्थंमयादत्तंविनायक यत्पुरुषंव्यदधुः॰ उमापुत्राय॰ धूपं॰ घृताक्तवर्तिसंयुक्तंदीपंसर्वप्रदायक गृहाणेमं
मयादत्तंतेजोराशेजगत्पते ब्राह्मणोस्य॰ रुद्रप्रियाय॰ दीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं भक्त्यानिवेदितंदेवनैवेद्यं
प्रतिगृह्यतां भक्ष्यैर्नानाविधैर्युक्तान्मोदकान्घृतपाचितान् गृहाणविघ्नराजेंद्रतिललड्डुसमन्वितान् चंद्रमामनसो॰ विघ्ननाशि
ने॰ नैवेद्यं फलानीमानिरम्याणिस्थापितानितवाग्रतः तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि संकष्टनाशिने॰ फलं पूगीफ

लंमहद्दिव्यं॰नाम्नाभासी॰ सिद्धिविनायकाय॰ तांबूलं॰ श्रियेजातइति॰ नीराजनं॰ पूजाफलसमृद्ध्यर्थंतवाग्रेस्वर्णमीश्वर स्थापितंतेनमेप्रीतःपू
र्णान्कुरुमनोरथान् ससास्यासनः विघ्नेशायनः स्वर्णपु॰ अथदूर्वापूजा गणाधिपाय॰ दूर्वायुग्मंसमर्पयामि उमापुत्राय॰ दूर्वा॰ अघना
शनाय॰ दूर्वा॰ एकदंताय॰ दूर्वा॰ इभवक्त्राय॰ दूर्वा॰ मूषकवाहना॰ दूर्वा॰ विनायकाय॰ दूर्वा॰ ईशपुत्राय॰ दूर्वा॰ सर्वसिद्धिप्रदायका॰ दूर्वा॰ कुमा
रगुरवे॰ दूर्वा॰ श्रीगणेश्वराय॰ एकदूर्वांकुरंसमर्पयामि गणाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेभवक्त्रेतितथामूषकवाहन वि
नायकेशपुत्रेतिसर्वसिद्धिप्रदायक कुमारगुरवेतुभ्यंगणराजंप्रयत्नतः एभिर्नामपदैर्नित्यंदूर्वायुग्मंसमर्पयेत् श्रीगणेशोवक्रतुंड
उमापुत्रस्तथैवच विघ्नराजःकामदश्चगणेश्वरइतिस्मृतः जीमूतःशक्तिरत्युग्रस्तथांजनसमप्रभः योगिध्येयोदिव्यगुणोमहाकायइ
तीरितः ततश्चसिद्धिदःप्रोक्तोमहोदरइतिस्मृतः गजवक्त्रःकर्मभीतेततःपरशुधार्यपि करिकुंभोविश्वमूर्तिरुग्रमोजास्ततःपरं
लंबोदरस्ततःसिद्धिर्गणेशश्चैकविंशतिः नामानिरमणीयानिजपेदेभिश्चपूजयेत् गणेशात्तस्यनश्यंतिसंकष्टानिमहं त्यपि महा
संकष्टदग्धोहंगणेशंशरणंगतः तस्मान्मनोरथंपूर्णंकुरुविश्वेश्वरप्रिय ततःस्वर्णमयंपुष्पंविघ्नेशायनिवेदयेत् प्रदक्षिणानमस्कारा
न्कृत्वादेवंक्षमापयेत् यज्ञेनयज्ञं॰ संकष्टनाशनाय॰ पुष्पांजलिं॰ नमोस्तुदेवदेवायभक्तानामभयप्रद विघ्नानांनाशकर्त्रेचहरात्म
जनमोस्तुते विघ्ननाशिनेनः नमस्कारं॰ ततःॐनमोहेरंबइतिमूलमंत्रंएकविंशतिवारंजपेत् अथगणेशायार्घ्यंदद्यात् गणे
शायनमस्तुभ्यंसर्वसिद्धिप्रदायक संकष्टहरमेदेवगृहाणार्घ्यंनमोस्तुते संकष्टहरगणपतयेनमः इदमर्घ्यं कृष्णपक्षेचतुर्थ्यांतु
संपूजितविधूदये क्षिप्रंप्रसीददेवेश गृहाणार्घ्यंनमोस्तुते एताभ्यांमंत्राभ्यांअर्घ्यंदद्यात् तिथीनामुत्तमेदेविगणेशप्रियवल्लभे॥

सर्वसंकष्टनाशाय गृहाणार्घ्यं नमोस्तुते चतुर्थ्यै इदमर्घ्यं० रोहिणीसहितचंद्रं पंचोपचारैः पूजयेत् क्षीरोदार्णवसंभूतलक्ष्मीबंधोनि
शाकर गृहाणार्घ्यं मयादत्तं रोहिण्यासहितः शशिन् इतित्रिरर्घ्यं ३ रोहिण्यासहितचंद्रमसेनमः इदमर्घ्यं गगनांगणसंदीपक्षीराब्धिम
थनोद्भव भाभासितदिगंतांतसोमराजनमोस्तुते चंद्रायनमस्कारः ततः आचार्यं पूजयेत् वायनं दद्यात् मोदकान्सफलान्पंचदक्षिण
भिः समन्वितान् गृहाणत्वं द्विजश्रेष्ठव्रतस्यपरिपूर्तये वायनमंत्रः प्रतिमादानमंत्रः प्रतिमां गुरवे दद्यादाचार्याय सदक्षिणां वस्त्रकुंभ
समायुक्तामादौ मंत्रमिमं जपेत् गणेशस्य प्रसादेन मम संतु मनोरथाः तुभ्यं संप्रददे विप्र प्रतिमां तु गजाननीं इष्टकामार्थसिद्ध्यर्थं पुत्रपौत्र
प्रवर्धिनीं गणाधिराजदेवेश विघ्नराजविनायक तव मूर्तिप्रदानेन प्रसन्नो भव सर्वदा इति कलशप्रतिमादानमंत्रः अथ प्रतिग्रहमंत्रः
गणेशः प्रतिगृण्हाति गणेशो वै ददाति च गणेशस्तारको भाभ्यां गणेशाय नमो नमः संसारपीडाव्यथितं हि मां सदा संकष्टभूतं स्कमुख
प्रसीद त्वं त्राहि मां नाशय कष्टसंघान्नमो नमः कष्टविनाशनाय इति प्रार्थना यदुद्दिश्य कृतं तेद्य यथाशक्ति प्रपूजनं संकष्टहर मे देवउ
मास्कृतनमोस्तुते इतिनमस्कारः इति पूजाविधिः अथ कथा सूत उवाच अरण्ये वर्तमानं तं पाडुपुत्रं युधिष्ठिरं सबांधवं स्करवासीनं
प्रययौ व्यास आदरात् तं दृष्ट्वा मुनिशार्दूलं व्यासं प्रत्याययौ नृपः मधुपर्कं च सार्धं च कृत्वा तस्मै ह्युवाच तम् युधिष्ठिर उवाच अद्य मे स-
फलं जन्म भवतागमने कृते ये संकष्टा हि संजाता वने मम निवासिनः ते सर्वे विलयं याता भवतो दर्शनेन हि आत्मानं साधु मन्ये हं राज्यतृ-
ष्णापराङ्मुखं दुःखितं मां कथं स्वामिन् राज्यभ्रष्टं वनेस्थितं एते भीमादयः सर्वे बांधवा व्यथयंति भो दुराधर्षाः स्कवीर्या हि मच्छासनवि
धेरताः इयं तु द्रौपदी साध्वी राजपुत्री पतिव्रता राज्योपभोगयोग्यासाप्यद्य दुःखोपभोगिनी मयाच किं कृतं व्यास पूर्वं कष्टानुजीव-

ता दायादैर्विजितंराज्यंद्यूतछद्मपरैस्तथा पराजितावयंब्रह्मन् सुहृद्भिर्बंधुभिस्तथा वनंप्रस्थापितादूतैरिदमूचुस्तथैवच कुर्वंतु
गमनंशीघ्रंवनायभवदादयः इत्थंनिराकृताः स्वामिन्‌यदातद्दुनमागताः अहंतदाप्रभृत्याहोनद्रक्ष्यामिभवाद्दशान् यद्यस्तिव्रतमे
कंहिसर्वकष्टविनाशनं तद्व्रतंकथय ब्रह्मन्ननुग्राह्योस्मिसुव्रत इत्युक्तवंतंराजानंदुष्टसंकष्टनाशनं उवाचप्रीणयान्व्यासोधर्म
जंमेदिनीपतिं व्यासउवाच नास्तिभूमंडलेराजंस्त्वत्समोधर्मतत्परः कथयामिव्रतंतेद्यव्रतानामुत्तमोत्तमं संकष्टनाशनंनित्यं
शुभदंफलदंभुवि यत्कृत्वासर्वकार्याणांनिष्पत्तिर्जायतेध्रुवं विद्यार्थीलभतेविद्यांधनार्थीलभतेधनं प्रोषितायापुरंध्रीचकरोति
व्रतमुत्तमं ईप्सितंलभतेसर्वंपतिनासहमोदते संकष्टेपियदाक्षिप्तोमानवोग्रहपीडितः साम्राज्येदीक्षितोनित्यंमंत्रिभिःपरिवा·
रितः सुहृद्भिर्बंधुभिश्चैवतथापुत्रैःसमन्वितः तस्यतुप्रियकर्त्रीचपत्नीगुणवतीप्रिया नाम्नारत्नावलीत्यासीत्पतिव्रतपरायणा
तयोःपरस्परंप्रीतिरभवच्चगुणाश्रयी कदाचिद्दैवयोगेनहृतंराज्यंचवैरिभिः कोशोबलंचापहृतंविध्वस्तोबंधुभिःसह रत्नाव
ल्यातयासार्धंवनिर्गतोभूमिवल्लभः वनेक्षुधार्त्तःश्रमितोह्येकवासास्तृषार्दितः इतस्ततश्चरन्राजन्आतपेनातिपीडितः ए
काकीवनमासाद्यतयासार्धंयुधिष्ठिर सूर्येचास्ताचलंयातेअरण्येचशिवार्दिते व्याघ्राश्चचुक्रुशुस्तत्रपर्जन्योपिववर्षह कंटकैः
क्लेशितारा ज्ञीदुःखमाक्रंदपीडिता तांविलोक्यनृपश्रेष्ठदुःखेनैवतुपीडितः ततःप्रभातसमयेमार्कंडेयंमहामुनिं ददर्शराजात·
त्रैवविस्मयाविष्टमानसः उपगम्यशनैस्तंतुदंडवसतितोभुवि अब्रवीद्वचनंराजामार्कंडेयंमहामुनिं किंकृतंहिमयास्वामिन्
दुष्कृतंकथयस्वतत् केनकर्मविपाकेनराज्यलक्ष्मीःपराङ्मुखी मार्कंडेयउवाच शृणुराजन्प्रवक्ष्यामियत्त्वयापूर्वजन्मनि

पूर्वंहिलुब्धकश्चासीर्गतोसिगहनंवनं मृगशार्दूलशशकान्हन्यमानोवनेनदा तस्मिन्रात्रौभ्रमन्राजन्चतुर्थ्यांमाघकृष्णके दृष्टंशुभंच
कृष्णायास्तडागंपृथुनिर्मलं तत्तीरेनागकन्यानांसमूहंरक्तवाससां गणेशंपूजयंतीनांदृष्टवान्नियमव्रतां। उपगम्यशनैस्तत्रपृष्टंतासांत्वयावि
भो आर्याःकिमेतन्मेसर्वंकथयध्वंहितत्वतः नागकन्याऊचुः पूजयामोगणपतिंवयंसिद्धिप्रदायकं शांतिदंपुष्टिदंनित्यंसर्वव्याधि
विनाशनं पुनःपृष्टंत्वयातत्रकिंदानंपूज्यतेत्रकः स्त्रियऊचुः यदाचोत्पद्यतेभक्तिर्मासिपूज्योगणाधिपः कृष्णायांचचतुर्थ्यां
वैरक्तपुष्पैःप्रपूजयेत् धूपैर्दीपैश्चनैवेद्यैरन्यैर्भक्तिसमन्वितैः विविधान्मोदकान्कृत्वापूरिकाघृतपाचिताः नैवेद्यंषड्रसंसर्वंग
णेशायनिवेदयेत् ततोगृहीतंराजेंद्रत्वयासंकष्टनाशनं अभवद्बहुधनधान्यंतेपुत्रपौत्रसमन्वितं मुक्ताहारसुवर्णैश्चगोधूमैश्चस
मन्वितं कस्मिंश्चित्समयेराजन्धनमत्तेनसिद्धिदं विस्मृतंतद्व्रतंसर्वंत्वयायत्नेनभूतिदं ततःप्राप्तंहिपंचत्वंत्वयाप्राणविना
शनं तत्प्रभावाद्राजकुलेविशालेप्राप्तमुत्तमं त्वयाजन्मनृपश्रेष्ठराज्यंप्राप्तंत्वयाविभो सुहृन्मित्रप्रियायुक्तःप्राप्तोसिविपुलंव
पुः कृतावज्ञाव्रतस्यांतेतत्प्राप्तंकुलमीदृशं राजोवाच अधुनाक्रियतेस्वामिन्कथ्यतांममसुव्रतं यत्कृत्वासकलंराज्यं
प्राप्यतेचमयापुनः ऋषिरुवाच व्रतसंकल्पमाधत्त्वंकुरुराजन्नृपोत्तम प्राप्स्यसित्वंहिराज्यंचसंदेहंमाकुरुप्रभो इत्युक्त्वा
समुनिश्रेष्ठोन्तर्धानमगात्ततः मुनेस्तद्वचनंश्रुत्वाव्रतसंकल्पमातनोत् राजाराज्ञीमुनिप्रोक्तंसकलंतद्व्रतंशुभं आयाताःसक
लास्तस्यमंत्रिभृत्याश्चसैनिकाः समाययौनृपश्रेष्ठस्तत्क्षणात्स्वयमेवहि लब्धाराज्यंस्वकीयंचगणेशस्यप्रसादतः बुभुजेमेदिनीं
राजापुत्रपौत्रसमन्वितः तस्मात्त्वमपिराजेंद्रकुरुसंकष्टनाशनं व्रतंसिद्धिप्रदंनृणांस्त्रीणांचैवविशेषतः युधिष्ठिरउवाच

सविस्तरंव्रतंब्रूहिकृपयाकष्टनाशनं व्यासउवाच यदासंक्लेशितोराजन्दुःखैःसंकष्टदारुणैः पुमान्कृष्णचतुर्थ्यांतु तदापूज्योगणाधि
पः श्रावणेबहुलेपक्षेचतुर्थ्यांतुविधूदये तस्मिन्दिनेव्रतंग्राह्यंसंकष्टाख्यंयुधिष्ठिर निराहारोद्यदेवेशयावच्चंद्रोदयोभवेत् माघेवाकृष्णप
क्षेतुचतुर्थ्यांतुविधूदये तस्मिन्दिनेव्रतंग्राह्यंसंकष्टाख्यंनृपोत्तम प्रातःशुचिर्भवेत्सम्यक्दंतधावनपूर्वकं निराहारोद्यदेवेशयावच्चंद्रो
दयोभवेत् भोक्ष्यामिपूजयित्वाहंगणेशंशरणंगतः एवंसंकल्पमादौतुस्नात्वाशुक्लतिलैःशुभैः आन्हिकंतुविधायैवपूजांचकुरुसद्व्रत
यथाशक्त्यातुसौवर्णींप्रतिमांचविधायच सौवर्णेराजतेताम्रेमृन्मयेवाथशक्तितः कुंभेपुष्पफलैःपूर्णेदेवंतत्रैवविन्यसेत् शुभदेशेन्यसे
त्कुंभंवस्त्रंतत्रनिधायच पद्ममष्टदलंकृत्वागंधाद्यैःपूजयेत्ततः रक्तपुष्पैश्चधूपैश्चएभिर्नामपदैःपृथक् आवाहनंगणेशायआसनंवि-
घ्ननाशिने पाद्यंलंबोदरायेतिअर्घ्यंचंद्रार्धधारिणे विश्वप्रियायाचमनंस्नानंचब्रह्मचारिणे चंदनंरुद्रपुत्रायपुष्पंचगुणशालिने भवा
नीप्रियकर्त्रेचधूपंदद्याद्यथाविधि दीपंरुद्रप्रियायेतिनैवेद्यंविघ्ननाशिने तांबूलंसिद्धिदायेतिफलंसंकष्टनाशिने इतिनामप
दैःपूजांकृत्वामासयमान्शृणु श्रावणेसप्तलड्डुकान्नभस्येदधिभक्षणं आश्विनेचोपवासंचकार्तिकेपयभक्षणं मार्गेमासिनिरा
हारःपौषेगोमूत्रभक्षणं तिलानष्टशतंमाघेफाल्गुनेघृतशर्करां चैत्रेमासिपंचगव्यंदूर्वारसंतुमाधवे ज्येष्ठेघृतंपलंभोज्यंआषाढेमधु
भक्षणं इतिमासयमान्कृत्वानरोमुच्येतसंकटात् भुंजीयाद्वातथासप्तग्रासान्वास्वेच्छयासकृत् अशक्तश्चेत्ततःसिद्धिर्भविष्यति
नसंशयः मंत्रेणानेनसंप्रार्थ्यदेवदेवंजगद्गुरुं एवंपूजाप्रकर्तव्याषोडशैरुपचारकैः नानाभक्ष्यादिसंयुक्तसुपहारंप्रकल्पयेत्
मोदकान्कारयेद्राजन्तिलजान्दशसंख्यकान् देवाग्रेस्थापयेत्पंचदद्याद्विप्रायदापयेत् पूजयित्वातुतंविप्रंभक्तिभावेनदेववत्

त्दक्षिणांचयथाशक्त्यादत्वापंचैवमोदकान् संसारपीडाव्यथितंहिमांसदासंकष्टभूतंसमुखप्रसीद त्वंत्राहिमांनाशयकष्टसंघान्नमो
नमःकष्टविनाशनाय इतिसंप्रार्थ्यदेवेशंचंद्रायार्घ्यंनिवेदयेत् ब्राह्मणान्भोजयेत्पश्चाद्गुणेशप्रीतयेसदा स्वयंभुंजीतपंचैवमोदकान्बं
धुभिःसह अशक्तोत्वेकमन्नंवाभुंजीयाद्दधिनासह अथवाभोजनंकार्यंएकवारंहिपांडव भूमौशय्याजितक्रोधोलोभदंभविवर्जितः
प्रतिमांगुरवेदद्यादाचार्यायनिवेदयेत् गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर व्रतेनानेनसुप्रीतोयथोक्तफलदोभव एवंव्रतंप्रकर्तव्यं-
चतुर्थ्यांमासकृष्णके गाणपत्यंतथाचार्यंसर्वशास्त्रविशारदं आचार्यंवरयेदादौयथोक्तविधिनार्चयेत् एकविंशतिविप्रान्वैवस्त्रालंका
रभूषणैः पूजयेद्वाहिरण्याद्यैर्मोदकैश्चैवहोमयेत् अष्टोत्तरसहस्रंतुशतंवाष्टाधिकंतथा अष्टाविंशतिरष्टौवावेदोक्तैस्तिलसर्पिषा स
पत्नीकंसुवर्णाद्यैर्गोभूवस्त्रादिभूषणैः छत्रंचोपानहौदद्यात्कमंडलुगृहादिभिः आचार्यंपूजयेद्राजन्गणेशस्यतुतुष्टये एवंकृत्वा
विधानेनप्रसन्नोनात्रसंशयः प्रतिमासंतुयःकुर्यात्त्रीण्यब्दान्येकमेववा अथवाजन्ममर्यादांतस्यदुःखंकदाचन दारिद्र्यंनभवेत्तस्य
संकष्टंनभवंतिहि वत्सरांतेद्वादशान्वैब्राह्मणान्भोजयेत्ततः विद्यार्थीलभतेविद्यांधनार्थीलभतेधनं पुत्रार्थीलभतेपुत्रान्सौभाग्यं
चसुवासिनी शृण्वंतियेव्रतमिदंशक्रप्रमीदृशांहितेवैसुखंप्रविमनोरथपूर्णकामाः नित्यंभवंतिलुलनाःपुरुषाःसुखिन्यस्तेपुत्रपौत्र
धनधान्ययुताःपृथिव्यां एवमुक्त्वाततोव्यासस्तत्रैवांतरधीयत युधिष्ठिरस्ततस्सर्वमकरोद्राजसत्तमः तेनव्रतप्रभावेनस्वराज्यंमा
प्तवान्नृपः हत्वारिपून्कुरुक्षेत्रेस्वराज्यमलभन्नृपः इतिश्रीनारदीयपुराणेकृष्णचतुर्थीसंकष्टहरव्रतंसंपूर्णम् अथअंगा
रकचतुर्थीव्रतंलिख्यते इंद्रउवाच अंगारकचतुर्थ्यांचविशेषोविहितःकुतः वदमेकृपयाब्रह्मन्प्रश्रयान्नियमेनच शृण्वतोन

चमेब्रूहिगिरिजाननकथांशुभां ब्रह्माउ० अंगारकचतुर्थ्यास्तुमहिमानंमहीपते शृणुष्वावहितोभूत्वाकथयामिसमासतः अवंतीनगरेराजन्भरद्वाजोम
हामुनिः वेदवेदांगविद्वाज्ञः सर्वशास्त्रविशारदः अग्निहोत्ररतोनित्यंशिवध्यानेचतत्परः नदीतीरेगतोतिष्ठन्नानुष्ठानरतोमुनिः अकस्मात्कामिनींद
ष्ट्वाकामासक्तोभवन्मुनिः कामबाणाभिभूतःसन् निपपातमहीतले अतिविह्वलगात्राणांतस्यरेतस्तदास्खलि प्रविष्टंतस्यतद्रेतःपृथिवीवि
लमध्यतः ततएककुमारोभूज्जपाकुसुमसंनिभः तंधरित्रीस्नेहवशात्पालयामाससादरं जनुस्त्वंतेनधन्यंस मन्यतेपितरौकुलं ततःसप्तवर्ष
स्तःप्रपच्छजननींनिजां महिताहिकथंमातर्मानुषंदेहमास्थितः कश्चमेजनकोमातस्तन्ममाचक्ष्वसांप्रतं धराउ० भरद्वाजमुनेरेतस्खलितंम
यिसंगतं ततोजातोसिरेपुत्रवर्धितोसिमयाशुभं सुतउवा० तर्हितंमेमुनिंमातर्दर्शयस्वतपोनिधिं ब्रह्माउ० तमादायतदादेवीभारद्वाजंज
गामह धरोवाच भरद्वाजंनमस्कृत्यतद्वीर्यप्रभवंसुतं वर्धिनंतंपुरोधायस्वीकुरुष्वमुनेधुना तदाज्ञयाययौधात्रीस्वधामरुचिरंतदा भारद्वाजः
सुतंलब्ध्वामुमुदेचालिलिंगतं आघ्रायशिरउत्संगेस्थापयामासतंमुदा मुहूर्तेशुभलग्नेचचकारोपनयंमुनिः वेदशास्त्राण्युपाशिष्यगणेशस्यम
नुंशुभं उवाचकुर्वनुष्ठानंगणेशप्रीतयेचिरं संतुष्टोदास्यतेकामान्सर्वांस्तेवमनोगतान् ततोमंदाकिनीतीरेपद्मासनगतोमुनिः सन्नियम्येंद्रि
याण्याशुध्यायन्हेरंबमंतरा जजापपरमंमंत्रंवायुभक्षोभृशंमुनिः एवंवर्षसहस्रंसतस्तपस्तेपेसुदारुणं माघकृष्णचतुर्थ्यांतमुदयेशशिनःशुभे
दर्शयामासस्वंरूपंगणनाथोथदिग्भुजं दिव्यांबरंभालचंद्रंनानालंकारमंडितं ददर्शसूर्यदेवस्यसबालःस्फुरतःस्थितं उत्थायप्रणिपत्यैनंतुष्टा
वजगदीश्वरं नमस्तेविघ्ननाशायनमस्तेविघ्नकारिणे सुरासुरशिरोरत्नसर्वशास्त्रप्रबृंहिणे निरामयायदेवायनिर्गुणायगुणच्छिदे नमोब्र-
ह्मविदांश्रेष्ठस्थितिसंहारकारिणे नमस्तेजगदाधारनमस्त्रैलोक्यपालक दयानिधेब्रह्मविदेब्रह्मणेब्रह्मरूपिणे लक्ष्यालक्ष्यस्वरूपायदु

र्लक्षणछिदेनमः इतिस्तुतःप्रसन्नात्मापरमात्मागजाननः उवाचश्लक्ष्णयावाचावरंयाचयबालक एवमुक्तोभूमिपुत्रोततर्डंचेगजाननं भौमउवा॰
॥ धन्योतातोममहिजननंदर्शनात्तेस्फुरेशधन्यंज्ञानंकुलमपितयोर्येनदृष्टोसिसाक्षात् धन्यावाणीवसतिमयियापादपद्मेचभक्ति र्जातोसित्वं
वरदस्फुलभोभक्तिभावेनदेव यदितुष्टोसिदेवेशस्वर्गेभवतुमेस्थितिः अमृतंपातुमिच्छामिदेवैःसहगजानन कल्याणकारिमेनामख्यातिमेतुज
गत्त्रये दर्शनंमेचतुर्थ्यांयज्जातंतेपुण्यदंविभो अतःसापुण्यदानित्यंसर्वसंकष्टहारिणी कामदाव्रतकर्तॄणांत्वत्प्रसादात्स्फुरेश्वर गजानन॰
अमृतंप्राप्स्यसेसम्यक्देवैःसहधरासुत मंगलेतिचनाम्नात्वंलोकेख्यातिंगमिष्यसि अंगारकेतिरक्तत्वाद्दृस्फमत्यायतःस्फुतः अंगारकच
तुर्थींयेकरिष्यंतिनराभुवि तेषामब्दभवंपुण्यंसंकष्टीव्रतसंभवं निर्विघ्नतासर्वकार्येभविष्यतिनसंशयः अवंतीनगरेराजाभविष्यतिपरंत
प व्रतानामुत्तमंयस्मात्कृतंमेव्रतमुत्तमं यस्यसंकीर्त्तनान्मर्त्यः सर्वकामानवाप्नुयात् इतिदत्वावरान्देवोत्त र्दधेद्विरदाननः ततस्तुमं-
गलोदेवंस्थापयित्वाप्रयत्नतः शुंडासुखंदशभुजंसर्वावयवसुंदरं प्रसादंकारयामासगजाननमुदावहं संज्ञामंगलमूर्तिंचदेवदेवस्यसाकरोत्
ततोभवत्कामदंतत्क्षेत्रंसर्वजनस्ययत् ॥ ॥ अनुष्ठानात्पूजनाच्चदर्शनात्सर्वमोक्षदम् ततोविनायकोदेवोविमानवरमुत्तमं प्रेष
यामासस्वगणान्भौममानेतुमंतिके तेगत्वातेनदेहेनभौममानीतरात्तदा गणेशस्यांतिकंराजन्तदद्भुतमिवाभवत् ततोभौमोभवत्ख्या
तस्त्रैलोक्येसचराचरे यतोभौमेनसंकष्टचतुर्थीभौमसंयुता कृताप्राप्तंयथास्वर्गेसुधापानंसुरैःसह अतश्चांगारकयुताचतुर्थीप्रथिताभुवि ॥
चिंतितार्थप्रदानेनचिंतामणिरितिप्रिया प्रयातोमंगलमूर्तिःसर्वानुग्रहकारकः परिणेतुसनगरात्पश्चिमेपथितोभवत् चिंतामणिरितिख्यातःसर्वविघ्न
निवारणः अतःसम्यक्सगंधर्वैःपूज्यतेसर्वविबुधैर्दये ददातिवांछितानर्थांत्सुत्रपौत्रादिसंपदः इतिश्रीगणेशपु॰ब्रह्मेंद्रसंवादेअंगारकचतुर्थीव्रतंसंपूर्ण

श्रीगणेशायनमः अथपंचमीव्रतानिलिख्यंते अथचैत्रशुक्लपंचमीकल्पादिः चैत्रेमासिसितेपक्षेपंचम्यांपूज
येद्धरिम् तत्रदोलोत्सवंकुर्यात्पुष्पधूपैश्चपूजयेत् नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः स्रक्चंदनसमायुक्तान्ब्राह्मणान्भोज
येत्ततः इतिहेमाद्रौभविष्ये अथश्रावणशुक्लपंचमीनागपूजायांपरा पंचमीनागपूजायांकार्याषष्ठीसमन्विता तस्यां
तुतुषितानागाइतरसाचतुर्थिका अथनागपंचमीव्रतंहेमाद्रौप्रभासखंडे ईश्वरउवाच श्रावणेमासिपंचम्यांशुक्लपक्षे
तुपार्वती द्वारस्योभयतोलेख्यागोमयेनविषोल्बणाः सातुपुण्यतमाप्रोक्तादेवानामपिदुर्लभा कुर्याद्द्वादशवर्षैस्तुपंचम्यांचव
रानने चतुर्थ्यामेकभक्तंतुतस्यांनक्तंप्रकीर्तितम् भूरिचंद्रमयंनाग मथवाकलधौतजम् कृत्वादारुमयंवापिअथवामृन्मयंप्रिये
हरिद्राचंदनेनैवपंचसर्पास्तुलेखयेत् पंचम्यामर्चयेद्भक्त्यानागाःपंचफणास्मृताः पूजयेद्विधिवद्वीरलाजपंचामृतैःसह करवी
रैःशतपत्रैर्जातीपुष्पैश्चपद्मकैः तथागंधादिधूपैश्चपूजयेन्नागपंचकम् ब्राह्मणान्भोजयेत्पश्चाद्घृतपायसमोदकैः अनंतंवा
सुकिंशेषंपद्मंकंबलमेवच तथाकर्कोटकंनागंभुजंगाश्वतरंतथा धृतराष्ट्रंशंखपालंकालीयंतक्षकंतथा पिंगलंचमहानागंमा-
सिमासिप्रकीर्तिताः व्रतस्यांतेपारणंस्यात्क्षीरैर्ब्राह्मणभोजनम् सुवर्णभारनिष्पन्नंनागंदद्याच्चगांतथा तथावस्त्राणिदे
यानिव्यासायामिततेजसे एवंसंपूजयेन्नागान्सदाभक्त्यासमन्वितः विशेषतस्तुपंचम्यांपयसापायसेनच दिवारात्रौनरैस्तत्र
मेदिनीखननंनहि इतिप्रभासखंडेनागपंचमीव्रतम् अत्रैवनागदष्टव्रतम् हेमाद्रौभविष्योत्तरपुराणे सुमंतुउवाच

नागदष्टोनरोराजन्प्राप्यमृत्युंव्रजत्यधः अधोगत्वाभवेत्सर्पोनिर्विषोनात्रसंशयः शतानीकउवाच नागदष्टःपितायस्य
भ्रातावादुहितापिच मातापुत्रोथवाभार्याकर्तव्यंतद्वदस्वमे मोक्षायतस्यविप्रेंद्रदानंव्रतमुपोषणम् ब्रूहिमेद्विजशार्दूलय
द्धक्त्वाकरोम्यहम् सुमंतउवाच उपोष्यापंचमीसम्यक्नागानांबलवर्द्धिनी सुमेकमेकंयावच्चविधानंशृणुभारत सु
मेकंसंवत्सरम् उपोष्येतिदिवाभोजनाभावः तस्यांनक्तमित्यग्रेनक्तोक्तेः श्रावणेमासिपंचम्यांशुक्लपक्षेनराधिप सा-
पिपुण्यतमाप्रोक्ताग्राह्यासागतिकाम्यया॥ चतुर्थ्यामेकभक्तंच पंचम्यांनक्तमाचरेत् कुर्याच्चांद्रमसंनाग मथवाकलधौतजं
हेमरौप्यंचेत्यर्थः अथदारुमयंभव्यंमृन्मयंवाप्यशक्तितः पंचम्यामर्चयेद्भक्त्यानागंपंच फणंतथा करवीरैस्तथापद्मैर्जातिपुष्पैः
सुगंधिभिः गंधधूपैश्चनैवेद्यैःस्नाप्यक्षीरादिभिर्नृप ब्राह्मणान्भोजयेत्पश्चाद्घृतपायसमोदकैः अनंतंवासुकिंशंखंपद्मंकंब
लमेवचतथाकर्कोटकंनागंनागमश्वतरंनृप धृतराष्ट्रंशंखपालंकालियंतक्षकंतथा पिंगलंचतथानागंमासिमासिक्रमाद्यजे
त् पूजयित्वाप्रयत्नेनपंचम्यां नक्तभुक्भवेत् एवंद्वादशकृत्वावैश्रावणेतुसितेनृप वत्सरांतेयथाशक्त्याअन्नदानंचकारये
त् ब्राह्मणानांयतीनांचनागानुद्दिश्यभक्तितः इतिहासविदेनागंकांचनंरत्नचित्रितम् गांचदद्यात्सवत्सांवैसर्वोपस्करसं
युताम् दानकालेपठेदेत त्स्मरन्नारायणंविभुम् सर्वगंसर्वधातार मनंतमपराजितम् येकेचिन्मेकुलेसर्पैर्दष्टाप्राप्तास्त्वधो
गतिम् व्रतदानेनगोविंदमुक्तिभाजोभवंतुमे इत्युच्चार्याक्षतैर्युक्तंसित चंदनमिश्रितम् वासुदेवाग्रतोभूपतोयंतोयेथ

निक्षिपेत् अनेनविधिनासर्वेयेमरिष्यंतिवामृताः सर्पतस्तेभियास्यंतिस्वर्गतिंनृपसत्तम कृत्वासर्वान्समुधृत्यकुलजान्कुरुनंद-
न प्रयातिविष्णुसान्निध्यंसेव्यमानोप्सरोगणैः वित्तशाठ्यविहीनोयःसर्वमेतत्फलंलभेत् नक्तेनभक्तिसहिताःसितपंचमी
षुयेपूजयंतिसकृभगवान्कुसुमोपहारैः तेषांगृहेषभयदाहिभवंतिसर्पाअर्चान्विनामणिमयूखविभासितांगाः येनस्यांपूज
यंतीहनागान्भक्तिपुरःसराःनतेषांसर्वतोवीरभयंभवतिकिंचन इतिनागदष्टपंचमीव्रतम् भविष्योक्तम् अथ-
भाद्रपदशुद्धपंचमीव्रतम् तत्रमध्याह्नव्यापिन्यांकार्यम् तथाचमाधवीयेहारीतः पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनी
तिथिः दिनद्वयेनद्याप्तौवापूर्वविद्धायांकार्यम् इतिमदनरत्नात् प्राप्यभाद्रपदेमासिशुक्लपक्षस्यपंचमी तस्यांमध्याह्न
समयेनद्यादौविमलेजले कृत्वापामार्गसमिधा अष्टोत्तरशताधिकाः अथवाकारयेत्सप्तदंतधावनमादिनः वनस्पतिप्रा
र्थना आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते संप्रार्थ्यानेनमंत्रेणकुर्याद्वैदंतधा
वनम् तत्रमंत्रः मुखदुर्गंधिनाशायदंतानांचविशुद्धये ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं अनेनदंतान्संशोध्यस्ना-
यान्मृत्स्नानपूर्वकम् पंचगव्यमंत्रः देशकालौसंकीर्त्य अमुकस्यकायशुद्ध्यर्थंपंचगव्यमहंकरिष्ये गायत्र्यागृह्यगोमूत्रंगं
धद्वारेतिगोमयम् आप्यायस्वेतिचक्षीरं दधिक्राव्णेतिवैदधि शुक्रमसिज्योतिरसिअमृतमसिनामधामसि प्रियंदेवानाम
नाधृष्टंदेवयजमानमसि इत्याज्यम् देवस्यत्वेतिकुशोदकम् आपोहिष्ठेतिमंथयेत् तस्यचतुर्भागंहुत्वा सप्तपत्राःशमाद

र्भा अक्षताश्चैवसंयुताः तेनैवोद्धृत्यहोतव्यं अग्नयेस्वाहा सोमायस्वाहा इरावतीधेनुमती॰ इदंविष्णु॰ ब्रह्मजज्ञानं॰ मा
नस्तोके॰ गायत्र्या॰ विष्णवे॰ ब्रह्मणे॰ रुद्राय॰ सूर्यायस्वाहेतिहोमयेज्जलमध्येवा प्रणवेनअथवाकेशवेतिनाममंत्रेण
स्त्रीणांपंचगव्यंकुर्यात् प्राशयेदिति नद्यादिकेतदास्नात्वाकृत्वानियममेवच ब्राह्मणीक्षत्रियावैश्याशूद्रावापिवरानने
कृत्वानैमित्तिकंक र्मगत्वानिजगृहंपुनः वेदींसम्यक्प्रकुर्वीतगोमयेनोपलिप्यताम् इतिहेमाद्रौ रंगवल्लीसमायुक्तेसर्व
तोभद्रमंडले अव्रणंसजलंकुंभंताम्रंमृन्मयमेवच संस्थाप्यवस्त्रसंयुक्तंकंठदेशेस्रुशोभितम् पंचरत्नसमायुक्तंफलगंधा
क्षतैर्युतम् सहिरण्यंसमासाद्यताम्रेणपटलेनवा वंशमृन्मयपात्रेणयवपूर्णेनचैवहि आच्छादयेत्तंचैलेनलिखेदष्टदलंत
तः तत्रसप्तऋषीन्दिव्यान्भक्तियुक्तःप्रपूजयेत् अथसंकल्पः मासपक्षाद्युल्लिख्यममऋतुसंपर्कजनित दोषपरिहा
रार्थंअरुंधतीसहितकश्यपादिसप्तऋषिप्रीत्यर्थंऋषिपूजनमहंकरिष्ये अथपूजाविधिः आगच्छंतुमहाभागाश्वतु
र्वेदपरायणाः यावद्व्रतमिदंकुर्वेकृपयाभवतामहं आवाहयामि मूर्तिब्रह्मण्यदेवस्यब्रह्मण्यंतेजउत्तमम् सूर्यकोटिप्र
तीकाशम्ऋषिवृंदंविचिंतयेत् ध्यानं ऋग्यजुःसामवेदानांस्वरूपेभ्योनमोनमः पुराणपुरुषेभ्योहिदेवर्षिभ्योनमोनमः आ
सनं गंधपुष्पाक्षतैर्युक्तंपाद्यंगृण्हंतुभोद्विजाः प्रसादंकुरुतप्रीतास्तुष्टाःसंतुसदामम पाद्यं नभस्यैशुक्लपंचम्यामर्चिता
ऋषिसत्तमाः दहंतुपापंमेसर्वंगृण्हंत्वर्घ्यंनमोनमः अर्घ्यं लोकानांतुष्टिकर्तारोयूयंसर्वेतपोधनाः नमोवोधर्मविज्ञेभ्योमह

र्षिभ्योनमोनमः आचमनीयं॰ पंचामृतस्नानं पयोदधिघृतंचैवशर्करामधुसंयुतम् पंचामृतेनस्नपनंकरिष्येऋषिसत्तमाः पं-
चामृतस्नानं मंदाकिन्याःसमानीतंयमुनागौतमीजलम् कृष्णाचनर्मदातापीताभ्यःस्नानार्थमाहृतम् स्नानं सर्वेनित्यंतपोनि
ष्ठाः ब्रह्मज्ञाःसत्यवादिनः वस्त्राणिप्रतिगृण्हंतुमुक्तिदाःसंतुमेसदा वस्त्रं॰ नानामंत्रैःसमुद्भूतंत्रिवृत्स्यब्रह्मसूत्रकम् प्रत्येकंच
प्रयच्छामिऋषयःप्रतिगृह्यताम् उपवीतानि कुंकुमागरुकर्पूरसुगंधैर्मिश्रितंशुभम् गंधाढ्यंचंदनंदिव्यंगृण्हंतुऋषिसत्तमाः
गंधं शुभ्राक्षताश्चसंपूर्णाःप्रक्षाल्यचनियोजिताः शोभायैवोमयादत्तागृह्यंतांमुनिसत्तमाः अक्षताः मालतीचंपकादीनि
मालत्यादीनिवैद्विजाःमयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यताम् पुष्पाणि वनस्पतिरसोद्भूतोगंधाढ्यःसुमनोहरः आघ्रे
यःसर्वदेवानांधूपोयंप्रतिगृह्यताम् धूपंस॰ आज्यंचवर्त्तिसंयुक्तं॰दीपं॰ नानापक्वान्नसंयुक्तैरसैःषड्भिःसमन्वितं गृण्हंतुऋ
षयःसर्वेनैवेद्यंवसुदायकाः नैवेद्यं मध्येपानीयं उत्तरापोशनं करोद्वर्तनार्थेचंदनं नमोवेदविदःश्रेष्ठाऋषयःसूर्यसंनि
भाः गृण्हंत्विदंफलंतुष्टामयादत्तंहिभक्तितः फलं पूगीफलंमहद्दिव्यं॰ पुगीफलं हिरण्यगर्भेतिदक्षि॰ यानिकानिचपापा
निब्रह्महत्यासमानिच तानितानिविनश्यंतिप्रदक्षिणपदेपदे प्रदक्षिणां नमोस्तुऋषि वृंदेभ्योदेवर्षिभ्योनमोनमः सर्वपा
पहरेभ्योहिवेदविद्भ्योनमोनमः नमस्कारः एतेसप्तर्षयःसर्वेभक्त्यासंपूजितामया सर्वेपापंव्यपोहंतुज्ञानतोज्ञानतःकृतं
प्रार्थना वायनं कृतायाःपूजायाःसांगतासिध्यर्थंब्राह्मणायवायनप्रदानंकरिष्ये तथाचब्राह्मणपूजनं वायनंफलसंयु

व्र॰ रा॰ १

कं सघृतं दक्षिणान्वितम् द्विजवर्याय दास्यामि व्रतसंपूर्णहेतवे भवंतः प्रतिगृण्हंतु ज्योतीरूपास्तपोधनाः उभयोस्ता
रकाः संतु वायनस्य प्रदानतः वायनं न्यूनातिरिक्तकर्माणि मया यानि कृतानि च क्षमध्वं तानि सर्वाणि यूयं सर्वे तपोधनाः
यांतु देवगणा॰ विसर्जनं एवं संपूज्य विधिवद्भक्तियुक्तेन चेतसा तेषामग्रे च श्रोतव्यं शुभं चैव कथानकम् इति पूजावि
धिः अथ कथा हेमाद्रौ ब्रह्मांडे सिताश्व उ॰ श्रुतानि देवदेवेश व्रतानि सुबहूनि च सांप्रतं मे समाचक्ष्व व्र
तं पापप्रणाशनम् ब्रह्मोवाच शृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् ऋषिपंचमि विख्यातं सर्वपापहरं परम् ये
न चीर्णेन राजेंद्र नरकं नैव पश्यति तत्रैवोदाहरिष्यंति इतिहासं पुरातनम् वैदर्भे च द्विजवरो उत्तंको नाम नामतः तस्य भार्या
सुशीलेति पतिव्रतपरायणा तस्या अपत्ययुगुलं पुत्रो हि सुविभूषणः अधीतवान्सुतस्तस्य वेदान्सांगपदक्रमान् समा-
नेन कुलीनेन सुता वापि विवाहिता विवाहिता च सा दैवाद्वैधव्यं प्राप सत्तमा सती लं पालयंती सा आस्ते निजपितुर्गृहे त
स्या दुःखेन संतप्तः सुतं संस्थाप्य वेश्मनि गंगातीरवनं प्राप्तः कदाचित्तु नया सह स तत्राध्यापयामास शिष्यान्वेदं द्विजो
त्तम ः सुता च कुरुते तस्य पितुः शुश्रूषणं परम् पितुःशुश्रूषणं कृत्वा परिश्रांता कदाचन निशीथे किल संसुप्ता कृमिराशिर
जायत शिष्यास्तथाविधां दृष्ट्वा विवस्त्रां प्रस्तरे स्थिताम् शिष्या निवेदयामासु स्तन्मातुः करुणास्थिताः न जानीमो वयं
किंचिद्देवीं साध्वीं तथाविधाम् कृमिराशिमयी जाता मातः संप्रति दृश्यते वज्रपातसमं श्रुत्वा यच्छिष्यैश्च उदाहृतम् ॥ सा

पं॰ ५

भ्रांतमानसाशीघ्रंतत्समीपमुपागमत् सानांतथाविधांदृष्ट्वाविललापसुदुःखिता उरश्चताडयामाससुतरामोहमापच
क्षणेनप्राप्यचैतन्यंउत्थाप्यप्रतिमृज्यच समालंब्यचबाहुभ्यांनिन्येतस्यितुरंतिकम् स्वामिन्कथयमेसाध्वीकेनदुष्कृतक
र्मणा निशीथेचप्रसूतेयंजायतेक्रिमिसंकुला एवंश्रुत्वाततोवाक्यंऋषिर्ध्यानपरायणः ज्ञात्वानिवेदयामासतस्याः
प्राक्जन्मचेष्टितम् ऋषिरुवाच प्रागियंसप्तमेतीतेजन्मनिब्राह्मणीह्यभूत् रजस्वलाचसंजाताभांडादीनस्पृशत
दा अस्यास्तुपाप्मनातेनजायतेक्रिमिवद्वपुः रजस्वलायाःपापेनयुक्ताभवतिसानघे प्रथमेहनिचांडालीद्वितीयेब्रह्मघा
तिनी तृतीयेरजकीप्रोक्ताचतुर्थेहनिशुद्ध्यति तदानयासखीसंगाद्व्रतंदृष्ट्वावमानितम् दृष्टव्रतप्रभावेनजाताद्विजकु
लेमले अवमानाद्व्रतस्यास्यकृमिराशिमयीधुना एतत्तेकथितंसर्वंकारणंदुष्कृतस्यच सुशीलाउ० दर्शनादपि
जन्मस्याद्विप्राणांनिर्मलेकुले जन्मयुष्मद्विधानांहिजायतेब्रह्मतेजसां अवज्ञयाप्रजायंतेनिशीथेकृमिराशयः महा
श्चर्यंकथंनाथतद्व्रतंकथयस्वमे ऋषिरुवाच सुशीलेश्रृणुतत्सम्यक्व्रतानामुत्तमंव्रतम् येनचीर्णेनसहसापापाद-
स्मात्प्रमुच्यते दुःखत्रयाच्चमुच्येतनारीसौभाग्यमाप्नुयात् कल्याणानिविवर्धंतेसंपदश्चनिरापदः युधिष्ठिरउवाच
श्रुतानिदेवदेवेशव्रतानिसुबहूनिच सांप्रतंमन्यदाचक्ष्वव्रतंपापप्रणाशनम् श्रीकृष्णउवाच अथान्यदपिराजेंद्रपं
चमीऋषिसंज्ञिता कथयिष्यामियत्कृत्वानारीपापात्प्रमुच्यते युधिष्ठिरउ० कीदृशीपंचमीकृष्णकथंचऋषिसंज्ञिता

पातकान्मुच्यतेवृक्ष्मान्नारीयदुकुलोद्भव पापानिचबहून्यत्रविद्यंतेकिलकेशव कथंवाऋषिपंचम्यांनारीकस्मात्प्रमुच्यते कृष्णउवाच अज्ञानाज्ञानतोवापियास्त्रीजातारजस्वला दुष्टास्पृशतिभांडानिगृहकर्मणिसंस्थिता प्राप्नोतिसामहापापंसर्वानारीरजस्वला शृणुतत्कारणंयस्माद्वर्जनीयारजस्वला प्रोत्सार्यगृहतोदूरंचातुर्वर्ण्येनभारत ब्रह्महत्यांपुराशक्रोवृत्रंहत्वाह्यवाप्तव तयावैराजशार्दूलक्रीडितोवृत्रसूदनः ब्रह्माणंसमुपागच्छदात्मनःशुद्धिकारणात् शुद्धिंशक्रस्यराजेंद्रप्रहृष्टेनांतरात्मना विभज्यब्रह्महत्यांतुचतुर्धाचचतुर्मुखः प्राक्षिपद्राजशार्दूलचतुस्थानेषुवैतदा वह्नौप्रथमज्वालासुनदीषुप्रथमोदके पर्वताग्रेरक्षजातौनारीरजसिपार्थिव ततोरजस्वलानारीप्रोत्सार्याचप्रयत्नतः ब्रह्मणःशासनात्पार्थचातुर्वर्ण्येनसर्वदा प्रथमेहनिचांडालीद्वितीयेब्रह्मघातकी तृतीयेरजकीप्रोक्ताचतुर्थेहनिशुद्ध्यति अज्ञानाज्ञानतोवापिजातंसंपर्कपातकम् तत्पापसंक्षयार्थेवैकार्येयंऋषिपंचमी सर्वपापप्रशमनीसर्वोपद्रवनाशिनी ब्रह्मक्षत्रियविट्शूद्रस्त्रीभिःकार्याविशेषतः कृष्णउवाच अत्रार्थेयत्पुरावृत्तंप्रवक्ष्यामिकथानकम् पुराकृतयुगेराजाविदर्भायांबभूवह श्येनजिन्नामराजर्षिश्चातुर्वर्ण्यानुपालकः तस्यदेशेवसन्विप्रोवेदवेदांगपारगः सुमित्रोनामराजेंद्रसर्वभूतहितेरतः कृषिवृत्तिसदायुक्तोकुटुंबपरिपालकः तस्यभार्यासुसाध्वीचपतिशुश्रूषणेरता जयश्रीर्नामविख्याताबहुभृत्यसुहृज्जना अतिचिंतान्वितासाचप्रावृट्कालेचमध्यमा क्षेत्रादीषुरतासाध्वीव्याकुलीकृतमानसा एकदासात्मनःप्राप्तंऋतुकालंव्यलोकयत् रजस्वलापिसाराजन्गृहकर्मचकारह भां

डादीन्सास्पृशद्राजन्‌ऋतौप्राप्तेपिभामिनी कालेनबहुनासाध्वीपंचत्वमगमत्तदा तस्याभर्त्तापिविप्रोसौकालधर्म्ममुपेयिवा
न् एवंतौदंपतीराजन्स्वकर्म्मवशगौतदा भार्यातस्यजयश्रीसाऋतुसंपर्कदोषतः शुनियोनिसमुत्पन्नाशुनीचाभून्नरेश्वर
तस्याःसंपर्कदोषेणबलिवर्दोबभूवह एवंतौदंपतीराजन्स्वकर्मवशगौतदा ऋतुसंपर्कदोषेणतिर्यग्योनिमुपागतौ। स्वध
र्म्माचरणाज्ज्ञातावुभौजातिस्मरौतथा शुनस्यैवगृहेराजन्स्मरंतौपूर्वपातकम् सुमित्रस्यचपुत्रोभूद्गुरुशुश्रूषणेरतः सुम
तिर्न्नामधर्मज्ञोदेवतातिथिपूजकः अथक्षयाहेसंप्राप्तेपितुस्तस्यमतिस्तदा भार्यांचंद्रवतींप्राहसुमतिःश्रद्धयान्वितः अद्यसां
वत्सरदिनंपितुर्मेचारुहासिनि भोजनीयाद्विजाश्चारुपाकश्चविधीयताम् तयाकृतापाकशुद्धिःसुमतेर्भर्तुराज्ञया सुक्तंपायस
भांडेवैसर्पेणगरलंततः दृष्ट्वाब्रह्मवधाद्भीताशुनीभांडानिसास्पृशत् द्विजभार्याचतांदृष्ट्वाउल्मुकेनजघानह भांडादीनि
चप्रक्षाल्यत्यक्त्वापाकंसुमध्यमा पुनःपाकंचकृत्वातुश्राद्धंकृत्वाविधानतः ततोभुक्तेषुविप्रेषुनोच्छिष्टंचददौबहिः भूमौ
क्षिप्तंतयाशुन्याउपवासस्ततोभवत् ततोरात्र्यांप्रवृत्तायांसाशुनीक्षुधिताभृशम् बलिवर्दमुपागत्यभर्त्तारमिदमब्रवीत् बुभु
क्षिताद्यहेभर्त्तर्नदत्तंभोजनादिकम् ग्रासादिकंचनप्राप्तंक्षुधामांबाधतेभृशम् अन्यस्मिन्दिवसेपुत्रोममलेह्यंददात्यसौ
अद्यमह्यंकिमप्येषउच्छिष्टमपिनाददौ पायसान्नेपपाताद्यगरलंसर्पसंभवम् मयाविचिंत्यमनसामरिष्यंतिद्विजोत्तमाः
संस्पृष्टंपायसंगत्वाबध्वाहंताडिताभृशं दुःखितंतेनमेगात्रंकटिर्भग्नाकरोमिकिम् ततःप्राहसचानड्वान्भद्रेतेपापसंग्रहात्

किंकरोमिह्यशक्तोहंभारवाहोद्यसंस्थितः अद्याहमात्मजक्षेत्रेवाहितःसकलंदिनं मारितश्चात्मजेनाहंमु खंबध्वाबु-
भुक्षितः वृथाश्राद्धंकृतंतेनजाताद्यममकष्टता कृष्णउवाच तयोःसंवदतोरेवमातापित्रोश्चभारत श्रुत्वापु
त्रस्तदावाक्यंयदुक्तंचतदोभयोः ततोरजन्यांतत्कालंददौतस्यैवभोजनम् पितरौतौविदित्वातुदत्तवान्सुमतिस्तदा
तदासौदुःखितःपुत्रोज्ञात्वावस्थांतदातयोः मातापित्रोस्तुराजेंद्रतदासौप्रस्थितोवनम् ज्ञातुमिच्छामिकर्मैवेमा
तापित्रोश्चभारत तत्रगत्वाज्ञानवृद्धान्ऋषीन्समवनाश्रितान् प्रणिपत्याब्रवीद्वाक्यंहितंचैवतदातयोः सुमतिरु
वाच कथयध्वंविप्रवर्याःप्रश्नमेकंसमाहिताः केनकार्मविपाकेनपितरौमेतपोधनाः इमामवस्थांसंप्राप्तौमुच्येते
पातकात्कथम् कृष्णउवाच तदाकर्ण्यवचस्तस्यसुमतेर्दुःखितस्यच ऋषिःसर्वतपोनामसर्वज्ञःकरुणान्वितः सु
मतिंप्रत्युवाचेदंतत्पित्रोर्मुक्तयेतदा ऋषयऊचुः तवमातापुराविप्रस्वगृहेबाल्यभावतः मासंऋतुंविदित्वातुसं
पर्कमकरोद्द्विज तेनकर्मविपाकेनशुनियोनिमुपागता पितापिस्पर्शदोषेणबलिवर्दोबभूवह एतयोर्मुक्तिकामार्थंकु-
रुत्वमृषिपंचमी भार्ययासहविप्रेंद्रऋषीन्संपूज्ययत्नतः आचरस्वव्रतंतत्रसप्तवर्षंद्विजोत्तम अंतेचोद्यापनंकुर्या
द्वित्तशाठ्यविवर्जितः शाकाहाररतःकर्तव्योनीवारैःश्यामकैस्तथा कंदंवाथफलंमूलंहलकृष्टंनभक्षयेत् प्राप्यभाद्र
पदेमासिशुक्लपक्षस्यपंचमी तस्यांमध्यान्हसमयेनद्यादौविमलेजले कृत्वापामार्गसमिधादंतधावनमादितः आयुर्ब

९

लं यशोवर्चः प्रजाः पशवस्वसूनिच ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते संप्रार्थ्यानेनमंत्रेणकुर्याद्वैदंतधावनं मुखदुर्ग
धिनाशायदंतानांचविशुद्धये ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनम् अनेनदंतान्संशोध्यस्नायान्मृत्स्नानपूर्वकम्
तिलामलककल्केनकेशान्संशोध्ययत्नतः परिधायनवंशुद्धंवाससीयुक्समाहितः विधायनित्यकर्माणिगत्वाह्यारुंधतीमृ
षीन्‌ह्यारुंधतीमग्निहोत्रशालां स्नापयेद्विधिवद्भक्त्यापंचामृतरसैःशुभैः चंदनागरुकर्पूरैर्विलिप्यचस्रगंधिभिः पूजयेद्विवि
धैःपुष्पैर्गंधपुष्पादिदीपकैः समाच्छाद्यशुभैर्वस्त्रैःसोपवीतैर्यथाविधि ततोनैवेद्यसंपन्नैरर्घ्यंदद्याच्छुभैःफलैः पूजय
त्स्वऋषीन्‌दिव्यानरुंधत्यासमन्वितान् कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः जमदग्निर्वसिष्ठश्चसाध्वीचैवाप्यरुंधती
मंत्रेणानेनसप्तर्षीन्‌पूजयेत्सुसमाहितः व्रतेनऋषिपंचम्याःकृतेनैवद्विजोत्तम ऋतुसंपर्कजोदोषोक्षयंयातिनसंशयः ॥
श्रीकृष्णउवाच तच्छ्रुत्वासुमतिर्वाक्यंपरमंऋषिभाषितं गृहमेत्यव्रतंचक्रेसभार्यःश्रद्धयान्वितः व्रतंतुऋषिपंचम्याः
सर्वपापप्रणाशनं कृत्वासर्वंयथोक्तंचमातापित्रोःफलंददौ व्रतपुण्यप्रभावेनमातातस्यस्वयोनितः मुक्तानृपतिशार्दूलवि
मानवरसंस्थिता दिव्यांबरधराभूत्वागतास्वर्गंचभारत पितापिसमृतोगच्छत्सुमतेःपशुयोनितः स्वर्गंप्राप्तोमहाराजव्र
तस्यास्यप्रभावतः दिव्यांबरधरोभूत्वागतोस्वर्गेचभारत कायिकंवाचिकंवापिमानसंयच्चदुष्कृतम् तत्सर्वंविलयंयाति
व्रतस्यास्यप्रभावतः यस्ययज्जायतेपुण्यंतच्छृणुष्वनृपोत्तम सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं सर्वदानेषुदत्तेषुतद

तदुच्चारणात् कुरुतेयाव्रतंनारीसाभवेत्सुखभागिनी रूपलावण्यसुक्ताचपुत्रपौत्रादिसंयुता इहलोकेसुखंभुयात्परत्रंचपरांग
तिम् एतत्तेकथितंराजन्व्रतानामुत्तमंव्रतम् सर्वसंपत्प्रदंचैवनारीणांपापनाशनं धनंयशश्चस्वर्गंचपुत्रानपियुधिष्ठिर पठ
तांशृण्वतांचापिसर्वपापप्रनाशनम् ॥ ॥ इतिश्रीभविष्योत्तरपुराणेऋषिपंचमीव्रतकथासंपूर्णा ॥ ॥ छ
अथोद्यापनं युधिष्ठिरउवाच किमस्योद्यापनंप्रोक्तंव्रतपूर्णफलप्रदं सुमतिःकेनविधिनाचकारवदतत्वतः
कृष्णउवाच पूर्वस्मिन्दिवसेकुर्यादेकभक्तंसमाहितः प्रातरुत्थायसुस्नातस्ततोगुरुगृहंव्रजेत् प्रार्थयेत्तंममाचार्योभ
वोद्यापनकर्मणि पूर्वोक्तेनैवविधिनास्नात्वा भक्त्यासमन्वितः शुचौदेशेसमालिप्यसर्वतोभद्रमंडले अव्रणंसजलंकुंभंताम्रंमृ
न्मयमेवच संस्थाप्यवस्त्रसंवीतंकंठदेशेसुशोभनम् पंचरत्नसमायुक्तंफलगंधाक्षतैर्युतम् सहिरण्यंसमासाद्यताम्रेणपट
लेनवा वंशमृन्मयपात्रेणयवपूर्णेनचैवहि आच्छादयेत्तच्चैलेनलिखेदष्टदलंततः सौवर्णीःप्रतिमाकार्याऋषीणांभावित
त्मनाम् पलेनवातदर्धेनतदर्धार्धेनवापुनः शक्त्यावाकारयेत्तत्रवित्तशाठ्यंविवर्जितः कृष्णउवाच वितानंपंचव
र्णंचफलपुष्पसमन्वितं बध्नीयादुपरिश्रीमत्संभारान्संविधायच मध्यान्हेपूजयेद्भक्त्याऋषीन्श्रद्धासमन्वितः कश्यपो
त्रिर्भरद्वाजोविश्वामित्रोथगौतमः जमदग्निर्वसिष्ठश्चसाध्वीचैवाप्यरुंधती गृण्हंत्वर्घ्यंमयादत्तंतुष्टाभवतुमेसदा एवंपू
जांविनिर्वृत्यऋषीन् ध्यात्वासमाहितः अनेनविधिनासप्तवर्षाणिव्रतमाचरेत् आदौमध्येतथाचांतेकुर्यादुद्यापनंबुधः



६

आचार्यान्वरयेत्सप्तवेदवेदांगपारगान् प्रतिमाःसप्तकुर्वीतस्वर्णेनस्वशक्तितः जटिलासाक्षसूत्राश्चकमंडलुसमन्विताः सं
स्थाप्यकलशेष्वेतान्मृन्मयेष्वव्रणेषुच स्नापयेद्विधिवद्भक्त्यापंचामृतपयादिभिः पूर्वोक्तविधिनाराजन् कृत्वापूजांसमाहि-
तः रात्रौजागरणंकुर्यात्पुराणश्रवणादिभिः कृतनित्यक्रियःप्रातर्जुहुयात्तिलसर्पिषा वैदिकोवाथपौराणःअधिकारोम-
नुस्मृतः सहस्त्रोमाःसहावाथनाममंत्रैस्त्वथपृथक् अष्टोत्तरसहस्त्रंवाशतमष्टोत्तरंतुवा पुनःपूजांततःकृत्वागुरुंसंपूज
येद्व्रती स्वर्णांगुलीयवासोभिःकुंडलामृतभोजनैः सप्तगाश्चैवदातव्यावस्त्रालंकारसंयुताः दद्यादेकांसवत्सांचगुरवेगांप
यस्विनीम् पूजयेदृत्विजःसप्तवासोभिर्दक्षिणादिभिः कलशानुपवीतांश्चदद्यात्तेभ्यःस्वभक्तितः आचार्यंचसपत्नीकंप्र
णिपत्यसमापयेत् भोजयेद्ब्राह्मणान्भक्त्यादीनानाथान्प्रतर्प्यच सोपस्करास्ताःप्रतिमाआचार्येभ्योनिवेदयेत् लब्ध्वानुज्ञांनभुंजी
तइष्टैर्बंधुजनैःसह उद्यापनविधिःप्रोक्तोसर्वत्रायंफलार्थिनां अनेनविधिनासम्यक्व्रतमेतत्समाचरेत् सर्वव्रतेषुयत्पुण्यंसर्वतीर्थे
षुयत्फलं सर्वदानेषुदत्तेषुतद्देतद्व्रतचारिणां एवंयाकुरुतेभूपउद्यापनविधिंपरं सर्वपापविनिर्मुक्तास्वर्गलोकेमहीयते इहलोके
चिरंकालंभर्त्रासहश्रुचिस्मिता पुत्रपौत्रैःपरिवृताभुक्त्वाभोगान्मनोहरान् निःपापास्वभगानित्यंलभतेचाक्षयांगतिम्
इतिश्रीभविष्यो० ऋषिपंच० व्रतो० विधिःसं० आश्विनशुक्लपंच० ललिताव्र० तत्रदाक्षिणात्यानांशिष्टाचारएवप्रमाणं तत्रम
ध्याह्नव्यापिन्यांकार्यं पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिइतिमाधवीयेहारितोक्तेः दिनद्वयेतद्व्याप्तावव्याप्तौपूर्वाषु

गभूलांइतियुग्मवाक्यात् अन्यच्च शक्तिपूजायांतुअर्धरात्रव्यापिनीग्राह्या यत्तु भूरिजन्माजजल्पवचनंविनारात्रिव्यापि-
न्याग्रहणेप्रमाणाभावात् जागरणस्यचांगत्वात्पूर्वाण्हव्यापिन्येवग्राह्येतितच्चभूरिजन्मनोमंदप्रज्ञस्यदुर्बुद्धिविलसितमा
त्रमित्युपेक्ष्यम् अथव्रतविधिः आचम्यप्राणानायम्यमासपक्षाद्युल्लिख्य ममपुत्रधनविद्यारोगनिर्मुक्तशत्रुगो
विजयपुष्ट्यायुष्यादिकामःस्त्रीअवैधव्यकामा उपांगललिताप्रीत्यर्थंयथामिलितोपचारैःउपांगललितापूजनमहंकरिष्ये
इतिसंकल्प्यपूजांकुर्यात् शुक्लपक्षस्यपंचम्यामिषेमासिचरेद्व्रतम् चत्वारिंशत्तथाष्टौचदंतधावनमादितः आयुर्बलंयशोव
र्चः प्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते संप्रार्थ्यानेनमंत्रेणकुर्याद्दंतधावनम् मुखदुर्गंधिनाशाय
दंतानांचविशुद्धये ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनम् अनेनदंतान्संशोध्यस्नायान्मृत्स्नानपूर्वकम् ततोयथाविधि-
स्नात्वाशुक्लवासागृहंव्रजेत् शुचौदेशेसमालिख्यसर्वतोभद्रमंडलम् अव्रणंसजलंकुंभंताम्रंमृन्मयमेवच संस्थाप्यवस्त्र
संवीतंकंठदेशेसुशोभनम् पंचरत्नसमायुक्तंफलगंधाक्षतैर्युतम् सहिरण्यंसमासाद्यताम्रेणपटलेनवै वंशमृन्मयपात्रेण
यवपूर्णेनचैवहि आच्छादयेत्तच्चैलेनलिखेदष्टदलंततः सौवर्णंराजतंताम्रंपिधानंस्थापयेत्ततः उपचारैःषोडशभिरेभिर्मं
त्रैःसमाहितः नित्यंनैमित्तिकंकुर्यात्ततःपूजांसमाचरेत् इतिविधिः ममममनसेप्सितकामनासिद्ध्यर्थंप्रतिवार्षिकमुपांगल
लितापूजनमहंकरिष्ये तत्रगणपतिपूजनंकारयेत् अथपूजा नित्यंकौशेयवसनांहेमाभांकमलासनां॥भक्तानांव

रदांनित्यंललितांचिंतयाम्यहम् ध्यायामि निजासनेस्वायुधैश्चललितेभक्तवत्सले उपांगललितेमातर्देहिमेव्रतकर्मणि आ
गच्छललितेदेविसर्वसंपत्प्रदायिनि यावद्व्रतंसमाप्येततावत्त्वंसंनिधौभव हिरण्यवर्णांहरिणींसुवर्णरजतस्रजां चंद्रां
हिरण्मयींलक्ष्मींजातवेदोममावह आवाहयामि कार्तस्वरमयंदिव्यंनानामणिगणार्चितम् अनेकशक्तिसंयुक्तमासनं
प्रतिगृह्यताम् तामआवहजातवेदोलक्ष्मीमनपगामिनीं यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहं आसनं गंगादिसर्वतीर्थे
भ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां अश्वपूर्णांरथमध्यांहस्तिनादप्रमोदिनीं श्रियंदेवीमुपह्वयेश्री
र्मादेवीर्जुषताम् पाद्यं निधीनांसर्वरत्नानांत्वमनर्घ्यगुणाह्यसि तथापिभक्त्याललितेगृहाणार्घ्यंनमोस्तुते कांसोस्मि-
तांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीं पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं अर्घ्यं पाटलोशीरकर्पूरसुरभि
स्वादुशीतलं तोयमाचमनीयार्थंललितेप्रतिगृह्यतां चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदारां तांपद्मिनीमिं
शरणमहंप्रपद्ये अलक्ष्मीर्मेनश्यतांत्वांवृणोमि आचमनीयं पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनंप्री
यतांपरमेश्वरि आप्यायस्वसमेतुतेविश्वतःसो० दधिक्राव्णो० घृतंमिमि० मधुवाताऋ० स्वादुःपवस्व० पंचामृत०
मंदाकिन्याःसमुद्भूतंहेमांभोरुहवासितम् स्नानायतेमयाभक्त्यादत्तंस्वीक्रियतांजलं आदित्यवर्णेतपसोधिजातोवन
स्पतिस्तववृक्षोथबिल्वः तस्यफलानितपसानुदंतुमायांतरायाश्चबाह्याअलक्ष्मीः स्नानं सर्वभूषादिकेसौम्येलोकलज्जा-

निवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां उपैतुमांदेवसखः कीर्तिश्चमणिनासह प्रादुर्भूतोस्मराष्ट्रेस्मिन्कीर्तिमृद्धिंद
दातुमे वस्त्रं मुक्तामणिगणोपेत मनर्घ्यंचसुखप्रदम् उत्तरीयंसुखस्पर्शंललितेप्रतिगृह्यतां उत्तरीयवस्त्रं कृष्णकाञ्चा
सूसंयुक्तंसूत्रंग्रैवेयकंतथा दास्यामिकंठमालार्थंप्रत्यंगेललितेतव कंठमालां मलयाचलसंभूतं घनसारंमनोहरं हृदया
नंदनंचारुचंदनंप्रतिगृह्यतां क्षुत्पिपासामलाज्येष्ठाअलक्ष्मीर्नाशयाम्यहं अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् चंद
नं अक्षताविमलाःशुद्धामुक्ताभाससमप्रभाः भूषणार्थंमयादत्तोगृहाणपरमेश्वरि गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषि
णीं ईश्वरींसर्वभूतानांतामिहोपव्हयेश्रियं अक्षताः मालतीचंपकादीनिनानापुष्पैःसुवासितैः मयाहृतानिपुष्पा-
णिपूजार्थंप्रतिगृह्यताम् मनसःकाममाकूतिवाचःसत्यमशीमहि पशूनांरूपमन्नस्यमयिश्रीश्रयतांयशः पुष्पं॰ ॥
अथांगपूजा उपांगललितायैनमः पादौपू॰ भवान्यैनमः गुल्फौपूजया॰ सिद्धेश्वर्यैनमः जंघेपूजयामि भद्रकाल्यै॰
जानुनीपूजयामि श्रियैन॰ ऊरूपू॰ विश्वरूपिण्यैनमः कटीपूजया॰ देव्यैन॰ नाभिंपू॰ वरदायै॰ कुक्षीपू॰ शिवायै॰ हृदयं॰
वागीश्वर्यैनमः स्कंधौपूजया॰ महादेव्यैनमः बाहू॰ भद्रकालिभद्रा॰ करौपू॰ पद्मिन्यै॰ कंठंपू॰ सरस्वत्यै॰ मुखंपू॰ कमलास
नायै॰ नासिकां॰ महिषम॰ नेत्रेपू॰ लक्ष्म्यैन॰ कर्णौपू॰ भवान्यै॰ ललाटंपू॰ विंध्यवासिन्यै॰ शिरःपूजयामि सिंहवासिन्यैन॰
सर्वांगंपूज॰ देवद्रुमरसोद्भूतःकालागरुसमन्वितः आघ्रेयतामयंधूपोभवानिघ्राणतर्पणः कर्दमेनप्रजाभूतामयिसंभ्व

मकर्दमा श्रियंवासयमेकुलेमातरंपद्ममालिनीं धूपं॰ चक्षूषांसर्वलोकानांतिमिरस्यनिवारणंआर्तिक्यंकल्पितंभक्त्यागृ
हाणपरमेश्वरि आपस्त्रजंतुस्निग्धानिचिक्लीतवसमेगृहे नीचदेवींमातरंश्रियंवासयमेकुले दीपं मोदकापूपलड्डुक
वटकोदुंबरादिभिः सघृतंपायसान्नंचनैवेद्यंप्रतिगृह्यतां आर्द्रांपुष्करिणींपुष्टींसुवर्णांहेममालिनीं सूर्यांहिरण्मयींल
क्ष्मींजातवेदोममावह नैवेद्यं॰ मलयाचलसंभूतंघनसारंमनोहरं करोद्वर्तनकंचारुगृहाणपरमेश्वरि करोद्वर्तनं॰ कर्पू
रेलालवंगादि तांबूलीदलसंयुतं क्रमुकस्यफलंतुभ्यंतांबूलंप्रतिगृह्यतां आर्द्रांयःकरिणींयष्टींपिंगलांपद्ममालिनीं चंद्रां
हिरण्मयींलक्ष्मींजातवेदोममावहतांबूलं मातुलिंगंनारिकेलंफलंखर्जूरसंभवं जंबीरंपनसंवापिगृह्यतांपरमेश्वरि इदं
फलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि तांमआवहजातवेदोलक्ष्मीमलपगामिनीं
यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विंदेयंपुरुषानहं फलं हिरण्यगर्भगर्भ· यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं
सूक्तंपंचदशर्चंचश्रीकामःसततंजपेत् दक्षिणां चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वजोतींषि आर्तिक्यं
प्रतिगृह्यतां पद्माननेपद्मऊरूपद्माक्षीपद्मसंभवे तन्मेभजसिपद्माक्षीयेनसौख्यंलभाम्यहं नीराजनं उपांगलति
तेमातर्नमस्तेविंध्यवासिनि दुर्गेदेविनमस्तुभ्यंनमस्तेविश्वरूपिणि अश्वदायैगोदायैधनदायैमहाधने धनंमेजुषतांदे
देविसर्वकामांश्चदेहिमे पुष्पांजलिं॰ अथदूर्वांकुरान्साग्रान्चत्वारिंशत्तथाष्टभिः अधिकान्हस्तआदायमंत्रमेतज्ज

पेद्बुधः मंत्रः बहुप्ररोहासनतममृताहरितालता यथेयंललितेमातस्तथास्युर्ममनोरथाः इत्युक्त्वापूजयेद्देवींदूर्वाभिःकु
ङ्कुमैस्तथा मंत्रेणाष्टाचत्वारिंशच्छक्तितस्तुसमाहितः दूर्वांकुरान् प्रदक्षिणात्रयंदेविप्रयत्नेनमयाकृतम् तेनपापानिस
र्वाणिव्यपोहंतुनमाम्यहं प्रदक्षिणां साष्टांगोयंप्रणामस्तेनमस्कृत्ययथाविधि त्वद्दासइतिमांभक्त्याप्रसीदपरमेश्व
रि नमस्कारः दीनोहंपापयुक्तोहंदारिद्र्यैकनिकेतनः समुद्धरकृपासिंधोकामान्मेसफलान्कुरु इतिप्रार्थना अ
थवायनं द्विजायवाणकंदद्याद्विंशत्यावटकादिभिः कइदंकस्माइतिमंत्रेणआचार्यायनिवेदयेत् पक्वान्नफलसंयु
क्तंसघृतंदक्षिणान्वितं द्विजवर्यायदास्यामिव्रतसंपूर्णहेतवे वाणकंद्विजवर्यायसहिरण्यंददाम्यहं इतिवायनमंत्रः
ततःकथांसमाकर्ण्यवाणकान्नस्यसंख्यया स्वयंभुंजीतदेवान्नंवाग्यतःसहबांधवैः रात्रौजागरणंकुर्यान्नृत्यगीता-
दिमंगलैः प्रभातेपूजयेद्देवीं ततःकुर्याद्विसर्जनम् सवाहनाशक्तियुतावरदापूजितामया मातर्मामनुगृह्याथगम्यतां
निजमंदिरं इतिविसर्जनम् इतिवार्षिकपूजाविधिः अथकथा सूतउवाच पुराकैलासशिखरेम
हर्षिगणसेविते षडाननंसुखासीनमिदमूचुर्महर्षयः ऋषयऊचुः महासेनमहादेवनंदनानंदविक्रम आख्या
नानिसुपुण्यानिश्रुतानित्वत्प्रसादतः कथास्त्वद्वचनादेवप्रसूताभूरिभूतयः नतृप्तिमधिगच्छामः पायंपायंसुधा
मिव शुश्रूषवोवयंदेव्याव्रतंतत्कथयस्वमः मनोभिलषितार्थानांसिद्धिर्यस्मिन्कृतेभवेत् स्कंदउवाच साधुपृ

ष्टं महादेव्यामाहात्म्यंमुनिपुंगवाःधच्चिस र्वैविधानेनतच्छृणुध्वंजगद्धितम् भृगुक्षेत्रेकिलपुराविप्रोभूद्गौतमाभिधः श्रुतिस्मृतिपु
राणज्ञो धनीचबहुबांधवः अनपत्यस्यतस्याथजज्ञातेजरसःसुतौ श्रीपतिर्गोपतिश्चैवनामनीविदधेतयोः अचिरेणैवका
लेनसपंचत्वमगाद्विजः तौतुबालौधनंबंधून्हित्वासाधर्मचारिणी सतीविवेशदहनंस्वर्यातुंपतिनासह अथतेबांधवाःसा
र्वेहाकष्टमितिचुक्रुशुः निंदंतोदुःखिताश्चक्रुस्तत्क्रियांपारलौकिकीं अथतस्यसपत्नोभूद्दाता सज गृहेधनम् आक्रोशंतौ
चतौ गेहंनिजमानीयदुर्मनाः नास्तिचक्रेधनंसर्वंताभ्यांकिंचिन्नवेददो ततोमौंजीधरौबालौबधुभिःकथितंवसु यया
चतुःपितृव्यंतंदेहिनोद्रविणंहितत् सतावूचेगतंद्रव्यंयुवांकेनप्रतारितौ निर्गच्छतांममगृहादित्यादिपरुषंबहु तौनद्वचो
भिर्निर्विण्णौबालौश्रीपतिगोपती बभाषातेमिथःकष्टंधिगहोपितृहीनता यावोदेशांतरंयत्रस्वजनोनास्तिकश्चन अ
नाभाष्यैवस्वजनाञ्जग्मतुर्दिशमुत्तरां भिक्षाचारौबहून्देशान्वनानिसरितोगिरीन् समतिक्रम्ययातुर्विशालांनामतः
पुरीम् कासारमीक्षांचक्रातेततोस्याःसन्निधौशुभं पुंडरीकवनाकीर्णंरक्तसंध्याविभूषितं संध्याभ्रभूषितंचारुयथा
तारकितंनभः श्रांतौपथिगतौबालौक्षणंविश्रम्यतत्तटे आचम्यशिशिरंतोयंसस्नतुस्तौयथाविधि गताध्वखेदौविप्रा
ग्र्योपुरंप्राविशतांततः वीथीचतुःपथयुतंचारुगोपुरमंडितम् देवतागाररुचिरंसौधराजीविराजितं नानावीथीरतिक्र
म्यविप्रावासमवापतुः कस्यचित्त्वथविप्रस्यक्षत्पिपासार्दितौगृहं ईयतुर्वेदिकायांतावुपविष्टौश्रमातुरौ स्वामीततोस्यगेह

स्यविवेकइतिविश्रुतः आयातौवैश्वदेवांतेसददर्शातिथीद्विजो अनाप्रच्छंस्तथाशीलंतथाचकुलनामनी ऋषिवत्पूजयामास
स्मरन् धर्मसनातनम् अतिथीभोजयामासस्वाह्न्नंसहचात्मना तौब्रह्मचारिणौविप्रोसपर्यांतांविलोक्यच देशबंधुपरि
त्यागखेदमुक्तौबभूवतुः अथापृच्छद्द्विजः स्तौतुकौयुवांकुतआगतौ किमर्थमल्पवयसौनिर्गतौस्वगृहादिति तद्विवेकस्य
वचनमाकर्ण्यश्रीपतिस्तदा आनुपूर्व्येणसकलंवृत्तांतंसमभाषत पितृहीनौचतौज्ञात्वात्यक्तौबंधुजनेनच आश्वास्यस्था-
पयामासस्वगृहेबहुवासरं प्रचक्रमेथशिष्यैश्चसहाध्यापयितुंश्रुतिं बभूवतुश्चतौबालौगुरुशुश्रूषणेरतौ गुरोर्गेहेन्यव
सतामागतानिर्मलाशरत् फुल्लपद्मविशालाक्षीप्रसन्नेंदुशुभानना तस्यांसशिष्यमाचार्यंवरंतंव्रतमुत्तमम् पप्रच्छतु
र्भोकिमिदमावाभ्यामितिकथ्यताम् ताभ्यामेवंकृतेप्रश्नेविवेकइदमब्रवीत् विवेकउवाच उपांगललितादेव्याव्रतं
देवर्षिपूजितं सर्वकामकरंनृणामस्माभिःसमुपास्यते विद्याकामेनकर्तव्यंतथैवधनकाम्यया कृतार्थिनाप्रकर्तव्यंव्रतमेत
दनुत्तमम् विद्याकामौचतौबालौव्रतमाचरतुर्मुदा भक्तितोगुर्वनुज्ञातौयथाशक्तियथाविधि व्रतप्रसादात्सकलंवेदशा-
स्त्रमवापतुः अन्यस्मिन्हायने भक्त्याविवाहार्थंप्रचक्रतुः श्रीपतिर्गोपतिश्चैवव्रतमेतत्तपोधनाः अचिरेणैवकालेनमासि-
माघेतयोर्गुरुः स्वांविवाहोचितांकन्यांनाम्नागुणवतीमिति विनीतायश्रुतवतेयूनेश्रीपतयेतदा विचार्यबांधवैःसाकंददौपु
ण्यर्क्षवासरे पारिबर्हंबहुमुदाप्रादाद्दुहितृवत्सलः विवेकोपिमुदंलेभेसानुरागौविलोक्यतौ अन्याब्देपुनरेतत्तुव्रतंदेव्याश्चच

रूतुः भ्रातरौतौनिजंदेशमिछंतौचधनादिकम् अथान्येहनिकस्मिंश्चित्तावुपाध्यायमूचतुः स्वामिन्युष्मत्प्रसादेनलब्धाविद्या
तथावस्रू अनुजानीहिगच्छामोनिजंदेशमितःपुनः इत्याकर्ण्यसमालोक्यशरूसंवासरमाहतः स्वयंप्रापयितुंतांतौविप्रौकन्यांच
निर्ययौ अथदेव्याःप्रसादेनपितृव्यस्यतयोःकिल अन्वेषणेमतिर्जाताग तौश्रीपतिगोपती निर्गतौक्कगतौदेशंवसनःक्वेत्यचिं
तयत् लोकानिंदंतिमांनित्यंजाताअन्वेषणेमतिः दिदृक्षुस्तौततःसोपिनिर्जगामनिजात्पुरात् किंचित्सनगरंप्राघद्विजबालौ
गवेषयन् तदेवनगरंप्राप्तोविवेकाख्योद्विजोत्तमः सशिष्यःकन्ययासार्धंक्रमन्मार्गेशनैःशनैः तत्रतेषांसमजनीसंगमोमुनि
पुंगवाः विदांचकारतौरूच्छात्रमध्यमेवयसिस्थितौ मूर्ध्न्यवघ्रायतौपश्चान्मुदंलेभेपरंतपाः नशक्नुवन्मुदंवक्तुंप्रेमगद्गदयागि
रा पादानतांगुणवतींविवेकेनप्रणोदिताम् आशीर्वादैर्बहुविधैस्तांस्नुषांसमयोजयत् विवेकस्तुतदातत्रसंभाष्यचपरस्परं
विवेकउवाच रूत्तावेतौमयानीतौपालितौपठितौनव संप्रापितुंप्रयातोस्मि भवतांग्राममुत्तमम् इतिसंभाष्यमाणस्ते
भृगुक्षेत्रंययुर्मुदा ज्ञातिभिःसहसंगम्यशृण्वद्भिस्तद्विचेष्टितं तौपितृव्यगृहेस्थित्वाहायनान्यष्टसप्तच स्वपितृव्यगृहेकांश्चि
दुषित्वादिवसांस्तदा लब्ध्वापितृधनंगेहंसर्वंश्रीपतिगोपती ईयतुस्तदनुज्ञातौविवेकःस्वांपुरींययौ श्रीपतिर्गोपतेस्तत्रवि
वाहमकरोत्तदा तावेकचेतसौसत्रंचक्रतुर्द्विजतर्पणम् श्रीपतिःश्रद्धयायुक्तःकनीयान्व्ययशंकितः विचार्यभार्ययासाकं
विभक्तःश्रीपतेरभूत् सभोगान्विविधान्भुंजन्प्रमत्तोबहुसंपदा नदेव्याराधनंचक्रेगोपतिःरूरवलंपटः अथस्वल्पेनकालेन

नष्टं तस्य शनैर्धनम् अकिंचनो गतश्रीं तां भार्ययाश्वासितस्तदा तव भ्रातृगृहे विप्रा भुंजते बहवः सदा गच्छावोऽनुदिनं कांत तत्र भो
क्तुसुभावपि एवं भोजनवेलायां आगत्यागत्य तद्गृहं भुंजन् भुंजन्निजगृहे गतौ तौ बहुवासरं कदाचिदागतौ यावद्गोपतिर्भार्य
यासह उपविष्टेषु विप्रेषु भोक्तुं नो विंददासनं अथान्नराशेरभ्याशे भोजनाय क्षुधातुरः उपविष्टः श्रीपतेस्तु भार्ययासनिवारि
तः अस्मादुत्तिष्ठ वै तूर्णं त्वमुच्छिष्टं करिष्यसि तिष्ठ तिष्ठ क्षणं चैव पश्चात् भुंक्ष्वेति साब्रवीत् गोपतेः कांतया दृष्टं ततो विमन
सावुभौ अकृत्वा वेवनिःक्रांतौ जग्मतुर्निजमंदिरं ततः स्वजायां प्रोवाच निजमार्गे विचिंतयन् भ्रात्रा मया समं वित्तं संवि
भक्तमपि प्रिये दुर्बलोऽहं धनोन्मत्तः श्रूयतामत्र कारणं पुरावाभ्यां गुरुगृहे व्रतमाचरितं शुभं उपांगललितादेव्या विद्यादिस
कलं ततः प्राप्तं मया तत्सकलं परित्यक्तं प्रमादतः ज्येष्ठ आचरते नित्यं तस्माच्छ्रीस्तत्र वर्तते तस्मादहं तदा भोक्ष्ये यदाद्रक्ष्या
मि तां शिवां इत्युक्त्वा निर्गतस्तस्माद्गृहादकृतभोजनः तद्भार्या चिंतयाविष्टा सापि तस्याः वनभ्रमती भुक्तवत्सु ब्राह्मणेषु श्री
पतिः पर्यपृच्छत क्व गतो गोपतिरिति तच्छ्रुत्वा सोपि दुःखितः गोपतिस्तु सरिद्दुर्गवनानि बहुशोऽभ्रमन् पृच्छंश्च पथिकान्
मार्गे न देव्याः पदमभ्यगात् पंचमे वासरे प्राप्ते क्षुत्पिपासार्दितो वने अलब्धदर्शनो देव्याः दुःखितो निपपात ह तं क्षुद्गत
मालोक्य भवानी भक्तवत्सला कृतापराधमपि तमनुजग्राह वै तदा गतमूर्छः समुत्थाय दिग्गतान् प्रविलोकयन् ददर्श दूरेतो
गोपं चारयंतं गवां गणं तं दृष्ट्वा किंचिदाश्वस्तो यथा यो तस्यांतिकं शनैः अपृच्छत्तं भवान् भ्रातः कुत्रत्यः कुत आगतः कोऽयं देशः

ख्यभूपालः किंपुरंनामत द्वद निशम्यवचनंतस्यवक्तुंगोपःप्रचक्रमे गोपउवाच उपांगंनामनगरस्मुपांगोनामभूपतिः तत्र
स्थोहंसमायातःपुनस्तत्रव्रजाम्यहम् उपांगललितादेव्याविद्यतेतत्रमंदिरम् इत्याकर्ण्यवचस्तस्यविप्रः समुदितोभवत्
सगोपसहितः सायंविचरन्प्रविवेशह दूराद्ददर्श भवनंपुरमध्येतपोधनाः उपांगललितादेव्याः स्फाटिकंगगनंलिहम् सौव
र्णेनविचित्रेणकलशेनोपशोभितम् यथोदयाचलःशैलोदधानोभानुमंडलं त्वरितोगोपमामंत्र्यप्रासादंसययौमुदा प्रणम्य
दंडवद्भूमौबद्धांजलिपुटस्तदा उपांगललितांदेवीमथस्तोतुंप्रचक्रमे गोपतिरुवाच नमस्तुभ्यंजगद्धात्रिभक्तानांहितकारि
णि जगद्भीतिविनाशिन्यै सर्वमंगलमूर्तये हत्वानिशुंभमहिषप्रभृतीन्सुरारीनिंद्रादयोनिजपदेषुयथाभिषिक्ताः लोक
भयावनगृहीतमहावतारेमातःप्रसीदसततंकुरुमेनुकंपां त्वांमुक्तयेनिजजनाःकुटिलीकृतांगीगौरींनिजेवपुषिकुंडलिनीं
भजंति मुक्तोचदेवमनुजाःकनकारविंदबद्धासनामविरतंकमलांस्तुवंति सापराधोस्मिसततंप्राप्तंत्वांजगदंबिके इदानी
मनुकंप्योहंयद्वांछामिकुरुषतत् इतिस्तुत्वाथशर्वाणींप्रणिपत्यपुनःपुनः कृतसंध्याविधिस्तत्रक्षपायांकृतभोजनः स्व-
प्नेमूर्तिमयीदेविविप्रमेवंसमादिशत् गोपतेवत्सतुष्टास्मिगच्छोपांगमहीपतिं मत्पूजनकरंडस्यप्रार्थयस्वपिधानकम्
तत्पूजयन्निजगृहे परामृद्धिमवाप्स्यसि स्वप्नइत्याप्तसंदेशो प्रभातेगोपनिस्तदा राजदर्शनवेलायांनृपद्वारंसमभ्यगात् प्र
विष्टोसौनृपसभांप्रतिहारैर्निवेदितः राज्ञासंभावितस्तत्र निषसादासनेशुभे पृष्टोगमनहेतुंस्वयंयाचेनृपपुंगवम् देव्य

र्चनकरंडस्यपिधानंदेहिमेनृप इत्यर्थितःसविप्रेणजातादेशोनृपोददौ पिधानकंनमस्कृत्यतस्मैचाभ्यर्चनादिकं आशी
र्भिरभिनंद्याथतमामंत्र्यचभूपतिं उपांगललितादेव्याःप्रसादंपुनरागमत् प्रणिपत्यांबिकांविप्रस्त्वरितोनिर्ययौपुरात्
समीपेस्वपुरंदृष्ट्वाहृष्टोग्रहमुपागमत् सुहृद्भिःसहसंगम्यसर्वंतत्कथयन्मुदा पूजयित्वापिधानंतद्दिदधेपारणंद्विजःएवमा
राध्यमानस्तुसससमृद्धोभवत्पुनः सोपिसत्रंसमारेभेद्विजाढ्योबहुवासरं एकातस्याभवत्कन्याललितानामसुंदरी क
न्यापिधानमादायविहर्तुंयातिसर्वदा प्रमत्तत्वात्प्रियत्वाच्चपितृभ्यामनिवारिता कदाचित्स्ववयस्याभिःस्नातुंगंगाजले
शुभे क्रीडंतीददृशेतोयेनीयमानंकलेवरं पिधानहस्तासासिंचदन्याश्चांजलिभिस्तदा सुसर्पदष्टउत्तस्थौततोदेव्याः
प्रसादतः सातिश्रांतंद्विजंदृष्ट्वामनसाचिंतयत्पतिं जुहावाभ्यवहारायजनकस्यनिकेतनम् मार्गेंचपरिपप्रच्छकुलंशीलंच
तस्यसा सोपिसर्वंसमाचख्यौगुणराशीतिनामच ललितामंत्रयामासगुणराशिंद्विजोत्तमम् परिविष्टेषुचान्नेषुपितृवेश्म
निमेद्विज गृहीतापोशनोभूत्वाभार्यार्थंमांत्वमर्थय मयानुमोदितस्तातःसमांतुभ्यंप्रदास्यति यथोक्तोगुणराशिस्तत्त
थासर्वंचकारह गोपतिर्भार्ययाप्यत्रासमालोच्यस्वबांधवैः परीक्षितायविप्रायविद्यायांकुलशीलयोः प्रतिजज्ञेततः
कन्यांललितांगुणशालिने शुभेमुहूर्तेचतयोर्विवाहंकृतवान्प्रभुः वरायब्राह्मणेभ्यश्चददौबहुधनंतदा विदधेचतयो
र्गेहंनातिदूरंस्ववेश्मतः तत्रोषतुःसानुरागौमिथस्तौदंपतीचिरं पिधानकंतयानीतंनिजंललितयागृहं शनैरथधनंसर्वंगो

पत्नेरगमत्गृहात् गुणराशिर्धनीजातोमहादेव्याःप्रसादतः करंडस्यपिधानंतज्जनन्याबहुवासरं याचितापिनवैप्रादाल्ललितापूजितंगृ
हे अथसागोपतेर्भार्यातस्यैवानर्चनाकृत इत्थंविचिंत्यपापात्माजामातरमघातयत् समिदर्थंवनंयातःस्वयंततगेहमाययौ शोचं
तींकिलतांकन्यांसत्तुदेव्याःप्रसादतः उत्थायविपिनादेत्यभुक्त्वाशेतेस्मस्वंगृहे पादसंवाहनंतस्यकुरुतेललितातदा तंदृष्ट्वादुःखि
ताभूमौप्रणिपत्यपुनःपुनः लज्जिताकृच्छ्रतःपृष्टानिजंपापंन्यवेदयत् स्कंदउवाच गुणराशिस्तदातस्यैप्रायश्चित्तंददौबहु
आत्मानंबहुकालेनपूतंकृच्छ्रैश्चकारह श्रीपतेस्त्वचलांलक्ष्मींसमालोक्यतपोधनाः गोपतिस्तुयथापृच्छद्भ्रातस्त्वंवर्तसेकथं
किमाचरसिकल्याणंयेनश्रीरनपायिनी इतितस्यवचःश्रुत्वाश्रीपतिर्विस्मितःपुनः अस्माभिस्तकृतंदेव्यायत्कुलगुरुमंदिरे सो-
पिदेव्याव्रतंचक्रेपुनर्भ्रात्रोपदेशितं लेभेसपरमामृद्धिंपुत्रांश्चमुदितोभवत् उपांगललितादेव्याकुर्यादाराधनंततः एवमेतत्सुरान्
त्तंमहात्म्यंकथितंमया कृतमन्यैश्चबहुभिस्तेपिलब्धमनोरथाः स्कंदउ० विधानमस्यवक्ष्येहंतच्छृणुध्वंतपोधनाः शुक्लपक्षेतु
पंचम्यामिषमासिचरेद्व्रतं गर्जितंसंध्ययोस्त्याज्यंदिनवृद्धिक्षयेतथा निर्वर्त्यावश्यकंकर्मशुचीरागविवर्जितः चत्वारिंशत्तथा-
ष्टौचकल्पयित्वाविधानतः दंतकाष्ठान्युपादायतडागंवानदींव्रजेत् आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधां
चत्वन्नोदेहिवनस्पते दंतधावनपूर्वाणिमज्जनानिसमाचरेत् ततोयथाविधिस्नात्वाशुक्लवासागृहंव्रजेत् उपचारैःषोडशभिरे
भिर्मंत्रैःसमाहितः कुर्यात्पूजांप्रयत्नेनदूर्वाभिश्चविशेषतः शुचौदेशेमंडपिकांकृत्वातीवमनोहरां सौवर्णींप्रतिमांशक्त्याकल्प
येन्मंत्रपूर्वकां द्विजायवाणकंदद्याद्विंशत्यावटकादिभिः ततःकथांसमाकर्ण्यवाणकान्तस्यसंख्यया स्वयमद्यात्तदेवान्नंवाग्य

तःसहबांधवैः रात्रौजागरणंकुर्यान्नृत्यगीतादिमंगलैः प्रभातेपूजयेद्देवींततःकुर्याद्विसर्ज्जनं सवाहनाशक्तियुतावरदापूजिता
मया मातर्मामनुगृह्याथगम्यतांनिजमंदिरं तामर्चांगुरवेदद्याद्दानानिचसभूरिशः व्रतमेवंचयःकुर्यात्पुत्रवान् धनवान्भवेत्
विद्यावान्रोगनिर्मुक्तोसुखीगोधनजायते अवैधव्यंचलभतेस्त्रीकन्यावरमुत्तमं विजयःपुष्टिमायुष्यंयच्चान्यदपिवांछितं इत्ये
तद्व्रतमाख्यातंसेतिहासंमहर्षयः शृण्वन्नपिनरोभक्त्यासुखमाप्नोतिनिश्चितं निर्मुक्तःससुखीधीमान्भवनराजप्रसादतः वि
त्तमारोग्यमायुष्यंप्राप्नोतिचप्रसादतः इतिश्रीस्कं०उपां० कथासंपूर्णा अथोद्यापनं आचार्यंवरयेसम्यग्द्विजोविंश
तिंतथा उपलिप्ते शुचौदेशेविलिखेन्मंडलंततः ब्रह्मादींश्चततःस्थाप्यपूजयेद्विधिमंत्रतः अव्रणेकलशेशुद्धलिंतांस्थापयेत्त
था रात्रौजागरणंकृत्वाप्रभातेहोममाचरेत् इक्षुखंडतिलैःशुद्धैःपायसेनापिवाव्रती अष्टोत्तरशतंहुत्वाबलिदानंसमाचरेत्
शयनंचततोदद्याद्वंशपात्रेनिधायच वटकान्विंशतिसंख्यान्निर्मलान्घृतपाचितान् आचार्यंपूजयेसम्यग्वस्त्रालंकारधेनुतः ऋत्विज
श्चतथादद्यात्कुंभंवस्त्रंसदक्षिणं विसृज्यचततः पीठंआचार्यायनिवेदयेत् भोजयेच्चततोविप्रान्पायसान्नेनभक्तितः विप्राज्ञांच
ततोगृह्यस्वयंभुंजीतबंधुभिः इतिश्री०उपां०तोद्यापनंसंपू० अथमाघशुक्लपंचम्यांवसंतप्रवृत्तिः सामध्यान्हव्यापिनीग्राह्या
दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वा मुहूर्तमात्रसत्वेपिपराग्राह्या तत्रविष्णोःपूजाकार्या माघेमासिसितेपक्षेपंचम्यांपूजयेद्धरिं पूर्ववि
द्धाप्रकर्तव्यावसंतादौतथैवच तैलाभ्यंगंततःकृत्वाभूषणानिचधारयेत् नित्यंनैमित्तिकंकृत्वागुलालेनार्चयेद्धरिं गंधपुष्पैश्चधूपैश्चनै
वेद्यैःपूजयेत्सदा नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः सचंदनसमायुक्तान्ब्राह्मणान्भोजयेत्ततः इतिहेमाद्रौवसंतपंचमीविधिः ॥ ७

श्रीगणेशायनमः॥ ॥अथषष्ठीव्रतानि॥ ॥तत्रभाद्रशुक्लषष्ठ्यांललिताव्रतं॥सामध्यान्हव्यापिनीग्राह्या॥तद्व्याप्तावव्याप्तौ-
वापूर्वाजागरप्रधानत्वात्॥कृष्णउवाच॥भद्रेभाद्रपदेमासिशुक्लेषष्ठ्यांसुसंयुता॥नारीस्नात्वाप्रभातेतुशुक्लमाल्यांबराशुचिः
सुवेषाभरणोपेताभूत्वासंगृह्यवालुकां॥आनीयवंशपात्रेतुपंचपिंडाकृतिंशुभां॥ध्यात्वातुललितांदेवींतपोवननिवासिनीं॥
पंकजंकरवीरंचवनेपालिंमालतींतथा॥नीलोत्पलंकेतकंचसंगृह्यनगरंतथा॥एकैकाष्टशतंग्राह्यमष्टाविंशतिरेवच॥अक्षताः
कलिकाग्राह्यास्ताभिर्देवींसमर्चयेत्॥प्रार्थयेदग्रतोभूत्वादेवींनागिरिशप्रियां॥गंगाद्वारेकुशावर्तेबिल्वकेनीलपर्वते॥स्नात्वाक-
नकलेतीर्थेहरंलब्धवतींपतिम्॥ललितेललितेदेविसौख्यसौभाग्यदायिनि॥अनंतंदेहिसौभाग्यंपुत्रपौत्रप्रवर्धनम्॥मंत्रेणाने-
नकुसुमैश्चंपकैर्बकुलैःशुभैः॥एवमभ्यर्च्यविधिनानैवेद्यंपुरतोन्यसेत्॥त्रपुसैरपिकूष्मांडैर्नारिकेरैःसुदाडिमैः॥बीजपूरैःस-
तुंडीरैःकारवेल्लैःसचिर्पिटैः॥फलैस्तत्कालसंभूतैःकृत्वाशोभांतदग्रतः॥विरूढैर्धान्यसंभूतैर्दीपिकाभिःसमंततः॥सार्धैःसगु-
णकैर्धूपैःसोहारीककरंजकैः॥घृतपक्वैःकर्णवेष्टैर्मोदकैरुपमोदकैः॥बहुप्रकारैर्नैवेद्यैर्यथाविभवसारतः॥एवमभ्यर्च्यविधिवत्
रात्रौजागरणोत्सवं॥गीतवाद्ययुतैर्नृत्यैःप्रेक्षणीयैरनेकधा॥सखीभिःसहितासाध्वीतांरात्रिंप्रशमंनयेत्॥नचसंमीलयेन्नेत्रे-
नारीयामचतुष्टयं॥दुर्भगादुःखितावंध्यानेत्रसंमीलनाद्भवेत्॥एवंजागरणंकृत्वासप्तम्यांसरितंप्रति॥स्नात्वावस्त्रंपरीधाय-
धार्यंसौभाग्यकुंकुमं॥गंधपुष्पादिधूपैश्चगीतवाद्यपुरःसरं॥तच्चदद्याद्द्विजेंद्रायनैवेद्यादिसुभद्रके॥ततोगृहंसमागत्यहु-

त्वा वैश्वानरं क्रमात्॥ देवान्पितॄन्ब्राह्मणांश्च पूजयित्वा सुवासिनीः॥ कन्यकाश्चैव संभोज्या दीनानाथांश्च भोजयेत्॥ भक्ष्यभो
ज्यैर्बहुविधैर्दत्वा दानानि भूरिशः॥ ललिता मे सुसुप्रीता इत्युक्त्वा तु विसर्जयेत्॥ यः कश्चिदाचरेदेतद्व्रतं सौभाग्यदं परं॥ षष्ठ्यां तु
ललितासंज्ञं सर्वपापनिबर्हणं॥ नरो वा यदि वा नारी तस्य पुण्यफलं शृणु॥ यत्तु लभ्यं व्रतेश्चान्यैर्दानैर्वा नृपसत्तम॥ तपोभिर्नियं
मैर्वापि तदेतेन हि लभ्यते॥ इह चैवातुलां संपत्सौभाग्यमनुभूय च॥ कृत्वा मूर्ध्नि पदं पार्थ सपत्नीनां यशस्विनी॥ मृता शिवपुरं प्रा-
प्य देवैरसुरपन्नगैः॥ प्राप्नोति दर्शनं देव्यास्तया तु सह मोदते॥ पुण्यशेषादिहागत्य पुण्यसौख्यैकभाजनं॥ भर्त्रा सह सुनानारी सी
ते व प्रियवल्लभा॥ इदं यः शृणुयात्पार्थ पठेद्वा साधुसंसदि॥ सोपि पापविनिर्मुक्तः शक्रलोके महीयते॥ षष्ठ्यां जलांतरगतां वरवंश
पात्रे संगृह्य पूजाधि तया सिकतां क्रमेण॥ नक्तं च जागरमनुव्रतवेषशीला कुर्याद्दसौ त्रिभुवने ललिते भवानी॥ ॥इति हेमाद्रौ-
ललिताषष्ठीव्रतं॥ ॥ इदं गुर्जरदेशे प्रसिद्धं॥ अत्रैव भाद्रपदकृष्णषष्ठ्यां कपिलाषष्ठीव्रतं॥ ॥तच्च योगविशेषेण पूर्वस्यां वा कार्यं॥
ते च योगाः पुराणसमुच्चये दर्शिताः॥ भाद्रे मास्यसिते पक्षे भानौ चैव करे स्थिते॥ पाते कुजे च रोहिण्यां सा षष्ठी कपिला स्मृता॥ संयोगे
तु चतुर्णां च निर्दिष्टा परमेष्ठिना॥ अथ कथा॥ हेमाद्रौ स्कांदे॥ ॥चित्रांग उवाच॥ रूपसंपदमारोग्यं संततिं चातिपुष्कलां॥ प्राप्नुवं
ति नरा येन नियतं तद्वदस्व मे॥ ॥अगस्त्य उवाच॥ ॥साधु साधु त्वया प्राज्ञ यत्पृष्टोहं शुचिव्रत॥ तत्सर्वं कथयिष्यामि ततः श्रेयो भ
विष्यति॥ शृणु पार्थ प्रवक्ष्यामि स्वर्गमोक्षप्रदं नृणां॥ यच्च गुप्तं पुरा देवान्ब्रह्मरुद्रेंद्रदैवतैः॥ असुराणां च सर्वेषां राक्षसानां तथैव च॥

शंकरेणपुराचैनत्षण्मुखायनिवेदितं॥षण्मुखेनसमाख्यातंमहापातकनाशनं तद्दृक्ष्येब्रह्महागोघ्नःसुरापोगुरुतल्पगः आगारदाही
गरदःसर्वपापरतोपिवा मुच्यतेसर्वपापेभ्यःस्वर्गलोकंचगच्छति यच्चपुण्यंपवित्रंचनृणामद्भुतमंगलं उपकारायलोकानांतथा
तवनृपोत्तम शृणुभूपमहापुण्यंषष्ठीमाहात्म्यमुत्तमं भाद्रमास्यसितेपक्षेषष्ठीभौमेनसंयुता व्यतीपातेनरोहिण्यासाषष्ठीकपि-
लास्मृता आश्विनस्यासितेपक्षेमहापुण्यप्रवर्धिनी षष्ठीसंवत्सरस्यांतेसापुनस्तेनसंयुता चैत्रवैशाखयोर्मध्येसितपक्षेशुभो
दये वैशाखेपिचराजेंद्रद्वारवत्यांपरास्मृता तस्यांचैवहुतंदत्तंयत्किंचित्प्रतिपादितं तस्यसर्वस्यपुण्यस्यसंख्यावक्तुंनशक्यते
यस्मिन्कालेभवेदेतैर्गुणैःषष्ठीयुतानदा पंचम्यामेकभक्तंचकुर्यात्तत्रविचक्षणः षष्ठ्यांप्रातःसमुत्थायकृत्वादौदंतधावनं जल
पूर्णांजलिंकृत्वाइमंमंत्रमुदीरयेत् निराहारोद्यदेवेशत्वद्भक्तस्त्वत्परायणः पूजयिष्याम्यहंभक्त्याशरणंभवभास्कर अर्घ्यंदत्वे
तिसंकल्पंकृत्वायत्नाच्छुचिस्मितः स्नानंकृत्वाप्रयत्नेननद्यांतीर्थेद्रवेह्रदे तडागेदीर्घिकायांवागृहेवानियतात्मवान् देवदारुंत
थोशीरंकुंकुमेलामनःशिलं पद्मकंपत्रकंयष्टिमधुगव्येनपेषयेत् क्षीरेणालोड्यकल्केनस्नानंकुर्यात्समंत्रकं॥ आपस्त्वमसिदेवे
शज्योतिषांपतिरेवच पापंशमयदेवेशमनोवाक्कायकर्मजं पंचगव्यकृतस्नानंपंचगव्यैस्तुमार्जयेत् आनयेन्मृत्तिकांशुद्धांस्ना
नार्थंवैप्रयत्नतः मृत्तिकेब्रह्मपूतासिकाश्यपेनाभिमंत्रिता पवित्रंकुरुमांनित्यंसर्वपापात्समुद्धर मंत्रेणानेनवरुणंपूजयेद्भक्ति
मान्नरः पाशाग्रहस्तवरुणसर्ववारीश्वरप्रभो अद्याहंप्रार्थयामित्वांपूजनार्थंसुरेश्वर आदित्योभास्करोभानूरविःसूर्योदिवा-

करः प्रभाकरोमित्रोवीरोदेवः सर्वेश्वरोहरिः गोमयेनोपलिप्तायांभूम्यांवैकुंकुमेनतु मंडलंसर्वतोभद्रमालिखेद्बुद्धिमान्नरः तत्रम
ध्येलिखेत्पद्ममष्टपत्रंसकर्णिकं पूर्वपत्रेन्यसेत्सूर्यमाग्नेयेतपनंन्यसेत् सुवर्णरेतसंयाम्येनैर्ऋत्येचन्यसेद्रविं आदित्यंवारुणेपत्रेवा
यव्येचदिवाकरं सौम्येप्रभाकरंतत्रसूर्यमीशानपत्रके तीव्ररश्मिधरंदेवंब्रह्माणंचैवविन्यसेत् आधाररूपिणंदेवंमध्येचैवारुणं
न्यसेत् सहस्ररश्मिंसूर्यंचसूक्ष्मस्थूलगुणान्वितं सर्वगंसर्वरूपंचमध्येभास्करमेवच सप्ताश्वरथमारूढंपद्महस्तंदिवाकरं अक्षसूत्रं
धनुःपाणिंकुंडलैर्मुकुटेनच रत्नैर्नानाविधैर्युक्तंसौवर्णंतत्रकारयेत् शक्तितस्तुपलादूर्ध्वंतदर्धंकर्षतोपिवा सौवर्णमरुणंकुर्याद्रज्जुं
चैवतथाविधा सप्ताश्वैर्भूषितंकृत्वारथंतस्याग्रतःस्थितं अरुणंविनतापुत्रंगृहीताश्वमनूरुकं एवंरूपंरथंकृत्वापद्मस्योपरिविन्य
सेत् तस्योपरिन्यसेद्देवंरक्तवस्त्रविभूषितं रक्तचंदनमाल्यादिमंडितंचातिशोभनं अग्रतःसारथिंकृत्वापूजयेदरुणंशुचिः रक्त
पुष्पैस्तुगंधैश्चतथान्यैरपिशक्तितः विनतातनयोदेवःकर्मसाक्षीतमोनुदः सप्ताश्वःसप्तरज्जुश्चअरुणोमेप्रसीदतु मंत्रेणानेन
संपूज्यसारथिंतदनंतरं देवस्यशंसनंकल्प्यप्रभूतादिकपंचकं प्रभूतविमलंसार माराध्यंपरमंशुभं दीप्तादिशक्तिभिश्चैवततोभानुं
प्रपूजयेत् दीप्तासूक्ष्मातथाभद्राविबिनीविमलानघा अमोघावैद्युताचेतिनवमासर्वतोमुखी अपवित्रःपवित्रोवासर्वावस्थांगतो
पिवा यःस्मरेद्भास्करंदेवंसबाह्याभ्यंतरःशुचिः शिखायांभास्करंन्यस्यललाटेसूर्यमेवच चक्षुर्मध्येन्यसेद्भानुंमुखेतत्ररविंन्यसे
त् कंठेन्यसेद्भानुमंतंपद्महस्तंद्विहस्तयोः तिमिरक्षयकृद्देवंस्तनयोरेवविन्यसेत् जातवेदाभिधंनाभ्यांकट्यांभानुंतथान्यसेत्

उग्रः पंगुह्यदेशेतेजोरूपंद्विजंघयोः पादयोःसर्वरूपंतुसूक्ष्मस्थूलगुणान्वितं एवंयथोक्तंविन्यस्यपात्रंगृत्ह्यततोर्चयेत् करवीरार्क
कुसुमैरक्तचंदनमिश्रितैः पुष्पैःसुगंधैर्धूपैश्चकुंकुमैरुपशोभितं मार्तंडंभानुमादित्यंभास्करंतपनंरविं हंसंदिवाकरंचेतिपादयोर्मु
कुटावधि पादौजंघेतथाजानुद्वयमूरूकटिंतथा नाभिंवक्षस्थलंशीर्षमेतेष्वंगेषुपूजयेत् आनयेदर्घ्यपात्रंचसौवर्णंरौप्यताम्रजं
अर्घ्यार्थंदैवतंपात्रमुदकेनप्रपूरयेत् पूजयेच्चाथभागादिदेवतास्ताःसमाहितः दिग्देवतास्ततःपूज्यागंधपुष्पानुलेपनैः पा
त्रेतोयंसमादायसपुष्पफलसंयुतम् जानुभ्यामवनींगत्वासूर्यायार्घ्यंनिवेदयेत् वेदगर्भनमस्तुभ्यंदेवगर्भनमोस्तुते अ
व्यक्तमूर्तयेतुभ्यंअर्घ्यंगृह्णनमोस्तुते ब्रह्ममूर्तिधरायैवचतुर्वक्त्रसनातन सृष्टिस्थितिविनाशायगृहाणार्घ्यंनमोस्तुते का
लात्मासर्वभूतात्मावेदात्मासर्वतोमुखः जन्ममृत्युजराशोकसंसारभयनाशनः विष्णुरूपधरोदेवःपीतवस्त्रश्चतुर्भुजः
प्रभवःसर्वलोकानामर्घ्यंगृह्णनमोस्तुते दारिद्र्यव्यसनध्वंसीश्रीमान्पातुदिवाकरः सुवर्णस्फाटिकोभानुःस्वर्णरेतादिवा
मणिः हरिदश्वांशुमालिश्च अर्घ्यंगृह्णनमोस्तुते चतुर्भिर्मुनिभिःसम्यगष्टाभिःपरिगीयते सामध्वनिस्तुतोयज्ञेअर्घ्यंगृह्ण
मोस्तुते अर्घ्यंगंधंचपुष्पंचतथाधूपप्रदीपकं नैवेद्यंचयथाशक्त्याप्रार्थयेत्सूर्यदेवतां अग्निमीळेनमस्तुभ्यंनमस्तेजातवेद
से इषेत्वेवनमस्तुभ्यंअग्नेचैवनमोनमः आत्मरूपिन्नमस्तुभ्यंविश्वमूर्तेनमोनमः त्वंधाताखंचवैविष्णुस्त्वंब्रह्मात्वंहुताश
नः मुक्तिकामोहमिच्छामिप्रार्थयामिसुरेश्वर विश्वनश्चक्षुराख्यातः विश्वनश्वरणे नमः विश्वात्मासर्वतोदेवः

व्र॰ रा॰
२

प्रार्थयामिसुरेश्वर इमंमंत्रंसमुच्चार्यनमस्कुर्वीतभास्करं संवर्चसेतिपाणिभ्यांतोयेनविसृजेन्मुखं हंसःशुचिषदित्यर्चासूर्यस्यै-
वावलोकनं उदुत्यंचित्रमित्येतत्सूक्तंदेवाग्रतोजपेत् पद्मकेसरकोणेषुफलकंचैवकारयेत् फलैःपुष्पैरक्षताभिर्भक्ष्यैर्नानाविधैर
पि शय्यांतत्रचदेवस्यशुभेदेशेप्रकल्पयेत् षट्धान्यंषड्रसंचैवरौप्यंचैवमहाप्रभुं पुरुषंखड्गहस्तंचकारयेच्चैवबुद्धिमान् वस्त्र-
युग्मेनसंछाद्यलवणोपरिविन्यसेत् अनेनैवतुमंत्रेणस्नानमर्घ्यार्चनंततः नमस्तेक्रोधरूपायखड्गहस्तजिघांसवे जिघांसं-
तंचतंदृष्ट्वादुद्रुवुःसर्वदेवताः त्वयाव्याप्तंमेरुपृष्ठंचंडभास्कररूप्रभ अतस्त्वांपूजयिष्यामिअर्घ्यंगृह्णनमोस्तुते क्षपयित्वातु-
तांरात्रिंगीतवादित्रनिस्वनैः ततस्त्वभ्युदितेसूर्येहोमंकुर्यात्स्वशक्तितः पूजयेत्तत्रशक्त्याचदेवांश्चविधिवद्गुरुं होमोर्कस्यसमि
द्भिश्चघृतमिश्रैस्तिलैस्तथा सिद्धान्नंचचरुद्रव्यंघृतंचजुहुयाद्द्विजः आकृष्णेनेतिमंत्रेणशतमष्टोत्तरंक्रमात् होमोव्याहृतिभि-
र्वाथस्विष्टकृत्तदनंतरं कपिलांपूजयेद्देवींसवत्सांपापनाशिनीं वस्त्रयुक्तांसघंटांचस्वर्णशृंगविभूषितां ताम्रपृष्ठीरौप्यखुरीं-
कांस्यदोहनकान्वितां मंत्रेणानेनतांदद्याद्ब्राह्मणायेतिशक्तितः कपिलेसर्वभूतानांपूजनीयासिरोहिणी सर्वतीर्थमयीयस्माद-
तःशांतिंप्रयच्छमे आचार्यस्यततोभक्त्यासर्वंपाणौविनिक्षिपेत् गोभूहिरण्यवासांसिव्रीहयोलवणंतिलाः एतत्सर्वंप्रदत्वा
चकपिलांप्रार्थयेत्ततः कपिलेपुण्यकर्मासिनिःपापेपुण्यकर्मणि मामुद्धारयपापात्तुददतोह्यक्षयंकुरु दिविवादित्रशब्दैश्च-
सेव्यतेकपिलासदा तथाविद्याधरासिद्धाभूतनागगणागृहाः कपिलारोमसंख्यातास्तत्तद्देवाःप्रतिष्ठिताः पुष्पवृष्टिंप्रमुंचं

प॰
६

३

तिनित्यमाकाशसंस्थिताः ब्रह्मणोत्पादितांदेवीं अग्निकुंडात्समुद्भवा नमस्तेकपिलेपुण्येसर्वदेवनमस्कृते जयनित्यंमहासत्वेसर्वतीर्था
दिमंगले दातारंस्वजनोपेतंब्रह्मलोकंनयाशुमां ततःप्रदक्षिणांकृत्वानत्वाब्राह्मणपुंगवान् आशीर्वादान्वदेद्युस्तेपुत्रपौत्रधनागमान्
आरोग्यंरूपसौभाग्यंसर्वदुःखविवर्जितः अंतेगोलोकमासाद्यचिरायुःसुखभाग्भवेत् यदास्वर्गात्प्रचरतिराजाभवतिधार्मिकः सप्त
द्वीपवर्तींभुंक्ते सदाराज्यमकंटकं अहोव्रतमिदंपुण्यंसर्वदुःखविनाशनं अतःपरंप्रवक्ष्यामिदानस्यफलमुत्तमं कपिलाख्यायदाषष्ठी
जायतेभुविमानद व्रतंसर्वव्रतश्रेष्ठमिदमग्र्यंमहाफलं उद्धरिष्यतिदातारंनूनमक्षय्यमव्ययं एवंदेवगणाःसर्वेभूतसंघामहर्षयः
आकाशस्थाःप्रवक्ष्यंतिपुण्येस्मिन्दिवसागमे पात्रभूतायऋषयेश्रोत्रियायकुटुंबिने एवंयःकपिलांदद्याद्विधिदृष्टेनकर्मणा सया
तिपरमंस्थानंयावन्नच्यवतेपुनः उद्यापनविधिंब्रूहिभक्त्यायममतत्वतः कृष्णउवाच पूर्वस्मिन्दिवसेकुर्यादेकभक्तंसमाहितः शुचौ
देशेसमालिख्यसर्वतोभद्रमंडलं स्थापयेदव्रणंकुंभंचंदनोदकपूरितं संवेष्ट्यवस्त्रयुग्मेनकंठदेशेसुशोभनं पंचरत्नसमायुक्तंदूर्वापुष्पा
क्षतान्वितं रक्तवस्त्रयुगच्छंन्नंताम्रपात्रेणसंयुतं रथंरौक्मपलस्यैवचतु रश्वैर्विचित्रितः सौवर्णीपलसंयुक्तांमूर्तिंसूर्यस्यकारयेत्
कुंभस्योपरिसंस्थाप्यगंधपुष्पैस्तथार्चयेत् आदित्यंपूजयेद्देवंनामभिस्त्वेर्यथोदितैः आदित्यंभास्करंभानुंरविंसूर्यंदिवाकरं प्रभाकर
नमस्तुभ्यंसंसारान्मांसमुद्धर भुक्तिमुक्तिप्रदोयस्मात्तस्माच्छांतिंप्रयच्छमे नमोनमस्तेवरदऋक्सामयजुषांपते नमोस्तुविश्वरूपाय
विश्वधात्रेनमोस्तुते एवंसंपूज्यविधिवद्देवदेवंदिवाकरं पूजयेत्कपिलांधेनुंवस्त्रमाल्यानुलेपनैः दानमंत्रः दिव्यमूर्तिर्जगच्चक्षुः

द्वांदशात्मा दिवाकरः कपिलासहितो देवो मम मुक्तिं प्रयच्छतु यस्मात्त्वं कपिले पुण्ये सर्वलोकस्य पावनी भवत्ता सह सूर्येण मम मुक्तिप्रदा भव इति हेमाद्रौ स्कांदे कपिलाषष्ठीव्रतोद्यापनं संपूर्णं अथ कार्तिके स्कंदषष्ठीव्रतं हेमाद्रौ भविष्ये श्रीकृष्ण उवाच षष्ठ्यां फलाशनो राजन्विशेषात्कार्तिके नृप राज्यच्युतो विशेषेण स्वं राज्यं लभते चिरात् षष्ठी तिथिर्महाराज सर्वदा सर्वकामदा उपोष्या सा प्रयत्नेन सर्वकालं जयार्थिना कार्तिकेयस्य दयिता एषा षष्ठी महातिथिः देवसेनाधिपत्यं हि प्राप्तमस्यां महात्मना अस्यां हि श्रीसमायुक्तो यस्मात्स्कंदो भवत्पुरा तस्मात्षष्ठ्यां न भुंजीत प्राप्नुयाद्भार्गवीं सदा दत्वार्घ्यं कार्तिकेयाय स्थित्वा वै दक्षिणामुखः दध्याक्षतोदकैः पुष्पैर्मंत्रेणानेन सुव्रत सप्तर्षिदारज स्कंद सेनाधिप महाबल रुद्रोमाग्निज षड्वक्त्र गंगागर्भ नमोस्तु ते प्रीयतां देवसेनानीः संपादयतु हृद्गतं दत्वा विप्राय चात्मान्नं यच्चान्यदपि वर्तते पश्चाद्भुंक्ते त्वसौ रात्र्यां भूमिं कृत्वा तु भाजनं एवं षष्ठिव्रतस्थस्य उक्तं स्कंदेन यत्फलं तन्निबोध महाराज प्रोच्यमानं मयाखिलं षष्ठ्यां फलाशनो यस्तु नक्ताहारो भविष्यति शुक्लायामथ कृष्णायां ब्रह्मचारी समाहितः तस्य सिद्धिं धृतिं पुष्टिं राज्यमायुर्निरामयं इहलोके परत्रापि दद्यात्स्कंदो न संशयः अशक्तश्चोपवासे वै तेन नक्तं समाचरेत् तैलं षष्ठ्यां न भुंजीत न दिवा कुरुनंदन यस्तु षष्ठ्यां नरो नक्तं कुर्याद्भरतसत्तम सर्वपापैर्विनिर्मुक्तो गांगेयस्य प्रसादतः स्वर्गे च नियतं वासो लभते नात्र संशयः इह चागत्य कालांते यथोक्तफलभाग्भवेत् देवानामपि वंद्यो सौ राजराजो भविष्यति इति स्कंदषष्ठीव्रतं भविष्योक्तं संपूर्णं अथ मार्गशीर्षशुक्ले भाद्रपदे वा चंपाषष्ठीव्रतं हेमाद्रौ स्कांदे स्कंद उवाच

प्राप्तराज्यंचराजानंधर्मपुत्रंयुधिष्ठिरं कदाचिदाययौद्रष्टुंदुर्वासामुनिसत्तमः तंपप्रच्छमहातेजाधर्मसूनुःकृतांजलिः राज्य
लाभःकथंजातोममविप्रतपोनिधे तद्व्रतंश्रोतुमिच्छामिकर्तुंचमुनिसत्तम दुर्वासाउवाच शृणुराजन्महाभागव्रतानामुत्तमंव्रतं
अस्तीहयच्चीर्णमात्रंसर्वकामांस्तुपूरयेत् सर्वपापक्षयंकुर्यादखंडितव्रतान्यपि षष्ठीभाद्रपदेशुक्लावैधृत्याचसमन्विता विशा·
खाभौमयोगेनसाचंपाइतिविश्रुता देवासुरमनुष्याणांदुर्लभाषष्ठिहायनैः कृतेत्रेतायांपंचाशद्धायनीद्वापरेपुनः चत्वारिंशत्क
लौत्रिंशद्धायनीदुर्लभाततःआदौकृतयुगेपूर्वंयाचीर्णाविश्वकर्मणा तत्फलाद्विश्वकर्तृत्वंप्राजापत्यमवाप्नुवान् पृथुनाकार्तवीर्येण
भुविनारायणेनच ईश्वरेणमयासार्धंइतरैनरलिप्सया यश्चैतद्विधिवत्कुर्यात्सोत्यंतंफलमश्नुते युधिष्ठिरउवाच तद्विधिंश्रो
तुमिच्छामिविस्तराद्वदतोमुने केमंत्राःकेचनियमाःसापिकिंलक्षणाभवेत् दुर्वासाउवाच द्विदैवत्यर्क्षभौमेनवैधृतेनसमन्विता
भाद्रेमासिसितेषष्ठीसाचंपेतिनिगद्यते पंचम्यांनियमंकुर्यादेकभुक्तंसमाचरेत् चंपाषष्ठीव्रतंकुर्याद्यथोक्तंवचनाद्गुरोः ततःप्र·
भातेविमलेदंतधावनपूर्वकं कृत्वास्नानंशुचिर्भूत्वासंकल्प्यचयथाविधिं निराहारोद्यदेवेशत्वद्भक्तस्त्वत्परायणः पूजयिष्याम्य
हंभक्त्याशरणंभवभास्कर संकल्पमंत्रः ततःस्नानंप्रकुर्वीतनद्यादौविमलेजले मृदमालभ्यमंत्रैश्चतिलैःशुक्लैश्चमंत्रवित् सा
वित्रंपरमंत्वंहिपरंधामजलेमम त्वत्तेजसापरिभ्रष्टंपापंयातुसहस्रधा प्रार्थना आद्यस्त्वमसिदेवेशज्योतिषांपतिरेवच पापं·
नाशयमेदेववाङ्मनःकर्मभिःकृतं स्नानमंत्रः ततःसंतर्पयेद्देवान्नृषीन्पितृगणानपि ततश्चेत्स्वगृहंमौनीपाखंडालापवर्जितः

स्थंडिलंकारयेच्छुद्धंचतुरस्रंसुशोभनं स्थापयेदव्रणंकुंभंपंचरत्नसमन्वितं कुंकुमेनलिखेत्पद्मंद्वादशारंसकर्णिकं तस्योपरि-
न्यसेत्सूर्यंसौवर्णंसरथारुणं शक्त्यावावित्तसारेणवित्तशाठ्यविवर्जितः तमर्चयेद्गंधपुष्पैर्विधिमंत्रपुरःसरं पंचामृतेनस्नप-
नंकुर्यादर्कस्यसंयुतः ततस्तुगंधतोयेनपरांपूजांसमारभेत् गंधैर्नानाविधैर्दिव्यैः कर्पूरागरुकुंकुमैः फलैर्नानाविधैर्दिव्यैःकुसुमै-
श्चसुगंधिभिः मंडपंकारयेत्तत्रपुष्पमालाविभूषितं यथाशोभंप्रकुर्वीतअधश्चोपरिसर्वतः ततःसंपूजयेद्देवंभास्करंकमलोप-
रि मध्येदलेषुपूर्वादितपनायसुपूजयेत् आदित्याय॰ भास्कराय॰ भानवे॰ अर्यम्णे॰ विश्वचक्राय॰ अंशुमतेन॰ सहस्रांशवेन॰
खगाय॰ सुराद्याय॰ सूर्याय॰ द्वादशात्मने॰ प्रभाकराय॰ १२ जन्मांतरसहस्रेषुदुष्कृतंयन्मयाकृतं तत्सर्वंनाशमायातुत्व-
त्प्रसादाद्दिवाकर ततोरथपूजा ततःसंपूजयेद्देवंमत्स्युतंतद्रथेस्थितं अष्टाक्षरेणमंत्रेणगंधपुष्पादिभिःक्रमात् मंत्रः ॐ
घृणिःसूर्यआदित्यः इतिमंत्रः कालात्मासर्वभूतात्मावेदात्माविश्वतोमुखः जन्ममृत्युजरारोगसंसारभयनाशन उदयेअ-
र्घ्यमंत्रः ततःसंपूजयेच्छुक्लांसवत्सांगांपयस्विनीं सवस्त्रघंटाभरणांकांस्यपात्रेचदोहिनीं ब्रह्मणोत्पादितेदेविसर्वपापवि-
नाशिनि संसारार्णवमग्नंमांगोमातस्त्रातुमर्हसि सुरूपाबहुरूपाश्चमातरोलोकमातरः गावोमामुपसर्पंतुसरितःसागरंय-
था यालक्ष्मीःसर्वदेवानांयाचदेवेषुसंस्थिता धेनुरूपेणसादेवीममपापंव्यपोहतु तिलहोमंततःकुर्यात्साविन्न्याष्टोत्तरंशतं न-
तस्तांकल्पयेद्धेनुंसद्योमेप्रीयतामिति आचार्यायततोदद्यादादित्यंसरथारुणं सकुंभरक्तवस्त्रैश्चसर्वोपस्करसंयुतं मनोभिल

षितावाप्तिंकरोतुममभास्करः दानमंत्रः गृह्णाभिभास्कररवेप्रवंतंविश्वतोमुखं मनोभिलषितावाप्तिसुभयोःकर्तुमर्हसि प्रतिग्रहण-
मंत्रः सर्वतीर्थमयींधेनुंसर्वयज्ञमयींशुभां सर्वदानमयींदेवींब्राह्मणायददाम्यहम् गोदानम् गृह्णाभिसुरभींदेवींसर्वयज्ञमयींशु-
भां उभौपुनीहिवरदेउभयोस्तारकाभव ततस्तुभोजयेद्विप्रान्द्वादशैववस्वशक्तितः दद्याच्चदक्षिणांतेभ्यः प्रणिपत्यविसर्जयेत् अवेकल्यम
वेत्तस्यशांतिमायुर्द्विजोत्तम अभिनंद्यतमाशीर्भिस्तेसर्वेअभिनंदिताः ततस्तुस्वयमश्नीयाद्विजानामवशिष्टकं सहपुत्रैःकलत्रैश्चअ
न्यैर्बंधुजनैर्वृतः एवंयःकुरुतेराजन्सोत्यंतंपुण्यमश्नुते प्रभूणांचविधिःप्रोक्तः सर्वेषांदृष्टिगोचरः सर्वैश्चतद्व्रतंकार्यंस्वशक्त्याद्धुः
खभीरुभिः प्रभुः प्रथमकल्पस्ययोनुकल्पेनवर्तते विफलंतत्तुनस्यस्यादनुशास्त्वनुकल्पिकः अथनिर्धनस्यविधिः पंचम्यांनियमंकुर्या
दाचार्यवचनाद्व्रती षष्ठ्यांस्नानंप्रकुर्वीतसंतर्प्यपितृदेवताः अभ्येत्यस्वगृहंमौनीसूर्यमनसिचिंतयेत् स्थापयेदव्रणंकुंभंमृत्पात्रंचत
थोपरि तस्योपरिन्यसेत्सूर्यंपलेकेनविनिर्मितं सौवर्णंभक्तिसंयुक्तंरथंसारथिनायुतं तमर्चयेज्जगन्नाथंगृहीत्वाज्ञांगुरोःस्व-
यं षडक्षरेणमंत्रेणगंधपुष्पाक्षतादिभिः ॐनमःसूर्यायेतिमंत्रः संपूज्यविधिवद्देवंफलपुष्पादिकंचयत् सूर्यंनिवेदयेत्सर्वंसूर्यो
मेप्रियताम्इति ततःप्रभातेविमलेगत्वागुरुगृहंप्रति सर्वोपकरणैःसूर्यमाचार्यायनिवेदयेत् धान्यंपुष्पंफलंवस्त्रंरत्नंधेन्वादिकंचय
त् गवांकोटिसहस्रंतुकुरुक्षेत्रेर्कपर्वणि चंपादानस्यराजेंद्रकलांनार्हंतिषोडशीं सर्वतीर्थप्रदानानितथान्यानपिषोडश चंपयातुलितापा
र्थचंपकात्वतिरिच्यते इतिश्रीस्कंदपुराणेचंपाषष्ठीव्रतंसंपूर्णं अथमार्गशीर्षशुक्लचंपाषष्ठी मार्गेमासिशुक्लपक्षेषष्ठीवैधृतिसंयु-

ता रविवारेणसंयुक्तासाचंपाइतिकीर्तिता इतिमल्लारिमाहात्म्ये मार्गशीर्षेमलेपक्षेषष्ठ्यांवारेशुभमालिनः शततारागतेचंद्रेलिं
गंस्याद्दृष्टिगोचरं इति इयंयोगविशेषेणपूर्वायोगाभावेपराग्राह्या इतिचंपाषष्ठी अथसप्तमीव्रतानि· तत्रवैशाखशुक्लसप्त·
म्यांगंगोत्पत्तिः तत्रपूजा चोक्ता पृथिवीचंद्रोदयेब्राह्मे वैशाखशुक्लसप्तम्यांजह्नुनाजान्हवीस्वयं क्रोधात्पीतापुनस्त्यक्ताकर्णरं
ध्रात्तुदक्षिणात् तांतत्रपूजयंद्देवींगंगांगगनमेखलां इतिहरिवंशेपुण्यकव्रतांते अब्दमातस्नानमभिधायगंगायाव्रतकथामहा·
यशस्करीउक्ताप्रत्यूषेचसदास्नानंकार्यं मंदाकिनीजले अन्यत्रवाजलेस्नानंशुक्लपक्षेहरिप्रिये एतद्गंगाव्रतंनामसर्वकामप्रदंशु·
भं सप्तसप्तचसप्ताथकुलानिहरिवल्लभे स्त्रीतारयतिधर्मज्ञेगंगाव्रतकचारिणी देयःकुंभःसहस्रंतुगंगायाव्रतकेशुभे तारणंसि
द्धिदंचैवतद्व्रतंसर्वकामिकं वैशाखेशुक्लपक्षेतुसप्तम्यांपूजयेच्छ्रियं गंगायांविधिवत्स्नात्वाभोजयेद्ब्राह्मणान्दश पूजयेत्सूक्ष्मवस्त्रैश्च·
पुष्पस्रक्चंदनैःशुभैः पूजकःसर्वपापेभ्योमुच्यतेनात्रसंशयः इयंचशिष्टाचारात्मध्यान्हव्यापिनीग्राह्या दिनद्वयेतद्व्याप्तौएक
देशव्याप्तौवापूर्वायुग्मवाक्यात् इतिगंगासप्तमीव्रतं अथशुक्लादिश्रावणकृष्णासप्तम्यांशीतलाव्रतं तच्चमध्यान्हव्यापिन्यांकार्यं
तच्चमाधवीयेहारीतः पूजाव्रतेषुसर्वेषुमध्यान्हव्यापिनीतिथिरिति अथव्रतविधिः मासपक्षाद्युल्लिख्यममइहजन्मनिजन्मांत·
रेचअवैधव्यप्राप्तयेअखंडितभर्तृसंयोगपुत्रपौत्रादिधनधान्यप्राप्तयेशीतलाव्रतंकरिष्ये तथाचयथामीलितोपचारैःशीतलांपूज·
यिष्ये तत्रअष्टदलपीठेअव्रणंकलशंसंस्थाप्य तदुपरिसौवर्णींशीतलांपूजयेत् अथध्यानंस्कांदे वंदेहंशीतलांदेवींरासभस्थांदिगं·



६

वरां मार्जनीकलशोपेतांशूर्पालंकृतमस्तकां कुंभेसंस्थापयेद्देवींपूजयेन्नाममंत्रतः शीतलेदहमेपापंपुत्रसौख्यफलप्रदे धनधान्यप्र-
देदेविपूजांगृह्णनमोस्तुते इतिध्यानं आवाहनं आसनं पाद्यं विधायशीतलाकारिअवैधव्यसुतप्रदे श्रावणास्यसितेपक्षेअर्घ्यं-
गृह्णनमोस्तुते अर्घ्यं नाममंत्रेणपूजनीया आचमनं स्नानं वस्त्रं उपवस्त्रं विलेपनं अलंकारं पुष्पाणिधूपं दीपं शीतलेदंचप-
क्वान्नंदध्योदनयुतं शुभं नैवेद्यंगृह्यतांदेविघृतमिश्रंचसुंदरि गौरीणांभोजयेत्सप्तपूजनीयाःप्रयत्नतः नैवेद्यं करोद्वर्तनं फ-
लंतांबूलं दक्षिणांनीराजनं पुष्पांजलिं प्रदक्षिणां नमस्कारं व्रतसंपूर्णफलावाप्तयेब्राह्मणायवायनं तत्रमंत्रः दध्यन्नद-
क्षिणायुक्तंवायनंफलसंयुतं शीतलेप्रीतयेतुभ्यंब्राह्मणायददाम्यहम् इतिपूजनं अथकथा हेमाद्रौभविष्ये कृष्ण
उवाच प्रसिद्धंश्रूयतांरम्यंनगरंहस्तिनापुरं इंद्रद्युम्नश्वराजाभून्नृपतिर्लोकपालकः धर्मशीलाभिधाचासीत्तस्यभार्याय-
शस्विनी क्रियाकांडेरतासाध्वीदानशीलाप्रियंवदा बभूवप्रथमःपुत्रोमहाधर्मेतिनामतः नंदतेपितृवात्सल्यात्कालेन्यस्मि-
न्नततोजनत् द्वितीयाचतथापुत्रीतस्यजातागुणोत्तमा पुत्रीलक्षणसंपन्नाशुभकारीतिनामतः वर्द्धतेसापितुर्गेहेसर्वांगसु-
पासुंदरी नाम्नारूपेणसाबालासर्वासांचगुणाधिका सामुद्रिकगुणोपेतापद्महस्ताप्रियंवदा कौंडिण्यनगरेराजासुमित्रोना-
मनामतः तत्पुत्रोगुणवान्नामशुभकार्याःपतिर्बभौ वरोदेहेनमानेनलक्ष्मीवान्रूपवान्गुणैः गुणवान्शुभकारिण्याःपा-
णिंजग्राहधर्मवित् गृहीत्वापारिबर्हाणिगतोसौनगरंप्रति पुनःसमागतोराजागुणवान्हस्तिनापुरं आजगामपरिजनैस्तसु-

त्यानयनोत्सुकः प्रणम्यचपितुःपादौत्वरितंचारुहासिनी आज्ञांदेहिमहाराजश्वशुरस्यगृहंप्रति इङ्गितंचपितुर्ज्ञात्वामा-
तुस्त्वशुभकारिणि रथमारुह्यहेस्वामिन् यास्यामिस्वपुरंप्रति ततःपितातुतस्याथदंपत्योःशुभहेतवे पुत्रित्वंसुस्थिराभू
त्वावारैकंचक्षमस्वमे शीतलासप्तमीनामव्रतंचरशुभप्रदं कन्योवाच ताततत्परिज्ञातंयदुक्तंपद्मयोनिना पतिव्रतासमो
धर्मोनास्तीहभुवनत्रये ततस्तांकारयामासशीतलाव्रतमुत्तमम् सौभाग्यारोग्यजनकंअवैधव्यकरंपरं पुत्रींचप्रेषया-
मासब्राह्मणोवेदपारगः व्रतोपकरणंसर्वंगृह्यपूजांसरोवरे मार्गेपद्मानिसंगृह्यव्रतोपकरणंशुभा शीतलापूजनेहे-
तोर्गत्वासाध्वीसरोवरं तत्रादृष्टंतयामोहात्तडागंविधिसाधनं बभ्रामसावनेशून्येस्मरंतीशीतलाव्रतं अतिश्रांताययौसो
हात्स्मरंतीशीतलांबहु ददर्शसाततोनारींवृद्धांरूपगुणान्वितां विप्रस्तुस्वपितोमार्गेदृष्टिहीनोमृतस्तदा शुभकार्यास्ततोवा
क्यंवृद्धाऊचेयशस्विनी भविष्यतिचिरंजीवीभर्तातेराजकन्यके आगच्छपूजनार्थायदर्शयामिसरोवरं तयासहगतासा
ध्वीतडागंविधिपूर्वकं पूजयामासशर्वाणींतोषयामासशीतलां पूजयित्वाचतांदेवींस्वपथंगंतुमुद्यता शीतलायावरंगृ-
ह्यसहसख्याचप्रस्थिता ततोसाददर्शारण्येब्राह्मणंदष्टसर्पकं भार्यातुतस्यनिकटेब्राह्मणस्यमहात्मनः ब्राह्मणोनिद्रया
सुप्तःपूर्वकर्मप्रभावतः दष्टोभुजंगरूपेणकालरूपेणवैहतः विषैर्हतंपतिंदृष्ट्वारुरोदब्राह्मणीबहु राजपुत्रीलब्धवरा-
शीतलायाःपतिव्रता वरंसंगृह्यशालायांरुरोदकरुणंबहु तयोस्तुरुणदंपत्योर्योग्यसौभाग्यदर्शनात् रुदंतीकरुणं

बालाशोचयामासतवरं यावन्नपरलोकस्थंजनंसंगत्यतत्कृते तावदनेनसहसाअनुगच्छामिवन्हिना तिष्ठतिष्ठक्षणंस

भ्रुगमिष्यामिहिपावकं अर्जयिष्येदिवंदिव्यंअक्षय्यंभवनांतरे राजपुत्रीवचःश्रुत्वाब्राह्मण्याःकरुणान्विता सस्मारशी-

तलांदेवीमहावैधव्यभंजनीं आगच्छच्छीतलातत्रवरंदातुंशुचिस्मिता शीतलाउवाच वरंवरयवत्सेत्वंकिंदुःखंचारुहासि

नि शीतलाव्रतजंपुण्यंदेहित्वंब्राह्मणीशुभां तेनपुण्यप्रभावेनभर्तास्यानिर्विषोभवेत् इतिदेव्यावचःश्रुत्वाअददद्ब्राह्म-

णींततः बुबोधाशुततोविप्रश्चिरंसुप्तोयथापुनः शीतलायाव्रतेबुद्धिर्ब्राह्मण्याश्चाभवत्तदा अकरोत्सापितत्पूजांभक्ति-

भावपुरःसरा तत्रांतरेराजपुत्र्यापतिरागाद्वनांतिकं सोपिदष्टोथसर्पेणगच्छंस्त्यग्रेददर्शह विललापततःसाध्वीसख्यासह

वनांतरे शीतलाउवाच वत्सेकिमिदमित्युक्त्वंस्मरसीवरवर्णिनि शीतलाव्रतचारिण्यावैधव्यंनैवजायते स्वयमुत्थायक-

ल्याणिपतिंसुसंगृहेयथा बोधयाशुपतिंभीरुव्रतंवैधव्यनाशनं इत्युक्ताबोधयामासभर्तारंसापतिव्रता भर्तापिमुदितो

दृष्ट्वास्वांप्रियांप्रीतिकर्मणि दृष्ट्वातुमहदाश्चर्यंतद्ग्रामस्थायिनोजनाः सर्वेतेविस्मयंजग्मुर्ब्राह्मणीपतिरक्षणात् ब्राह्मणीह-

र्षितांदृष्ट्वांप्रणिपत्यपतिव्रता देहिमातर्नमस्तेस्तुअवैधव्यंवियोगता अन्यापिशीतलायास्तुव्रतंनारीकरिष्यति अवैधव्यम-

दारिद्र्यमवियोगस्त्वभर्तृतः तथेत्युक्त्वांतर्दधेदेवीशीतलाकामरूपिणी शीतलायावरंलब्ध्वाजगामात्मीयवेश्मनि पद्मानिवा-

सभक्तविश्ववंद्यसमर्हणासाधितविश्वमंगला प्रसादमासाद्यचशीतलायानित्योत्सवापार्वतिवद्बभूव इतिभविष्येशीतलाव्र

तंसंपूर्णं अथभाद्रशुक्लसप्तम्यांमुक्ताभरणव्रतंहेमाद्रौभविष्ये सामध्यान्हव्यापिनीग्राह्या तद्व्याप्त्यभावव्याप्तौपरा ममइहज
न्मनिअखंडसंततिपुत्रपौत्रवृद्धयेमुक्ताभरणव्रतेउमामहेश्वरपूजनंकरिष्ये अथपूजा देवदेवमहेशानपरमात्मन्जगद्गुरो
प्रतिपादितयासोमपूजयापूजयाम्यहं आवाहनं अनेकरत्नखचितंसौवर्णमणिसंयुतं मुक्तार्चितंमहादेवगृहाणास
नमुत्तमं आसनं पाद्यंगृहाणदेवेशासर्वविद्यापरायण ध्यानगम्यसतांशंभोसर्वेश्वरनमोस्तुते पाद्यं इदमर्घ्यमनर्घ्य·
त्वममराधीशशंकर किंकरीभूतयासोममयादत्तंगृहाणभोः अर्घ्यं गंगादिसर्वतीर्थेभ्यःसमानीतंसुशीतलं जलः
माचमनीयार्थंगृहाणउमयासह आचमनीयं मध्वाज्यशर्करामिश्रमधुनापरिकल्पितं शंकरप्रीतयेतुभ्यंमधुपर्कोनिवेदितः मधुपर्कं पयोद
धिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनंप्रीयतांपरमेश्वर पंचामृतस्नानं गंगाचयमुनाचैवगोदावरिसरस्वती नर्मदासिंधुका
वेरीस्नानार्थंप्रतिगृह्यतां शुद्धोदकस्नानं स्नानादूर्ध्वंमहादेव प्रीत्यापापप्रणाशनवस्त्रयुग्ममयादेवगृह्यतांकांतया·
सह वस्त्रं उपवीतंसोत्तरीयंनानाभूषणभूषितं गृहाणसोमविमलंमयादत्तमिदंशुभं उपवीतं मलयाचलसंभूतंघन·
सारंसुगंधियुक् चंदनंपंचवदनगृहाणवनितासह चंदनं जातीचंपकपुन्नागबकुलैःपारिजातकैः शतपत्रैश्चकल्हा·
रैरर्चयेहमुमापतिं पुष्पाणि त्रैलोक्यपावनंतेद्यपरमात्मन्जगद्गुरो चंदनागरुकर्पूरंधूपंदास्यामिशंकर धूपं शुभ·
वर्तियुतंसर्पिर्लोडितंवह्निनायुतं दीपमेकमनेकार्कप्रतिमंकलयत्विमं दीपं पयसापूपकेसरंदुग्धान्नंसगुडोदनं दिव्यान्नं

षड्रसोपेतंस्कंधारससमन्वितं समर्पयामिदेवेशकिंकरीशंकरायते नैवेद्यं पुनराचमनंशंकरकुरुष्वोमांबुनामुना सुखशकाङ्किकरंपू
गंकपयाखंगृहाणभोः आचमनीयं कस्तूरिकासमायुक्तंमलयाचलसंभवं गृहाणचंदनंसोमकरोद्वर्तनशंकर करोद्वर्तनं ना
रिकेरफलंजंबूफलंनारिंगमुत्तमं कूष्मांडंपुरतोभक्त्याकल्पितंप्रतिगृह्यतां फलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणा
नीराजनं पुष्पांजलिं प्रदक्षिणां नमस्कारं महादेवमहाराजप्रीत्यापापप्रणाशन अस्माकंकुर्वतांपूजांभवतासाधुयोजितं
ज्ञानतोज्ञानतोवापिभवतोविहिताचया संपूर्णासातुविश्वेशविमलात्वत्प्रसादतः इतिप्रार्थना देवदेवजगन्नाथसर्वसौभाग्य
दायक गृह्णीयांदोरकंरूपंपुत्रपौत्रप्रवर्धनं दोरकग्रहणं सप्तसामोपगीतंत्वांधारयाम्भिजगद्गुरो सूत्रग्रंथिस्थितंनित्यंधारया
मिस्थिरोभव इतिदोरकबंधनं हरपापानिसर्वाणितुष्टिंकुरुदयानिधे प्रसन्नःसन्नुमाकांतदीर्घायुःपुत्रदोभव इतिजीर्णदोर
कोत्तारणं अथवायनं मंडकान्सफलान्युक्तान्सघृतान्दक्षिणायुतान् एकादशशतं हृत्वाब्राह्मणायकुटुंबिने वेदशास्त्रप्रवी
णायदद्यात्सोमस्यतुष्टये शंकरःप्रतिगृह्णातिशंकरोवैददातिच शंकरस्तारकोभाभ्यांशंकरायनमोनमः इतिवायनं एवंयापू
जनंकुर्यात्सोमस्यसुखदस्यच सर्वान्कामानवाप्नोतिपुत्रपौत्रैश्चमोदते प्रार्थना इतिपूजा अथकथा श्रीकृष्णउवाच मु
नींद्रोलोमशोनाममथुरायांगतःपुरा सोर्चितोवसुदेवेनदेवक्याचयुधिष्ठिर उपविष्टःकथाःपुण्याःकथयित्वामनोरमाः ततः
कथयितुंभूयःकथामेतांप्रचक्रमे कंसेनतेहताःपुत्राःजाताजाताःपुनःपुनः मृतवत्सादेवकित्वंपुत्रदुःखेनदुःखिताः यथाचंद्र-

श्रीगणेशायनमः॥ ॥अथएकादशीव्रतानि॥ ॥तत्रएकादश्यामुपवासनिर्णयः निषेधपरिपालनात्मकोव्रतरूपश्च साचद्वि-
धाशुद्धाद्दशमीविद्धाच वेधोपिद्विविधः अरुणोदयेदशमीसंबंधात्सूर्योदयेच तत्रआद्योवैष्णवैस्त्याज्यः तथाचभविष्ये अरु
णोदयकालेतुदशमीयदिदृश्यते साविद्धैकादशीतत्रपापमूलमुपोषणं तथा दशमीशेषसंयुक्तोयदिस्यादरुणोदयः नैवोपोष्यं
वैष्णवेनतद्दिनैकादशीव्रतम् अरुणोदयस्वरूपंतु हेमाद्रौस्मृत्यंतरेदर्शितम् निशिप्रांतेतुयामार्धेदेववादित्रनिस्वने सारस्वतेअ
ध्ययनेअरुणोदयउच्यते यामार्धंमुहूर्तद्वयलक्षणं अतएवसौरधर्मे आदित्योदयवेलायांयामुहूर्तद्वयान्विता सैकादशीति -
संपूर्णाविद्धान्यापरिकीर्तिता यच्चमाधवीयेस्कांदे उदयात्प्राक्चतस्रस्तुघटिकाअरुणोदयः तदपिद्वात्रिंशत्घटिकारात्रिमा
नपक्षेतुमुहूर्तद्वयस्यतावत्परिमाणत्वमुक्तमितिद्वैतनिर्णयः ब्रह्मवैवर्तेच चतस्रोघटिकाः प्रातररुणोदयनिश्चयः चतुष्टयवि
भागोत्रवेधादीनांकिलोदितः अरुणोदयवेधःस्यात्सार्धंतुघटिकात्रयम् अतिवेधोद्विघटिकःप्रभासंदर्शनाद्रवेः महावेधोपित
त्रैवदृश्यतेर्कोनदृश्यते तुरीयस्तत्रविहितोयोगःसूर्योदयेसति अन्यच्च पंचपंचउषःकालः सप्तपंचारुणोदयः अष्टपंचभवेत्प्रा
तःशेषःसूर्योदयःस्मृतः वैष्णवलक्षणंतुस्कांदे परमापदमापन्नोहर्षेवासमुपस्थिते नैकादशींत्यजेद्यस्तु तस्यदीक्षातुवैष्णवी॥
भविष्ये यथाशुक्लातथाकृष्णायथाकृष्णातथोत्तरा तुल्येतेमन्यतेयस्तुसहिवैष्णवउच्यते अतिवेधादयःसर्वेयेवेधास्तिथिषु
स्मृताः सर्वेप्यवेधाविज्ञेयावेधः सूर्योदयःस्मृतः तत्रशुद्धाविद्धाएकादशीचतुर्धा अधिकाएकादशी अधिकाद्वादशी उभयाधि

का अनुभयाधिकाच्च शुद्धायांएकादश्याधिक्येपरेद्युरुपवासमाहनारदः संपूर्णैकादशीयत्रद्वादश्यांवृद्धिगामिनी द्वादश्यांलं
घनंकार्यंत्रयोदश्यांतुपारणं वृद्धवसिष्ठः एकादशीयदालुप्तापरतोद्वादशीभवेत् उपोष्याद्वादशीतत्रयदीछेत्परांगतिम् भृगुः
संपूर्णैकादशीयत्रप्रभातेपुनरेवसा ततोपोष्याद्वितीयातुपरतोद्वादशीयदि प्रथमेहनिसंपूर्णाव्याप्याहोरात्रसंयुता द्वादश्यांतु
तथोपोष्याद्दृश्यतेपुनरेवसा पूर्वाकार्याग्रहस्थैश्चयतिभिश्चोत्तराविभो मार्कंडेयः संपूर्णैकादशीयत्रपरत्रपुनरेवच पूर्वामुप
वसेत्कामीनिष्कामस्तुपरांवसेत् हेमाद्रौ विद्धाप्यविद्धाविज्ञेयापरतोद्वादशीनचेत् अविद्धापिचविद्धास्यात्परतोद्वादशीयदि
एकादशीविद्धाचेच्छुक्लेकृष्णेविशेषतः उत्तरांतुयतिःकुर्यात्पूर्वामुपवसेत्गृही सनत्कुमारः नकरोतिहियोमूढएकादश्या
मुपोषणम् सनरोनरकंयातिरौरवेनमसाहृते यदीच्छेद्विपुलान्भोगान्मुक्तिंचात्यंतदुर्लभाम् उपोष्यैकादशीनित्यंपक्षयोरुभ
योरपि माधवेप्युक्तं एकादशीद्वादशीचेदुभयंवर्धतेयदा तदापूर्वदिनंत्याज्यंस्मार्तैर्ग्राह्यंपरंदिनं त्रयोदश्यांनलभ्येतद्वाद
शीयदिकिंचन उपोष्यैकादशीतत्रदशमीमिश्रितायदीति स्कांदात् हेमाद्रिमते शुद्धाविद्धाद्वैनंदास्त्रिधान्यूनसमाधिकैः ष
ड्प्रकाराःपुनस्त्रेधाद्वादश्यूनासमाधिकैः इत्यष्टैकादशीभेदाः पाद्मे संपूर्णैकादशीत्याज्यापरतोद्वादशीयदि उपोष्याद्वादशी
शुद्धाद्वादश्यामेवपारणम् पारणाहेनलभ्येतद्वादशीकलयापिचेत् तदानींदशमीविद्धाउपोष्यैकादशीतिथिः बहुवाक्यविरो
धेनसंदेहोजायतेयदा द्वादशीतुतदाग्राह्यात्रयोदश्यांतुपारणम् इतिमार्कंडेयोक्तेः कात्यायनः अष्टवर्षाधिकोमर्त्योह्यशीति

न्यूनवत्सरः एकादश्यामुपवसेत्पक्षयोरुभयोरपि भविष्ये ब्रह्मचारीचनारीचभुक्तामेवसदागृही सधवायास्तुभर्त्राज्ञयाधि
कारः पत्यौजीवतियानारीउपोष्यव्रतमाचरेत्आयुष्यंहरतेभर्तुःसानारीनरकंव्रजेत् कौर्मेतदुक्तंमदनरत्नेस्मृत्यंतरे शयनीबोधि
नीमध्येयाकृष्णैकादशीभवेत् सैवोपोष्यागृहस्थेननान्याकृष्णाकदाचन नान्याकृष्णेतिनिषेधः संक्रांत्यामुपवासंचकृष्णैकादशिवा
सरे चंद्रसूर्यग्रहेचैवनकुर्यात्पुत्रवान्गृही नारदः आदित्येहनिसंक्रांतौग्रहणेचंद्रसूर्ययोः पारणंचोपवासंचनकुर्यात्पुत्रवान्
गृही माधवीयेकात्यायनः अर्केपर्वद्वयेरात्रौचतुर्दश्यष्टमीदिवा एकादश्यामहोरात्रंभुक्त्वाचांद्रायणंचरेत् अथकाम्यव्र
तविधिः कांस्यंमांसंमसूरांश्चचणकान्कोरदूषकान् शाकंमधुपरान्नंचत्यजेदुपवसन्स्त्रियम् शाकंमाषंमसूरांश्चपुनर्भो
जनमैथुनम् द्यूतमत्यंबुपानंचदशम्यांवैष्णवस्त्यजेत् मदनरत्नेनारदीये अक्षारलवणाःसर्वेहविष्यान्ननिषेविणः अवनी
तल्पशयनाप्रियासंगविवर्जिताः हेमाद्रौदेवलः असकृज्जलपानाच्चसकृत्तांबूलचर्वणात् उपवासःप्रणश्येतदिवास्वापाच्च
मैथुनात् अशक्तौतुमदनरत्नेदेवलः अत्ययेचांबुपानेचनोपवासःप्रणश्यति अत्ययेकष्टे विष्णुरहस्ये गात्राभ्यंगंशिरो
भ्यंगंतांबूलंचानुलेपनम् व्रतस्थोवर्जयेत्सर्वंयच्चान्यच्चनिराकृतं एषुप्रायश्चित्तं स्तेनहिंसकयोःसख्यंकृत्वास्तेन्यंचहिंसनं
प्रायश्चित्तंव्रतीकुर्याज्जपेन्नामशतत्रयं मिथ्यावादेदिवास्वापेबहुशोंबुनिषेवणे अष्टाक्षरंजपेन्मंत्रंशतमष्टोत्तरंशुचिः ॐन
मोनारायणायेतिअष्टाक्षरः हेमाद्रौवसिष्ठः उपवासेतथाश्राद्धेनकुर्याद्दंतधावनम् दंतानांकाष्ठसंयोगो-

दद्दत्यासप्तमंकुलं एकादश्यांश्राद्धेप्राप्तेमाधवीयेकात्यायनः उपवासोयदानित्यःश्राद्धंनैमित्तिकंभवेत् उपवासंतदाकुर्याद्दाघ्रा
यपितृसेवितं मातापित्रोःक्षयेप्राप्तेभवेदेकादशीयदि अभ्यर्च्यपितृदेवांश्चआजिघ्रेत्पितृसेवितं प्राप्तेहरिदिनेसम्यक्विधायनि
यमंनिशि दशम्यामुपवासंचप्रकुर्याद्वैष्णवंव्रतं देवलः तत्रएकादश्यांसंकल्पः गृहीत्वौदुंबरंपात्रंवारिपूर्णमुदङ्मुखः उपवासं
तुगृण्हीयाद्यथासंकल्पयेद्बुधः औदुंबरंताम्रमयं मंत्रः एकादश्यांनिराहारःस्थित्वाहमपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंभ
वाच्युत शैवादीनांतुहेमाद्रौसौरपुराणे सावित्र्याप्यथवानाम्नासंकल्पंतुसमाचरेत् वाराहे इत्युच्चार्यततोविद्वान्पुष्पांजलि
मथार्पयेत् अष्टाक्षरेणमंत्रेणत्रिर्जप्तेनाभिमंत्रितं उपवासफलंप्रेप्सुः पिबेत्पात्रगतंजलम् इतिकात्यायनोक्तेः मध्यरात्रेउद
येवादशमीवेधेरात्रौसंकल्पइतिमाधवः विद्धोपवासेनभ्रंस्तुदिनंत्यक्त्वासमाहितः रात्रौसंपूजयेद्विष्णुंसंकल्पंचतदाचरेत् देवलः
देवस्यपुरतःकुर्याज्जागरंनियतोव्रती अज्ञानतिमिरांधस्यव्रतेनानेनकेशव प्रसीदसुमुखोनाथज्ञानदृष्टिप्रदोभव दिवानि
द्रांपरान्नंचपुनर्भोजनमैथुनं क्षौद्रंकांस्यंमाषतैलंद्वादश्यामष्टवर्जयेत् पुनर्भोजनमध्वायोभारआयासमैथुने उपवासफलंहन्युर्दि-
वानिद्राचपंचमी स्कांदे असंभाष्यान्हिसंभाष्यतुलस्याश्चार्पितंदलं आमलक्याःफलंवापिपारणेभक्ष्यशुद्ध्यति भोजनानंतरंवि
ष्णोरर्पितंतुलसीदलं भक्षणात्पापनिर्मुक्तिश्चांद्रायणशताधिका इतिविष्णूक्तेः सूतकांतेनरःस्नात्वापूजयित्वाजनार्दनं दानंदत्वावि
धानेनव्रतस्यफलमश्नुते स्त्रीभिस्तुरजोदर्शनेपिकार्यं एकादश्यांनभुंजीतनारीदृष्टेरजस्यपि इतिमात्स्योक्तेः यदाद्वादश्यांश्रवणर्क्षंतदा

शुद्धामप्येकादशींत्यक्त्वाद्वादशीमुपवसेत् शुक्लावायदिवाकृष्णाद्वादशीश्रवणान्विता तयोरेवोपवासश्चत्रयोदश्यांतुपारणं
इतिनारदोक्तेः तत्रशुद्धाधिकैकादशीयुताद्वादशीउन्मीलिनी द्वादशीवर्धतेचेत्साव्यंजुली वासरत्रयस्पर्शिनीत्रिस्पृशा अग्रे
पर्वणःसंपूर्णाधिकत्वेपक्षवर्धिनी पुष्यर्क्षयुताजया श्रवणयुताविजया पुनर्वसुयुताजयंती रोहिणीयुतापापनाशिनी एता
अष्टौमहाद्वादश्यः एताःपापक्षयमुक्तिकामउपवसेत् अत्रमूलंहेमाद्रौज्ञेयं द्वादश्याःप्रथमःपादोहरिवासरसंज्ञितः तमतिक्रम्य
कुर्वीतपारणंविष्णुतत्परः अन्यत्र सर्वेषामुपवासानांप्रातरेवहिपारणं इतिएकादशीनिर्णयः अथशुक्लकृष्णैकाद
श्युद्यापनं मार्गशीर्षेशुक्लपक्षेकार्तिकेवातथैवच शुभमासेतुकार्यासाशुक्लकृष्णा उभेतयोः व्रतविधिः दशम्यामेक
भुक्तंतुदंतधावनपूर्वकं एकादश्यांशुचिर्भूत्वाआचार्यंवरयेत्ततः तत्रसंकल्पः गणेशस्मरणपूर्वकंमासपक्षाद्युल्लिख्यति
थ्यादिसंकीर्त्यमयाआचरितस्यआचरिष्यमाणस्यशुक्लकृष्णैकादशीव्रतस्यसांगतासिद्ध्यर्थंसंपूर्णफलप्राप्त्यर्थंदेशकालाद्यनु
सारतःयथाज्ञानेनशुक्लकृष्णैकादशीव्रतोद्यापनमहंकरिष्ये तदंगत्वेनगणपतिपूजनंपुण्याहवाचनंआचार्यवरणंचकरि
ष्ये ततोगणेशंषोडशोपचारैःपूजयेत् ततः करिष्यमाणशुक्लकृष्णैकादशीव्रतोद्यापनकर्मणःपुण्याहंभवंतोब्रुवंतु अस्तु
पुण्याहं स्वस्तिंभवंतोब्रुवंतु आयुष्मतेस्वस्ति ऋद्धिंभवंतोब्रुवंतु कर्मऋध्यतां श्रीरस्त्वितिभवंतोब्रुवंतु अस्तुश्रीः वर्ष
शतंपूर्णमस्तु शिवंकर्मास्तु गोत्राभिवृद्धिरस्तु प्रजापतिःप्रीयतां उद्यापनकर्मणिआचार्यंवरयेत् श्रुताध्ययनसंप

न्नौक्रोधलोभविवर्जितो आचार्यौवरयेस्श्वाढ्यह्यज्ञानसमन्वितः अस्मिन्कर्मणिआचार्योभव यथाज्ञानेनकर्मकरिष्यामि
उपोष्यनियतोराजाआचार्यसहितोव्रती कुर्यादाराधनंविष्णोर्यथाशक्त्याजगद्गुरोः देवालयेगवांगोष्ठेश्शुचौदेशेथवागृहे अ
ष्टांगुलोच्छ्रितांवेदींचतुरस्त्रांप्रकल्पयेत् वितस्तिद्वयविस्तीर्णांतिलैःकृष्णैःप्रपूरयेत् तस्यांषोडशपत्रंचकमलंपरिकल्पयेत्
तन्मध्येस्थापयेत्कुंभंनवीनंअव्रणंशुभम् कृष्णैस्तिलैश्चसंपूर्णंकृष्णावस्त्रोपशोभितं अश्वत्थपर्णयुग्मेनपंचरत्नैःसमन्वि
तं समंतादंतिकंचैवनामसंकर्षणादिभिः उपचारैःषोडशभिःपूजयेत्प्रयतोनरः आग्नेयादिचतुःपत्रेपूजयेत्गणमातृकान्
गणेशंमातृकांचैवदुर्गांक्षेत्राधिपंतथा समाहितमनाःकोणेष्वाग्नेयादिषुविन्यसेत् शुक्लामेकादशीतद्वत्तिलैःशुक्लैश्चपूरयेत्
शुक्लवस्त्रेणसंवेष्ट्यपूजयेत्सरयामुदा समंतादंतिकांचैवनामभिःकेशवादिभिः गणेशंमातृकंचैवदुर्गांक्षेत्राधिपंतथा समाहितमनाः
कोणेष्वाग्नेयादिषुविन्यसेत् तदग्रेसर्वतोभद्रंलिखेत् देवतासान्निध्यार्थंसुवर्णमूर्तौअग्न्युत्तारणंकरिष्ये ततोदेवंचसौवर्णंस्ना
प्यपंचामृतादिभिः गंधपुष्पाक्षतोपेतंअथपुण्यजलैःशुभैः गृहीत्वावाहयेत्कुंभेरमायुक्तंचतुर्भुजं एवंविष्णुमावाहयेत् ॐनमो
विष्णवेतुभ्यंभगवन्परमात्मने कृष्णोसिदेवकीपुत्रपरमेश्वरउत्तम अजोनादिश्चविश्वात्मासर्वलोकपितामहः क्षेत्रज्ञःशाश्व
तोविष्णुःश्रीमान्नारायणःपरः त्वमेवपुरुषःसत्योतींद्रियोसिजगत्पते यत्तेतेजःपरंसूक्ष्मंतेनेमांवेदिकांविश ॐभूः पुरुषंआ
वाहयामि ॐभुवःपुरुषं॰ ॐस्वःपुरुषंआवा॰ ॐभूर्भुवःस्वःपुरुषंआ॰ विष्णोइहागच्छइहतिष्ठपूजांगृहाणसुप्रसन्नोवरदोभव।

रुक्मिणींसहजांबवतींसत्यभामांश्रियंचपूर्वपश्चिमदलाभ्यंतरेषुषोडशस्त्रीसहस्राणिकल्पयेत् शंखंचक्रंगदापद्मंईशानादिषुक
ल्पयेत् तद्बहिः पूर्वपत्रादिष्वष्टपत्रेषुअनुक्रमात् विमलोत्कर्षिणीज्ञाना ३ क्रिया ४ योगा ५ तथैव प्रह्वि ६ सत्या ७ तथाज्ञाना
८ नुग्रहापद्ममध्यगा देवस्याग्रेततः कृत्वावेदिकायांखगेश्वरम् आवाह्य लोकपालानवस्थाप्यदिक्षुपूर्वादिषुक्रमात् देवान्
तदस्त्रिवतिस्थापयेत् अतोदेवाइत्यादिषोडशमंत्रैः षोडशोपचारैः पूजयेत् ततोपूर्वादिद्वादशपद्मपत्रेषुकेशवादीनावाह्य अतो
देवा १ दंविष्णु २ र्विष्णोःकर्माणिपश्यत त्रीणिपदार्चेतद्विष्णोस्त्वेतद्विप्रासोविचक्रमे ७ विष्णोर्नुकं ८ प्रतद्विष्णु ९ नंतेविष्णो ः १०
प्रविष्णावे ११ तदस्ये १२ रावती १३ तावां १४ वषट्ते १५ नुक्रमेणहि प्रदद्यादासनंपाद्यंअर्घ्यमाचमनीयकं स्नानंवस्त्रं
चोपवीतंगंधंपुष्पाणिवैततः धूपंदीपंचनैवेद्यंनीराजनप्रदक्षिणे केशवाय० १ नारायणा० २ माधवा० गोविंदा० ४ विष्णवे० ५ मधु
सूदना० ६ त्रिविक्र० ७ वामना० ८ श्रीधरा० ९ हृषीकेशा० १० पद्मना० ११ दामो० १२ एताः शुक्लैकादश्यांमंडलदेवताः एवमेव कृष्णै
कादशीमंडले संकर्षणा० संकर्षणं० वासुदेवं० प्रद्युम्नं० अनिरुद्धं० पुरुषोत्त० अधोक्ष० नारसिंहं० अच्युतं० जनार्दनं०
उपेंद्रं० हरिं० श्रीकृष्णं० १२ इतिकृष्णैकादश्याः उभयैकादश्यांयदाएकआचार्यः तदाद्वादशपद्मदलेषुपूर्वादिक्रमेण
एकत्रदेवताः स्थाप्यपूजयेत् स्तवनंविष्णुसूक्तैश्चपरिचर्यार्चनामभिः नमोंतवैष्णवैमंत्रैस्तन्मूर्तौपूजयेत्सुधीः ततोदेवा
दयोभूमौसर्वतोभद्रमंडले ब्रह्माद्याद्यादेवताःसर्वाःपूजनीयाअनुक्रमात् उपचारादिकंकुर्यान्नैवकार्यंविसर्जनं गीतवाद्यै

त्तथानृत्यैरितिहासैर्मनोरमैः पुराणैः सत्कथाभिश्च रात्रिशेषं नयेत्सुधीः प्रभाते विमले स्नात्वा कृत्वा शौचादिकाः क्रियाः चतु
र्विंशतिसंख्याकान् विप्रानागमदर्शिनः आकारयेत्ततः पश्चात्पूजयेच्च समागतान् आचार्येण समं कुर्यादुपचारादिकं ततः हो
मसंख्यानुसारेण स्थंडिलं कारयेत्ततः उल्लेखनादिकं कृत्वा प्रणीतास्थापनं ततः अस्मिन् शुक्लकृष्णैकादशीव्रतोद्यापनहो
मं कर्तुं स्थंडिलादिकर्म करिष्ये अग्निध्यानांतं कृत्वा ततोन्वाधानं क्रियमाणे शुक्लकृष्णैकादशीव्रतोद्यापनहोमे देवतापरिग्र
हार्थमन्वाधानं करिष्ये चक्षुषी आज्येनेत्यंतमुक्त्वा अत्र प्रधानं अग्निं इंद्रं प्रजापतिं विश्वान्देवान् ब्रह्माणं पुरुषं नाराय
णं प्रत्यृचं आज्येन वासुदेवं बलदेवं श्रीविष्णुं सप्तवारं अग्निं वायुं सूर्यं प्रजापतिं एताः प्रधानदेवताः पायसद्रव्येण के
शवादि द्वादश देवताः आज्यमिश्रितपायसद्रव्येण विष्णुं अष्टोत्तरशताहुत्या वा पायसद्रव्येण ब्रह्मादिदेवताश्च एकैकया आ
ज्याहुत्या शेषेण स्विष्टकृतमित्यादि प्रणीताप्रणयनांतं कृत्वा अन्वाधानसमिद्भ्यां जुहुयात् पायसं श्रपयित्वाथ चरोः प्रापणमुद्धरेत्
पवित्रं ते इति मंत्रं जपन् प्रापणमुद्धरेत् पायसादुद्धृतं किंचित्प्रापणं तत्प्रकीर्तितं अन्वाधानादिकं कुर्यादाज्यभागांतमेव च
आज्यसंस्कारादिकं आज्यभागांतं कृत्वा इदं उपकल्पितं हवनीयद्रव्यं यथादैवतमस्तु अनादेशाहुतीः पंच होतव्याः सर्पिषा
ततः पौरुषेणाथ सूक्तेन प्रत्यृचं जुहुयात् घृतं पायसं सघृतं चैव हुनेदष्टोत्तरं शतं घृताक्ततिलपालाशसमिद्भिर्जुहुयात् पृथ
क् अष्टोत्तराहुतीनां च विष्णुमंत्रेण कारयेत् इदं विष्णुर्विचक्रम इति सूक्तेन जुहुयात्तिलसर्पिषा वासुदेवाय स्वाहा बलदेवाय स्वा॰

श्रियैस्वाहा॰ विष्णवे॰ विष्णोर्नुकं॰ ऋक् तदस्यप्रियं॰ प्रतद्विष्णुः परोमात्र॰ इदंविष्णु॰ विचक्र॰ त्रीणिपदा॰ व्याहृतिभि

श्चेतिजुहुयात् केशवादिद्वादशनामभिःपायसंहुत्वाविष्णुंअष्टोत्तरशतंपायसेनजुहुयात् कृष्णैकादश्यांएवंसंकर्षणादि

द्वादशनामभिरेवं शुक्लकृष्णैकादश्याःएकाचार्यएकस्थंडिलपक्षेचतुर्विंशतिनामभिर्हुत्वामुख्यदेवतांअष्टोत्तरशतंहुत्वाब्र

ह्मादिदेवताःएकैकयाआज्याहुत्याहुनेत् ततःप्रापणार्थंभगवत्प्रार्थना त्वामेकमाद्यंपुरुषंपुराणंनारायणंविश्वसृजंभजा

मः मयैकभागोविहितोविधेयोगृहाणहव्यंजगतामधीश इतिप्रापणंनिवेद्यउपतिष्ठेत त्रिश्चतुरोवाप्रदक्षिणमग्निंवेदि

कांचपरिक्रम्य भिंधिविश्वाइतिजानुनीनिपात्य ध्रुवसूक्तंजपेत् पुरुषसूक्तंवा अष्टौपदानिप्रतिदिशंएतैर्मंत्रैर्जपन्

कृष्णायवासुदेवायहरयेपरमात्मने शरण्यायाप्रमेयायगोविंदायनमोनमः नमःस्थूलायसूक्ष्मायव्यापकायाव्ययायच

अनंतायजगद्धात्रेब्रह्मणेनंतमूर्तये अथतंनिवेदितंप्रापणंमूर्ध्निकृत्वाघोषयेत् केवैष्णवाः केवैष्णवाइतिउच्चैर्वदेत् वयंवैष्ण

वाः वयंवैष्णवाः इतिप्रतिवदेत् तेभ्यःसमानेभ्योहविर्दद्यं द्वादशाक्षरमंत्रेण ॐनमोभगवतेवासुदेवायेति इदमहममृ

तंप्राश्नामिइतिप्राश्य आचम्य गृहमागत्य सिद्ध्यैस्वाहेतिजुहुयात् यतइंद्रभयामहइत्यात्मानमभिमंत्र्य सर्वप्रायश्चि

त्तादिसमापयेत् स्विष्टकृदादिहोमशेषंसमाप्य उत्तरपूजांकृत्वा विष्णुसूक्तानिजप्त्वा अतोदेवाइति॰ ॐ भूः पुरुषंउद्वा

सयामिक्रमेणउद्वासयेत् ततोहोमावसानेचगामरोगांपयस्विनीं सवत्सांकृष्णवर्णांचसवस्त्रांकांस्यदोहिनीम् दद्याद्व्रतस

मा प्त्यर्थमाचार्यायसदक्षिणाम् भूषणानिविचित्राणिवासांसिविविधानिच चतुर्विंशतिसंख्यानिपक्कान्नानिचदापयेत्
आचार्यायप्रदेयानिदक्षिणांभूयसींतदा यदीच्छेदात्मनःश्रेयोव्रतस्योद्यापनंचरेत् विप्रान्द्वादशसंख्याकान्नामभिःपृथगर्चयेत् उपवीतानितेभ्योवैदद्यात्कुंभान्सदक्षिणान् पक्कान्नफलसंयुक्तान्वस्त्रयुक्तांस्तदापयेत् भोजयित्वाततोविप्रान् पक्कान्नेनचभक्तितः अन्यानपियथाशक्तिब्राह्मणान्भोजयेद्व्रती व्रतंममास्तुसंपूर्णमित्युक्तैःपूजितैर्द्विजैः अस्तुसंपूर्णमित्युक्त्वा आचार्यसहितोव्रती जप्त्वावैष्णवसूक्तानिप्रणम्यचपुनःपुनः ॐभूःपुरुषंउद्वासयामि इतिक्रमेणोद्वासयेत् इदंविष्णुरितिपीठंआचार्यायतुभ्यमहंसंप्रददे देवस्यत्वेतिमंत्रेणप्रतिगृह्यतांप्रतिगृण्हामि अस्यमयाकृतस्यशुक्लकृष्णेकादशीव्रतोद्यापनकर्मणःसांगतासिद्ध्यर्थंचतुर्विंशतिब्राह्मणान्भोजयिष्ये नमम ततोबंधुजनैःसार्धंशिष्टैरिष्टैश्चभोजयेत् इत्याहभगवान्बौधायनः इतिबौधायनोक्तशुक्लकृष्णेकादशीव्रतोद्यापनंसंपूर्णम् अथपूजाविधिर्ब्राह्मे एकादश्यांशुभेपक्षेनिराहारःसमाहितः नानापुष्पैर्मुनिःश्रेष्ठविचित्रंमंडपंशुभम् स्नात्वासम्यग्विधानेनसोपवासोजितेंद्रियः संपूज्यविधिवद्विष्णुंश्रद्धयासुसमाहितः गंधपुष्पैस्तथाधूपैर्दीपनैवेद्यकैःपरैः उपचारैर्बहुविधैर्जपहोमैःप्रदक्षिणैः स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यैर्मनोहरैः दंडवत्प्रणिपातैश्चजयशब्दैस्तथोत्तमैः एवंसंपूज्यविधिवद्रात्रौकृत्वाप्रजागरं यातिविष्णोःपरंस्थानंनरोनास्त्यत्रसंशयः पंचामृतेनसंस्नाप्यएकादश्यांजनार्दनम् द्वादश्यांपयसास्नाप्य

हरिसारूप्यमश्नुते इतिपूजाविधिः अथशुक्लैकादश्युद्यापनविधिः अर्जुनउवा॰ कीदृक्व्रतविसर्गोत्रविधानंचात्रकीदृशं संपूर्णंहि
भवेद्येनतन्ममेवदकृपानिधे श्रीकृष्णउ॰ शृणुपांडवयत्नेनप्रवक्ष्यामितदव्ययं शक्तःस्वर्णसहस्रंतुअशक्तःकाकिणीतथा ददातिश्र
द्धयापार्थसमंस्यादुभयोरपि शक्तश्चेद्द्विगुणंदद्याद्यथोक्तोमध्यमोविधिः उक्तार्धमप्यशक्तस्यदानंपूर्णफलप्रदं तद्रूपविधिमप्ये-
कंकथयामितवाग्रतः यानिकष्टेनचीर्णानिव्रतानिकुरुसत्तम विफलान्येवसर्वाणिउद्यापनविधिंचरेत् प्रबोधसमयेपार्थकुर्यादु-
द्यापनंक्रियां मार्गशीर्षेविशेषेणउद्यापनविधिंचरेत् दशम्यांदिनशेषेणरात्रौगुरुगृहंव्रजेत् एकादशीदिनेप्रातेगुरुमभ्यर्च्यश-
क्तितः गृहीत्वाचरणौमूर्ध्नातदर्थंचविचक्षणः पुण्यदेशोद्भवंविप्रंशांतंसर्वगुणान्वितं सदाचाररतंपार्थवेदवेदांगपारगं अस्मदी
यंव्रतंविप्रविष्णुवासरसंभवं संपूर्णंतुभवेद्येनतत्कुरुष्वद्विजोत्तम तस्याग्रेनियमःकार्योदंतधावनपूर्वकः एकादश्यांनिराहारः
स्थित्वाचैवपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत एवंप्रभातसमयेशुचिर्भूत्वासमाहितःपाखंडिनांचसर्वेषांपतीता
नांचसंगमं कामंदुरोदरंपार्थदूरतःपरिवर्जयेत् स्नानंकृत्वामंत्रपूर्वंनद्यादौविमलेजले तर्पयित्वापितॄन्देवान्पूजयेन्म
धुसूदनं उपलिप्यशुचौदेशेकीटकेशास्थिवर्जिते वर्णैश्चसर्वतोभद्रंनीलपीतसितासितैः मंडलंचोद्धरेद्भूपसर्वकर्मसुपू
जितम् अष्टांगुलोच्छ्रितांवेदींचतुरस्रांप्रकल्पयेत् वितस्तिद्वयविस्तीर्णामक्षतैःपरिपूरितां तस्यांषोडशपत्रंचकम
लंपरिकल्पयेत् तन्मध्येस्थापयेत्कुंभंनवीनंसुस्थिरंशुभम् अथवातंडुलानांचअष्टपत्रांबुजंचरेत् वारिपूर्णंघटंताम्रंपा

त्रंरौप्यसमुद्भवम् जातरूपमयंदेवलक्ष्म्यायुक्तंजनार्दनम् पल्लवैश्चसमायुक्तंसहिरण्यंसवाससं अक्षमालासमायुक्तंशंख
चक्रगदाधरम् ॐ भूः पुरुषंआवाहयामि ॐ भुवः पुरुषंआवा॰ ॐ स्वः पुरुषंआ॰ ॐ भूर्भुवःस्वः पुरुषंआ॰ रुक्मिणीं-
जांबवतींसत्यभामांशतोत्तरषोडशसहस्रैः सहश्रियासहतस्यद्येकल्पयेत् ब्रह्मादिदेवताःसर्वाःपूजनीयाअनुक्रमात्
शक्त्यासुवर्णपुष्पैश्चपूजनंपुष्टिवर्धनम् अन्यैश्चऋतुसंभवैःपुष्पैरर्चयेद्विधिवन्नरः नैवेद्याश्चचतुर्विंशत्यथदद्यादनुक्रमात्
भक्त्याचतुर्विंशतिषुतिथिष्वपिपरंतप इच्छयावातथादद्याद्यदैवोद्यापनंभवेत् मोदकान्गुडकांश्चूर्णान्घृतपूरकमंडका
न् सोहलिकादिकंसारःसर्वाःसक्तवएवच वटकन्यायसंदुग्धंशालीदध्योदनंतथा इंडिकान्पूरिकान्पार्थअपूपान्गुडमो
दकान् तिलपिष्टंकर्णवेष्टंशालिपिष्टंसशर्कराम् रंभाफलंचसघृतंमुद्गचूर्णंगुडोदनम् एवंक्रमेणनैवेद्यंपृथक्वाचरमेहनि
दामोदरायपादौतुजानुनीमाधवायच गुह्यंवैकामपतयेकट्यांवामनमूर्तये पद्मनाभायतुनाभिमुदरंविश्वमूर्तयेहृदयं
ज्ञानगम्यायकंठंश्रीकंठसंगिने सहस्रबाहवेबाहूचक्षुषीयोगयोगिने ललाटमुरुगायेतिनासांनाकस्करेश्वरम् श्रवणौश्र
वणेशायशिरवायांसर्वकामदं सहस्रशीर्षायशिरःसर्वांगंसर्वरूपिणे शुभेननारिकेरेनबीजपूरेणवापुनः हृदिध्यात्वाज
गन्नाथंदद्यादर्घ्यंविधानतः साक्षतंचसुपुष्पंचसजलंचंदनान्वितं रात्रौजागरणंकुर्याद्गीतशास्त्रविनोदतः इष्टंदत्तंधरा
दानंपिंडोदत्तोगयाशिरे कृतंदानंकुरुक्षेत्रेयैःकृतंजागरंहरेः नृत्यगीतंप्रकुर्वंतिवीणावाद्यंतथैवच येपठंतिपुराणानितेन

तानांव्रतमुत्तमं कर्तव्यंकार्तिकेमासिप्रयत्नात्भीष्मपंचकम् विज्ञानंतस्यविस्पष्टंफलंचापिततोवरं कथयस्वप्रसादेनमुनीनां
हितकाम्यया ब्रह्मोवाच प्रवक्ष्यामिमहापुण्यंव्रतंव्रतविदांवर भीष्मेणैवयत्संप्राप्तंव्रतंपंचदिनात्मकं सकाशाद्वासुदेव-
स्यतेनोक्तंभीष्मपंचकम् व्रतस्यास्यगुणान्वक्तुंकःशक्तःकेशवादृते व्रतंचैतन्महापुण्यंमहापातकनाशनं अतोवरंप्रयत्नेनक
र्तव्यंभीष्मपंचकम् वालखिल्याऊचुः कार्तिकस्यासितेपक्षेस्नात्वासम्यग्यतव्रतः एकादश्यांतुगृह्णीयाद्व्रतंपंचदिनात्मकं
शरपंजरस्थतेनभीष्मेणतुमहात्मना राजधर्मादानधर्मामोक्षधर्मास्ततःपरम् कथिताःपांडुदायादान्कृष्णेनापिश्रुतास्तदा त-
तःप्रीतेनमनसावासुदेवेनभाषितं धन्यधन्योसिभीष्मत्वंधर्माःसंश्रावितास्त्वया एकादश्यांकार्तिकस्ययाचितंचजलंत्वया अ
र्जुनेनसमानीतंगांगंबाणस्यवेगतः तुष्टानितववगात्राणितस्मादद्यदिनावधि पूर्णांतंसर्वलोकास्त्वांतर्पयंत्वर्घ्यदानतः तस्मा
त्सर्वप्रयत्नेनममसंतुष्टिकारकं एतद्व्रतंप्रकुर्वंतुभीष्मपंचकसंज्ञितं कार्तिकस्यव्रतंकृत्वानकुर्याद्भीष्मपंचकं समग्रंकार्तिकव्रतं
वृथातस्यभविष्यति अशक्तश्चेन्नरोभूयादसमर्थश्चकार्तिके भीष्मस्यपंचकंकृत्वाकार्तिकस्यफलंलभेत् सत्यव्रतायशुच
येगांगेयायमहात्मने भीष्मायैतद्ददाम्यर्घ्यमाजन्मब्रह्मचारिणे सव्येनानेनमंत्रेणतर्पणंसार्ववर्णिकं व्रतांगत्वात्पूर्णिमायांप्रदे
यःपापपूरुषः अपुत्रेणप्रकर्तव्यंसर्वथाभीष्मपंचकं यःपुत्रार्थंव्रतंकुर्यात्सस्त्रीकोभीष्मपंचकं प्रदत्वापापपुरुषंवर्षमध्येसुतंल
भेत् अवश्यमेवकर्तव्यंतस्माद्भीष्मस्यपंचकम् विष्णुप्रीतिकरंप्रोक्तंमयाभीष्मस्यपंचकं अत्रैवहिप्रकर्तव्यःप्रबोधस्तुहरेःस्वग

हतः शंखासुरो दैत्यो नभसः शुक्लपक्षके एकादश्यां ततो विष्णुश्चातुर्मास्ये प्रसुप्तवान् क्षीरोदधौ जागृतो सावेकादश्यां तु कार्तिके
अतः प्रबोधनं कार्यमेकादश्यां तु वैष्णवैः उत्तिष्ठोत्तिष्ठ शंखघ्न उत्तिष्ठांभोधिकारक उत्तिष्ठ मुनिनीधार त्रैलोक्यं मंगलं कुरु उत्तिष्ठ ध
रणीधार वराहाधिकधारक कूर्मरूपधरोत्तिष्ठ त्रैलोक्यं मंगलं कुरु उत्तिष्ठोत्तिष्ठ वाराह दंष्ट्रोधृतवसुंधर हिरण्याक्षप्राणघातिन् त्रैलो
क्ये मंगलं कुरु हिरण्यकशिपुघ्न त्वं प्रह्लादानंददायक लक्ष्मीपते समुत्तिष्ठ त्रैलोक्यं मंगलं कुरु उत्तिष्ठ बलिदर्पघ्न देवेंद्रपददायक उत्ति-
ष्ठादितिपुत्र त्वं त्रैलोक्यं मंगलं कुरु उत्तिष्ठ हैहयाधीशासमस्तकुलनाशन रेणुकात्मज समुत्तिष्ठ त्रैलोक्यं मंगलं कुरु उत्तिष्ठ रक्षोदलन अ
योध्यास्वर्गदायक समुद्रसेतुकर्तस्त्वं त्रैलोक्यं मंगलं कुरु उत्तिष्ठ कंसहरण मदघूर्णितलोचन उत्तिष्ठ हलपाणे त्वं त्रै॰ उत्तिष्ठ त्वं गया
वासिंस्त्यक्तलौकिकवृत्तक उत्तिष्ठ पद्मासनग त्रैलो॰ उत्तिष्ठ म्लेंछनिवहखड्गसंहारकारक अश्ववाहयुगांत त्वं त्रैलोक्यमं॰ उत्ति
ष्ठोत्तिष्ठ गोविंद उत्तिष्ठ गरुडध्वज उत्तिष्ठ कमलाकांत त्रैलो॰ इत्युक्त्वा शंखभेर्यादि प्रातःकाले तु वादयेत् वीणावेणुमृदंगादि गीतनृ
त्यादि कारयेत् उत्थापयित्वा देवेशं पूजां तस्य विधाय च सायंकाले प्रकर्तव्यस्तुलस्युद्वाहजो विधिः अवश्यमेव कर्तव्यः प्रतिव
र्षं तु वैष्णवैः विधिं तस्य प्रवक्ष्यामि यथा सांगा क्रिया भवेत् विष्णोस्तु प्रतिमां कुर्यात्पलस्य स्वर्णजां शुभाम् तदर्धार्धं तदर्धा
र्धं यथाशक्त्या प्रकल्पयेत् प्राणप्रतिष्ठां कृत्वा च तुलसीविष्णुरूपयोः तत उत्थापयेद्देवं पूर्वोक्तैश्च स्तवादिभिः उपचारैः षोडश



भिः पुरुषसूक्तेन पूजयेत् देशकालौ ततः स्मृत्वा गणेशं तत्र पूजयेत् पुण्याहं वाचयित्वाथ नांदीश्राद्धं समाचरेत् देववाद्यादिनिर्घो

दिनिर्घोषैर्विष्णुमूर्त्तिंसमानयेत्॥ तुलस्यानिकटेसातुस्थाप्याचांतरितापटैः॥ आगच्छभगवन्देवअर्चयिष्यामिकेशव॥ तुभ्यंद
दामितुलसींसर्वकामप्रदोभव॥ दद्यात्त्रिवारमर्घ्यंचपाद्यंविष्टरमेवच॥ ततश्चाचमनीयंचत्रिरुक्त्वाचप्रदापयेत्॥ ततोदधि-
घृतंक्षौद्रंकांस्यपात्रपुटीकृतम्॥ मधुपर्कंगृहाणत्वंवासुदेवनमोस्तुते॥ ततोयेस्वकुलाचाराः कर्त्तव्याविष्णुतुष्टये॥ हरिद्राले
पनाभ्यंगः कार्यःसर्वविधायच॥ गोधूलिसमये पूज्योतुलसीकेशवौपुनः॥ पृथक्पृथक्ततःकार्यौसुमुखमंगलंपठेत्॥ इष्ट-
देशेभास्करेतुसंकल्प्यंतुसमर्पयेत्॥ स्वगोत्रप्रवरानुक्त्वातथात्रिपुरुषादिकम्॥ अनादिमध्यनिधनत्रैलोक्यप्रतिपालक ॥
इमांगृहाणतुलसींविवाहविधिनेश्वर॥ पार्वतीबीजसंभूतांवृंदाभस्मनिसंस्थिताम्॥ अनादिमध्यनिधनांवल्लभांचददाम्य
हम्॥ पयोधृतैश्चसेवाभिःकन्यावद्वर्धितामया॥ त्वत्प्रियांतुलसींतुभ्यंदास्यामित्वंगृहाणभोः॥ एवंदत्वातुतुलसींपश्चात्तौपूज
येत्ततः॥ रात्रौजागरणंकुर्याद्विवाहोत्सवपूर्वकम्॥ प्रतिवर्षमिदंकुर्यात्कार्त्तिकव्रतसिद्धये॥ ॥ इतिसनत्कुमारसंहितायां
कार्त्तिकशुक्लैकादश्यांद्वादश्यांवातुलसीविवाहविधिः॥ ॥ वालखिल्याऊचुः॥ ॥ ततःप्रभातसमयेतुलसीं
विष्णुमर्चयेत्॥ वन्हिसंस्थापनंकृत्वाद्वादशाक्षरविद्यया॥ पायसाज्यक्षौद्रतिलैर्हुनेदष्टोत्तरंशतम्॥ ॥ततःस्विष्टकृ-
तंकृत्वादद्यात्पूर्णाहुतिंततः॥ ॥आचार्यंचसमभ्यर्च्यहोमशेषंसमापयेत्॥ ॥चतुरावार्षिकान्मासान्नियमंयस्ययत्कृत
म्॥ ॥कथयित्वाद्विजेभ्यस्तत्तथान्यत्सरिपूजयेत्॥ ॥इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो॥ न्यूनंसंपूर्णतांयातुत्वत्प्र-

ध्र·श· १२

सादाज्जनार्दन रेवतीतुर्यचरणेद्वादशीसंयुतेनरः नकुर्यात्पारणंकुर्वन्व्रतंनिष्फलतांव्रजेत् ततोयेषांपदार्थानांवर्जनंतु कृतंभवेत् चातुर्मास्येथवाचोर्जेब्राह्मणेभ्यःसमर्पयेत् ततःसर्वसमश्नीयात्यद्यदुक्तंव्रतेस्थितः दंपतीभ्यांसहैवात्र भोक्तव्यंवाद्विजैःसह ततोभुक्त्वोत्तरंयानिगलितानिदलानिच तुलस्यास्तानिभुक्त्वातुसर्वपापैःप्रमुच्यते भोजनानंत रंविष्णोरर्पितंतुलसीदलम् भक्षणात्पापनिर्मुक्तिश्चांद्रायणशताधिका इक्षुखंडंतथाधात्रिफलंपूगीफलंतथा भु क्त्वातुभोजनस्यांतेतस्योच्छिष्टंविनश्यति एष्वेकैषुनभुक्तंचेदेकैकमपियेनतु ज्ञेयउच्छिष्टआवर्षनरोसौनात्रसंशयः त तःसायंपुनःपूज्यौइक्षुवंशैश्चमंडितौ तुलसीवासुदेवौचकृतकृत्योभवेत्ततः ततोविसर्जनंकुर्यादुक्त्वादेयादिकंहरेः वैकुंठंगच्छभगवन्तुलस्यासहितःप्रभो मत्कृतंपूजनंगृह्यसंतुष्टोभवसर्वदा गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर यत्रब्रह्मादयोदेवास्तत्रगच्छजनार्दन एवंविसर्ज्यदेवेशमाचार्यायप्रदापयेत् मूर्त्यादिकंसर्वमेवकृतकृत्योभवेन्नरः प्रतिवर्षंकरोत्येवंतुलस्युद्वहनंशुभम् इहलोकेपरत्रापिविपुलंसद्यशोलभेत् प्रतिवर्षंतुयःकुर्यात्तुलसीकरपीड नम् भक्तिमान्धनधान्यैश्चयुक्तोभवतिनिश्चितम् इतिश्रीसनत्कुमारसंहितायांकार्तिकशुक्लैकादशीव्रतंसंपूर्णं मार्गशीर्षकृष्णैकादशी अर्जुनउवाच ओंनमोनारायणायाव्यक्तायात्मस्वरूपिणे सृष्टिस्थित्यंतकर्त्रेचकेशवा यनामोस्तुते त्वमेवजगतांनाथअंतर्यामीत्वमेवच शास्त्राणांचकवीशश्चवक्तात्वंचजगत्पते ॥ एकादशीकथंस्या

ए· ११ १२

स्मिन्नुत्पन्नाइतिगीयते एतद्विशंशयोमह्यंछेत्तुमर्हसिमेप्रभो ब्रूयुःस्निग्धस्यशिष्यस्यगुरवोगुह्यमच्युत ममोपरिकृपांकृत्वाइदानींव
क्तुमर्हसि मार्गशीर्षेकृष्णपक्षेकिंनामैकादशीभवेत् किन्नामकोविधिस्तस्याःकोदेव स्तत्रपूज्यते कृताकेनपुरादेवएतद्विस्त
रतोवद श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिकथांपातकनाशिनीं पृष्टाचयात्वयाराजन् लोकानांहितकाम्यया॥
मार्गशीर्षेकृष्णपक्षेचोत्पत्तिर्नामनामतः तस्यामुपोषणेनैवधार्मिकोजायतेनरः धर्माद्भवतिसत्यंवैलक्ष्मीःसत्यानुसा
रिणी पुरावैमुरनाशायउत्पन्नांममवल्लभाम् येकुर्वंतिनराराजन्तेषांसौख्यंभवेद्ध्रुवम् तथापापानिनश्यंतिनयां
तिहियमालयम् अर्जुनउवाच उत्पन्नासाकथंदेवकथंपुण्याधिकाशुभा कथंदेवपवित्रावैकथंचदेवताप्रिया॥
श्रीकृष्णउवाच पुराकृतयुगेपार्थमुरुनामेतिदानवः अत्यद्भुतोमहारौद्रःसर्वलोकभयंकरः इंद्रउच्छेदितस्तेनह्याद्यो-
देवःपुरंदरः आदित्यश्चशिवोब्रह्मावायुरग्निस्तथैवच नवंप्रतिष्ठितंतेनएवमादिधनंजय देवतानिर्जितास्तेनअत्युग्रेण
तुपांडव स्वर्गान्निराकृतादेवाविचरंतिमहीतले साशंकाभयभीतास्तेगताःसर्वेमहेश्वरम् इंद्रेणकथितंसर्वमीश्वरस्या
पिचाग्रतःस्वर्गलोकंपरित्यज्यविचरंतिमहीतले मर्त्येषुसंस्थितादेवानशोभंतेमहेश्वर उपायंब्रूहिमेदेवअमराणांतुका
गतिः शीवउवाच गच्छगच्छसुरश्रेष्ठयत्रास्तिगरुडध्वजः शरणागतदीनार्तपरित्राणपरायणः ईश्वरस्यव
चःश्रुत्वादेवराज्ञोमहामतिः त्रिदशैःसहितःसर्वैर्गतस्तत्रधनंजय अप्सरोगणगंधर्वैःसिद्धविद्याधरोरगैः॥ यत्रैवस-

जगन्नाथः कृपोसि च जनार्दनः॥ कृतांजलिपुटो भूत्वा इदं स्तोत्रं समुदीरयेत्॥ ओं नमो देवदेवेश देवानामपि वंदित॥ दैत्यारे पुंडरीका
क्ष त्राहि मां मधुसूदन॥ नमस्ते स्थितिनाशाय नमस्ते सृष्ट जगत्पते॥ नमो दैत्यविनाशाय त्राहि मां मधुसूदन॥ सुराः सर्वे समायुक्ता
भयभीताः समागताः॥ शरणं त्वां जगन्नाथ त्राहि मां भयविह्वलम्॥ त्राहि मां देवदेवेश त्राहि मां त्वं जनार्दन॥ त्राहि मां त्वं सु-
रानंद दानवानां विनाशक॥ त्वं गतिस्त्वं मतिर्देव त्वं कर्त्ता त्वं परायणः॥ त्वं माता सर्वगोसि त्वं त्वमेव हि जगत्पिता॥ अत्युग्रेण -
तु दैत्येन निर्जिता स्त्रिदशाः प्रभो॥ स्वर्गं त्यक्त्वा जगन्नाथ विचरंति महीतले॥ इंद्रस्य वचनं श्रुत्वा विष्णुर्वचनमब्रवीत्॥ ॥
विष्णुरुवाच॥ ॥ कीदृशो वो भवच्छत्रुः किन्नामा कीदृशं बलम्॥ किं स्थानं तस्य दुष्टस्य किं वीर्यं कः पराक्रमः॥ इंद्र उवाच॥
बभूव पूर्वं देवेशासुरो ब्रह्म समुद्भवः॥ तालजंघेति नाम्ना च अत्युग्रोति महाबलः॥ तस्य पुत्रोति विख्यातो मुरनामेति दानवः॥
उत्कटश्च महावीर्यो ब्रह्मलब्धवरो महान्॥ पुरी चंद्रवती नाम तत्र स्थाने वसत्यसौ॥ निर्जिता देवताः सर्वाः स्वर्गाच्चैव निराकृताः॥
इंद्रोन्यश्च कृतस्तेन अन्यो देवो हुताशनः॥ चंद्रसूर्यौ कृतौ चान्यो यमो वरुण एव च॥ सर्वमात्मी कृतं तेन सत्यं सत्यं जनार्दन॥ त-
स्य तद्वचनं श्रुत्वा कोपाविष्टो जगत्पतिः॥ हनिष्ये दानवं दुष्टं इत्याह भगवान्हरिः॥ ॥ त्रिदशैः सहितस्तत्र गतश्चंद्राव
तीं पुरीम्॥ ॥ दृष्ट्वा देवान्सयुद्धे दानवो बलदर्पहा॥ असंख्यातैश्च शस्त्रास्त्रैर्दिव्य प्रहरणायुधः॥ ॥ हन्यमाना
स्तु तैर्देवा असुरैश्च पुनः पुनः॥ त्रस्ता देवास्ततः सर्वे गताः सर्वे दिशो दश॥ ॥ हरिं निरीक्ष्य तत्रस्थं तिष्ठ तिष्ठाब्रवीद्वचः॥



१४

सतंनिरीक्ष्यप्रोवाचअसुरंसमधुसूदनः रेदानवदुराचारममबाहुंनिरीक्ष्यच चक्रंचैवसमायातंसक्रोधोरक्तलोचनः ततस्तेसंमु-
खाःसर्वेविष्णुनादानवाहताः हतोबाणैःपुनर्दिव्यैर्बभूवासौतुविव्हलः चक्रंमुक्तंतुकृष्णेनदैत्यसैन्येचपांडव तेनैवछि
न्नासिरसोबहवोनिधनंगताः एकांगोदानवस्तत्रयुध्यमानोमुहुर्मुहुः नष्टाःसर्वेसुरास्तेननिर्जितोमधुसूदनः निर्जि
तेनचदैत्येनबाहुयुद्धंचयाचितम् बाहुयुद्धंकृतंतेनदिव्यंवर्षसहस्रकम् विष्णुश्चितांप्रपन्नश्चनष्टाःसर्वेदिवौकसः॥
विष्णुःपराजितस्तेनगतोबदरिकाश्रमम् गुहांसिंहवतींनामतत्रसुप्तोजनार्दनः दानवःपृष्ठतोलग्नः प्रविष्टस्तांगु
होत्तमाम् प्रसुप्तंतत्रमांदृष्ट्वादानवेनसुभाषितम् हनिष्यामिनसंदेहोअसुराणांभयंकरः इत्येवमुक्तेवचनेदैत्ये
नामित्रकर्षिणा निर्गताकन्यकाचैकाजनार्दनशरीरतः रूपेणातिस्वरूपाढ्यादिव्यप्रहरणायुधा वि[illegible]ष्णुतेजःसमुद्भू
तामहाबलपराक्रमा मोहितोदानवस्तत्रमुरनामेतिपांडव साकन्यायुयुधेतेनसर्वयुद्धविशारदा निहतोदान-
वस्तत्रतथादेवःप्रबुद्धवान् पतितंदानवंदृष्ट्वाततोविस्मयमागतः केनेत्थंनिहतोरौद्रोममशत्रुर्भयंकरः नदेवोन
चगंधर्वोनसमोस्यास्तिभूतले एवंपार्थतदाजातोविस्मितोमधुसूदनः अकस्मादेवसोवाच वाचादिव्याशरीरिणी
॥ ॥एकादश्युवाच मयाचनिहतोदुष्टोदेवासुरभयंकरः जितायेनसुराःसर्वेस्वर्गाच्चैवनिराकृताः॥ त
स्यास्तद्वचनंश्रुत्वाविष्णुर्वचनमब्रवीत् विष्णुरुवाच उपकारस्त्वयाभद्रेममकारुण्यभावतःदानवोनिहतो

दुष्टः सुराणांच भयंकरः॥ सोहं विनिर्जितो येन कंसो येन निपातितः॥ विष्णोस्तद्वचनं श्रुत्वा देवी वचनमब्रवीत्॥ एकादशी इयं विष्णो सर्वशत्रुविनाशिनी॥ मया च निहतो दैत्यः सुराणां त्रासकारकः॥ इत्येतद्वचनं श्रुत्वा देवदेवो जनार्दनः॥ प्राह तुष्टोस्मि भद्रं ते वरं वरय वांछितम्॥ निहते दानवेंद्रे च संतुष्टा स्तत्र देवताः॥ हृष्टपुष्टास्ततो गत्वा आनंदं च समागताः॥ आनंदस्त्रिषु लोकेषु मुनयो मुदमागताः॥ ब्रूहि त्वं वचनं भद्रे यत्ते मनसि वर्तते॥ ददामि च न संदेहः सुराणामपि दुर्लभम्॥ ॥एकादश्युवाच॥ ॥ यदि तुष्टोसि मे देव सत्यमुक्तं जनार्दन॥ यदि सत्यं जगन्नाथ तिस्रो वाचो ददस्व मे॥ ॥श्रीभगवानुवाच॥ ॥सत्यमेतन्मया प्रोक्तमवश्यं तद्वदस्व ते॥ तिस्रो वाचो मया दत्तास्तव वाक्यं भवेदिति॥ ॥एकादश्युवाच॥ ॥त्रैलोक्येषु च देवेश मन्वंतरयुगेष्वपि॥ अहं च त्वत्प्रिया नित्यं यथा स्यां कुरु मे वरम्॥ सर्वतिथिप्रधाना च सर्वविघ्नविनाशिनी॥ सर्वपापापहंत्री च आयुर्बलविवर्धिनी॥ ये उपोष्यंति मे मर्त्या महाभक्त्या जनार्दन॥ सर्वसिद्धिर्भवेत्तेषां यदि तुष्टोसि माधव॥ श्रीकृष्ण उ॰॥ ॥यत्त्वं वदसि कल्याणि तत्सर्वं च भविष्यति॥ धर्मार्थकाममोक्षं च यस्त्वामेवं करिष्यति॥ मम भक्ताश्च ये लोका ये च भक्तास्तवापि च॥ चतुर्युगेषु विख्याता त्रिषु लोकेषु वै परम्॥ त्वां च भक्ता महं मन्ये एकादशिव्रते स्थिताः॥ मम पूजां करिष्यंति एकादश्यां न संशयः॥ सर्वतिथिप्रधाना त्वं मत्प्रसादाद्भविष्यसि॥ एवमुक्त्वा ततः सा तु तत्रैवांतरधीयत॥ पुरा कैकटके देशे कर्णीकनगरे शुचि॥ कर्णसेनेति राजर्षिर्न्यवसत्सुमहद्धिमत्प्रजः॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चैवानुमोदितः॥ ॥न दुर्भिक्षं न दारिद्र्यं तस्मिन् राज्ञि स्थिते प्र

भो अकालवृष्टिर्नाव्याधिर्नैवतस्करतापिच राजर्षिः पुत्रहीनोन कोपितत्रनविद्यते यत्रदुःखंपिताक्कापिपश्यतिनचकुत्रचित्
एतादृशेमहाराजेप्रशासतिप्रजाःप्रभो धनहीनोद्विजःकोपिकृत्क्षामोविपदंगतः कुटुंबभरणा शक्तःकृच्छ्रांतमनुवर्तते भर्तुः
शुश्रूषणेसक्तासदाचारेगृहेस्थिता कदामानामविप्रर्षिर्भार्यासाध्वीचसत्तमा रहःपृच्छतिभर्त्तारंम्लानतावदनेनसा स्वा
मिन्यापेकृतेपूर्वंधर्मंहीनस्तुजायते धर्महीनेधनंनास्तिधनहीनेक्रियानहि तस्मात्केनाप्युपायेनधर्मस्यजननंकुरु एतस्मि
न्नंतरेराजन्देवर्षिःसमुपागतः दंपतीचोत्स्थितौतत्रमधुपर्कंगृहाणभो आसनेतिष्ठभोस्वामिन् अर्घ्यंगृण्हनमोस्तुते
अद्यमेसफलंजन्मअद्यमेसफलाःक्रियाः अद्यमेसफलंसर्वंभवतोदर्शनेनच अस्मिन्पुरेतुये स्वामिन्सर्वेतेकृविनोजनाः अ
हंतुधनहीनत्वान्महादुःखेनपीडितः कथयस्वप्रसादेनधनाढ्यःस्यामहंकथम् धनहीनस्यलोकेस्मिन्वृथाजन्ममनोरथाः एवं
श्रुत्वातुराजेंद्रवचनंनारदोब्रवीत् नारदउवाच मार्गशीर्षसितेपक्षेउत्पत्तिर्नामनामतः तस्यासुपोषणेनैवधनाढ्योजायते
ध्रुवम् तथापापानिनश्यंतिएतत्सत्यंवदामिते सर्वसौख्यकरंनृणांहरिवासरमुत्तमम् गतेतुनारदेपश्चात्कृतंकृत्वाप्रयत्नतः तस्या
व्रतप्रभावेनकृप्रसन्नोजनार्दनः स्वयमेवाश्रितालक्ष्मीर्यत्रासीद्द्विजमंदिरं भोगान्सविपुलान्भुक्त्वागतोवैकुंठसन्निधौ ए
तस्मात्कारणाद्राजन्कर्तव्यंहरिवासरं अंतरंनैवकर्तव्यंप्रशस्तव्रतकारिभिः तिथिरेकाभवेत्सर्वापक्षयोरुभयोरपि उदयेकाद
शीस्वल्पा अंतरेचत्रयोदशी मध्येचद्वादशीपूर्णात्रिस्पृशासाहरिप्रिया एकाउपोषितातैवसहस्रैकादशीफलम् सहस्रगु

णितंदानंएकादश्यांतुपारणे॥अष्टम्येकादशीषष्ठीतृतीयाचचतुर्दशी॥ पूर्वविद्धानकर्त्तव्याकर्त्तव्यापरसंयुता॥ एकामुपोषये
त्तांतु द्वादशींविष्णुवल्लभाम्॥ दशमीवेधसंयुक्ताहंतिपुण्यंपुराकृतम्॥ एकादशीअहोरात्रंप्रभातेघटिकाभवेत्॥ सातिथिःपरि
हर्त्तव्याउपोष्याद्वादशीयुता॥ एवंविधामयाप्रोक्तापक्षयोरुभयोरपि॥ एकादश्यांप्रकुर्वीतउपवासंनशंशयः॥ सयातिपरमंस्था
नंयत्रास्तेगरुडध्वजः॥ धन्यास्तेमानवालोकेविष्णुभक्तिपरायणाः एकादश्याश्चमाहात्म्यंपर्वकालेतुयःपठेत्॥ गोसहस्रफलंतस्य
पुण्यंभवतिभारत॥ दिवावायदिवारात्रौयःश्रृणोतीहभक्तितः॥ कुलकोटिसमायुक्तोविष्णुलोकेवसेद्ध्रुवम्॥ एकादश्याश्चमाहा
त्म्यंपठ्यमानंश्रृणोतियः॥ ब्रह्महत्यादिपापानिनश्यंतेनात्रसंशयः॥ एकादशीसमानास्तिसर्वपातकनाशिनी॥ ॥इति
श्रीभविष्योत्तरपुराणेमार्गशीर्षकृष्णैकादशीउत्पत्तिर्नाममाहात्म्यंसमाप्तम्॥ ॥ अथमार्गशीर्षशुक्लैकादश्यांवैतरिणी
व्रतंहेमाद्रौभविष्ये॥ कृष्णउवाच॥ शरतल्पगतंभीष्मंपर्यपृच्छद्युधिष्ठिरः॥ व्रतेनयेनपुण्येनयमलोकोनदृश्यते॥ नारीवा
पुरुषोवापियमलोकंनपश्यति॥ तत्समाचक्ष्वधर्मज्ञपितामहकृपांकुरु॥ भीष्मउवाच॥ एकादशींवैतरणींनाकृत्वाचवि
मुच्यते॥ यमलोकंनपश्येच्चशोकंचैवनविंदति॥ युधिष्ठिर॰॥ ॥केनतातविधानेनकर्त्तव्यासामहाफला॥ पितामहसमा
ख्याहितद्विधानंममप्रभो॥ भीष्मउवाच॥ एकादशींतिथिंकृत्वामार्गशीर्षगतांशुभाम्॥ तामासाद्यनरःसम्यक्गृह्णीयान्नि
यमंशुचिः॥ एकादशीतिथिःकृष्णानाम्नावैतरणीशुभा॥ साव्रतेनत्वयाकार्यावर्षनक्तोपवासिना॥ ॥मध्याह्नेतुनरःस्ना

त्वानित्यांनिर्वर्त्यसत्क्रियाः॥ रात्रौसुरभिमानीयकृष्णामर्चेद्यथाविधि॥ सापूर्वाभिमुखीकार्याकृष्णागौःकिलभूतले॥ अग्रपादात्समार
भ्यपश्चात्पादद्वयावधि॥ गोपुच्छंतुसमासाद्यकुर्याद्वापितृतर्पणं॥ ततःपूजाप्रकर्तव्याशास्त्रदृष्टविधानतः॥ गांचैवंश्रद्धयायुक्तश्चंदनेना
नुलेपितां॥ गंधतोयेनचरणौशृंगेप्रक्षाल्यशक्तितः॥ ततोनुपूजयेद्भक्त्यापुष्पैर्गंधादिवासितैः॥ मंत्रैःपुराणसंप्रोक्तैर्यथास्थानंयथावि
धि॥ ततोगोरग्रपादाभ्यांगोरास्यायनमोस्तुते॥ गोशृंगाभ्यांचसंपूज्यगोस्कंधाभ्यांतथैवच॥ गोःपुच्छायनमस्तेस्तुगोःपश्चात्पा
दयोस्तथा॥ गोःसर्वांगेषुसंपूज्यस्थानेस्थानेषुदेवताः॥ स्थानेष्वेतेषुगंधांश्चप्रक्षिपेच्छुद्धमानसः॥ पश्चात्प्रदापयेद्धूपंगोदीपःप्रति
गृह्यतां॥ असिपात्रादिकंघोरंनदींवैतरणींतथा॥ प्रसादात्तेतरिष्यामिगोर्मातस्तेनमोनमः॥ यज्ञसाधनभूतायाविश्वस्याघौघना
शिनी॥ विश्वरूपधरोदेवःप्रीयतामनयागवा॥ सुखेनतीर्यतेयस्मान्नदीवैतरणीध्रुवम्॥ तस्मादेकादशींकृत्वानाम्नावैतरणींनरः
हेमशृंगींरौप्यखुरींसघंटाभरणांबरां॥ ताम्रपृष्ठींकांस्यदोग्ध्रींसुवर्णोत्तरदक्षिणाम्॥ सवत्सांद्विजमुख्यायपूजयित्वासमर्पयेत्॥
आनंदकृत्सर्वलोकेदेवानांचसदाप्रिया॥ गोस्त्वंपाहिजगन्नाथेदीपोयंप्रतिगृह्यतां॥ आच्छादनंगवेदद्यात्सम्यक्शुद्धंसुनिर्मलं॥
सुरभिर्वस्त्रदानेनप्रीयतांपरमेश्वरी॥ मार्गशीर्षादिकेभक्त्यावर्षमेकंतुपूजयेत्॥ मासिमासिप्रकुर्वीतमासद्वादशकव्रतम्॥ उद्या
पनंततःकुर्यात्पूर्णेसंवत्सरेतदा॥ युधिष्ठिरउ०॥ मार्गशीर्षसितेपक्षेउद्यापनविधिंवद॥ कृष्णउ०॥ यस्त्वेतत्फलंजन्मजीवितंचसुजी
वितं॥ विनाशंसर्वपापानांसकुर्याद्द्वादशीमिमां॥ युधिष्ठिरकिमिष्टेनशिष्टैरन्यैरनुष्ठितैः॥ दुष्टानीनरदुर्गाणितोषयस्वचकेशवं॥ मार्ग

शीर्षेसितेपक्षेद्वादश्यांकारयेदिदं यदावाभक्तिरुत्पन्नादेवदेवंजनार्दनम् एकादश्यांनिराहारोमासिमास्यर्चयेद्धरिं द्वादश्यांद्वादशै
तानिनामानिपरिकीर्तयेत् केशवंमार्गशीर्षेचपौषेनारायणंविदुः माधवंमाघमासेतुगोविंदमथफाल्गुने चैत्रेविष्णुंतथाविंद्याद्वै
शाखेमधुसूदनं त्रिविक्रमंतथाज्येष्ठेआषाढेवामनंविदुः श्रावणेश्रीधरंविद्धिहृषीकेशंतुभाद्रके आश्विनेपद्मनाभंचऊर्जेदामो
दरंविदुः कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात्
एतानिप्रातरुत्थाययःपठेत्पुरुषःसदा अपिदुर्गतिकास्तस्यपितरःस्वर्गमाप्नुयुः तिलपात्रंद्वादशकंयोदद्यात्तस्यहंद्विजे एवंद्वाद
शभिर्मासैर्व्रतंपारंगमिष्यति व्रतांतेब्राह्मणान्शांतान्माससंख्यान्निमंत्रयेत् द्वादशाश्वत्थपात्रेषुस्थापयेच्छुक्लतंडुलैः ओंतस्मैनम
आयातु इतिआवाहयेत्पृथक् संस्थाप्याग्निंततःप्राच्यांध्यायेद्योआत्मसंमुखान् आसनंपाद्यमर्घ्यंचगंधपुष्पादिनातथा धू
पदीपांश्चवासांसिहोमशेषंसमापयेत् दत्वाचाचमनंपश्चाद्धोमशेषंनिवेदयेत् अष्टाष्टसमिधोहोमेहुत्वाष्टाष्टघृताहुतीः यवस्या
हुतिमेकैकामष्टाष्टौचतिलाहुतीः अग्निप्रतिष्ठितंहोमंदेवेभ्यश्चनिवेदयेत् पूर्णाहुतौभवेन्मंत्रस्तद्विष्णोःपरमंपदं एवंकृतेतुहोमां
तेगाःकृष्णाद्वादशाष्टवा षट्चतस्रोपिवादेयाएकावापिपयस्विनी शय्यासतूलिकाकार्यादंपत्योःपरिधानकं सवत्साकृष्णवर्णातु
धेनुर्देयापयस्विनी सौवर्णीसुरभिंकृत्वास्थापयेत्तूलिकोपरि सुरभिंपूजयेन्मंत्रैःपूर्वोक्तैर्भक्तिसंयुतः ततस्तुगुरवेदद्यात्स
र्वंतत्रक्षमापयेत् कृष्णभक्तायशांतायविधिज्ञानमहात्मने तेप्रीयंतामितिप्रोक्तादेवाद्वादशमासिकान् मामेवमुद्धरस्वेतिग

वंवाच्यःपरिग्रहः॥ मासिमासिभवेत्तेषुतिलपात्रेषुतैर्घटैः॥ तस्मिन्कालेप्रदातव्याघटास्तेमासनामभिः॥ समाप्यतुव्रतंपुण्यं
तस्मादर्घ्यंप्रदापयेत्॥ उद्धारयेत्पितृगणान्दशपूर्वान्दशापरान्॥ आत्मानमेकविंशच्चकृष्णैकादश्युपोषणात्॥ भारोलोहस्य
दातव्यःकार्पासोद्रोणसंयुतः॥ वैतरिण्यांसमास्यर्थंब्राह्मणायकुटुंबिने॥ नारीवापुरुषोवापिव्रतस्यास्यप्रभावतः॥ राज्यं-
बहुदिनंभुक्त्वास्वर्गलोकेमहीयते॥ ॥ इतिश्रीभविष्योत्तरपुराणेमार्गशीर्षकृष्णैकादश्यांवैतरिणीव्रतोद्यापनं-
संपूर्णम्॥ ॥ इतिएकादशीव्रतानिसमाप्तानि॥ ॥ ॥ शुभंभवतु॥ छ ॥

श्रीगणेशायनमः अथद्वादशीव्रतानिलिख्यंते तत्रचैत्रशुक्लद्वादश्यांमदनोत्सवः द्वादश्यांचैत्रमासस्यशुक्लायांदमनोत्सवः बौधा
यनादिभिःप्रोक्तःकर्तव्यःप्रतिवत्सरं रामार्चनचंद्रिकोक्तेः ऊर्जेव्रतंमधौदोलां श्रावणेतंतुपूजनं चैत्रेचदमनारोपमकुर्वाणोव्रजत्य
धः इदंशुक्रास्तादावपिकार्यं उपाकर्मोत्सर्जनंचपवित्रंदमनार्पणं ईशानस्यबलिंविष्णोःशयनंपरिवर्तनं कुर्याच्छुक्रेगुरौमूढेव
द्धगार्ग्येणउच्यते इतिचैत्रद्वादशी वैशाखशुक्लद्वादश्यांयोगविशेषोहेमाद्रौ पंचाननस्थौगुरुभूमिपुत्रौमेषेरविःस्याद्यदिशुक्लप
क्षे पाशाभिधानाकरभेणयुक्तातिथिर्व्यतीपातइतीहयोगः अत्र स्नानदानादिकंकुर्याद्गोभूवस्त्रहिरण्यकैः नरैःपापंप्रमुच्येत
माधवस्यतुपूजनात् पंचाननःसिंहराशिः पाशाभिधानामतिथिर्द्वादशी करभोहस्तः इतिवैशाखद्वादशी आषाढशुक्लद्वाद
श्यांअनुराधायोगरहितायांपारणंकुर्यात् तथाचहेमाद्रौभविष्ये आभाकासितपक्षेषुमैत्रश्रवणरेवती संगमेनहिभोक्तव्यंद्वाद
शद्वादशींहरेत् आषाढभाद्रकार्तिकशुद्धद्वादशीषुअनुराधाश्रवणरेवतीयोगेपारणंनकुर्यात् अत्रविष्णुधर्मे मैत्राद्यपादेस्वपि
तीहविष्णुःपौष्णांत्यपादेप्रतिबोधमेति श्रुतेश्वमध्येपरिवर्तमेतिस्कंभिप्रबोधपरिवर्तनमेववर्ज्यं इतिआषाढशुद्धद्वादशी अथ
श्रावणशुक्लद्वादश्यांदधिव्रतं तक्रादीनांननिषेधः तत्रदधिव्यवहारात् तत्रैवद्वादश्यांविष्णोःपवित्रारोपणमुक्तम् हेमाद्रौवि
ष्णुरहस्ये श्रावणस्यसितेपक्षेकर्कटस्थेदिवाकरे द्वादश्यांवासुदेवायपवित्रारोपणंस्मृतं द्वादश्यांश्रावणेवापिपंचम्यामथवाद्वि
ज अनुकूलेषुकर्तव्यंपंचदश्यामथापिवा पवित्रारोपणंविघ्नाच्छ्रावणेनभवेद्यदि कार्तिक्यवधिशुक्रास्तेकर्तव्यमितिनारदः हेम

रौप्यताम्रक्षौमैःसूत्रैःकौशेयपद्मजैः कुशैःकाशैश्चकार्पासैर्ब्राह्मण्याकार्तितैःशुभैः कृत्वात्रिगुणितंसूत्रंत्रिगुणीकृत्यशोधयेत् त-
त्रोत्तमंपवित्रंतुषष्ठ्यासहशतैस्त्रिभिः सप्तत्यासहितंद्वाभ्यांशताभ्यांमध्यमंस्मृतं साशीतिनाशतेनैवकनिष्ठंतत्समाचरेत् साधा-
रणपवित्राणित्रिभिःसूत्रैःसमाचरेत् उत्तमंतुशतग्रंथिपंचाशद्ग्रंथिमध्यमं कनिष्ठंतुपवित्रंस्यात्षट्त्रिंशद्ग्रंथिशोभितं षट्त्रिंश-
च्चचतुर्विंशत्द्वात्रिंशदितिकेचन चतुर्विंशद्द्वादशाष्टावित्येकेमुनयोविदुः शिवपवित्रंतुतत्रैव एकादशभिर्वासूत्रैस्त्रिंशतावा-
प्युक्तया पंचाशतावाकर्तव्यंतुल्यंग्रंथ्यंतरालकं द्वादशांगुलमानानिव्यासादष्टांगुलानिच लिंगविस्तारमानानिचतुरंगुलका-
निच नकरोतिविधानेनपवित्रारोपणंतुयः तस्यसांवत्सरीपूजानिःफलामुनिसत्तम तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपराय-
णैः वर्षेवर्षेप्रकर्तव्यंपवित्रारोपणंहरेः इतिश्रीभविष्योत्तरपुराणेश्रावणशुक्लद्वादश्यांविष्णुपवित्रारोपणविधिः अथभाद्र-
शुक्लद्वादश्यांश्रवणद्वादशीयोगेकार्यं तथाचमात्स्ये द्वादशीश्रवणस्पृष्टास्पृशेदेकादशींयदि सएववैष्णवोयोगोविष्णुशृंखल-
लसंज्ञितः तस्मिन्नुपोष्यविधिवन्नरःसंक्षीणकल्मषः प्राप्नोत्यनुत्तमांसिद्धिंपुनरावृत्तिदुर्लभां विष्णुधर्मे एकादशीद्वादशी
चवैष्णवर्क्षमपियत्रच तद्विष्णुशृंखलंनामविष्णुसायुज्यकृद्भवेत् एकादशीतितंत्रेणद्वादश्यामुपवासकृत् संस्पृशेदेकादशीं
राजन्द्वादशींयदिसंस्पृशेत् श्रवणंज्योतिषांश्रेष्ठंब्रह्महत्यांव्यपोहति भाद्रशुक्लद्वादश्यांश्रवणयोगरहितायांपारणंकुर्या-
त् आभाकासितपक्षेषुइतिदिवोदासोदाहृतवचनात् उपोष्यैकादशींमोहात्पारणंश्रवणेयदि करोतिहंतियत्पुण्यंद्वादश

द्वादशीभवं विशेषेणमहीपालश्रवणंवर्धतेयदि तिथिक्षयेनभोक्तव्यंद्वादशींलंघयेन्नहि इहचश्रवणर्क्षंत्रिधाविभज्यमध्यविंश
तिघटिकायोगंत्यक्त्वापारणंकार्यं तदुक्तंविष्णुधर्मे श्रुतेश्चमध्येपरिवर्तमेतिस्तप्तिप्रबोधपरिवर्तनमेववर्ज्यं केचित्तु चतुर्धा
विभज्यमध्यपादद्वयमित्याहुः अत्रैवविष्णुपरिवर्तनोत्सवंकुर्यात् अत्रैवशक्रोत्थापनमुक्तमपरार्केगर्गेण द्वादश्यांतुसिते
पक्षेमासिप्रौष्ठपदेतथा शक्रमुत्थापयेद्राजाविश्वश्रवणवासरे इयमेवश्रवणद्वादशीनाम्ना तत्रैकादश्यांद्वादशीश्रवणयो
गेसैवोपोष्या विष्णुश्रृंखलविशेषयोगात् एकादश्यांश्रवणयोगाभावेपितद्दिनावच्छेदेनश्रवणस्पृष्टद्वादशीयोगादेवविष्णुश्रृं
खलमिति हैमाद्रौमतं निर्णयामृतेतु श्रवणद्वादशीयोगएवविष्णुश्रृंखलंनान्यथेति यथानिशीथानंतरंसूर्योदयावधि
कलामात्रमपिश्रवणर्क्षंतदापिपूर्वैव दिवोदासीयेतुरात्रेःप्रथमयामेश्रवणयोगेपूर्वा अन्यथोत्तरेत्युक्तं इयंचबुधवारेति
प्रशस्ता यदातुएकादशीश्रवणयुतानद्वादशीतदाएकादश्यामेवव्रतं अशक्तस्तु एकादश्यांगौणोपवासंकृत्वाद्वादशीमु
पवसेत् इदंव्रतंकाम्यमितिगौडाः नित्यमितिदाक्षिणात्याः पारणंतुउभयांतेअन्यतरांतेवाकुर्यात् भाद्रपदेश्रवणेकाद
श्यामध्यान्हेवामनावतारः श्रवणयुक्तशुद्धैकादश्यलाभेतुदशमीविद्धापिश्रवणयुताग्राह्या तथाचमदनरत्नेवन्हिपुराणे
दशम्यैकादशीयत्रसानोपोष्याभवेत्तिथिः श्रवणेनतुसंयुक्तासोपोष्यासर्वकामदा अस्यांद्वादश्यांदुग्धव्रतसंकल्पःदुग्धव्र
तेतुपायसादिकंवर्ज्यं दधिघृतादयस्तुविकाराग्राह्याएव नन्वेवंसंधिन्यादिक्षीरनिषेधेपिदध्यादिग्राह्यंस्यादितिचेत्

तत्रवाच्वनिकनिषेधसत्वात् तदाहअपरार्केशंखः क्षीराणियान्यभक्ष्याणितद्विकाराशनेबुधः सप्तरात्रंव्रतंकुर्यात्प्रयत्नेनसमा
हितः व्रतंगोमूत्रपानकं अथव्रतविधिः कृष्णउवाच विधानंशृणुराजेंद्रयथादृष्टंमनीषिभिः यथोक्तंनियमंकुर्यादेका
दश्यामुपोषितः दंतान्संशोध्ययत्नेनवाग्यतोनियतेंद्रियः श्रवणाद्वादशीयोगेसमुपोष्यजनार्दनं अर्चयित्वाविधानेनत्र
योदश्यांपरेहनि नदीनांसंगमेस्नायादर्चयेदत्रवामनं सौवर्णंवस्त्रसंयुक्तंद्वादशांगुलमुच्छ्रितं पीतवस्त्रैःशुभैर्वेष्ट्यम
त्रमवर्णानवं हिरण्मयेनपात्रेणअर्घ्यपात्रंप्रकल्पयेत् दध्यक्षतफलैश्चैवसहिरण्यंसचंदनं नमस्तेपद्मनाभायनमस्ते
जलशायिने तुभ्यमर्घ्यंप्रयच्छामिबालवामनरूपिणे नमःशार्ङ्गसीरबाणपाणयेवामनायच यज्ञभुक्फलदात्रेचवा
मनायनमोनमः देवेश्वरायदेवायदेवसंभूतिकारिणे प्रभवेसर्वदेवानांवामनायनमोनमः मत्स्यकूर्मवराहेभ्योनारसिं
हस्वरूपिणे रामचंद्रायरामायवामनायनमोनमः श्रीधरायनमस्तेस्तुनमस्तेगरुडध्वज चतुर्बाहोनमस्तेस्तुनमस्तेध
रणीधर एवंसंस्तूयविधिवन्नरःप्रस्कंदनादिभिः रात्रौजागरणंकुर्यात्पुरतोजलशायिनः धृत्वाबालमयंरूपंदेवोक्रीडत्पयो
निधौ ब्रह्मांडमुदरेयस्यमहद्भूतैरधिष्ठितं मायावीवामनःश्रीशःसोत्रायातुजगत्पतिः एवंसंस्तूयतंभक्त्याद्वादश्यामुद
येरवेः भृंगारसहितंतंच ब्राह्मणायनिवेदयेत् वामनःप्रतिगृह्णातिवामनोहंददामिते वामनंसर्वतोभद्रंद्विजायप्रतिपा
दये जलधेनुंतथादद्याच्छत्रंचैवतुपादुके सहिरण्यानिवस्त्राणिवृषधेनुंतथानृप यत्किंचिद्दीयतेतत्रतद्दानंप्राप्यतेध्रु

वं श्रवणद्वादशीयोगेसंपूज्यगरुडध्वजं दत्वादानंद्विजातिभ्योवियोगेपारणंततः सिंहस्थितेतुमार्तंडेश्रवणस्थेनिशाकरे यु-
धिष्ठिरउवाच उपवासासमर्थानांकिंस्यादेकसुपोषितं महाफलंमहादेवतन्ममाचक्ष्वपृच्छतः श्रीकृष्णउवाच यारामश्रवणो-
पेताद्वादशीमहतीतुसा तस्यामुपोषितःस्नातःपूजयित्वाजनार्दनं प्राप्नोत्ययत्नाद्धर्मज्ञद्वादशद्वादशीफलं दध्योदनयुतंत-
स्यांजलपूर्णंतथाघटं वस्त्रसंवेष्टितंदत्वाछत्रोपाहनमेवच नदुर्गतिमवाप्नोतिगतिमग्र्यांचविंदति अक्षय्यंस्थानमाप्नोति
नात्रकार्याविचारणा श्रवणद्वादशीयोगेबुधवारोभवेद्यदि अत्यंतमहतीनामद्वादशीसाप्रकीर्तिता स्नानंजाप्यंतथादानंहो-
मःश्राद्धंसुरार्चनं सर्वमक्षय्यमाप्नोतितस्यांशृणुकुलोद्वह तस्मिन्दिनेतथास्नातोयत्रक्वचनसंगमे सगंगास्नानजंराजन्-
फलंप्राप्नोत्यसंशयम् श्रवणेसंगमाःसर्वेपरतुष्टिप्रदाःसदा विशेषाद्द्वादशीयुक्ताबुधयुक्ताविशेषतः तथैवद्वादशीप्रोक्ता
बुधश्रवणसंयुता शुक्लाश्रवणसंयुक्तासंगमेविजयास्मृता वारिकुंभंप्रदायास्यांदध्योदनसमायुतं प्रेतयोनौनजायेतपू-
जयित्वात्रवामनं वंशाःसमुद्धृतस्तेनमुक्तःपितृऋणादसौ नभस्येसंगमेस्नात्वावामनोयेनपूजितः सयातिपरमंस्थानं
विष्णुसायुज्यमाप्नुयात् युधिष्ठिरउवाच उपवासासमर्थानांतदेवपुरुषोत्तम एकायाद्वादशीपुण्यातांवदस्वममानघ
श्रीकृष्णउवाच मासेभाद्रपदेशुक्लाद्वादशीश्रवणान्विता सर्वकामप्रदापुण्याउपवासमहाफला संगमेसरितांस्नात्वाद्वा-
दश्यांसमुपोषितः समग्रंसमवाप्नोतिद्वादशद्वादशीफलं त्वमेवतीर्थराजोसित्वमेवसरितांपतिः संगमस्त्वंप्रसन्नोमे-

प्रसादंकुरुसंगम साधेन्नुर्द्वादशीज्ञेयातस्यांभाद्रपदेशुभा दशाम्येकादशीयत्रसानोपोष्याभवेत्तिथिः श्रवणेनतुसंयुक्तासा
शुभासर्वकामदा पारणंतिथिवृद्धौतुद्वादश्यामुडुसंक्षयात् वृद्धौकुर्यात्त्रयोदश्यांतत्रदोषोनविद्यते इत्येषाकथितारांजन्द्वा
दश्यांश्रवणेनया कर्तव्यासाप्रयत्नेनइहामुत्रफलप्रदा द्वादश्यामुपवासोत्रत्रयोदश्यांतुपारणं निषिद्धमपिकर्तव्यमि॰
त्याज्ञापारमेश्वरी बुधश्रवणसंयुक्तासैवचेद्द्वादशीभवेत् अतीवमहतीतस्यांसर्वंकृतमिहाक्षयं द्वादशीश्रवणोपेताय॰
दाभवतिभारत संगमेसरितांस्नात्वागंगादिस्नानजंफलं सोपवासःसमाप्नोतिनात्रकार्याविचारणा जलपूर्णंतदाकुंभं
स्थापयित्वाविचक्षणः पंचरत्नसमोपेतंसोपवीतंसवस्त्रकं तस्योपरिस्थापयित्वालक्ष्म्यासहजनार्दनं यथाशक्त्यास्वर्णम
यंशंखशार्ङ्गविभूषितं स्थापयित्वाविधानेनसितचंदनचर्चितं सितवस्त्रयुगच्छन्नंछत्रोपानद्युगान्वितं ॐनमोवासुदेवा
यायशिरःसंपूजयेत्ततः श्रीधरायमुखंतद्वत्कंठंहृदयेनमः नमःश्रीपतयेनेत्रेभुजौसर्वास्त्रधारिणे व्यापकायनमः॰
कुक्षीकेशवायोदरंनमः त्रैलोक्यजनकायेतिमेढ्रंसंपूजयेद्धरेः सर्वाधिपतयेजंघेपादौसर्वात्मनेनमः अनेनविधिना॰
राजन्पुष्पधूपैःसमर्चयेत् ततस्तस्याग्रतोदेयंनैवेद्यंघृतपाचितं द्वादशब्राह्मणान्कुंभान्शक्त्यादद्याच्चदक्षिणां एवंसंपू॰
ज्यगोविंदंजागरंतत्रकारयेत् प्रभातेविमलेस्नात्वासंपूज्यगरुडध्वजं पुष्पधूपादिनैवेद्यैःफलैर्वस्त्रैःसुशोभनैः पुष्पां॰
जलिंततोदत्वामंत्रमेतमुदीरयेत् नमोनमस्तेगोविंदबुधश्रवणसंज्ञक अघौघसंक्षयंकृत्वासर्वसौख्यप्रदोभव अनंत

ब्राह्मणेतुवेदवेदांगपारगे पुराणज्ञेविशेषेणविधिवत्संप्रदापयेत् प्रीयतांदेवदेवेशोममनित्यंजनार्दनः अनेनैवविधानेनदद्या
त्स्त्रीवानरोत्तमः सर्वंनिवर्तयेत्सम्यक् एकभक्तिरतोपिसन् श्रीकृष्णउवाच अत्राप्युदाहरंतीममितिहासंपुरातनं मह
त्यरण्येयद्वृत्तंभूमिपालश्रृणुष्वतत् देशोदाशार्णकोनामतस्यभागेतुपश्चिमे अस्तिराजन्मरुर्देशः सर्वसत्वभयंकरः स्रु
तप्तवालुकाभूमिर्यत्रदुष्टामहोरगाः अल्पच्छायाद्रुमास्तत्रमृतप्राणिसमाकुलाः शमीखदिरपालाशकरीरैश्चसपीलुभिः
यत्रभीमगणावृक्षामर्कटैःपरिवेष्टिताः दग्धप्राणिगणाकीर्णायत्रभूर्दृश्यतेक्वचित् अर्कप्रतापैःसंतप्तापुरुषानिस्तृणामम
ही ज्वलिताग्निसमंचैवयत्किंचित्तत्रदृश्यते तथापिलोकाजीवंतिसर्वेकर्मनिबंधनात् नोदकंनोतृषाभीताराजंस्तत्रब
लाहकाः कदाचिदपिदृश्यंतेप्लवमानाविहंगमाः तैःकांतारगतैःकैश्चित्तृषितैःशिशुभिःसमं सैकतेष्वेवनश्यं
तिजलैःसैकतसेतुवत् तस्मिंस्तथाविधेदेशेकश्चिद्दैववशाद्वणिक् हरिदत्तइतिख्यातोवणिक्धर्मोपजीवकः निजसा
र्थपरिभ्रष्टःप्रविष्टोमरुजांगले दृष्टवान्मलिनान्रुक्षान्निर्मांसान्भीमदर्शनान् बभ्रामभ्रांतहृदयःक्षुत्तृषाश्रमकर्शितः
क्वग्रामःक्वजनःक्वाहंक्वयास्यामिकिमाचरे अथप्रेतान्ददर्शासौक्षुत्तृषाव्याकुलेंद्रियः क्षुत्क्षामान्लंबवृषणान्निर्मांसान्
दृश्यकीकसान् स्नायुबद्धास्थिचरणान्धावमानानितस्ततः वणिक्सोपितदाश्चर्यंदृष्ट्वाभयमुपागतः भीतभीतस्तुतैः
सार्धंजगामपथिवंचयन् ततोगत्वापिशाचास्तेन्यग्रोधंमहदाश्रयं शीतच्छायंसुविस्तीर्णंतत्रतेसमुपाविशन् निविष्टेषु

ततस्तेषुएकदेशेस्थितोवणिक् प्रेतस्कंधसमारूढमेकंविकृतदर्शनम् ददर्शबहुभिःप्रेतैःसमंतात्परिवारितम् आगच्छ-
न्तंशवभक्षीसस्तुतिशब्दपुरःसरं प्रेतस्कंधान्महींगत्वातस्यांतिकमुपागमत् सोपिवान्चावणिकश्रेष्ठमिदंवचनमब्रवीत्
अस्मिन्घोरतरेदेशेप्रवेशोभवतःकथं तमुवाचवणिक्धीमान्स्वार्थभ्रष्टस्तदावशः प्रवेशोदैवयोगेनकष्टकर्मकृतेनतु तृ
ष्णामेबाधतेत्यर्थंक्षुत्तृषेचभृशंतथा प्राणाःकंठमनुप्राप्तावचनंनश्यतीवमे अत्रोपायंनपश्यामिजीवयेद्येनकेनचित्
श्रीकृष्णउवाच इत्येवमुक्तःप्रेतस्तुवणिजंवाक्यमब्रवीत् पुन्नागमिममाश्रित्यप्रतीक्षस्वमुहूर्तकं कृतातिथ्योयथापश्चा
द्गमिष्यसियथासुखं एवमुक्तस्तथाचक्रेसवणिक्तृषयार्दितः मध्यान्हसमयेप्राप्तेततस्तंदेशमागतः पुन्नागवृक्षा-
च्छीतोदावारिधानीमनोरमा दध्योदनकृयुक्तेनवर्धमानेनसंयुता अवतीर्यततःसोग्रेददावतिथयेतदा दध्योद
नंचतोयंचक्षुत्तृड्भ्यांपीडितायवै दध्योदनेनतोयेनपरांतृप्तिमुपागतः वितृष्णोविज्वरश्चापिक्षणेनचबभूवह
ततस्तुप्रेतसंघस्यतस्माद्भागंक्रमाद्ददौ दध्योदनात्सपानीयात्प्रेतास्तृप्तिंपरांगताः अतिथिंतर्पयित्वाचप्रेतलोकंचस
र्वशः ततःस्वयंचबुभुजेभुक्तशेषंयथासुखं ततोभुक्तवतस्त्वन्नंपानीयंचस्वयंपपौ प्रेताधिपंततस्तुष्टोवणिक्व
चनमब्रवीत् वणिगुवाच आश्चर्यमेतत्परमेवंवनेस्मिन्प्रतिभातिमे अन्नपानस्यसंप्राप्तिःपरमस्यकुतस्तव स्तोके
नचतथान्नेनबिभर्षिसुबहून्वने तृप्तिंगताःकथंत्वेतेनिर्मांसाभीमकुक्षयः अपरंचकथंत्वेद्दमवाप्तावापरिक्षयं हिमा

चलंचकस्मात्वंसंप्राप्तोनिर्जलेवने तृप्तश्वासिकथंग्रासमात्रेणैवस्फुभंब्रवीः पिशाचपतिरुवाच शृणुभद्रंप्रवक्ष्यामि दुष्कृतं
कर्मचात्मनः शाकलेनगरेरम्येअहमासंस्कदुर्मतिः वणिगासंपुराकालेततोऽभद्रमवापह शाकलेनगरेरम्येनास्तिकस्यदुरा-
त्मनः धनलोभात्तथातत्रकदाचिन्नमदेरिता नदत्ताभिक्षवेभिक्षात्वृषितेतुकदाचन प्रतिवेश्यस्तुतत्रासीद्ब्राह्मणोगुणवान्म-
म श्रवणद्वादशीयोगेमासिभाद्रपदेतथा सकदाचिन्मयासार्धंतापीनामनदींययौ तस्यास्तुसंगमःपुण्योयत्रासीच्चंद्रभागया
चंद्रभागासोमसुतातापीचैवार्कनंदिनी तयोःशीतोष्णसलिलेसंगमेस्कमनोहरे तत्तीर्थवरमासाद्यप्रतिवेश्यःसमेद्विजः श्र-
वणद्वादशीयोगेस्नातश्चैवोपवासकृत् चंद्रभागस्यतोयस्यवारिकुंभंनवंदृढं दध्योदनयुतैःसार्धंसंपूर्णवर्धमानकैः छत्रोपान-
द्युगंवस्त्रंप्रतिमांविधिवद्धरेः प्रददौविप्रमुख्यायरहस्यज्ञोमहामुनिः वित्तसंरक्षणार्थायतस्यापिचततोमया सोपवासेन-
दत्तावैवारिधानीस्कशोभना चांद्रभागस्यविप्रायदध्योदनयुतातदा एतत्कृत्वागृहंप्राप्तस्ततःकालेनकेनचित् पंचत्वमहमासा-
द्यनास्तिक्यात्प्रेततांगतः अस्यामटव्यांघोरायांयथास्वकुशलंतदा पुरोहितोमयादृष्टोस्नात्वागृहमुपागतः शिक्यहस्तःसक-
लशीद्वादश्यांसमुपोषितः तेनापिकथितातत्रश्रवणाद्वादशीशुभा सविनयंसोपदेशंव्रतंकृत्वामयानघ तस्येयंकर्मणःपुष्टि-
र्यैयंदृष्टात्वयानघ यदन्नंचमयादत्तंसजलंघटकांचनं तत्तन्मांभजतेनित्यंपिशाचत्वेपिनित्यशः सेयंमध्यान्हसमयेदिव-
सेदिवसेमम उपतिष्ठतिवैश्येह यथादृष्टंत्वयानघ उपवासफलेनैवजातिस्मरणमेवच दधिभक्तप्रसादेनजलान्नंचाक्षयंम

म ब्रह्मस्वहारिणस्त्वेतेपापाः प्रेतत्वमागताः परदाररताः केचित्स्वामिद्रोहरताःपरे मित्रद्रोहरताः केचिद्देशेस्मिंस्तुसुदारुणे
ममैतेभृत्यतांप्राप्ता अन्नदानादिकेनच अक्षय्योभगवान्विष्णुः परमात्मासनातनः यद्दीयतेतमुद्दिश्य अक्षय्यंतत्प्रकीर्तितं
तेनाक्षय्येनचान्नेनतृप्ताएतेपुनः पुनः प्रेतभावाच्चदौर्बल्यंनमुंचंतिकदाचन अहंचपूजयित्वात्वामतिथिंसमुपस्थितं प्रे-
तभावाद्विनिर्मुक्तोयास्यामिपरमांगतिं मयाविहीनाः किंत्वेतेवनेस्मिन्भृशदारुणे पीडामनुभवंत्येतेदारुणांकर्मयोनिजां
एतेषांतुमहाभागममानुग्रहकाम्यया अनेकनामगोत्राणिगृह्णीष्वत्वंरविलंमम अस्तिकक्षागताचैवतत्त्वसंपुटिकाशुभा
हिमवंतमथासाद्यतत्रत्वंलप्स्यसेनिधिं गयाशीर्षेततोगत्वाश्राद्धंकुरुमहामते एकमेकमथोद्दिश्यप्रेतेप्रेतेयथासुखं एवं
संभाष्यमाणस्तंतप्तजाम्बूनदप्रभः समारुह्यविमानंसस्वर्गलोकमितोगतः स्वर्गतेप्रेतनाथेतुप्रभातेसवणिकूक्रमात् ना-
मगोत्राणिसंगृह्यप्रयातः सहिमाचलं तत्रप्राप्यनिधिंगत्वाविनिक्षिप्यस्वकेगृहे धनभारमुपादायगयाशीर्षवटंययौ
प्रेतानांक्रमशस्तत्रचक्रेश्राद्धंदिनेदिने यस्ययस्ययथाश्राद्धंसकरोतिदिनेवणिक् सोपितस्यतदास्वप्ने दर्शयित्वात्मन-
स्तनुं ब्रवीतिचमहाभागप्रसादेनतवानघ प्रेतभावमिमंत्यक्त्वाप्राप्तोस्मिपरमांगतिं ततस्तुतेविमानस्थाऊचुस्त्वंवणि-
जंतथा त्वयाहितारिताः सर्वेकिल्बिषाद्वणिजोत्तमप्रयामः स्वर्गतिंसर्वेइदानींत्वत्प्रसादतः साधुसंगोनहिवृथाकदा-
चिदप्युपजायते एवमुक्त्वागताः सर्वेविमानैः सूर्यसन्निभैः दिव्यरूपधराः सर्वेद्योतयंतोदिशोदश हरिदत्तश्चतान्सर्वा-

न्समुद्धृत्यजगामह स्वदेशस्थंचनगरंस्वगृहंचविवेशह सकृत्वाधनलोभेनप्रेतानांसद्गतिंवणिक् जगामस्वगृहंतत्रमासि
भाद्रेयुधिष्ठिर श्रवणद्वादशीयोगेपूजयित्वाजनार्दनं दानंदत्वाचविप्रेभ्यः सोपवासोजितेंद्रियः संगमेचमहानद्योःप्रति
वर्षमतंद्रितः चकारविधिवद्दानं ततोदृष्टांतमागतः अवापपरमंस्थानंदुर्लभंसर्वमानवैः यत्रकामफलावृक्षानद्यःपाय
सकर्दमाः शीतलामलपानीयाःपुष्करिण्योमनोरमाः तद्देशमासाद्यवणिक्महात्माप्रतप्तजांबूनदभूषितांगः कल्पंसमग्र
मप्सरसुंदरीभिःस्वर्गेसरेमेमुदितःसदैव बुधश्रवणसंयुक्ताद्वादशीसर्वकामदा दानंदध्योदनंशस्तमुपवासःपरोविधिः सग
रेणककुत्स्थेनधुंधुमारेणगाधिना एतैश्चान्यैश्चराजेंद्रकामदाद्वादशीकृता याद्वादशीबुधयुताश्रवणेनसार्धंसावैजयेतिक
थितामुनिभिर्नभस्ये तामादरेणसमुपोष्यनरोहिसम्यक्प्राप्नोतिसिद्धिमणिमादिगुणोपपन्नां इतिहेमाद्रौभविष्योत्तरेश्र
वणद्वादशीव्रतं अस्यामेववामनजयंतीव्रतं हेमाद्रौभविष्योत्तरे श्रीकृष्णउवाच द्वादश्यास्तेविधिःप्रोक्तः श्रवणेनयु
धिष्ठिर सर्वपापप्रशमनःसर्वसौख्यप्रदायकः एकादशीयदासास्याछ्रवणेनसमन्विता विजयासातिथिःप्रोक्ताव्रतिना
मभयप्रदा पुरादेवगणैःसर्वैःसमेत्यचयुधिष्ठिर वरदःप्रार्थितोविष्णुरिंद्राग्न्यनिलसंयुतैः बलवानजितोदैत्योबलिर्ना
ममहाबलः तेनदेवगणाःसर्वेपातितानिजमंदिरं त्वंगतिःसर्वदेवानांशीघ्रंकष्टात्समुद्धर दैत्यंजहिमहाबाहोबलिंबलव
त्तांवर श्रुत्वाविष्णुस्तदावाक्यंदेवानांकरुणोदयं उवाचवाक्यंवाक्यज्ञोदेवानांहितकाम्यया विष्णुरुवाच जातेवैरोच

नेः पुत्रं बलिं त्रैलोक्यशंकितं तपसाभावितात्मानं शांतं दांतं जितेंद्रियं मद्भक्तं मद्गतप्राणं सत्यसंधं महाबलं प्रजापतिसमं
स्यात्प्रजानां प्रियकारकं नगुणास्तस्यशक्यंते वक्तुं केनापि भूतले अवश्यं तपसोपेतैर्भोक्तव्यं तपसः फलं तपसोंतस्तु
बहुना कालेनास्य भविष्यति यदा च विजयं दैत्यं ज्ञास्ये कालेन केनचित् समाहृत्य श्रियं तस्य तदा दास्ये दिवौकसां अदिति
र्मां प्रयत्नाद्वै पुत्रार्थे पुत्रगंधिनी तस्या मनीषितं देवकार्यं विष्णुरचिंतयत् सचिंतयित्वा सुचिरं देव्यां गर्भावधारणं अदितिंव·
रयामास वांछितं ते भविष्यति अथ काले बहुतिथौ गते सा गुर्विणी भवत् सुषुवे नवमे मासि पुत्रं सा वामनं हरिं ह्रस्वपादं·
ह्रस्वकायं महाशिरसमर्भकं पाणिपादोदर कृशं ह्रस्वजंघोरुकेसरं दृष्ट्वा तु वामनं जातमदितिर्मोदमाप वै भयं बभूव दैत्या
नां देवानां तोषआगमत् जातकादीन् शुभकरान् संस्कारान् स्वयमेव हि चकार कश्यपो धीमान् प्रजापतिसमन्वितः आबद्ध
मेखलो दंडी जटी यज्ञोपवीतवान् कुशश्चर्माजिनधरः कमंडलुविभूषितः बलेर्बलवतो यज्ञं जगाम बहुविस्तरं दृष्ट्वा दे·
त्यबलं सर्वं वामनस्तु जगाद ह अर्थनाहं यज्ञपते दीयतां मम मेदिनी पदत्रयप्रमाणो हि पठनार्थे मठो मम दत्ता दत्तातवत·
था बलिः प्राह द्विजोत्तमं ततो वर्धितुमारब्धो वामनोनंतविक्रमः पादौ भूमौ प्रतिष्ठाप्य शिरसावृत्य रोदसी ताभ्यां स्वर्गादि
कान् लोकान् ललाटे ब्रह्मणः पदं न तृतीयं पदं लेभे किं ददे मम तद्वद तद्दृष्ट्वा महदाश्चर्यं सिद्धा देवर्षयस्तथा साधु साध्विति
देवेशं प्रशशंसुर्मुदान्विताः ततो दैत्यगणान् सर्वान् जित्वा त्रिभुवनं वशी बलिं प्राह च भोगाढ्यं पातालं सबलानुगः तत्र त्व

मीप्सितान्भोगान्भुक्त्वामहाहुपालितः अस्येंद्रस्यावसानेतुत्वमेवेंद्रोभविष्यसि एवमुक्तोबलिःप्रायान्नमस्कृत्यसुरोत्तमं विसर्जचबलिंदे
वोलोकपालानुवाचह स्वानिधिष्ण्यानिगच्छध्वंतिष्ठध्वंविगतज्वराः देवेनोक्तागतादेवाःप्रहृष्टाःपूज्यवामनं देवःकृत्वाजगत्कार्यं
तत्रैवांतरधीयत एतत्सर्वंसमभवदेकादश्यांनराधिप तेनेष्टादेवदेवस्यसर्वथाविजयातिथिः मासिभाद्रपदेशुक्लेद्वादशीश्रव
णान्विता विजयाप्रोच्यतेसद्भिःकोटिकोटिगुणोत्तरा एकादश्यांसोपवासोरात्रौसंपूजयेद्धरिम् रौप्येसुवर्णपात्रेवादारुवंशमये
पिवा सौवर्णंवामनंकुर्यात्स्ववित्तस्यानुसारतः शिखाकमंडलुधरंछत्रयज्ञोपवीतकम् एवंलक्षणसंपन्नंवामनंपूजयेद्धरिम्
आच्छाद्यपात्रंवासोभिरहतैःफलसंयुतैः मार्गेणचर्मणाकुर्याद्भक्त्यावाशक्त्यपेक्षया तिलोदकेनसंपूर्णप्रस्थेनकुडवेनच अलाभे
यवगोधूमैःफलैःशक्तितिलैर्भवेत् अतसीपुष्पसंकाशंतिलकृष्णाजिनोपरि पुष्पैर्गंधैःफलैर्धूपैःकालोत्थैरर्चयेद्धरिम् नानाविधै
श्चनैवेद्यैर्भक्ष्यभोज्यैर्गुडादनैः स्वस्यवित्तानुसारेणसहिरण्यंचकारयेत् एभिर्मंत्रपदैस्तत्रपूजयेद्गरुडध्वजम् उपहारैर्नरश्रेष्ठशु
चिर्भूत्वासमाहितः धृत्वाबालमयंदेवंदेवदेवस्यचक्रिणः ब्रह्मांडमुदरेयस्यमहद्भूतैरधिष्ठितं मायावीवामनःश्रीशोसमायातुज
गत्पतिः युधिरउवाच उपवासासमर्थानांयाचेयंपुरुषोत्तमं एकांचद्वादशींपुण्यांवदस्ववदतांवर श्रीकृष्णउ॰ मासिभाद्रपदेशु
क्लेद्वादशीश्रवणान्विता सर्वकामप्रदापार्थउपोष्यानियमात्सदा सरितांसंगमेस्नात्वाद्वादशीसमुपोषयेत् समग्रंसमवा
प्नोतिद्वादश्यांयत्कृतंफलं श्रवणेनसमायुक्तांद्वादशींसमुपोषयेत् स्नानंदानंजपोहोमःस्वाध्यायःपितृतर्पणं तस्यां

यत्क्रियतेपार्थतदनंतफलंलभेत् युधिष्ठिरउवाच त्वत्प्रसादाच्छ्रुतंकृष्णामयातुवामनव्रतं इदानींब्रूहिमेकृष्णाव्रतो
द्यापनमुत्तमं श्रीकृष्णउवाच शृणुपांडववक्ष्यामिव्रतोद्यापनमुत्तमं कृतेनसफलंपार्थव्रतंभवतिनिश्चितं आदौ
मध्येतथाचांतेव्रतस्योद्यापनंभवेत् ममइहजन्मनिजन्मांतरेचकृतदोषप्रायश्चित्तार्थंपुत्रपौत्राद्यभिवृध्यर्थंवामनजयंती
व्रतमहंकरिष्ये व्रतस्यसंपूर्णतासिध्यर्थंउद्यापनंचकरिष्ये इतिसंकल्प्य श्रवणद्वादशीव्रतांगत्वेनपुरुषसूक्तेनषोडशोप
चारैः वामनपूजनंचकरिष्ये द्वादशीश्रवणोपेतायदाभवतिभारत सरितांसंगमेस्नात्वाह्रदेवापियथाक्रमात् पितृदेवार्च
नंकृत्वाध्यायेच्चपरमेश्वरं जलेनपूरयेत्कुंभंस्थापयित्वाविचक्षणः पंचरत्नसमोपेतंतिलोपरिसुपूरितं तस्मिन्संसूत्रघ
टितेस्थापयित्वाचवामनं सौवर्णंचयथाशक्त्याशंखशार्ङ्गविभूषितं कृभगंवस्त्रसंयुक्तंद्वादशांगुलमुच्छ्रितं पीतवस्त्रैः
शुभैर्वेष्ट्यअजिनंचकमंडलुं अतसीपुष्पसंकाशंतिलकृष्णाजिनोपरि स्थापयित्वाविधानेनचंदनेनानुलेपयेत् ध्यात्वा
बाल्मयंरूपंदेवदेवस्यचक्रिणः ब्रह्मांडमुदरेयस्यमहद्भूतेरधिष्ठितं मायावीवामनःश्रीशोसमायातुजगत्पतिः आवाह
नं अजयायमहेशायजलजास्यायशंसिने नमस्तेकेशवानंतवासुदेवनमोस्तुते ध्यानं कमंडलुशिखाधारीकुशरू
पोसिवामन छत्रदंडधरोदेवपाद्यंगृह्णनमोस्तुते पाद्यं सहस्रशीर्षात्वंदेवश्रवणर्क्षसमन्वितः अर्घ्यंगृहाणदेवेशद्वा
दश्यासहितोहरे अर्घ्यं कमंडलुस्थितंचारुगंगोदकप्रपूरितं देवेशाचमनार्थंचतोयंमेप्रतिगृह्यतां आचमनीयं

गंगासरस्वतीरेवापयोष्णीयमुनाजलैः स्नापितोसिमयादेवतथाशांतिंप्रयच्छमे स्नानं अतसीपुष्पसंकाशंतिलकृष्णा
जिनोपरि कुरुक्षेत्रेप्रतिष्ठाप्यंवामनंस्थापयाम्यहं प्रतिष्ठापनं प्रसीददेवदेवेशनमस्तेस्वस्तिवामन नमस्तेब्रह्मरूपाय
पीतनिर्मलवाससे वस्त्रं श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरं विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यतां चंदनं मल्लि
काशतपत्रंचजातिपुष्पंसुगंधकं चंपकैर्जलजैर्युक्तंपुष्पंगृह्णनमोस्तुते पुष्पं नमःकमलकिंजल्कपीतनिर्मलवाससे म
हाहवरिपुस्कंदधृष्टचक्रायचक्रिणे पूजामंत्रः मत्स्यंकूर्मंवराहंचनारसिंहंचवामनं रामंरामंरामकृष्णंबौद्धंकल्किंहि
तेनमः पादाद्यैकैकमस्यांगंपूजयेच्छीर्षमंततः पादौमत्स्यायचनमोनमःकूर्मायजानुनी वराहायनमोगुह्यंनृसिंहा-
येतिनाभितः उरस्तेवामनायेतिभुजौरामायवैनमः कर्णौरामायचनमःकृष्णायचनमोमुखं बौद्धायचनमोनेत्रेक
ल्किनेचनमःशिरः इत्यंगपूजा धूपोयंदेवदेवेशशंखचक्रगदाधर अच्युतानंतगोविंदवासुदेवनमोस्तुते धूपं त्वमे
वपृथिवीज्योतिर्वायुराकाशमेवच त्वमेवज्योतिषांज्योतिर्दीपोयंप्रतिगृह्यतां दीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिः
समन्वितं मयानिवेदितंदेवप्रसीदपरमेश्वर अग्निर्यमोवैश्रवणःपापंमेहंतुचाव्ययः नैवेद्यं आचमनं करोद्वर्त
नं फलं तांबूलं दक्षिणां नीराजनं मंत्रपुष्पांजलिं प्रदक्षिणानमस्कारान् प्रार्थनां जगदादिर्जगद्रूपःअनादिर्जगदंत-
कृत् जलाशयोजगद्योनिःप्रीयतांमेजनार्दनः अनेककर्मनिर्बंधध्वंसिनंजलशायिनं नतोस्मिमथुरावासंमाधवंमधुसू

दनं नमोवामनरूपायनमस्तेस्तुत्रिविक्रम नमस्तेबलिबंधायवासुदेवनमोस्तुते इत्युक्त्वाथगुरुंनत्वापूजयित्वाजनार्दनं
भूमौजपेज्जपः क्रोधः शब्दादिविषयैर्जितः उद्यापनंततःकुर्याद्द्वादशैर्वत्सरैस्तदा सौवर्णींराजतींताम्रींमूर्तिंकृत्वाचतुर्भुजां
द्वादश्यास्तुदिनेप्राप्तेगुरुमभ्यर्च्यशक्तितः सदाचाररतंपार्थवेदवेदांगपारगं अस्मदीयंव्रतंविप्रविष्णुवासरसंभवं संपूर्णं-
तुभवेद्येनतत्कुरुष्वद्विजोत्तम तस्याग्रेनियमःकार्योदंतधावनपूर्वकं स्नानंकृत्वामंत्रपूर्वंनद्यादौविमलेजले तर्पयित्वापि
तॄन्देवान्पूजयेन्मधुसूदनं एवंसंपूज्यविधिवद्रात्रौजागरणंचरेत् ततःप्रभातसमयेस्नात्वाचार्यादिभिःसह वामनं-
पूजयेत्भागवन्होमंकुर्याद्विधानतः मंत्रेणेदंविष्णुरितिसमिदाज्यतिलोदनैः प्रतिद्रव्यंसहस्रंवाशतमष्टोत्तरंहुनेत्ब्राह्म-
णान्भोजयित्वातुद्वादशाष्टव्रतीनृप प्रतिमांचतथाधेनुमाचार्यायनिवेदयेत् एवंकृतेतुराजेंद्रगाःकृष्णाद्वादशाष्टवा
षड्चतस्रोथवादेयाएकावापिपयस्विनी वामनःप्रतिगृह्णातिवामनोवैददातिच वामनस्तारकोभाभ्यांवामनायनमोन-
मः एवंदत्वाततःप्रातर्भोजनंषड्रसान्वितं पूर्वंदद्याद्ब्राह्मणेभ्यःपश्चाद्भुंजीतवाग्यतः प्रत्येकंब्राह्मणान्कुंभान्दक्षिणाव-
स्त्रचंदनं भूयोयथेच्छयाराजन्सर्वत्रैषविधिःस्मृतः एवंव्रतेकृतेब्रह्मन्यत्पुण्यंतन्निबोधमे यावत्कल्पशतंपूर्णमेकस-
प्ततिसंख्यया प्राप्यविष्णुपुरंभोगान्भुंजतेकालमक्षयं इहागत्यभवेद्राजाराजभिश्चसुसेवितः अथशिक्यदानसंक-
ल्पः कृतश्रवणद्वादशीव्रतांगत्वेनविहितंश्रीवामनप्रीत्यर्थंइदंदध्योदनसहितंशिक्यदानंकरिष्ये ब्राह्मणपूजनं वायनमंत्रः

दध्योदनयुतंशिक्यंवारिधानीयुतंविभो छत्रोपानहसंयुक्तंब्राह्मणायददाम्यहं इदंदध्योदनसहितंशिक्यंअमुकशर्मणेब्राह्मणा
यतुभ्यमहंसंप्रददे इतिवायनं इतिभविष्योत्तरपुराणेवामनद्वादशीव्रतोद्यापनंसंपूर्णं अथपौषकृष्णद्वादश्यांस्वरूपद्वादशीव्रतं
गुर्जराचारेप्रसिद्धं उमोवाच भगवन्श्रोतुमिच्छामिप्रसादंकुरुमेप्रभो कथितव्यंप्रसादेनयद्यस्तिमयिसौहृदं व्रतेनकेनचा
र्णेनविरूपत्वंप्रणश्यति सौभाग्यंचैवमतुलंप्राप्यतेकस्यपूजनात् तन्मेकथयदेवेशपरमाभीष्टदायकं ईश्वरउवाच श्रूयतांप
रमंगुह्यंव्रतंपापहरंशुभं स्वरूपाद्वादशीनाममहापातकनाशिनी स्वरूपदायिनीचैवमहापातकनाशिनी कुलवृद्धिकरीचैवस
र्वसौख्यप्रदायिनी तच्छृणुष्वप्रयत्नेनकथ्यमानंमयानघे पुरावैद्वापरस्यांतेविष्णुर्दैत्यनिषूदनः अवतीर्णोमर्त्यलोकेवसुदेवकु
लेकिल तेनोढारुक्मिणीनामभीष्मकस्यसुतापुरा अत्यंतरूपसुभगापतिव्रतपरायणा नहितस्याविनाकृष्णःस्तोकमुद्वहतेसु
खं श्वश्रूश्वशुरयोःपादौववंदेसापुनःपुनः केनापिकर्मदोषेणकुपिताविष्णुमातरः नप्रसादयतिक्षिप्रमितिज्ञात्वातुदेवकी कृ
ष्णंप्रोवाचकुपितायदितेजननीत्वहम् ततस्त्वयाहिवैवात्याकुलरूपगुणाधिका मद्वाक्यमन्यथाकर्तुंनार्हसित्वंकुलोद्वह कृ
ष्णउवाच मायांतुरुक्मिणींत्यक्त्वागृहेहंकथंशुभे यःपरित्यजतेभार्यामविकृतशरीरिणीं संप्राप्नोतिहिमंदत्वंदौर्भाग्यंस
र्पपौरुषं विरूपत्वमवाप्नोतिनसुखंविंदतेक्वचित् व्याधिर्वाजायतेलोकेनिंदनीयःसदेहिनाम् इत्यहंदेविजानामिकथंकुर्यां
वचस्तव देवक्युवाच सर्वेषामेवदेवानांतीर्थादीनामपिध्रुवं मातागुरुतरापुत्रकस्तस्यावचनंत्यजेत् ममवाक्यस्यकरणात्

कथंपापिष्ठताभवेत् जननीपूज्यतेतेनभार्याचयदुनंदन कृष्णउवाच परित्यजामिनोभीरुप्रियांप्राणधनेश्वरीं इतितूष्णीं
पराभूतांमातरंप्रेक्ष्यकेशवः चिंतयामासपरमंकथंसौख्यंभवेदिति एतस्मिन्नेवकालेतुनारदोभगवानृषिः अभ्युज्जगाम
सहसाविष्णुंसंप्रेक्ष्यविस्मितं पूजितःपरयाभक्त्याअर्घ्यंजग्राहनारदः उपविष्टोयथान्यायंपर्यपृच्छदनामयं नारदउवाच
किंत्वंखेदंकरोषीत्थंकथमुद्वेगकारणं किंनसिध्यतितेभीष्टंत्यजोद्वेगंयदूत्तम कृष्णउवाच मात्रानियुक्तोदेवर्षेपरिणेतुं
द्विजोत्तम कन्यामुद्वाहयिष्यामिस्वरूपांकस्यचित्प्रभो नारदउवाच श्रूयतामभिधास्यामिपूर्ववृत्तांतमादरात् लक्ष्मीयु
क्तःपुरानाथःक्रीडमानोहिनंदते तत्रागमत्सभगवान्दुर्वासाऋषिसत्तमः अभ्युत्थानादिविधिनासत्कृतंज्ञानमूर्तिना प्रेक्ष्य
बीभत्सरूपंतंदेव्याहास्यंकृतंतदा सकोपेनमहातेजावैश्वानरसमप्रभः सशापंलक्ष्मींदुर्वासामुनिःक्रोधेनसंयुतः हसि
तोहंत्वयामुग्धेआत्मनोरूपमीक्ष्यच विरूपाभवदुर्वृत्तेकिंनज्ञातोत्यहंत्वया इत्युक्तयातयादेव्यायथाशक्त्याप्रसादितः प्र
सन्नोजगदेवाक्यंमच्छापोनान्यथाभवेत् जन्मांतरेणास्यफलंकरिष्यतिविरूपता सेयंमर्त्येवतीर्णाहिगोपकस्यगृहेशुभा
सत्यभामाविरूपाक्षाविरूपदशनातथा कर्णनासातिविकृतासंजातातत्प्रभावतः पाणिपादकटिग्रीवंसर्ववैरूप्यलक्षणं तत्र
गच्छमहाप्राज्ञसतेकन्यांप्रदास्यति कृष्णउवाच विरूपवदनांब्रह्मन्कथंद्रक्ष्यामिनित्यशः कांगतिंवैगमिष्यामितां
विवाह्यकुरूपिणीं नारदउवाच रुक्मिण्यास्तुप्रसादेनशापान्मुच्येततत्क्षणात् उत्तमंप्राप्स्यतेरूपंसौभाग्यंपरमंसुखं

९

देवक्याश्चप्रसादेनधर्मकामार्थसिद्धये एवंभविष्यतितवसंबंधोविहितःसुरैः त्वयाचनान्यथाकार्यंगुरूणांवचनंमहत् मातागुरून
राभूमेरिनिवेदेषुगीयते ईश्वरउवाच एवमुक्त्वामहादेविनारदस्त्रिदिवंगतः कृष्णोपिमातरंप्राहवेवात्द्यंहिविधीयते विवा
हितात्वसातेनवेदोक्तविधिनाततः आनीयस्वगृहंमातुर्दर्शयामासतांवधूं पश्याद्येवमयाभामापरिणीताशुचिव्रता निर्वृतिपर
मागच्छप्रसादस्सुमुखीभव इत्युक्त्वावीक्ष्यतांकृष्णःप्रणिपत्यचमातरं बभूवकृतकार्याणांकृतकृत्योमहाबलः तांदृष्ट्वादेव
मातात्वबभौदुःखाधिकाभृशं ईदृकविरूपांविकृतांकथंभर्तास्मिगोपिता चिंतामवापमहतीमतीवोद्विग्नमानसा कस्यापि
नावचक्षेथाःविरूपंतच्छरीरजं अथकस्मिन्स्ककालेतुरुक्मिणीतत्रभावतः नमस्कृत्यततःश्वश्रूंसंस्पृष्टंगोमयंतदा उवाच
प्रस्तंवाक्यंभक्तियुक्तंशुभावहं अंबाहंद्रष्टुमिच्छामिसपत्नींकृष्णवल्लभां तांदर्शयतुमेशीघ्रंप्रसादस्सुविधीयतां देव्युवा
च श्वश्रूर्व्यहंतेसुभगेममापिवचनंकुरु पूर्वमाचरितंसुभ्रूःस्वरूपाद्वादशीव्रतं संप्रयच्छसिचेत्तस्यैदर्शनंतेभविष्यति
रुक्मिण्युवाच कष्टेनक्रियतेधर्मोव्रतंचापिसुदुष्करं कथंतस्यैप्रयच्छामिफलंदेवैःसुदुर्लभं देवक्युवाच अर्धंप्रदीय
तामस्यैतदर्धमथवापुनः पंचमांशमथोषष्ठंषोडशांशमथापिवा रुक्मिण्युवाच स्वरूपाद्वादशीपुण्यंतिलार्धमपिनोत्स
हे किंपुनःषोडशांशंतुसपत्न्यांदुःखचेतसि एवमुक्त्वाजगामाशुमंदिरंस्वंशुभेक्षणा पुनःपप्रच्छकृष्णंसाप्रणिपातेनवैरुषा
देवपृच्छामितेसर्वंनतुतुष्टोसिमेप्रभो कथंपश्यामितामद्यनवोढांकृष्णवल्लभां श्रीकृष्णउवाच दर्शयिष्येह्यहंसुभ्रूवि

रूपांतांस्तमध्यमे विरूपश्रवणाक्षींतांकुरूपांविकृतानमां अदृष्टवैचित्र्यकृतंरूपाद्यत्रनसंशयः इत्युक्त्वारुक्मिणीकृष्णा॰
सत्यभामांतदाब्रवीत् प्रार्थयाथप्रियांस्तुभ्रूंस्वरूपाद्वादशीव्रतं तिलादपिहिषष्ठांशंदेहिमेसेवकास्म्यहं सागतातत्सकाशंतु॰
पिधायद्वारमादरात् उवाचरुक्मिणींसातुसत्यभामाशुचिव्रता एकामप्याकृतिंदेविदेहिभीष्मकनंदिनि अर्धाकृतिर्वामेदेया॰
यद्यस्तिमयिसौहृदं रुक्मिण्युवाच कोयंमतिभ्रमस्तेवैस्वरूपाद्वादशींप्रति तिलाकृतिंप्रयच्छामिउद्घाटयकपाटकं इत्यु॰
क्त्वात्वरितंस्नात्वादत्वात्येकांतिलाकृतिं तस्यांचैवप्रदत्तायांरूपेणसाधिकाभवत् तांदृष्ट्वाविस्मयपरांपप्रच्छदयितांहरेः
कथ्यतांममकाहित्वंकिमर्थमिहचागता सत्यभामोवाच तवाहंभगिनीभद्रेकृष्णेनोढास्मिधार्मिके सत्यभामेतिमेनामन
मामिचरणौतवइतिश्रुत्वातुवचनंविस्मयोत्फुल्ललोचना नोवाचकिलचार्वंगीत्यत्यर्थंविस्मिताभवत् एतस्मिन्नेवकालेतुवागु॰
वाचाशरीरिणी तवदानप्रभावेनसत्यासीच्चस्वरूपिणी स्वरूपाद्वादशीपुण्यंदेवानामपिदुर्लभं देव्युवाच कर्मणाकेन॰
कर्तव्याकिमाचारंवदस्वमे नियमंहोमदानंचप्रसादंमेविधीयतां ईश्वरउवाच पौषेकृष्णेतुसंप्राप्तेपुष्यऋक्षंयदाभवेत्
तस्यांरात्रौसंयतात्माध्यात्वाविष्णुंसनातनं श्वेतागौरेकवर्णावातस्याग्राह्यंतुगोमयं अंतरिक्षात्तुपतितंस्त्रुचिर्मौनमवस्थितः
तस्यकृत्वाकृतीनांतुशतमष्टोत्तरंतिलैः प्रतीक्षेद्वादशींकृष्णामुपवासपरायणः स्नात्वानद्यांतडागेवाविष्णुमेवाथचिंतयेत्
सौवर्णंतुहरिंकृत्वारोप्यंवाभक्तिशक्तितः तिलपात्रोपरिस्थंचततोविष्णुंप्रपूजयेत् इतिसंपूज्यविधिवत्पुष्पधूपैःसदीपकैः

नैवेद्यंतिलमिश्रंतु फलानिविविधानिच नमःपरमशांतायविरूपाक्षनमोस्तुते सर्वसंकष्टनाशायगृहाणार्घ्यंनमोस्तुते
इत्यर्घ्यं एवंसंपूज्यदेवेशंकुर्याद्धोमंसमाहितः आवाह्यदेवंलक्ष्मीशं होमयेद्धोमयाहुतीः शतमष्टाधिकंचैवतिलान्व्याहृति
संयुतान् सहस्रशीर्षेतिमंत्रेणहृदिध्यात्वाजनार्दनम् लक्ष्मीयुक्तंचमेघाभंशंखचक्रगदाधरं होमांतेकारयेच्छान्ध्वंवैष्ण
वंद्विजसत्तमैः दत्वाचभोजनंतेभ्योघृतकुंभंसदक्षिणं कथाश्रवणसंयुक्तंजागृयात्तुततोनिशां तत्कुंभंवैष्णवींमूर्तिंविप्रा
यप्रतिपादयेत् मंत्रहीनंविहीनंचसर्वंतत्क्षमापयेत् ईश्वरउवाच एवंयःकुरुतेदेविसुरूपाद्वादशीव्रतं नरोवा
यदिवानारीतच्चपुण्यंशृणुष्वमे दौर्भाग्यंनश्यतेतस्य अपिजन्मांतरार्जितं अपिधूमस्यसंपर्कोजायतेकारणांतरात् तं
स्यापिनश्यतेदुःखंवैरूप्यंजन्मजन्मनि पतिनानवियोगस्यान्नष्टैःसहवियोगता जायतेगोत्रवृद्धिःस्यात्कीर्तिमान्जा
यतेभुवि जातिस्मरणमाप्नोति पदंनिर्वाणमाप्नुयात् पठ्यमानमिदंभक्त्यायःशृणोतिसमाहितः पुण्यमाप्नोतिसत
तंस्वर्गलोकेमहीयते इतिश्रीभविष्योत्तरपुराणे सुरूपाद्वादशीव्रतोद्यापनंसंपूर्णम् इतिद्वादशीव्रतानिसमाप्तानि

श्रीगणेशायनमः अथत्रयोदशीव्रतानिलिख्यंते आषाढशुक्लत्रयोदश्यांजयापार्वतीव्रतं भविष्योत्तरपुराणे श्री
लक्ष्मीरुवाच देवदेवजगन्नाथभुक्तिमुक्तिप्रदायक कथयस्वप्रसादेनलोकानांहितकाम्यया नारीणांसुव्रतंदेवअवैध
व्यकरंशुभम् येनचीर्णेननारीणामखंडफलदंभवेत् श्रीभगवानुवाच सत्यमुक्तंत्वयादेविनचमिथ्यात्वयोदितं
तद्व्रतंकथयिष्यामिनाख्यातंकस्यचित्पुरा अकथ्यंपरमंगुह्यंपवित्रंपापनाशनम् येनचीर्णेननारीणामवैधव्यंप्रजाय
ते आषाढेचप्रकर्त्तव्यंशुक्लपक्षेत्रयोदशी गृण्हीयान्नियमंतत्रदंतधावनपूर्वकम् तत्रमंत्रः आयुर्बलंयशोव
र्चः प्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वन्नोदेहिवनस्पते नियमात्फलमाप्नोतिनिष्फलंनियमंविना एतत्स
र्वप्रयत्नेनव्रतंनियमपूर्वकम् एकभुक्तंव्रतंचैवकरिष्येहंमृदाधुना स्वादहीनेनधान्येनममपापंव्यपोहतु उ-
मामहेश्वरौकार्यौस्वर्णरजतादिभिः अथवामृन्मयौकार्यौवृष स्कंधोपरिस्थितौ गोष्ठेदेवालयेवापितथाब्रा-
ह्मणवेश्मनि स्थापयेद्वेदमंत्रेणप्रतिष्ठांतत्रकारयेत् तद्दिनेदंतकाष्ठंहियोषित्कंचवरानने स्नानंशुद्धंततःकृ
त्वाततोपूजांप्रकल्पयेत् सप्तर्षिभिःसमंतत्रपूजांकृत्वापृथक्पृथक् कुंकुमागरुकस्तूरीसिंदूरैरष्टगंधकैः चंप-
कैःशतपत्रैश्चयूथिकादिकैःतथा कर्पूरदीपैः नैवेद्यैः ग्रीवासूत्रेणदूर्वाभिःपूजयित्वाविधानतः अर्घ्येणवारिशुद्धेनउत्तरीययुगेनच
श्रीफलंद्राक्षदाडिंबैर्नारिकेलैःऋतुजातफलेनच आद्येदेविचशर्वाणिशंकरस्यसदाप्रिये अर्घ्यंगृहाणदेवेशिममोपरिकृपां

कुरु इतिपूजाप्रकर्त्तव्याकथांश्रूयाद्द्विजोत्तमात्॥ श्रीमहालक्ष्मीरुवाच ॥अच्युतायनमस्तुभ्यंपुरुषाया
दिरूपिणे व्रताध्यक्षमहाप्राज्ञत्वंहृद्भिक्षयकारक कथयस्वप्रसादेनव्रतानामुत्तमंव्रतम् केनचादौपुराचीर्णमर्त्यलो
केचकारकः एतत्सर्वंप्रयत्नेनब्रूहिमेजगदीश्वर श्रीभगवानुवाच ॥अथातःसंप्रवक्ष्यामिपार्वत्याश्चकथामि
माम् यांश्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः आसीत्पुराकृतयुगेकौंडिन्येनगरेवरे ब्राह्मणोवेदतत्वज्ञःसत्यशौचपरा
यणः गुणवान्शीलसंपन्नोवामनोनामनामतः तस्यभार्याप्रियासत्यारूपलक्षणसंयुता धनाढ्येवेदविदुषोगृहे
वैसर्वसंपदः पूर्वकर्मविपाकेनसंतानरहितोभवत् अपुत्रस्यगृहंशून्यंश्मशानसदृशोपमम् दंपतीतेनदुःखेनक्षी
णौजातौशरीरतः एकदाशुभकालेतुनारदोगृहमागतः अर्घ्यपाद्यादिकंकृत्वाकथांचक्रेमुनासह वामनउवाच
॥ नारदत्वमृषिश्रेष्ठःसर्वज्ञानपरायणः कथयस्वप्रसादेनकथंदुःखंप्रशाम्यति दानेनकेनदेवर्षेव्रतेननियमेनच
तीर्थैनचमुनिश्रेष्ठसंतानंमेकथंभवेत् नारदउवाच शृणुविप्रप्रवक्ष्यामिसंतानंतेभविष्यति वनस्यदक्षि-
णेपार्श्वेबिल्वयूथस्यमध्यतः भवानीसहितःशूलीलिंगरूपेणतिष्ठति सपर्यांकुरुयत्नेनतुष्टादास्यतिसंततिम् अ
पूज्यंलिंगमभ्यर्च्यसंततिश्चप्रजायते अनाथप्रेतसंस्कारीकोटियज्ञफलंलभेत् इत्युक्त्वानारदःस्वर्गंगतोवैमुनिपुं
गवः वनमध्येगतौद्वौतुदंपतीपुत्रकांक्षिणौ बिल्वमध्येनतोदृष्टाशिवलिंगंपुरातनम् बिल्वपत्रैश्चजीर्णैश्चपिहितं

सर्वनस्ततः विहायबिल्वपत्राणिसमभर्जोपलेपनम् पंचामृतेनप्रक्षाल्यपूजांचक्रेमनोरमाम् नित्यंनियमसंयुक्तोपूज
येत्परमेश्वरम् पंचाब्दंपूजितस्तेनपार्वतीसहितोहरः एकदातुगतःसोयपुष्पार्थेब्राह्मणोत्तमः कुसुमंगृह्यनेयावत्ताव
द्दष्टःसपन्नगेः पतितस्तद्वनेघोरेसिंहव्याघ्रसमाकुले तृतीयेनमुहूर्त्तेनतद्भार्याचिंतयत्तदा केनापिकारणेनैवकथं
नायातिमेपतिः रुदंतीशोकसंयुक्ताबनमध्येगतासती आगतातत्रयत्रास्तेभर्त्ताचपतितोभुवि भर्त्तारंपतितंदृ
ष्ट्वातदामोहमुपागमत् तस्यश्वाचैतनायुक्तासास्मरद्वनदेवताम् पार्वतीतुसमायातायत्रतिष्ठतिब्राह्मणी आक्रं
दमानांतांदृष्ट्वापार्वतीवरदाभवत् सुधांसुभगहस्तेनविप्रवक्त्रेविमुंचती उत्थितोब्राह्मणस्तत्रनिशीथेनिद्रितोय
था तावेवचरणौगृह्यदंपतीविनयान्वितौ पार्वत्याःपूजनंभक्त्याचक्रतुस्तौमुदान्वितौ पार्वत्युवाच त्वत्पूज-
नादहंप्रीतावरंवरयसुव्रते ब्राह्मण्युवाच त्वत्प्रसादेनरुद्राणिमयालब्धंचवांछितम् संतानंचैवमेना-
स्तिएतद्दुःखंचमेहृदि पार्वत्युवाच व्रतंकुरुविधानेनममनाम्नाचविश्रुतम् जयाममव्रतंनामत्रैलोक्येपा-
वनंपरम् जयापार्वतीव्रतंनामआषाढेचारुलोचने स्वादहीनेनधान्येनत्याज्यंलवणमुत्तमम् इदव्रतंचकर्त्तव्यं
भोक्तव्यंदिनपंच कम् त्रयोदश्यांव्रतारंभस्तृतीयायांसमापनम् शुक्लपक्षेव्रतारंभःकृष्णपक्षेसमापनम् पंचा
ब्दंगोधुमान्नेनव्रतंकार्यंप्रयत्नतः पंचाब्दंहियवैश्चैवव्रतंतुलवणंविना पंचाब्दंतंदुलैःकार्यंइक्षुरसविवर्जितम्

सुद्भैः कार्यंपंचवर्षमेवंहायनविंशति विंशत्यब्देसमाप्तेतुव्रतोद्यापनमाचरेत् दंपत्योःपरिधानंहिदद्याद्भूषणपूर्वकम् भो
जनंचस्कवासिन्यैतृतीयायांयथोदितम् विंशतिप्रथमेवर्षेवित्तशाठ्यमतःपरम् पंचकेपंचकेकार्यंपरिधानेश्चभोज
नैः नानारसैःसमायुक्तंघृतखंडसमन्वितम् सभर्त्तृकाश्चदातव्यंभोज्यंसौभाग्यहेतवे कुंकुमंकज्जलंदेयमब्दे
अब्देस्वशक्तितः रात्रौजागरणंकुर्यादखंडफलदंभवेत् अनेनविधिनायस्तुकुरुतेव्रतमुत्तमम् रात्रौजागरणं-
कार्यंव्रतसंपूर्णहेतवे व्रतेनतुविनानारीविधवाजन्मजन्मनि शोचतीदुःखसंयुक्तानचसौभाग्यभाक्भवेत् ना
रीणांतुव्रतैर्दानैर्यदिभक्त्याततःपरम् सौभाग्यमतुलंयातिपतिसंतोषदानतः एवमुक्त्वाव्रतमिदंतत्रैवांतरधीयत
पश्चाद्गृहंसमागत्यदंपतीचमुदान्वितौ पूर्वोक्तेनविधानेनप्राप्तंपुत्रसुखंतयोः दंपतिभ्यांविशेषेणअवैधव्यंपरंसु
खम् भुक्त्वाचविविधान्भोगानंतेप्राप्तंशिवालयम् एवंयाकुरुतेनारीनचभर्त्राविमुच्यते कुलत्रयंसमुद्धृत्यनी-
यतेशिवमंदिरम् सान्निध्यसुखमाप्नोतिशिवलोकेमहीयते कथांश्रुत्वाविधानेनसर्वपापात्प्रमुच्यते॥ ॥
इतिश्रीभविष्योत्तरपुराणेजयापार्वतीव्रतोद्यापनंसंपूर्णम् इतिगुर्जरदेशेगुर्जराचारप्राप्तम् अथभा
द्रपदशुक्लत्रयोदश्यां गोत्रिरात्रव्रतंहेमाद्रौभविष्योत्तरे युधिष्ठिरउवाच भगवंस्त्वत्प्रसादेनबहूनिसुकृता
निमे श्रुतानिबहुपुण्यानिकृतानिमधुसूदन सर्वपापहराणिस्युःसर्वकामप्रदानिच सांप्रतंश्रोतुमिच्छामिव्रताना

मुत्तमंव्रतम् किंचिद्योगव्रतंब्रूहियदितुष्टोसिमाधव यत्कृत्वासर्वपापेभ्योनरोनारीप्रमुच्यते श्रीकृष्णउवाच कथयामि
नृपश्रेष्ठव्रतानामुत्तमंव्रतम् यन्नकस्यचिदाख्यातंतच्छृणुष्वनृपोत्तम यान्यान्कामान्वांछयतिलभेत्तांस्तांस्तथैवच तत्क्षणा
देवमुच्यंतेनरानार्यश्चसर्वशः प्रभोर्भगवतोराजन्कामधेनोःप्रसादतः सौभाग्यंसंततींलक्ष्मींप्राप्नोतिसुखमुत्तमम् ॥
युधिष्ठिरउवाच यदितुष्टोसिभगवन्व्रतस्यास्यविधिंशुभम् ब्रूहिमेदेवदेवेश करोमित्वत्प्रसादतः केमंत्राःकेनमस्का
रादेवतार्थेप्रकीर्तिताः किंदानमर्घ्यमंत्रंचकथयस्वसुरोत्तम श्रीकृष्णउवाच नारदेनपुराराजन्यदुक्तंसंगरा-
दिषु स्मारितंतत्त्वयाराजन्शृणुष्वैकमनाव्रतम् मासिभाद्रपदेशुक्लेत्रयोदश्यांसमारभेत् त्रयोदश्यांप्रभातेतुस-
मुत्थायशुचिर्भवेत् गृह्णीयान्नियमंपूर्वंदंतधावनपूर्वकम् आचम्योदकमादायइमंमंत्रमुदीरयेत् गो त्रिरात्रव्रत
स्यास्योपवासकरणेमम शरणंभवदेवित्वंनमस्तेधेनुरूपिणि प्रसीदतुमहादेवोलक्ष्मीनारायणःप्रभुः लक्ष्मीना
रायणंदेवंसौवर्णवास्वशक्तितः पंचामृतेनगव्येनस्नापयेत्कमलापतिम् स्थापयेत्सर्वतोभद्रेमंडलेष्टदलेपिवा गं
धपुष्पैःसनैवेद्यैःस्तुतिगीतादिनर्त्तनैः नारिकेलार्घ्यदानेनप्रीणयेद्वांहरिंतथा लक्ष्मीकांतजगन्नाथगोत्रिरात्रव्र-
तंमम परिपूर्णंकुरुष्वेदंगृहाणार्घ्यंनमोस्तुते आर्तिक्यंचततःकुर्याद्भक्त्याकृष्णस्यतुष्टिदम् नवकुंभंजलभृतंह-
विष्यान्नेनपूरितम् कृत्वादिनत्रयंपार्थप्रीतयेविनिवेदयेत् धेनुपूजांततःकुर्याज्जलधारांप्रदक्षिणाम् पुरादत्वा-

तुमुकुटंकुंडलंकुंकुमंतथा अन्नाच्छादनगंधादिदिव्यपुष्पैःसदीपकैः अहोरात्रभवंकिंचित्धृतदीपंदिनत्रयं अर्घ्यदानंततःकु
र्यान्नारिकेलादिभिःफलैः अर्घ्यमंत्रः पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः प्रदक्षि
णीकृतायेनधेनुर्मार्गानुसारिणी प्रदक्षिणीकृतायेनसप्तद्वीपावसुंधरा गावोममाग्रतःसंतुगावोमेसंतुपृष्ठतः गावोमेहृदयेसंतुग
वांमध्येवसाम्यहं आरार्तिकसनैवेद्यंगीतवाद्यमहोत्सवैः कुंकुमंकलशंसूत्रंधेन्वैदद्याद्विचक्षणः एवंसंपूज्यतांधे-
नुंसम्यक्भक्त्यादिनत्रयम् यवांश्चयवसंचैवचारयेत्पाययेदपः गोमयादागतैर्यौतैःकुर्यात्तैरेवपारणम् धेन्वैप्र-
जागरंकुर्यात्सर्वपापप्रणाशनम् त्रिविधान्मुच्यतेपापात्प्रहरार्धेनपांडव तस्योत्तरात्कृतात्पापात्प्रहरार्धेनमुच्यते
चत्वारिवेणुपात्राणिकारयित्वाप्रपूरयेत् नालिकेराम्रगदलद्राक्षाखर्जूरदाडिमैः शुभैर्विरूढैःसिंदूरैर्वस्त्रकुंकुम
कज्जलैः प्रथमेबीजपूरार्घ्यंद्वितीयेदाडिमंशुभम् तृतीयेनारिकेलंचदद्यादर्घ्यंदिनत्रयं प्राकारास्तत्रयःकार्याहवि
ष्यान्नेनपूरिताः लक्ष्मीनारायणंदेवंब्राह्मणंभार्ययासह पूजयेत्कुसुमैर्वस्त्रैर्हेमसूत्रैर्युधिष्ठिर दंपत्योर्भोजनंदेयं-
धेनुभक्त्यादिनत्रयम् पारणेगौरिणींविप्रान्निष्टबंधूंश्चभोजयेत् गुरुरूपायतांधेनुंद्विजायप्रतिपादयेत् सकुंकु-
मांसवत्सांचघंटामुकुटभूषिताम् गीतवादित्रनृत्यादिशांतिपाठपुरःसरम् यायाद्विप्रगृहंयावत्प्रासयेत्तत्फलस्य
वै एवंयाकुरुतेपार्थगोत्रिरात्रव्रतोत्तमम् दुर्लभंतुसदास्त्रीणांनारीणांनृपसत्तम अश्वमेधसहस्राणिवाजपेय

शतानिच कृत्वायत्फलमाप्नोतिगोत्रिरात्रव्रतेकृते प्रभासेचकुरुक्षेत्रेचंद्रसूर्यग्रहेतथा हेमभारशतंदद्यात्फलंतस्माप्नुया-
न्नृप धेनुदानंततःपश्चात्सवत्संसर्वकामदम् सागरांबरसंयुक्तादत्तातेनवसुंधरा एवंयाकुरुतेपार्थत्रिरात्रव्रतमुत्त
मम् भवांतरकृतात्पापात्त्रिविधान्मुच्यतेनरः यावाकाचिन्नपश्येतभर्तृदुःखंनराधिप पुत्रपौत्रकृतंतस्याभविष्य
तिनसंशयः जन्मांतरेप्यसौनारीवैधव्यंनैवपश्यति वैधव्यंचमहद्दुःखंनभवेत्तुभवांतरे अपुत्रालभतेपुत्रान्धनहीना
धनंलभेत् कायेनमनसाचैवकर्मणायदुपार्जितं तत्सर्वंविलयंयातिगोत्रिरात्रव्रतेनवै इहभोगान्कृविपुलान्भु
क्त्वायुःपूर्णमेवच व्रतस्यास्यप्रभावेनगोलोकेचमहीयते कीर्तिदंधनदंचैवसौभाग्यकरणंनृप आयुरारोग्यकरणं
सर्वपापप्रणाशनम् एतस्मात्कारणाद्राजन्त्सभार्यस्त्वंकुरुव्रतम् राज्यंवायदिसत्कीर्तिंनित्यंप्राप्तुमिहेच्छसि तच्छ्रुत्वा-
पांडवःश्रेष्ठोव्रतंचक्रेसमाहितः व्रतस्यास्यप्रभावेनलब्धंराज्यमकंटकम् इतिहेमाद्रौभविष्येगोत्रिरात्रव्रतंसं
पूर्णम् अथआश्विनशुक्लत्रयोदश्यांगुर्जराचारप्राप्तंगोत्रिरात्रव्रतम् युधिष्ठिरउवाच येनलक्ष्मीचस-
कलानराणांभुवनेभवेत् संततिर्वर्धतेस्त्रीणांतद्व्रतंवदमेप्रभो श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिव्रता
नामुत्तमव्रतम् येनवैक्रियमाणेनसर्वपापक्षयोभवेत् गोत्रिरात्रमितिख्यातंनृस्त्रीणांफलदायकम् वांछितंजा
यतेतेषांयेषांचेतसिवर्त्तते युधिष्ठिरउवाच कीदृशंतद्व्रतंदेवविधानंतत्रकीदृशम् कथमेषासमुत्पन्नाक-

स्मिन्कालेतुकेशव श्रीकृष्णउवाच पुराकृतयुगेपार्थमनुर्नामबभूवह वैवस्वतकुलेजातोबभूवपृथिवीपतिः त
दन्वयेदिलीपश्चप्रसूतःपतिरुत्तमः नृपाःसर्वेवशंतस्यसंजाताःकरदायकाः नित्यंधर्मपरोराजापूजनीयोमनीषिभिः नजा
यतेस्मसंतानंतस्यनीतिमतःसदा वांछयंस्तनयंराजासर्वकोसलपालकः पुत्रार्थंचसपत्नीकोवसिष्ठस्याश्रमंययौ प-
श्यन्हिपथिकल्याणंसारसैस्तोरणंकृतम् विविधानिअरण्यानिमार्गेषुफलितानिवै राजामहिष्यासहितोरथारूढःसवा
हनः संध्यायांयोगिनस्तस्यमहर्षेःप्रापदाश्रमम् सारथिंचसमादिश्यवाजीन्विश्रामयेत्यथ रथादुत्तीर्य्यदंपत्याश्वाश्र
मंजग्मतुर्मुनेः स्थितंकर्माणिसंध्यायांदिलीपोददृशेगुरुम् अरुंधत्यासहासीनंसावित्र्येवपितामहम् तौप्रणम्यगुरुंत
त्रमुनिपत्नींविशेषतः स्थितौतस्यसमीपेतुप्रीतावानंदपूरितौ दिलीपंचतथात्यर्थंधर्मज्ञंलोकपालकम् पप्रच्छकुशलं-
राज्येवसुधायाश्चवैमुनिः दिलीपउवाच कुशलंमेसदादेवस्थितेत्वयिगुरौसति सुराणांचमनुष्याणांविपत्तौ-
रक्षिताभवान् विषयेममकांतायामपत्यंकिंनजायते किंतुकार्यंधरित्र्यामेनिराशाःपितरोगताः तथाकुरुमुनिश्रेष्ठपु
त्रोभवतिमेयथा राज्ञांविपदिप्रासादायांतदापत्यस्मरवंसुने वदेतिकथितंराज्ञामुनयेयैवेयुधिष्ठिर तदामुनिःक्षणंतस्थौध्या
नस्तिमितलोचनः कारणंसंततेराज्ञोमुनिर्दृष्ट्वासमाधिना पश्चान्निवेदितंतस्मैदिलीपायप्रयत्नतः वसिष्ठउ० ॥
पूर्वंत्वमरिमाराध्यवसुधांगच्छतात्वया कल्पमूलेचतिष्ठंतीकामधेनुर्नवंदिता जातस्तस्यास्तदाकोपोदत्तस्तेशापईदृशः

नवंदिताहंभवतासांप्रतंयदिभूमिप भविष्यतिनतेपुत्रस्तच्छापोनश्रुतस्त्वया नपूजयेद्यःपूज्यानांवंद्यानांयोनवंदते नजायतेतु
कल्याणंपातकैरेवलिप्यते दिलीपउवाच कृतोमयापराधोयंकरोमिकिमहंमुने संततिर्जायतेयेनतद्वतवदमेप्रभो
वसिष्ठउवाच अन्यैर्नानाविधैःपुण्यैस्तपोभिर्नृपदुःसहैः नजायतेतुसंतानंगोत्रिरात्रव्रतंविना सपत्नीकःसवत्सांमेधेनुं
राजन्फलप्रदाम् आराधयैकाग्रमनागोत्रिरात्रव्रतंकुरु यावदित्थंदिलीपस्यमुनिनाकथितंव्रतम् तावच्चनंदिनीधेनुर्वना
दावृत्तेशुभा कुंभोध्नीग्रीव लंबासुतस्करवफलदानंदिनी लोकमातादेवानांवरदाशुभोदधिभवाकाम प्रदापाटला
गीर्वाणाःसकलाःश्रुतावपुषिवैवेति यंतियस्याश्चते संपूर्णाःशशिनःकलाश्चदधतीश्रेयस्करीपूर्णिमा भाद्रेमासिसमाया
तेशुक्लपक्षेतुपार्थिव प्रातःकुर्यात्त्रयोदश्यांनियमंतुशुभक्तितः समुपोष्यगोत्रिरात्रंभक्त्याकृत्वाव्रतंतव भोक्ष्येहनिच
तुर्थ्येहंसौभाग्यंदेहिगौर्मम इतिनियममंत्रः ततोगावंसमभ्यर्च्यमंडलेगंधदीपकैः तगरैःशतपत्रैश्चचंपका
द्यैःशुभाननाम् गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः गावोमेहृदयेसंतुगवांमध्येवसाम्यहम् पंचगावःसमुत्पन्ना
मथ्यमानेमहोदधौ तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः इतिपूजामंत्रः फलैर्नानाविधैःपुष्पैर्गंधैरपिस्व-
शक्तितः पूजनीयाःप्रयत्नेनदद्यादर्घ्यंविधानतः नारिकेलंसकूष्मांडंमातुलिंगंचदाडिमम् हविष्यान्नंचनैवेद्यंकार
येद्घवसंयुतम् गोत्रिरात्रव्रतार्थायसफलंचकरेधृतम् सर्वकामप्रदेदेविगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यमंत्रः ॥

वस्त्रयुग्मंविधानेनदद्याद्वासांसिदक्षिणाम् सपत्नीकायगुरवेस्वशक्त्याचव्रतीनरः दिनानिव्रतिभिस्त्रीणिश्रोतव्याचकथाशुभा
जितक्रोधैस्ततःसर्वैस्त्रीभिर्वापुरुषैरपि एवंसंपूज्यविधिवल्लक्ष्मीयुक्तंतुकेशवम् चतुर्थेदिवसेप्राप्तेततोधेनुंविसर्जयेत्
ततोधेनुंसवत्सांतुमंत्रेणानेनपार्थिव दद्याद्विप्रायविदुषेधर्मिणेशास्त्रज्ञानिने परिपूर्णव्रतंकृत्वादत्वा कामानभीप्सितान्
विप्रायत्वंमयादत्तामातर्गच्छयथासुखम् दानमंत्रः सर्वदानानिदेयानिस्वशक्त्यानतिभिर्नरैः विविधेभ्योद्विजेभ्यश्च
दक्षिणांचस्वशक्तितः वित्तशाठ्यंनकृत्वातुदापयेच्चततोनरः गृहंयावद्व्रजेत्पृष्ठेगीतनृत्यपुरःसरम् गोपालानांचपा-
थेयंदद्याद्धेनुतुष्टये यवाद्याश्चरितानित्यंफलैर्नानाविधैःसह भुक्त्वैवकामधेन्वाचसंयुक्तागोमयेनतु पारणंतैःप्रक
र्तव्यंसर्वैरिष्टजनैःसह सपत्नीकायगुरवेदद्याच्चान्नंसदक्षिणम् श्रीकृष्णउवाच भाद्रेमासिसितेपक्षेत्रयोदश्यां
नराधिप एवमाराध्यतांधेनुंदिलीपोभक्तितत्परः ततःप्रजानामधिपःप्रभातेसुरभिंमुनेः सुपूजितांविधानेनमुमोच
त्वरितंशुचिः संध्यायाःप्रभृतिस्थित्वाआययोपुनराश्रमे अर्चांसुदक्षिणाकर्तुंगृहीत्वाविधिवद्बलिम् ययोधेनोःसमी
पेतुबलिंदत्वादिनत्रयम् अनुयातस्ततोधेनोर्वनंगत्वाततःपरम् जयशब्दंप्रवदतःपक्षिणःसंदूराननात् हृष्टाच-
वनदेवीभिर्गीयमानंतथायशः शुश्रावचततोराजाभृशंमनसिहर्षितः चिरंकृभेवनेव्यक्तेभूमिपेभ्रमितेसति धे-
नुस्वकृशुभैराज्ञाराजाधेन्वावभौपुनः तद्दिनेचमुनेर्धेनूराज्ञोभावंचवश्यती विवेशगह्वरंतत्रपार्वत्याश्वपितुर्नृप

कृत्रिमश्चकृतःसिंहोमुनिधेन्वाभयंकरः सिंहश्चददृशेराज्ञाधेनुंकर्षन्बलेनवै दृष्ट्वाराजाचतांधेनुंक्रंदमानांस्वरोल्बणैः ततो
धनुर्धरःसोपितांमोक्तुमुपचक्रमे वध्यसिंहवधार्थायराजाबाणंकरेदधौ उत्पन्नस्तदाशोकःकोपयुक्तोबभूवसः धनुष्या
रोपयन्बाणंचित्रन्यस्तइवस्थितः हस्तस्यनिश्चलत्वेनक्रोधस्तस्यव्यवर्धत विस्मयंप्रापयन्सिंहोराजानंवैयुधिष्ठिर मानवस्य
गिराप्राहदुष्टत्वेनगविस्थितः सिंहउवाच बाणःप्रयुक्तोभवताहृथामयिभविष्यति ततःकष्टेनमहताश्रमंमाकुरुस
र्वथा मामारुतस्यवेगोपिपर्वतोन्मूलनेक्षमः ज्ञायतेनमहाराजगवांककुदिवैस्थितः महेश्वरस्यमांराजन्नाम्नाकुंभोद
रेणतु सेवकानांचसर्वेषांमुख्यंजानीहिभूमिप विलोकयेमंपुरतोदेवदारुंमहाद्रुमम् सिक्तःस्नेहेनभूपालशिवयास्व
कृतःकृतः कदाचिदागतोहस्तीभग्नस्तेनमहाद्रुमः तस्यसंरक्षणार्थायविमुक्तोहंशिवेनतु कृत्वाशिवेनसिंहत्वमुक्तो-
हंतीव्रभोजने तर्हीयंखलुगौराजन्भक्ष्यामेसमुपागता त्यक्तालज्जांनिवर्तस्वभक्तोसिगुरवेभवान् आपत्कालइदंवृत्तं
नस्यात्कुत्रभूतोयदि दोषोनजायतेतस्ययशोराजन्नगच्छति श्रुत्वागिरंचसिंहस्यराजावैनमुवाचह ईश्वरेणसमोना
न्योयदिसिंहोभवानपि समीपात्त्वकथंयातिममधेनुर्गुरोरियं प्रसीदभक्षमेदेहंधेनुंमुंचसवत्सकाम् भविष्यतिजनन्या
श्चवत्सोमार्गंविलोकयन् सिंहेनतुदिलीपश्चकथितोवैतदापुनः देहांतरेचदृष्टानिभयंकाराणिकुर्वताम् स्तोकेनहेतुना
पार्थकीर्तिछत्रंचसत्कृतम् सर्वस्यजगतोराज्यंवपुरेतन्नवंवयः त्यक्तुमिच्छसिवाराजन्मूर्खस्त्वमीदृशःकथम् ददासिच

कथंप्राणान्प्रजापालनतत्परः जीवन्नकिंमहाराजमुनेःकोपानपास्यसि ततोरक्षयदेहंस्वंराज्यंस्वंकुरुभूमिप यावच्चोवा-
चसिंहोसौनगेनानुगतांगिरम् दिलीपोपितदापार्थवाणीमेतामुवाचह धेन्वानिरीक्षितश्चैवभूमिपोदीनयागिरा किंभोरा
ज्येनमेसिंहविषयेजीवनेनवा यशोगतंचमेसर्वंयदिधेनुंग्रसिष्यसि एवमुक्त्वाततश्चाग्रेसिंहस्यपतितस्तदा यावदित्थंच
पतितोमांसस्यपिंडवन्नृपः तावत्सिंहोरवंकृत्वाधावितश्चभयंकरः दृष्ट्वासिंहनिपातंचचंचलोनबभूवह तावत्तस्योपरि
ह्याच्चपुष्पवृष्टिःपपातवै उत्तिष्ठवत्सभूपालवाचमित्थंनिशम्यसः उत्थितस्त्वपुनश्चाग्रेगांददर्शनचैवहरिम् सेवयाचगुरोः-
पार्थभक्त्याचापिविशेषतः प्रीताकामदुघातस्यवरंवरयसुव्रत योजयित्वाकरौराज्ञाययाचेतनयस्ततः वंशकर्त्तोम-
हाप्राज्ञोशिवभक्तोनिरंतरम् गौरुवाच गोत्रिरात्रव्रतंराजन्यद्भक्त्याभवताकृतम् भविष्यतिचतेदक्षःपुत्रःपौरुष-
विग्रहः अन्येपियेकरिष्यंतिगोत्रिरात्रव्रतंमम तेषांकामंचदास्यामिमनसीष्टंनसंशयः इत्युक्त्वाचलिताधेनुर्वसिष्ठस्या-
श्रमंप्रति बलिंसंगृह्यविधिवद्ययावाशक्त्यदक्षिणा पूजांकृत्वाविधानेनराजपत्नीविशेषतः प्रदक्षिणात्रयंकृत्वाचलिता
वैयुधिष्ठिर आश्रमंचततोगत्वादिलीपोसौपुनस्तदा गुरोरग्रेचतत्सर्वंवृत्तांतमवदीन्मुनः नंदितौचतदापार्थदंपतीतौ
सुकोमलौ पारणंचततःकृत्वाप्रस्थितौनगरंप्रति हुताशंचनमस्कृत्यहोतारंगांतथैवच आगतश्चततोराजाअयोध्या
नगरंपुनः दिलिपश्चमहाराजःप्रजापालनतत्परः दिनैःकतिपयैरेवगोत्रिरात्रप्रभावतः राज्यंचकुर्वत स्तस्यसुषुवेम-

हृषीनदा प्रभातेसकृमुहूर्त्तेचउत्पन्नोरघुवंशजः रम्यंजातंतदासर्वं संजातानिर्मलादिशः आददेब्राह्मणेभ्यश्चगावोवैवस्त्रसंयुताः मृदंगस्यस्वनैर्दिव्यैरम्यंजातंपुरंमहत् प्रजाःसर्वास्तदापार्थवदंतिस्मपुनःपुनः गोत्रिरात्रप्रभावाच्चराज्ञःपुत्रोबभूवह पुरंदरस्यजेताचमहाधर्मपरायणः दिशांजेताच्चयज्ञस्यकर्तासोपियुधिष्ठिर तदाप्रभृतिलोकेस्मिन्लोकाःकुर्वंतितद्व्रतं देवैःसर्वैःकृतंतत्रसर्वकामार्थसिद्धये सर्वाभिर्देवपत्नीभिःकृतंचव्रतमुत्तमम् गोत्रिरात्रव्रतंपुण्यंविधानेनफलप्रदम् कुरुष्वत्वंमहाराजभक्त्याचापियुधिष्ठिर साक्षादनंतरंमातुःकृत्वामनसिवर्त्तते भाद्रपदेसवत्सांतुभक्त्यात्वाराधयस्वगां एवंयःकुरुतेभक्त्यागोत्रिरात्रव्रतंपुनः सिध्यंतिसर्वकार्याणिस्फरवंचैवप्रवर्धते कर्त्तव्यंपुत्रकामेनगोत्रिरात्रव्रतंशुभं तपोभिर्दुष्करैः किंचिद्यज्ञैस्तीर्थगयादिभिः नभवेच्चफलंराजन्भवेत्तच्चविधानतः कुर्वंतियेव्रतमिदंजगतिप्रसिद्धंपापापहंसकलचिंतितकामदं च आरुह्यचैवतुविमानमनुत्तमंचस्वर्गंप्रयांतियमताहिभयंविहाय इतिगोत्रिरात्रव्रतम् अथउद्यापनं युधिष्ठिरउ॰ कथयस्व-महापुण्यंगोत्रिरात्रव्रतस्यवै उद्यापनविधिंकृष्णायेनचीर्णेनतत्फलम् श्रीकृष्णउवाच वर्षेचतुर्थेसंप्राप्ते-गोत्रिरात्रव्रतस्यवै उद्यापनविधिंवक्ष्येसर्वेषांव्रतसिद्धये तृतीयेदिवसेस्नायान्मध्यांन्हेविधिपूर्वकम् देवान्पितॄन्स मभ्यर्च्यशुद्धेचस्वगृहेव्रती रात्रौचसर्वतोभद्रंगौरीतिलकमेवच पूरयेत्पंचभिर्वर्णैःशोभमानंभवेद्यथा ताम्रस्यक लशंकृत्वापूर्णपात्रसमन्वितम् माषेणचकृवर्णेनलक्ष्मीनारायणंप्रभुम् नूतनंवस्त्रयुग्मंतुसूक्ष्मंतत्रप्रकल्पयेत्

वंशपात्राणिकुर्वीतसौभाग्यद्रव्यसंयुतैः विरूढवरूत्रपक्वान्नैर्नारीकेलादिभिःफलैः विलेपनैश्चपुष्पैश्चधूपैर्दीपैस्तथोत्तमैः
पंचामृतैश्चनैवेद्यैःपूजयेद्विधिपूर्वकम् लक्ष्मीनारायणंदेवंगांसवत्सांविशेषतः रात्रौजागरणंकृत्वागीतवादित्रनिस्वनैः
ततःप्रभातसमयेहोमंकुर्याच्चवैष्णवैः आचार्यंवरयेत्तत्रवेदवेदांगपारगम् तदाज्ञयाचकर्त्तव्यंसाधुकर्मप्रयत्नतः ति
स्रोगावोप्रदातव्याएकावापिसवत्सका बहुदोग्ध्रीसुशीलाचतरुणीचसुशोभना दंपतीपरिधानंचवस्त्रैराभरणैःशुभैः
शय्यांसोपस्करांदद्यात्स्नानपात्रंकमुंडलुम् चामरंधृतपात्रंचतिलपात्रंसदक्षिणम् दानानिचसुवर्णानांभोज्यागव्यैनवैद्वि-
जाः एवंधेनुंचविप्रायदत्वानचष्टष्टतोव्रजेत् पदेपदेश्वमेधस्यफलंप्राप्नोत्यसंशयम् अथान्यानिचदानानिदद्याद्विप्रेभ्यएवच
भूयसींदक्षिणांदद्याद्व्रतसंपूर्णहेतवे गोपालेभ्यश्चपाथेयंशष्कुल्यादिचकंबलम् सर्वंक्षमापयित्वातुपारणंचततश्चरेत्
अनाथैर्व्याधियुक्तैश्चसीदद्भिश्चकुटुंबकैः गवामक्षितमन्नंचदुग्धेनपरिपाचितम् तेनान्नेनप्रकर्तव्यंदेहस्यपरिपालनम्
भक्तिभावेद्विजानुज्ञांगृण्हीयुर्व्रतिनःसदा तयातत्पूर्णतामेतिनान्यथापिकदाचन एवमुद्यापनंकार्यंव्रतस्यफलमिच्छता
नारीवापुरुषोवापिपुत्रवान्जायतेध्रुवम् इहलोकेसुखंभुक्त्वाअंतेगोलोकमाप्नुयात् श्रीकृष्णउवाच एत
त्तेकथितंराजन्व्रतस्योद्यापनंशुभम् श्रोष्यंतियेपठंतीतितेषांसर्वेमनोरथाः येकरिष्यंत्यसंदेहंतेषांलोकाश्चशाश्व
ताः इतिश्रीभविष्योत्तरपुराणेगोत्रिरात्रव्रतंसंपूर्णम् अथचैत्रशुक्लत्रयोदश्यांअशोकत्रिरात्रव्रतंभविष्ये

साचपूर्वाग्राह्या तत्रत्रयोदशीतिथिःपूर्वासिनेतिदीपिकोक्तेः श्रीकृष्णउवाच शृणुराजन्पुरावृत्तमयोध्यायांव्रतंशुभं
वसिष्ठेनमुनींद्रेणसीतायैयन्निवेदितम् विधायरावणविधंयदारामःपुरेभ्यगात् तदादेवीप्रणम्याथवसिष्ठंवाक्यमब्रवीत्
सीतोवाच भगवन्दंडकारण्याद्रावणेनहृतापुरा नपश्यामितदाकिंचिदात्मीयंविकलेंद्रिया लंकायांप्रापितातेनराक्ष-
सेनहृताह्यहम् अशोकवृक्षंप्रणतामहाचिंतापरायणा उक्तंत्रिजटयातत्रवाक्यंहेत्वर्थसंयुतम् अशोकस्यव्रतंकृत्वाविशो
कात्वंभविष्यसि तथेत्युक्तंमयाब्रह्मन्यथोक्तंत्रिजटावचः ततःप्रभृत्यहंशश्वदशोकव्रतमारभम् तेनव्रतप्रभावेनहनू
मान्पवनात्मजः शतयोजनविस्तीर्णंतीर्त्वासागरमद्भुतम् मयादृष्टःकपिश्रेष्ठःसाभिज्ञानोमहाबलः पुनश्चकुशलीजा-
तोदग्ध्वालंकांमहाबलः ततोमेप्रत्ययोजातोव्रतस्यास्यमहातरोः व्रतराजप्रभावेनरामःप्राप्तोमहाहरिः ततःकैश्चिदहो
रात्रैर्भर्त्तामेराघवोबली निहत्यरावणंसंख्येमांविशुद्धांगृहीतवान् तदहंभगवन्विप्रपृच्छामित्वांदृढव्रतम् अशोकस्यप्र-
भावंमेवक्तुमर्हस्यशेषतः व्रतस्यतस्यपुण्यंतुपुराणोक्तंमहीतले अथवासुरलोकेषुसुरनारीनिषेवितं वसिष्ठउवा॰
एवमेतज्जनकजेयथावक्ष्यसिसुव्रते अशोकस्यप्रभावेनरामोदृष्टःपुनस्त्वया शृणुचात्रमहाख्यानंनंदनेदिव्यकानने
बृहस्पतिमुखाल्लुब्धंयज्जातंपरमाद्भुतम् वृत्रासुरमहायुद्धेदेवेंद्रश्चमहासुरम् निहत्यसर्वधर्माणांस्थापनंचचकारह
ब्रह्महत्यामवाप्याथदेवेंद्रोनष्टचेतनः त्रैलोक्यराज्यंत्यक्त्वाप्सुममज्जाशिभयार्दितः एतस्मिन्नंतरेदेविनहुषोनृपसत्तमः

त्रैलोक्यराज्यंसकलंजहारबलदर्पितः ततःशचीप्रव्यथिताहृतंराज्यमवेक्ष्यसा नंदनांतंसमासाद्यतपस्तेपेसुदुष्करं तांश्रुत्वाधर्म
निरतांबृहस्पतिरुदारधीः आगत्यनंदनं देवींवाक्यमाहमहातपाः बृहस्पतिरुवाच किमर्थंतप्यतेदेवितपःपरमदुष्करं
त्वयाकिंप्रार्थ्यतेतेनतपसाब्रूहिकारणम् शच्युवाच हृताहिभर्तादेवेंद्रंहृतराज्यंहतद्विषम् क्वापिप्रनष्टंतंविप्रनजानेहं
प्रियंपतिम् एतस्मात्कारणाद्ब्रह्मन् तपउग्रंसमाश्रितम् यथापुनर्निजंराज्यंदेवेंद्रःप्राप्नुयादिति क्वतिष्ठतिमुनेब्रूहिसुर
राट्शत्रुतापनः प्रसीदकुरुमेदेवसंयोगंतेनचाप्नुयाम् वाचस्पतिरुवाच शृणुपौलोमिदेवेंद्रोयथानष्टोभयातुरः मान
सांभसिसंभूतंपंकजांतरमाश्रितः वृत्रहत्याप्रभावेनउद्वेगंगुरुमाश्रितः अभिभूतमिवापश्यंस्ततोप्यनिलयंगतः का
मंतपःप्रसंगेनसर्वंप्राप्स्यसिसुव्रते बहुकालंस्थितंयस्मात्तपसालभ्यतेफलम् स्त्रीणांपुष्टिकरंह्येकंव्रतंप्रोक्तंस्वयंभु-
वा सावित्र्याःपृच्छमानायास्तत्त्वंकर्तुमिहार्हसि अशोकव्रतमित्येकंनाम्नाख्यातंत्रिविष्टपे येनचीर्णेनवैसद्योनारीदुःखं
नसंस्मरेत् हरःस्वयंवसन्साक्षाद्वृक्षराजेषुनंदते अस्मिंस्तुष्टेहरस्तुष्टइतिजानामिनिश्चितम् शच्युवाच पुन्नागं
नागबकुलचंपकाद्यान्महीरुहान् परित्यज्यकथंचान्यान्हरोस्मिन्कृतसंन्निधिः वाचस्पतिरुवाच हरेणनिर्मितः
पूर्वमशोकोयंकृपालुना लोकोपकारकरणेततोयंशिववल्लभः वसिष्ठउवाच निर्मायवृक्षप्रवरंप्रणम्यभक्त्या
चीर्यित्वाविधिमस्यविप्रम् पप्रच्छदेवीपुनराहविप्रोदेविशृणुत्वंविधिमस्यसर्वम् वाक्पतिरुवाच आरभ्यतद्व्रतं

र्थीत्रगत्वसमुपापणं त्रिगत्रंदेवि विख्यातमशोकतरुमूलके कार्यनारीभिरमलंमनोवाक्कायकर्मभिः ततःप्रदक्षिणादेया अष्टोत्तरशतैः फलैः नारीकेरैश्चखर्जूरैर्गोस्तनीभिर्दिनेदिने मंत्रेणानेनमनसाध्यात्वानिसंसदाशिवम् अशोकशोकंप्रनुदसर्वकामफलप्रद व्रतेनानेनचीर्णेनयथोक्तंफलदोभव ततस्तृतीयेदिवसेसम्यगभ्यर्च्यभामिनि महादेवंवृषयुतंवंशपात्राणिकारयेत् अनेनैवविधानेनयाकुर्याद्व्रतमुत्तमम् वैधव्यंनाप्नुयान्नारीपुत्रसौख्ययुताभवेत् वसिष्ठउवाच बृहस्पतिमुखाछ्रुत्वा शचीचक्रेव्रतंशुभम् शास्त्रोक्तविधिनासीतेभक्त्यादेवःसमागतः वृत्रहत्याविनिर्मुक्तोनात्रकार्याविचारणा तथात्वमपिवांछार्थंव्रतमेतत्समाचर तथासाध्विस्फुपुष्टश्रीप्राधान्यंजायतेक्षितौ व्रतएवंकृतेलोकेख्यातादेविभविष्यसि श्रीकृष्णउवाच व्रतमेतदशोकस्यअयोध्यायांचकारसा सीताव्रतेकृतेतस्मिन्दुःखहीनाबभूवह युधिष्ठिरउ॰ अशोकस्यसमाख्यातापूजादेवविधानतः कादेवतातत्रपूज्यानारीणांव्रतसिद्धये श्रीकृष्णउवाच अशोकवृक्षेतिष्ठंतिसर्वेदेवायुधिष्ठिर पल्लवेषुचशाखासुशिवाद्याःसर्वदेवताः अशोकसन्निधौरामःपूजनीयःसलक्ष्मणः सीतायासहितोराजन्विष्णोरंशोयतोमतः पृथग्मंत्रैःपृथग्वस्त्रैरशोकाख्यायथाक्रमम् पूजाचभरतश्रेष्ठपुराणोक्तविधानतः अशोकवृक्षनिहिताःशिवाद्यायेसुरोत्तमाः अशोकपूजनेनाशुतुष्टास्तेमेभवंत्विह गौर्यैलक्ष्म्यानथेंद्राण्याअरुंधत्याचसितया त्वंसमाराधितःपूर्वमशोकफलदोभव अशोकावाटिकामध्येसीताप्राप्तत्प्रसादतः अशो

कृशार्वसफलंगृहाणार्घ्यंकृतंमया रावणस्यवधार्थायउत्पन्नस्त्वंमहीतले विष्णोरंशोसिदेवेशगृहाणार्घ्यंनमोस्तुते द
शावतारगृहणंकरोषित्वंप्रभा वतः गृहाणार्घ्यंमयादत्तंसीतालक्ष्मणसंयुत तातभक्तस्युन्मुखंवीरंवनेयोनुययौतदा
तंलक्ष्मीवर्धनंगौरंलक्ष्मणंपूजयाम्यहम् अवनीतलसंभूतेसीतेसर्वांगसुंदरि गृहाणार्घ्यंमयादत्तंभूजांजनकनंदि
नि लक्ष्मीत्वंसर्वदेवस्यविष्णोरसिमहीतले अवनीर्णामयादत्तंगृहाणार्घ्यंनमोस्तुते एवंसंपूज्यविधिनासर्वशोकवि
नाशनम् सर्वपापप्रशमनंसर्वकीर्तिविवर्धनम् अपुत्रयापुरापार्थपार्वत्यामंदराचले अशोकःशोकशमनःपुत्रत्वे
परिकल्पितः जातकर्मादिकंतस्यत्वशोकस्यमहातरोः कारितंविधिवत्तस्यतेनवृक्षेणगोत्तमः यावतंकुरुतेनारीपुरा
णोक्तविधानतः अशोकस्यप्रसादेनसर्वान्कामानवाप्नुयात् अवैधव्ययुतासातुलक्ष्मीसांनिध्यमाप्नुयात् सर्वोप
हारान्राजेंद्रब्राह्मणायनिवेदयेत् कथामपिसमाकर्ण्ययःकुर्याद्विजतर्पणम् व्रतस्यफलमाप्नोतिस्त्रव्रतोपिनसंशयः
युधिष्ठिरउवाच विशेषंब्रूहिमेदेवत्वशोकतरुपूजने येनार्चितेतरौकृष्णप्राप्यतेसकलंफलम् श्रीकृष्णउ०
कथयामिकथांराजन्याभिर्व्रतमिदंकृतम् मनुष्यदेवगंधर्वनारीभिःपुत्रवृद्धये अनुसूययात्रिपत्न्यात्वरुंधत्यातथै
वच देवक्यासीतयाचैंद्र्याद्रौपद्यासत्यभामया दमयंत्याचसावित्र्याकृतंतद्व्रतमुत्तमम् सर्वाभिःपूजितोवृक्षोयथा
वत्कृणुपार्थिव अशोकंराजतंचैवसौवर्णंचतथाशिवम् तथैवकारयेत्सीतांसौवर्णौरामलक्ष्मणौ पूजयेद्विविधैर्म

त्रैःपूर्वोक्तैर्नृपसत्तम अशोकंपूजयेद्वृक्षंप्ररूढंशुभपल्लवैः विरूढैःसप्तधान्यैश्चगुणकैर्मोदकैःशुभैः कालोद्भवैःशुभैर्दिव्यै
र्नारिकेलैःसदाडिमैः पुष्पादिनातथाधूपैःपूजयेत्तरुमुत्तमम् अशोकंपांडवश्रेष्ठशोकोनश्यतितत्क्षणात् पितृमातृपती
नांवैस्वसृणांतथैवच अशोकत्वंशोकहरोभवसर्वत्रनःकुले अशोककलिकाश्चाष्टौयेपिबंतिचहस्तभे चैत्रशुक्लत्रयोद
श्यांनतेशोकमवाप्नुयुः त्वामशोकहराभीष्टमधुमाससमुद्भवम् पिबामिशोकसंतप्तोमामशोकंसदाकुरु हस्तर्क्षेचबु
धोपेताचैत्रशुक्लत्रयोदशी प्रातस्तुविधिवत्स्नात्वावाजपेयफलंलभेत् इतिचैत्रशुक्लत्रयोदश्यांभविष्यपुराणोक्तं
अशोकत्रिरात्रव्रतम् संपूर्णम् अथचैत्रकृष्णत्रयोदश्यांमहावारुणीसंज्ञकोयोगः तदुक्तंवाचस्पतिनिबंधे
शनिवारसमायुक्तासामहावारुणीस्मृता मधोःकृष्णत्रयोदश्यांशनौशतभिषायदि गंगायांयदिलभ्येत कोटिसूर्यग्रहाधि
का शुभयोगसमायुक्ताशनौशतभिषायदि महामहेतिविख्यातात्रिकोटिकुलमुद्धरेत् इतिवारुणीमहावारुणीत्र
योदशी अथस्कंदपुराणेशनिप्रदोषव्रतम् सूतउवाच शनौशुक्लत्रयोदश्यांकार्तिकेश्रावणेथवा जयापू
र्वापराग्रात्प्याव्याप्ताचेद्रजनीमुखम् लोमशउवाच पुरावृत्रादिभिर्दैत्यैर्वर्त्तमानेमहाहवे हतःशक्रेणनमुचि
रपांफेनेनवैबली दैत्यान्पलायितान्दृष्ट्वाहन्यमानान्सुरैर्भृशम् वृत्रःकोपपराविष्टोदेवान्योद्धुमथाययौ कालाग्नि
रूपसदृशंरूपंकृत्वामहाजवम् व्यवर्धतमहातेजारोदसीपूरयन्निव तंदृष्ट्वाभयवित्रस्तादेवाःशक्रपुरोगमाः ॥

कर्तव्यंनाभ्यपद्यंतनदा॥गुरुरुवाच॥ गुरुरुवाच॥ तपसासुमहोग्रेणव्रतेननियमेनच॥ अजेयोयंमहातेजाः॥वृत्रःश
त्रुविनाशनः॥ आराधयन्ततोदेवंपूज्यंशंकरमव्ययम्॥ व्रतेनविधियुक्तेनवृत्रंजेष्यथमाचिरम्॥ देवाऊचुः॥ गुरो-
केनविधानेनकीदृशेनव्रतेनच॥ अराधनीयोगौरीशोत्यस्माभिर्जयकामुकैः॥ तद्वदस्वसुराचार्यत्वंहिनःपरमागतिः॥ गु
रुरुवाच॥ कार्तिकादिषुमासेषुमंदवारेत्रयोदशी॥ विशेषाच्छुक्लपक्षेषुसर्वकामकरीशुभा॥ तस्यांप्रदोषसमयेलिंगरू
पीसदाशिवः॥ पूजनीयोहिदेवेंद्रोसर्वकामसमृद्धये॥ स्नात्वामध्यान्हसमयेतिलामलकसंयुतम्॥ शिवस्यअर्चनंकुर्याद्गं
धपुष्पफलादिभिः॥ पश्चात्प्रदोषसमयेस्थावरंलिंगमर्चयेत्॥ स्वयंभुस्थापितंचापिपौरुषेयमपौरुषम्॥ जनेवाविजनेवापि
अरण्येवातपोवने॥ ग्रामाद्बहिःस्थितंलिंगंग्राम्याच्छतगुणंस्मृतम्॥ बाह्याच्छतगुणंपुण्यमरण्येचप्रपूजने॥ वन्याच्छतगु
णंपुण्यंलिंगंवैपर्वतेस्थितम्॥ पर्वताच्चायुतं॥ पुण्यंतपोवनसमाश्रितम्॥ काश्यादिसंस्थितंलिंगंपूजितंस्यादनंतकम्॥
एवंविशेषलिंगानांतीर्थानांनिपुणैर्भृशम्॥ ज्ञात्वाचशिवपूजायाःविधिंशंभुंप्रपूजयेत्॥ कूपवापीतडागेषुदेवखातनदीषु
च॥ क्रमाच्छतगुणंपुण्यंगंगायांस्यादनंतकम्॥ पंचपिंडान्समुत्सृज्यसुस्नायात्सरवारिणि॥ ततःप्रदोषसमयेस्नात्वामौनंस
माचरेत्॥ प्रदीपानांसहस्रेणदीपनीयःसदाशिवः॥ शतेनाप्यथवादेवोद्वात्रिंशद्दीपमालया॥ घृतेनदीपयेद्दीपान्शिवस्यपरि-
तुष्टये॥ तथाफलैश्चधूपैश्चनैवेद्यैर्विविधैरपि॥ उपचारैःषोडशभिर्लिंगरूपीसदाशिवः॥ पूज्यःप्रदोषसमयेनृभिःसर्वार्थसिद्धये॥

नाम्नांशतेनरुद्रोसौस्तोतव्यश्चस्तुतिप्रियः नमोरुद्रायभीमायनीलकंठायवेधसे कपर्दिनेसुरेशायव्योमकेशायवैनमः
वृषध्वजायसोमायसोमनाथायवैनमः दिगंबरायभर्गायउमाकांतकपर्दिने तपोमयायव्यासायशिपिविष्टायवैनमः व्या
लप्रियायव्यालायव्यालानांपतयेनमः महीधरायव्याघ्रायपशूनांपतयेनमः त्रिपुरांतकायसिंहायशार्दूलायऋषायच
मितायमितनाथायसिद्धायपरमेष्ठिने कामांतकायबुद्धायबुद्धीनांपतयेनमः कपोतायविशिष्टायशिष्टायपरमात्मने
वेदवीतायगुप्तायवेदगुह्यायवैनमः दीर्घायदीर्घरूपायदीर्घार्थायमृडायच नमोजगत्प्रतिष्ठायव्योमरूपायवैनमः ग
र्वकृत्सुमहादैत्यअंधकासुरभेदिने नीललोहितशुक्लायचंडमुंडप्रियायच भक्तिप्रियायदेवायज्ञातज्ञाताव्ययायच
महेशायनमस्तुभ्यंमहादेवहरायच त्रिनेत्रायत्रिवेदायवेदांगायनमोनमः अर्थायअर्थरूपायपरमार्थायवैनमः वि
श्वरूपायविश्वायविश्वनाथायवैनमः शंकरायचकालायकालावयवरूपिणे अरूपायविरूपायसूक्ष्मसूक्ष्मायवैनमः
श्मशानवासिनेतुभ्यंनमस्तेकृत्तिवाससे शशांकशेखरायैवरुद्भूमिश्रयायच दुर्गायदुर्गपारायदुर्गावयवसाक्षिणे लिं
गरूपायलिंगायलिंगानांपतयेनमः नमःप्रभावरूपायप्रणवार्थायवैनमः नमोनमःकारणकारणायमृत्युंजयायात्म
भव स्वरूपिणे त्रियंबकायासितकंठभर्गगौरीपतेमंगलहेतवेनमः नाम्नांशतंमहेशस्यउच्चार्यव्रतिनासदा प्रदक्षिणा
नमःस्काराएतत्संख्याःप्रयत्नतः कार्याःप्रदोषसमयेतुष्ट्यर्थंशंकरस्यच एतद्व्रतंमयादिष्टंतवशक्रमहामते शीघ्रंकु-

११

रु महाभागपश्चाद्युद्धंकुरुप्रभो शंभोःप्रसादात्सर्वंतेभविष्यतिजयादिकम् शक्रउवाच वृत्रःकदामहेशानंसमाराधयदादरात्
कथंचस वरंप्राप्तःपुराकश्चाभवद्द्विज गुरुरुवाच वृत्रोऽत्ययंमहातेजास्तपस्वीतपसापुरा शिवंप्रसादयामासपर्वतेगंध
मादने नाम्नाचित्ररथोराजावनंचित्ररथस्यतत् एतज्जानीहिभोइंद्रतवपुर्याःसमीपतः यस्मिन्वनेमहाभागवसंतिचम
हर्षयः तस्माच्चैत्ररथं नामवनंपरममंगलम् तस्यदत्तंशिवेनैवयानंचपरमाद्भुतम् कामदंकिंकिणीयुक्तंसिद्धचारण
संयुतम् गंधर्वैरप्सरोयक्षैःकिन्नरैरुपशोभितम् ततस्तेनैवयानेनपृथिवीपर्यटन्पुरा॥ तथागिरीन्समुद्रांश्चद्वीपांश्चविवि
धांस्तथा एकदापर्यटन्राजा नाम्नाचित्ररथोमहान् कैलासमागतस्तत्रददर्शपरमाद्भुतम् तदासभांमहेशस्यगणैश्चैव-
विराजितां अर्धांगलग्नयादेव्याशोभितंचमहेश्वरम् निरीक्ष्यदेव्यासहितंसदाशिवंकर्पूरगौरंवरमंबुजेक्षणम् कपर्दिनंचंद्र
कलाविभूषितंगंगाधरंदेववरंसभायाम् प्रहस्यराजाचतदागिरीशंन्यायान्वितंवाक्यमिदंबभाषे वयंचशंभोविषयान्वि
ताश्चमर्त्यादयःस्त्रीविजितास्तथान्ये नलोकमध्येचमयाविलोकिताश्चालिंग्यकांतांसदसिप्रविष्टाः एवंवाक्यंनिशा
म्याथगिरीशःप्रहसन्निव उवाचन्यायसंयुक्तंसर्वेषामपिशृण्वताम् शिवउवाच ममलोकापवादश्चसर्वेषां
नभवेद्यथा भक्षितंकालकूटंमेसर्वेषामपिदुर्जयम् लोकातीतंचमेवृत्तंतथाप्युपहसत्यसौ ततश्चित्ररथंदेवीगिरि
जावाक्यमब्रवीत् कथंदुरात्मनायस्त्वशंकरश्चोपहासितः मयासहैवमंदात्मन्नीक्षसेकर्मणःफलम् साधूनांसम-

मचिन्तानामुपहासं करोतिनियः देवोवाप्यथवामर्त्यः सविज्ञेयोधमाधमः एतेमुनींद्राश्च महानुभावास्तथाहिएते ऋषयो वेदगर्भाः
तथैवसर्वे सनकादयोप्यमी अज्ञाननाशाः शिवमर्चयंति रेमूढसर्वेषुजनेषभिज्ञ स्त्वमेवचैकोसिपरोन कश्चनतस्मादतिप्रोदत
रं नरत्वांसंशिक्षयेनैवकुर्याद्यथात्वम् अस्मात्पतविमानात्त्वंदैत्योभूत्वास्तुदुर्मते ममशापेनदग्धस्त्वंगच्छाद्यचमहीतलं एवंशप्त-
स्तदादेव्याभवान्याराजसत्तमः राजाचित्ररथः सद्यः पपातसहसोदिवः आसुरींयोनिमापन्नोवृत्रोनाम्नाभवत्तदा तपसापरमे
णैवत्वष्ट्रासंयोजितः क्रमात् तपसाब्रह्मचर्येणशंभोराराधनेनच व्रतेनानेन चबलीजेतुंशक्योनकेनचित् आसुरेणहिभावेन
व्यंगंचक्रेव्रतंयतः तेनछिद्रेणचैवासौपश्चाज्जेयोभविष्यति तस्मात्त्वमपिदेवेंद्रकृत्वाचेदंव्रतंशुभम् हनिष्यसिमहाबाहोवृत्रं
नास्त्यत्रसंशयः गुरोस्तद्वचनंश्रुत्वाप्युवाचाथशतक्रतुः उद्यापनविधिंब्रूहिमदोषस्यचमेधुना गुरुरुवाच कार्तिकेश्राव
णेप्राप्तेमंदवारेत्रयोदशी ॥ संपूर्णातुभवेद्यासासमग्रव्रतसिद्धये ऋषभोराजतः कार्योपृष्ठेतस्यस्वरूपीवकम् तस्योपरिन्यसे
द्देवमुमाक्रांतंत्रिलोचनम् पंचवक्त्रंदशभुजमर्धांगेगिरिजांसतीम् सौवर्णींप्रतिमांकृत्वाताम्रकुंभंजलैर्युतम् पंचरत्नफलो
पेतंपंचपल्लवशोभितम् चंदनेनसुगंधेनमिश्रितंशोभितंतथा रौप्यपात्रंततः कृत्वाकुंभस्योपरिविन्यसेत् अशक्तोमृन्मयंकुं
भंवंशपात्रमथापिवा पर्णशरावंसंस्थाप्यसौवर्णींप्रतिमांतथा शक्त्याकृतांप्रतिष्ठाप्यवस्त्रमाल्यविभूषणैः पूजयित्वाविधानेनरा
त्रौजागरणंचरेत् पुष्पमंडपिकामादौकृत्वाश्रद्धासमन्वितः वितानमंडपंकुर्यान्नानावर्णैःसमन्वितम् ततःप्रभातसमयेनद्यादौवि

मलेजले स्नात्वापुनः समभ्यर्च्यजुहुयात्पायसेनच उमयासहितंरुद्रंपृथगष्टोत्तरंहुनेत् गौरीर्मिमायमंत्रेणत्र्यंबकेणचशंकरम् आचार्यंचसप
त्नीकंवस्त्रालंकारचंदनैः तोषयित्वाशक्तितःदातंगांदद्याच्चपयस्विनीं ब्राह्मणानभोजयेत्सम्यग्दक्षिणाभिःप्रतोषयेत् दीनानाथांश्चसंतर्प्य
त्स्वस्तिंद्वाचयेत्ततः लब्धानुज्ञांब्राह्मणेभ्योबंधुभिःसहितःशुचिः त्वदिस्मरन्शिवंभक्त्याभुंजीतनियमेनच अनेनैवविधानेन कुर्यादु-
द्यापनंव्रती एवंयःकुरुतेभक्त्याप्रदोषव्रतमुत्तमं शनिवारेणसंयुक्तोसोद्यापनविधिंनरः आयुरारोग्यमैश्वर्यंपुत्रपौत्रसमन्वितः शत्रू
न्विजयतेनित्यंप्रसादाच्छंकरस्यच तस्मात्त्वमपिदेवेंद्रपूजयस्वसदाशिवम् एवंप्रदोषविधिनायुद्धेशत्रून्विजेष्यसि एवंनिशम्यगुरुणा
कथितंतदानीमिंद्रोयमेनविधिनागिरिशंप्रपूज्य लोकंप्रसंतमिवदैत्यपतिंप्रवृद्धंतंतत्क्षणादगमयत्क्षयमीशतुष्ट्या ईश्वरउ० त्रयोद
श्यांतथारात्रौसोपहारंत्रिलोचनम् पश्यतिप्रथमेयामेमुच्यतेसर्वपातकैः देव्युवाच देवकेनविधानेनप्रदोषव्रतमुत्तमम् ॥
विधातव्यंनरैःस्त्रीभिःसंतानफलसिद्धये ईश्वरउवाच यदात्रयोदशीकृष्णामंदवारेणसंयुता आरब्धव्यंव्रतंतत्रसं
तानफलसिद्धये ऋणनिर्मोचनार्थायभौमवारेणसंयुता सौभाग्यस्त्रीसमृध्यर्थंशुक्रवारेणसंयुता आयुरारोग्यसिध्यर्थं
भानुवारेणसंयुता एकवत्सरपर्यंतंप्रतिपक्षेत्रयोदशी प्रदोषेशिवमभ्यर्च्यनक्तंभोक्ष्यामिशंकर तत्रचोक्तेनमंत्रेणव्रतसंक
ल्पमाचरेत् स्नात्वात्तुलोहितेभानौनद्यादौनियमीव्रती शिवालयेततोगत्वाप्रदोषेशिवमर्चयेत् पूजामंत्राः ॐ
भवायनमः महादेवा० रुद्राय० नीलकंठा० शशिमौलिने० उग्राय० उमाकांताय० ईशानायन० विश्वेश्वराय० त्र्यंबका० त्रिपुरुषा०

त्रिपुरांतकायनमः त्रिकालाग्निकालायनमः कालाग्निरुद्रायनमः नीलकंठायन॰ सर्वेश्वराय॰ १६ पंचामृतेनस्नपनमेभि
र्मंत्रैः प्रपूजयेत् दधिभक्तेननैवेद्यंपक्वान्नैर्घृतसंयुतम् दत्वासुगंधवासंचतांबूलंक्रमुकादिकम् समर्प्याष्टदिश स्त्वत्रदीपा
नाज्यसमन्वितान् यथाभवान्समस्तानांभक्तानांपापमोचनः तथाव्रतेनसंतुष्टः पुत्रंदेहिसलक्षणम् ऋणरोगादिदारि
द्र्यपापक्षुद्रापमृत्यवः भयशोकमनस्तापानश्यंतुममसर्वदा पृथिव्यांयानितीर्थानिसागरांतानियानिच अंडमाश्रित्यति
ष्ठंतिप्रदोषेगोवृषस्यतु सृष्ट्वातुवृषणौतस्यशृंगमध्येविलोक्यच पुच्छंचककुदंचैवसर्वपापैः प्रमुच्यते निवेद्यकर्मजातं
चयथाहित्तानुसारतः दक्षिणाब्राह्मणेभ्यश्चततोमौनंविसर्जयेत् मंदवारेप्रदोषोयंशक्रकृष्णेत्रयोदशी॥ यश्चतुर्विंशतिं
कुर्याद्यथोक्तफलमाप्नुयात् अथपूजनम् आवाहयेत्प्रथमतोमंत्रेणानेनसुव्रत एह्येहित्वमुमाकांतस्थानेचात्र
स्थिरोभव यावद्व्रतंसमाप्येतत्कृपयादीनवत्सल आवाहनं॰ आसनेस्मिन्नुमाकांतसुखस्पर्शेसुनिर्मले उप विश्यमृडे
दानींसर्वशांतिप्रदोभव आसनं॰ पाद्यंचनेमयादत्तंपुष्पगंधसमन्वितम् गृहाणदेवदेवेशप्रसन्नोवरदोभव पाद्यं॰
ताम्रपात्रेस्थितंतोयंफलगंधादिसंयुतम् अर्घ्यंगृहाणदेवेशमयादत्तंहिभक्तितः अर्घ्यंसमर्पयामि शीतलंनिर्मलं
तोयंकर्पूरेणसुवासितम् आचम्यतांसुरश्रेष्ठमयादत्तंहिभक्तितः आचमनीयं॰ पंचामृतेनस्नपनंतत्तन्मंत्रैश्चकारयेत्
गोक्षीरधामन्देवेशगोक्षीरेणमयाकृतम् स्नपनंदेवदेवेशगृहाणपरमेश्वर दुग्धस्नानं॰ दध्नाचैवमयादेवस्नपनंक्रि

यनेतव गृहाणभक्त्यादत्तंमेप्रसन्नोमेभवाव्यय दधि॰ सर्पिषादेवदेवेश स्नपनंक्रियतेमया उमाकांतगृहाणेदंश्रद्धयासुरसत्तम
घृतस्नानं॰ इदंमधुमयादत्तंतवतुष्ट्यर्थमेवच गृहाणशंभोत्वंभक्त्याममशांतिप्रदोभव मधुस्ना॰ सितयादेवदेवेशस्नपनंक्रियतेमया
गृहाणशंभोमेभक्त्यासुप्रसन्नोभवप्रभो शर्करास्ना॰ कावेरीनर्मदावेणीतुंगभद्रासरस्वती गंगाचयमुनाचैवताभ्यःस्नानार्थमाहृ
तम् गृहाणत्वमुमाकांतस्नानायश्रद्धयाजलं स्नानं॰ एतद्वासोमयादत्तंसोत्तरीयंसुशोभनं गृहाणत्वंसुरश्रेष्ठममवासःप्रदोभव वस्त्रं॰
यज्ञोपवीतंसौवर्णंमयादत्तंचशंकर गृहाणपरयातुष्ट्यातुष्टिदोभवसर्वदा उपवीतं॰ सुगंधंचंदनंदिव्यंमयादत्तंतवप्रभो भक्त्यापरम
याशंभोसुभगंकुरुमेभव चंदनं॰ मालतीचंपकादीनिकुसुदान्युत्पलानिच बिल्वपत्राणिपूजार्थंस्वीकुरुत्वमुमापते पुष्पं॰ धूपंविशिष्टं
परमंसर्वौषधिविजृंभितम् गृहाणपरमेशानममोपरिदयांकुरु धूपं॰ दीपंचपरमंशंभोघृतवर्त्तिषुयोजितम् दत्तंगृहाणदेवेशमम
ज्ञानप्रदोभव दीपं॰ शाल्योदनघृतापूप पायसादिसमन्वितम् नैवेद्यंविविधंदत्तंभक्त्यामेप्रतिगृह्यताम् नैवेद्यं॰ नैवेद्यमध्येपा
नीयंमयादत्तंहिभक्तितः स्वीकुरुष्वमहादेवप्रसन्नोभवसर्वदा मध्येपानीयं॰ उत्तरापोशनार्थंवाआनीतंजलमुत्तमम् ॥
गृहाणत्वमुमाकांतसर्वदुःखनिवारक उत्तरापोशनं॰ कर्पूरैलालवंगादिपूगीफलसमन्वितम् तांबूलंकल्पितंभक्त्यागृहाण
गिरिजाप्रिय तांबूलं॰ इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि॥ ॥फलंसमर्प॰
हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः दक्षिणाकांचनोदेवस्थापितामेतवाग्रतः दक्षिणा समर्पयामि ॥दीपावलीम-

यादत्तास्रुवर्निधृतसंयुता॥ पंचार्त्तिक्यप्रदानेनममतेजःप्रदोभव॥ पंचार्त्तिक्यं॰ यानिकानिचपापानिजन्मांतरकृतानिच तानि
तानिविनश्यंतिप्रदक्षिणपदेपदे प्रदक्षिणां॰ मृत्युंजयायरुद्रायनीलकंठायशंभवे॥ अमृतेशायसर्वायमहादेवायतेनमः न
मस्कारं॰ सेवंतिकाबकुलचंपकपाटलाब्जैःपुन्नागजातिकरवीररसालपुष्पैः बिल्वप्रवालतुलसीदलमालतीभिस्त्वांपूजया
मिजगदीश्वरमेप्रसीद॥ मंत्रपुष्पं॰ निपत्यदंडवद्भूमौप्रणम्यचपुनःपुनः क्षमापयित्वादेवेशंरात्रौजागरणंचरेत् गीतवा
दित्रनृत्याद्यैर्गृहेवादेवतालये एवंपूजाप्रकर्त्तव्याशंकरस्यचतुष्टिदा॥ इष्टिंतंचनराणांतुददातिभगवान्हरः ॥
इतिश्रीस्कंदपुराणेशनिप्रदोषव्रतकथोद्यापनपूजासमाप्ता अथपक्षप्रदोषव्रतम् सूतउवाच काचिच्चवि-
प्रवनितासपुत्रादुःखकर्षिता॥ शांडिल्यस्यमुखाच्छ्रुत्वाप्रदोषेशिवपूजनम् इत्युक्तामुनिनासाध्वीसाविप्रवनितापुनः
तंप्रणम्याथपप्रच्छशिवपूजाविधेःक्रमम् शांडिल्यउवाच पक्षद्वयेत्रयोदश्यांनिराहारोभवेद्दिवा घटित्रयादस्तमयात्पू
र्वस्नानंसमाचरेत्॥ शुक्लांबरधरोभूत्वावाग्यतोनियमान्वितः कृतसंध्याजपविधिःशिवपूजांसमारभेत् देवस्यपुरतःस
म्यग्उपलिप्यनवांभसा विधायमंडपंरम्यंधौतवस्त्रादिभिर्द्दृतम् वितानाद्यैरलंकृत्यफलपुष्पनवांकुरैः विचित्रपद्ममुद्धृ
त्यवर्णपंचकसंयुतम् तत्रोपविश्यतुशुभेस्पूपविष्टः स्थिरासने सम्यक्संपादिताशेषपूजोपकरणःशुचिः आगमोक्तेन
मंत्रेणपीठमामंत्रयेत्सुधीः ततःकृत्वात्मशुद्धिंचभूतशुद्ध्यादिकंक्रमात्॥ प्राणायामत्रयंकुर्याद्बीजमंत्रैःसबिंदुकैः मा

१४

तृकान्यस्यविधिवद्ध्यात्वातांदेवतांपराम् समाप्यमातृकांभूयोध्यात्वाचैवंपरंशिवम् वामभागेगुरुंनत्वादक्षिणेगणपंयजेत् अंसोरुयु
ग्मेधर्मादीन्न्यस्यनाभौचपार्श्वयोः अधर्मादीननंतादीन्हृदिपीठमनुन्यसेत् आधारशक्तिमारभ्यज्ञानात्मानमनुक्रमात् उत्क्र
मेणविन्यस्यत्हृदयेसाधुभाविते नवशक्तिमयेरम्येध्यायेद्देवमुमापतिम् चंद्रकोटिप्रतीकाशंत्रिनेत्रंचंद्रभूषणम् आपिंगलजटाजू
टरत्नमौलिविराजितम् नीलग्रीवमुदारांगंनानाहारोपशोभितम् वरदाभयहस्तंचहरिणंचपरश्वधम् दधानंनागवलयंकेयूरां
गदभूषणम् व्याघ्रचर्मपरीधानंरत्नसिंहासनेस्थितम् ध्यात्वातद्वामभागेचगिरिजांभक्तवत्सलाम् भास्वज्जपाप्रसूनाभामुद्या
र्कसमप्रभाम् विद्युत्पुंजनिभांतन्वींमनोनयननंदिनीम् बालेंदुशेखरांस्निग्धांनीलाकुंचितकुंतलां भृंगसंघातरुचिरनीलालक
विराजितां मणिकुंडलविद्योतमुखमंडलविभ्रमाम् नवकुंकुमपंकाभांकपोलतलदर्पणाम् मधुरस्मितविभ्राजदरुणाधरप-
ल्लवाम् कंबुकंठींशिवास्यघृक्तुचपंकजकुड्मलाम् पाशांकुशाभयाभीष्टविलसंतींचतुर्भुजाम् अनेकरत्नविलसत्कंकणांगद
मुद्रिकाम् वलित्रयेणविलसद्धेमकांचीगुणान्विताम् रक्तमाल्यांबरधरांदिव्यचंदनचर्चिताम् दिक्पालवनितामौलिसन्नतांघ्रिसर-
सीरुहाम् रत्नसिंहासनारूढांसर्पराजपरिच्छदाम् एवंध्यात्वामहादेवंदेवींचगिरिजांशुभाम् न्यासक्रमेणसंपूज्यदेवंगंधादिभिःक्र
मात् पंचभिर्ब्रह्मभिःकुर्यात्प्रोक्तःस्थानेषुवाहृदि पृथक्पुष्पांजलिंदेहेमूलेनचहृदित्रयम् पुनःस्वयंशिवोभूत्वामूलमंत्रेणसा
धकः ततःसंपूजयेद्देवंबाह्यपीठेपुनःक्रमात् २५ संकल्पंप्रवदेत्तत्रपूजारंभेसमाहितः कृतांजलिपुटोभूत्वाचिंतयेद्धृदिशंक

ग्र॰रा॰ ४५

रम् ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये अशेषाघविनाशाय प्रसीदममशंकर दुःखशोकाग्निसंतप्तंसंसारभयपीडितम् बहुरो
गाकुलंदीनंत्राहिमांवृषवाहन आगच्छदेवदेवेशमहादेवाभयंकर गृहाणसहपार्वत्यात्वंचपूजांमयाकृताम् इतिसंकल्पविधि
वद्वाद्यपूजांसमाचरेत् गुरुंगणपतिंचैवयजेत्सव्यापसव्ययोः क्षेत्रेशमीशकोणेतुयजेद्वास्तोष्पतिंक्रमात् वाग्देवींचयजेत्तत्र
ततःकात्यायनींयजेत् धर्मज्ञानंसवैराग्यमैश्वर्यंचनमोंतकैः स्वरैरीशादिकोणेषुपीठपादावनुक्रमात् आभ्यांबिंदुविसर्गाभ्या
मधर्मादीन्प्रपूजयेत् गात्ररूपांचतुर्दिक्षुमध्येनंतंसतारकम् सत्वादित्रिगुणांस्तंतुरूपान्पीठेषुविन्यसेत् अतऊर्ध्वंछदमाया
लक्ष्म्योर्देव्याशिवेनच तदंतेचांबुजंभूयःसकलंमंडलोत्तमम् यत्रकेसरकिंजल्कव्याप्तंतत्राक्षरैःक्रमात् आत्मत्रयमथाभ्यर्च्य
मध्येमंडपमादरात् वामांज्येष्ठांचगौरींचभवार्थेदिक्षुपूजयेत् वामाद्यानवशक्तीश्चनवस्वरयुताजपेत् हृदिबीजत्रयाद्यैश्च
पीठमंत्रेणचार्चयेत् आवृत्तिःप्रथमांगैस्तुपंचभिर्मूर्तिपंक्तिभिः त्रिंशद्भिर्मूर्तिभिश्चान्यैर्निधिद्वयसमन्वितैः अनंताद्यैःपराद्या
न्यामातृभिश्चवृषादिभिः सिद्धिभिश्चाणिमाद्याभिरिंद्राद्यैश्चतदायुधैः वृषभक्षेत्रचंडेशदुर्गाश्चस्कंदनंदिनौ गणेशसैन्यपौचै
वस्वस्वलक्षणलक्षितौ ४० अणिमामहिमाचैवगरिमालघिमातथा ईशित्वंचवशित्वंचप्राप्तिःप्राकाम्यमेवच अष्टैश्वर्याणि
चोक्तानितेजोरूपाणिकेवलम् पंचभिर्ब्रह्मभिःपूर्वंहृल्लेखाद्यादिभिःक्रमात् अंगैरुमाद्यैरिंद्राद्यैःपूर्वोक्तैर्मुनिभिःस्तुतैः ॥
उमांचंडेश्वरादींश्चपूजयेदुत्तरादितः एवमावरणैर्युक्तंतेजोरूपंसदाशिवम् उमयासहितंदेवमुपचारैःप्रपूजयेत् क्रमात

ग्रंथो १२ १५

श्रितशंखस्थतीर्थैःपंचामृतैरपि अभिषिच्यमहादेवंरुद्रसूक्तैःसमाहितः कल्पयेद्वैदिकैर्मंत्रैरासनाद्युपचारकान् आसनंकल्पयेद्धैमं
दिव्यवस्त्रसमन्वितम् अर्घ्यमष्टगुणोपेतंपाद्यंशुद्धोदकेनच तेनैवाचमनंदद्यान्मधुपर्कंमधूत्तमं पुनराचमनंदत्वास्नानमंत्रैः
प्रकल्पयेत् वसंतेचोपवीतंचभूषणानिनिवेदयेत् गंधमष्टांगसंयुक्तंसुपूतंविनिवेदयेत् ततश्चबिल्वमंदारकल्हारसरसी
रुहम् धत्तूरंकर्णिकारंचद्रोण पुष्पंचमल्लिकाम् अपामार्गंचतुलसीमाधवींचंपकादिकम् बृहतीकरवीराणियथालब्धानि
भामिनि निवेदयेत्सुगंधीनीमाल्यानिविविधानिच धूपंकालागरूत्पन्नंदीपंचविमलंशुभम् अथपायसनैवेद्यंसघृतंसोप
दंशकम् मोदकापूपसंयुक्तंशर्करागुडसंयुतम् मधुरान्नंदधियुतंजलपानसमन्वितम् तेनैवहविषावन्हौजुहुयान्मंत्रभाविते
आगमोक्तेनविधिनागुरुवाक्यनियंत्रितः नैवेद्यांशंभवेभूयोदत्वातांबूलमुत्तमम् फलंनीराजनंदिव्यंछत्रंदर्पणमुत्तमम् समर्प
यित्वाविधिवन्मंत्रैर्वैदिकतांत्रिकैः यद्यशक्तःस्वयंनिस्वोयथाविभवमर्चयेत् भक्त्यादत्तेनगौरीशःपुष्पमात्रेणतुष्यति॥
अथांगभूतान्सकलान्गणेशादीन्प्रपूजयेत् स्तवैर्नानाविधैस्तुत्वासाष्टांगंप्रणमेद्बुधः ततःप्रदक्षिणीकृत्यवृषचंडेश्वरा
दिकान् पूजांसमर्प्यविधिवत्प्रार्थयेद्गिरिजापतिम् जयदेवजगन्नाथजयशंकरशाश्वत जयसर्वसुराध्यक्षजयसर्वसुरा
र्चित जयसर्वगुणातीतजयसर्ववरप्रद ६० जयनित्यंनिराधारजयविश्वंभराव्यय जयविश्वैकवंद्येशजयनागेंद्रभूषण॥
जयगौरीपतेशंभोजयनित्यंनिरंजन जयनाथकृपासिंधोजयभक्तार्तिभंजन जयदुस्तारसंसारसागरोत्तारणप्रभो प्रसी

दमेमहादेवसंसारादस्मात्त्विद्यतः सर्वपापक्षयंकृत्वारक्षमांपरमेश्वर महादारिद्र्यमग्नस्यमहापापहतस्यच महाशोकनिविष्टस्य
महारोगातुरस्यच ऋणभारपरीतस्यदह्यमानस्यकर्मभिः ग्रहैःप्रपीड्यमानस्यप्रसीदममशंकर दरिद्रीप्रार्थयेद्देवंपूजांतेगिरि
जापतिम् अभाग्योवापिराजावाप्रार्थयेद्देवमीश्वरम् दीर्घमायुःसदारोग्यंकोशवृद्धिर्बलोन्नतिः ममास्तुनित्यमानंदःप्रसा
दात्तवशंकर शत्रवश्चक्षयंयांतुप्रसीदंतुममप्रजाः नश्यंतुदस्यवोराज्येजनाःसंतुनिरापदः दुर्भिक्षमरिसंतापाःशमंयांतु
महीतले सर्वसस्यसमृद्धिश्चभूयात्सुखमयादिशः एवमाराधयेद्देवंप्रदोषेगिरिजापतिम् ब्राह्मणान्भोजयेत्पश्चाद्दक्षि-
णाभिश्चपूजयेत् सर्वपापक्षयकरीसर्वदारिद्र्यनाशिनी शिवपूजेत्यमाख्यातासर्वाभीष्टफलप्रदा महापातकसंघातम
धिकंचोपपातकम् शिवद्रव्यापहरणात्सर्वमन्यद्विनाशयेत् ब्रह्महत्यादिपापानांपुराणेषुस्मृतिष्वपि प्रायश्चित्तानिदृष्टानि
नशिवद्रव्यहारिणाम् बहुनात्रकिमुक्तेनश्लोकार्द्धेनब्रवीम्यहम् ब्रह्महत्याशतंवापिशिवपूजाविनाशयेत् मयाकथितमे
तत्तेप्रदोषेशिवपूजनम् रहस्यंसर्वजंतूनामत्रास्त्येवनसंशयः एताभ्यामपिपुत्राभ्यांशिवपूजाविधीयताम् अतःसंवत्स
रादेवपरांसिद्धिमवाप्स्यथ इतिशांडिल्यवचनमाकर्ण्यद्विजभामिनी ताभ्यांतुसहबालाभ्यांप्रणनाममुनेःपदे स्युवाच
अहमद्यकृतार्थास्मितवदर्शनमात्रतः एतौकुमारौभगवन्त्वामेवशरणंप्रभो एषमेतनयोब्रह्मन्शुचिव्रतइतीरितः ८०
एषराजसुतोनाम्नाधर्मपुत्रःकृतोमया एतावहंचभगवन्भवच्चरणकिंकराः समुद्धरास्मिन्पतितानघोरेदारिद्र्यसागरे

इतिप्रपन्नाशरणंद्विजांगनानस्याथवाक्यैरमृतोपमानैः उपादिदेशापितयोःकुमारयोर्मुनिःशिवाराधनमंत्रविद्याम् अथोपदि
ष्टौमुनिनाकुमारौब्राह्मणीचसा तंप्रणम्यसमामंत्र्यजग्मुस्तेशिवमंदिरात् ततःप्रभृतितौबालौमुनिवर्योपदेशतः प्रदोषेपा
र्वतीशस्यपूजांचक्रतुरंजसा एवंपूजयतोर्देवंद्विजराजकुमारयोः सुखेनैवव्यतीयायतयोर्मासचतुष्टयम् कदाचिद्राजपु
त्रेणविनासौद्विजनंदनः स्नातुंगतोनदीतीरेचचार बहुलीलया तत्रनिर्झरनिपातनिर्भिन्नेवप्रकर्दमे निधानकलशंस्थूलं
प्रस्फुरंतंददर्शह तंदृष्ट्वासहसागत्यहर्षकौतुकविह्वलः देवोपपन्नंमन्वानोगृहीत्वाशिरसादधौ ससंभ्रमंसमानीयनिधान
कलशंबलात् निधायभवनस्यांतंमातरंसमभाषत मातर्मातरिमंपश्यप्रसादं गिरिजापतेः निधानकुंभरूपेणदर्शितंकरु
णात्मना अथसाविस्मितासाध्वीसमाहूयनृपात्मजम् स्वपुत्रंप्रतिनंद्याहमानयंतीशिवार्चनम् शृणुतामेवचःपुत्रौनिधान
कलशीमिमाम् समंविभज्यगृण्हीतांममशासनगौरवात् इतिमातृवचश्शुत्वातुतोषद्विजनंदनः प्रत्याहराजपुत्रस्तांविश्र
ब्धःशंकरार्चने मातस्तवसुतस्यैवसुकृतेनसमागतम् नाहंगृहीतुमिच्छामिविभक्तंधनसंचयम् आत्मनःसुकृतात्लब्धं-
स्वयमेवभुनक्त्वसौ सएवभगवानीशःकरिष्यतिकृपांमयि एवमभ्यर्चतोःशंभुंभूयोपिपरयामुदा संवत्सरोव्यतीयाय
तस्मिन्नेवगृहेतयोः अथैकदाराजसूनुः सहतेनद्विजन्मना वसंतसमयेप्राप्तेविजहारवनांतरे अथदूरंगतौक्कापिवनेद्वि
जनृपात्मजौ गंधर्वकन्याःक्रीडंतीःशतशस्तावपश्यताम् ताःसर्वाश्चारुसर्वांगीर्विहरंतीर्मनोहरम् दृष्ट्वाद्विजात्मजोदूरा

दुवाच नृपनंदनम् इतः परं न गंतव्यं विहरंत्यत्र नः स्त्रियः स्त्रीसंनिधानं विबुधास्त्यजंति विमलाशयाः एताः कैतवधारिण्यो धन
यौवनदुर्मदाः मोहयंत्यो जनं दृष्ट्वा वाचानुनयकोविदाः अतः परित्यजेत्स्त्रीणां सन्निधिं सहभाषणम् निजधर्मरतो विद्वान् ब्रह्म
चारी विशेषतः अतोहं नोत्सहे गंतुं क्रीडास्थानं मृगीदृशाम् इत्युक्त्वा द्विजपुत्रस्तु निवृत्तो दूरतः स्थितः अथ सो राजपुत्रस्तु कौ
तुकाविष्टमानसः तासां विहारपदवीमेक एवोभयोर्ययौ तत्र गंधर्वकन्यानां मध्ये त्वेका वरांगना दृष्ट्वायांतं राजपुत्रं चिंतया
मास चेतसा अहो कोयं सुदारांगो युवा सर्वांगसुंदरः मत्तमातंगगमनो लावण्यामृतवारिधिः लीलालोलविशालाक्षो मधुर
स्मितपेशलः मदनोपमरूपश्रीः सुकुमारांगलक्षणः इत्याश्चर्ययुता बाला दूराद्दृष्ट्वा नृपात्मजम् सर्वाः सखीः समालोच्य वच
नं चेदमब्रवीत् इतोपदूरे हे सख्यो वनमस्त्येकमुत्तमम् विचित्रचंपकाशोकपुन्नागबकुलैर्युतम् तत्र गत्वा तरुं सर्वे प्रसिच्य
कुसुमोत्करम् भवत्यः पुनरायांतु तावत्तिष्ठाम्यहं त्विह इत्यादिष्टः सखीवर्गो जगामापि वनांतरम् सापि गंधर्वजातस्यो न्यस्त
दृष्टिर्नृपात्मजे तां समालोच्य तन्वंगीं नवयौवनशालिनीम् बालां स्वरूपसंपत्त्या परिभूततिलोत्तमाम् राजपुत्रः समागम्य कौतु
कोत्फुल्ललोचनः अवापदैवयोगेन मदनस्य शरव्यथाम् गंधर्वतनया सापि प्राप्तायनृपसूनवे उत्थाय तरसा तस्मै प्रददौ पल्लवा
सनम् कृतोपचारमासीनं तमासाद्य सुमध्यमा पप्रच्छ तद्रूपगुणैर्ध्वस्तधैर्या कुलेंद्रिया कस्त्वं कमलपत्राक्ष कस्माद्देशादि-
हागतः कस्य पुत्र इति प्रेम्णा पृष्टः सर्वं न्यवेदयत् विदर्भराजतनयं विध्वस्तपितृमातृकम् शत्रुभिश्च हृतस्थानमात्मानं पर

यागिरा सर्वभावेनभूयस्तांपप्रछनृपनंदनः कात्वंवामोरुकिंचात्रकार्यंतेकस्यचात्मजा किमिवध्यायसित्द्दिकिंवावक्तुमिहेछसि इत्युक्तासापुनःप्राहश्रृणुराजेंद्रसत्तम आस्तेविद्रविकोनामगंधर्वाणांकुलाग्रणीः तस्याहमस्मितनयानाम्नाचांशुमतीशुभा ॥ त्वामायांतंविलोक्याहंत्वत्संभाषणलालसा त्यक्तासखीजनंसर्वमेकैवास्मीमहामते सर्वसंगीतविद्यासुनमत्तोन्यास्ति- काचन ममगानेनतुष्यंतिसर्वाअपिसुरस्त्रियः साहंसर्वकलाभिज्ञाज्ञातासर्वजनैंगिता तवाहमीप्सितंवेद्मिमयितेसंग तंमनः तथाममापितेसौख्यंदैवेनप्रतिपादितम् आवयोःस्नेहभेदोत्रनाभिभूयादितःपरं इतिसंभाष्यतेनाशुप्रेम्णागं धर्वकन्यका मुक्ताहारंददौतस्मैस्वकुचांतरभूषणम् तमादायाद्भुतंहारंसतस्याःपरमाकुलः गूढहर्षपराशिक्ताभिदमा हनृपात्मजः सत्यमुक्तंत्वयाभीरुतथाप्येकंवदाम्यहम् त्वत्करास्यस्यानिस्वस्यकथंमेभवसिप्रिया यात्वंपितृमतीबालावि लंघ्यपितृशासनम् स्वछंदाचरणंकर्तुमृदेत्वंकथमर्हसि इतितस्यवचःश्रुत्वातंप्रत्याहशुचिस्मिता अस्तुनामतथैवाहंकु रिष्येपश्यकौतुकम् गछस्वभवनंकांतपरश्वःप्रातरेवतु आगछपुनरत्रैवकार्यमस्तिचनोमृषा इत्युक्त्वातंनृपंकांतंसासं गतसखीजना अपक्रामतचार्वंगीसचापिनृपनंदनः समभ्येत्यहर्षेणद्विजपुत्रस्यसंनिधिं सर्वमाख्यायतेनैवसार्धं- स्वभवनंययौ तांचविप्रसतींमूयोहर्षयित्वानृपात्मजः परश्वोद्विजपुत्रेणसार्धंतस्मिन्वनेययौ सतयापूर्वनिर्दिष्टंस्थानं प्राप्यनृपात्मजः गंधर्वराजमद्राक्षीत्दुहित्राचसमन्वितम् सगंधर्वपतिःप्रासादमभिनंद्यकुमारकौ उपवेश्यासनेरम्येसा

जपुत्रमभाषत गंधर्वउवाच राजेंद्रपुत्रपूर्वेद्युःकैलासंगतवानहम् तत्रापश्यंमहादेवंपार्वत्यासहितंविभुम् आहूयमांस
देवेशःसर्वेषांत्रिदिवौकसाम् सन्निधावाहभगवान्करुणामृतवारिधिः धर्मगुप्ताह्वयःकश्चिद्राजपुत्रोस्तिभूतले अकिंच
नोभ्रष्टराज्योहतबंधुश्चशत्रुभिः सबालोगुरुवाक्येनमदर्चायांरतःसदा अद्यतस्यितरःसर्वेमांप्राप्तास्तत्प्रभावतः तस्यत्वमपि
साहाय्यंकुरुगंधर्वसत्तम यथासनिजराज्यस्थोहतशत्रुर्भविष्यति इत्याज्ञप्तोहमीशेनसंप्राप्यनिजमंदिरं अनयाचदुहित्रात्वद्व
हुशोभ्यर्थितस्तथा ज्ञात्वेमंसकलंशंभोर्नियोगंकरुणात्मनः आदायेमांदुहितरंप्राप्तोस्मीदवनांतरम् अतएनांप्रयच्छामि-
कन्यामंशुमतींतव हत्वाशत्रून्स्वराष्ट्रेत्वांस्थापयामिशिवाज्ञया तस्मिन्पुरेत्वमनयाभुक्त्वाभोगान्यथोचितान् दशवर्षस
हस्रांतेगंतासिगिरिशालयम् तत्रापिममकन्येयंत्वामेवप्रतिपत्स्यते अनेनैवस्वदेहेनदिव्येनशिवसन्निधौ इतिगंधर्वराज
स्तमाभाष्यनृपनंदनम् तस्मिन्वनेस्वदुहितुःपाणिग्राहमकारयत् पारिबर्हमदात्तस्मैरत्नभारान्महोज्वलान् चूडामणिंचं
द्रनिभंमुक्ताहारांश्चभास्वरान् दिव्यालंकारवासांसिकार्तस्वरपरिच्छदान् गजानामयुतंभूयोनियुतंनीलवाजिनाम् स्यं
दनानांसहस्राणिसौवर्णानिमहांतिच पुनरेकंरथंदिव्यंधनुश्चक्रायुधोपमम् मंत्रास्त्राणांसहस्राणितूणीचाक्षयसाय
कौ अभेद्यांसर्वजंतूनांशक्तिंचरिपुमर्दिनीम् दुहितुःपरिचर्यार्थंदासीनांचसहस्रकम् ददौप्रीतमनास्तस्मैधनानिवि
विधानिच गंधर्वसैन्यमत्युग्रंचतुरंगसमन्वितम् पुनश्चतत्सहायार्थंगंधर्वाधिपतिर्ददौ इत्थंराजेंद्रतनयःसंप्राप्यश्रिय

मुत्तमाम् अभीष्टजायासहितोऽसुमुदे निजसंपदा कारयित्वा स्वदुहितुर्विवाहं समयोचितम् ययौ विमानमारुह्य गंधर्वाधिप
तिर्दिवं धर्मगुप्तः कृतोद्वाहः सहगंधर्वसेनया निःशोषितारातिबलः प्रविवेश निजं पुरम् ततोऽभिषिक्तः सचिवैर्ब्राह्मणैश्च महोत्त
मैः रत्नसिंहासनारूढश्चक्रे राज्यमकंटकं यो विप्रवनितापूर्वं तमपुष्यात्स्वपुत्रवत् सैव माताऽभवत्तस्य स भ्राता द्विजनंदनः
गंधर्वतनया जाया विदर्भविषयेश्वरः आराध्य देवं गिरिशं धर्मगुप्तोऽनृपोऽभवत् एवमन्येऽपि समाराध्य प्रदोषे गिरिजापतिम् लभं
ते भीप्सितान् कामान्देहांते तु परां गतिम् सूत उवाच एतन्महाव्रतं पुण्यं प्रदोषे शंकरार्चनम् धर्मार्थकाममोक्षाणां यदेत
त्साधनं परम् य एतच्छृणुयान्नित्यमाख्यानं परमाद्भुतम् प्रदोषे शिवपूजांते कथयेद्वा समाहितः न भवेत्तस्य दारिद्र्यं ज
न्मांतरशतेष्वपि ज्ञानैश्वर्यसमायुक्तः सोंऽते शिवपुरं व्रजेत् ये प्राप्य दुर्लभमिदं मनुजाः शरीरं कुर्वंत्यहो न परमेश्वरपादपू
जाम् धन्यास्त एव निजपुण्यजितत्रिलोकास्तेषां पदांबुजरजो भुवनं पुनाति १६४ अथोद्यापनं शनिप्रदोषवत् ति
थ्यादीनां तु संकल्पपुण्याहवाचनपूर्वकम् अब्दमेकं व्रतं कृत्वा ततोद्यापनमाचरेत् उमयासहितं रुद्रं स्वर्णेन च कारयेत्
रौप्येण वृषभं कृत्वा कलशोपरि पूजयेत् ब्रह्माद्यावाहयेत्तत्र लिंगतोभद्रमंडले स्वशाखोक्तेन विधिना हुनेत्पृततिलोदनं
पृथक् शिव शिवा मंत्रैरष्टोत्तरशतद्वयम् इति श्रीस्कंदपुराणे सोद्यापनपक्षप्रदोषः समाप्तः॥ ॥ अथ मा
र्गशीर्षशुक्लत्रयोदश्यामनंगत्रयोदशीव्रतम् श्रीकृष्ण उवाच शृणु पार्थ व्रतं श्रेष्ठं नाम्नानंगत्रयोदशी

याशिवायैपुराप्रोक्ताप्रसंनेनेंदुमौलिना गौर्युवाच पुत्रसौभाग्यकरणाख्यातानंगत्रयोदशी तस्याव्रतंमहादेवममापिकथ
यप्रभो कस्मिन्मासेप्रकर्त्तव्यं संपूर्णंचकथंभवेत् पूज्यानिकानिनामानिविधिनाकेनवेमृड दुर्भगानांचनारीणांसौभाग्यक
रणंप्रभो वंध्यानांपुत्रजनकंधनधान्यविवर्धनम् एतद्व्रतंमहादेवप्रसादाद्वक्तुमर्हसि ईश्वरउवाच कथयामिनसंदेहो-
महापुण्यंमहाफलम् चीर्णेनयेनदेवेशिसर्वंसंपद्यतेस्फुरवम् स्त्रीभिश्चैवविधातव्यंकर्त्तव्यंचप्रयत्नतः हेमंतेहिऋतौप्रा-
प्तेमासिमार्गशिरेशुभे शुक्लपक्षेत्रयोदश्यामुपवासंतुकारयेत् मल्लिकादंतकाष्ठंचपूजांचमरुवेणतु नारंगेणार्घ्य
दानंचनैवेद्येफेणिकास्तथा गंधपुष्पैःस्तथाधूपैरर्चयेच्चयथाविधि अक्षतैश्चफलैश्चैवएकाग्रहृदयस्थितः सम्यग्जि
तेंद्रियोभूत्वाअनंगंत्हृदिकल्पयेत् पश्चात्प्रदक्षिणांकृत्वाअर्घ्यंचैवनिवेदयेत् नमस्कुर्यादनंगंचमंत्रेणानेनभामिनि नमो
स्त्वनंगदेवायसर्वसंगनिवासिने त्र्यक्षुपस्थायनित्यायसूक्ष्मायपरमेष्ठिने स्वर्गेचैवतुपातालेमर्त्यलोकेतथैवच सर्वव्यापि
न्ननंगत्वंगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यम् पूजयेत्स्वस्थचित्तेनप्राशयेन्मधुवैनिशि रंभातुल्याभवेन्नारीसौभाग्यमतुलं
भवेत् नश्यंतिसर्वपापानिअन्यजन्मकृतानिच लावण्यमतुलंचैवरूपैश्वर्यसमन्वितम् अश्वमेधस्ययज्ञस्यफलंप्रा
प्नोतिमानवः पौषेशुक्लत्रयोदश्यामौंबरंदंतधावनम् जातिपुष्पैःपूजनंस्याद्दाडिमेनार्घ्यमेवच अशोकवर्त्तिकाःस्नि-
ग्धानैवेद्यंचप्रकल्पयेत् उपोष्यपूजयेद्देवंभक्त्यानाड्येश्वरंप्रिये नाड्येश्वरायशर्वायईश्वरायनमोनमः नमस्तेभववे

शाय गृहाणार्घ्यं नमो नमः इत्यर्घ्यं व्रतस्थः स्वस्थचित्तेन चंदनं प्राशयेन्निशि सर्वपापविशुद्धात्मा सौभाग्यमतुलं भवेत् मा
घे शुक्लत्रयोदश्यामुपवासं च कारयेत् विष्णुक्रांतेन काष्ठेन दंतान्संशोधयेच्छुचिः कुंदपुष्पैः समभ्यर्च्य अर्घ्यं जंबीरपूरकं नैवेद्ये
शर्करां दद्याद्देवो योगेश्वरस्तथा योगेश्वराय देवाय योगजंबूनिवासिने गृहाणार्घ्यं मया दत्तं योगेश्वर नमोस्तु ते इत्यर्घ्यं मौ-
क्तिकं प्राशयेद्रात्रौ वाजपेयफलं लभेत् फाल्गुनस्यासिते पक्षे त्रयोदश्यां शुचिस्मिता बदर्या दंतकाष्ठं च जपापुष्पैस्तु पूजयेत्
अपूपैस्तु च नैवेद्यं वीरेशं नाम पूजयेत् वीरेश्वर वीरभद्र उमाकांत स्मरेश्वर सपूगं च गृहाणार्घ्यं मया दत्तं महेश्वर सीतातुल्या
भवेन्नारी कंकोलं प्राशयेन्निशि चैत्रे शुक्लत्रयोदश्यां मल्लिका दंतधावनं दमनेनार्चयेद्देवं जंबीरार्घ्यं प्रकल्पयेत् नैवेद्ये कर्जि
काः प्रोक्ता विश्वरूपं तु पूजयेत् नमस्ते विश्वरूपाय स्वरूपाय महात्मने गृहाणार्घ्यं मया दत्तं विश्वरूप नमोस्तु ते इत्यर्घ्यं उ
मातुल्या भवेन्नारी कर्पूरं प्राशयेन्निशि वैशाखशुक्लपक्षे तु अपामार्गेण पूर्ववत् पूजा च मल्लिकापुष्पैः खर्जूरार्घ्यं तु दापयेत्
नैवेद्ये वटकं दद्यान्महारूपं तु पूजयेत् महारूप नमस्तेस्तु सर्वविज्ञानरूपिणे गृहाणार्घ्यं मया दत्तं महारूप नमोस्तु ते इ
दमर्घ्यम् ततः शुद्धमना भूत्वा जातीतोयं पिबेन्निशि ज्येष्ठे शुक्लत्रयोदश्यां निर्गुंडी दंतधावनम् पूजा बकुलपुष्पैश्च
श्रीफलेनार्घ्यकल्पना नैवेद्ये मंडकान्दद्यात् लवंगं प्राशयेन्निशि प्रद्युम्नं पूजयेद्देवं सर्वपापप्रणाशनम् नमस्ते पशुपत
ये प्रद्युम्न भुवनेश्वर गृहाणार्घ्यं मया दत्तं प्रद्युम्न परमेश्वर इत्यर्घ्यम् सुवर्णशतदानस्य फलमक्षय्यं भवेत् शुचिशुक्ले त्र

योदश्यांनारिंगंदंतधावनम् कदंबैःपूजयेद्देवंनारीकेलार्घ्यदानतः नैवेद्यंदधिभक्तंचपूजयेच्चउमापतिम् स्वस्थेनमनसातत्रबि
ल्वतोयंपिबेन्निशि उमापतेमहाबाहोकामदेवस्यनाशक गृहाणार्घ्यंचंद्रमौलेउमाकांतनमोस्तुते इत्यर्घ्यं वाजपेयस्ययज्ञस्य
फलंप्राप्नोतिमानवः श्रावणस्यसितेपक्षेत्रयोदश्यांशुभव्रतः कारंजंदंतकाष्ठंचपद्मपुष्पैस्तुपूजयेत् मातुलिंगंचार्घ्यदा
नेदद्याद्भक्तेनचेतसा नैवेद्यंपायसंदद्याच्छूलपाणिंतुपूजयेत् प्राशयेदगरुंचैवरात्रौजागरणंचरेत् नमस्तेगिरिजानाथ-
नमस्तेभक्तिभावन गृहाणार्घ्यंमयादत्तंशूलपाणेनमोस्तुते इत्यर्घ्यम् सौत्रामण्यास्ययज्ञस्यफलमष्टगुणंभवेत् भाद्रे
शुक्लत्रयोदश्यांकंकोलंदंतधावनम् अर्चयेच्चंपकैःपुष्पैर्नैवेद्यैर्घृतपूरिकाः अर्घ्येनिंबूफलंदद्यात्सद्योजातंतुपूजयेत् ॥
ततःस्वस्थमनाभूत्वाकेशरंप्राशयेन्निशि त्रिदशेशायदेवायसद्योजातायतेनमः गृहाणार्घ्यंमयादत्तंसद्योजातनमोस्तुते
इत्यर्घ्यम् दशानामश्वमेधानांफलमाप्नोतिमानवः आश्विनेचत्रयोदश्यांकंकतीदंतधावनम् अर्चयेत्करवीरैस्तुअ-
र्घ्येक र्कटिकाफलम् त्रिदशाधिपतिःपूज्योनैवेद्येशुभ्रमंडकान् प्राशयेत्कांचनंतोयंनिशिदेवंप्रपूज्यच त्रिदशाधिपदे
वेशउमाकांतमहेश्वर त्रिधारूपमयःस्त्वंहिअर्घोयंप्रतिगृह्यताम् इत्यर्घ्यम् चातुर्मासस्ययज्ञस्यफलंदशगुणंभवेत्
कार्त्तिकेचत्रयोदश्यांकदंबंदंतधावनम् रक्तोत्पलैःपूजनंचकूष्मांडार्घ्यंप्रदापयेत् नैवेद्येपूरिकादद्यात्पूजयेज्जगदीश्व
रम् प्राशयेन्मौक्तिकजलंनिशिचैवंसमाहितः नमस्तेजगदीशायत्रापिनेशूलपाणये गृहाणार्घ्यंमहेशानजगदीशनमो

स्त्कृते इत्यर्घ्यं पूजांतेजागरंकुर्यात्गीतवाद्यमहोत्सवैः अर्धनारीश्वरंकुर्यात्सौवर्णंस्वयमेवच वस्त्रयुग्मेन संवेष्ट्यशय्या
यांविनिवेशयेत् एवंकृत्वातुदेवेशंशोभांतत्रतुकारयेत् श्वेतपुष्पैस्त्कसंपूज्यश्वेतचंदनचर्चितं धूपैर्दीपैश्चनैवेद्यैः सव
त्सांगांप्रदापयेत् श्वेतवस्त्रपरीधानांघंटाभरणभूषितां सुसूक्ष्मवस्त्रयुगुलमाचार्यायनिवेदयेत् तथैवदक्षिणांदद्या
दासनंचैवपादुके छत्रंचमुद्रिकांचैवकंकणंभूषणंशुभं शय्यादिव्यांप्रदेयात्तुतूलाछादनसंयुतां गृहोपस्करसंयुक्तां भक्ति
संयुक्तचेतसा तत्रोपवेश्यचाचार्यमुपवासव्रतीततः पादौमूर्ध्निसमारोप्यप्रणिपत्यवचोवदेत् भगवंस्त्वत्प्रसादेनव्रतसं
पूर्णतामम एवमस्त्विर्तिसब्रूयात्त्वतुष्टोस्तुशंकरः ईश्वरउवाच एवंकृत्वाप्रयत्नेनदंपतीन्चैवपूजयेत् तयोश्च
भोजनंदद्याद्दंपत्योःपारितोषकं अनेनविधिनातुष्याम्यहंयुक्तस्त्वयानघे ॥तेभ्योदत्तंचयत्किंचिदक्षयंनात्रसंशयः आचा
र्यमग्रतःकृत्वातस्यादेशंतुकारयेत् नह्याचार्यसमंतीर्थंनह्याचार्यसमंतपः॥तस्याहंकायमास्थायसर्वसिद्धिंनयेध्रुवम्
तेनैवाचार्यदानेनसर्वंभवतिचाक्षयं एतद्व्रतोत्तमंश्रेष्ठंगुह्याद्गुह्यतरंपरं राज्यमर्थान्कृतान्सिद्धिमवैधव्यंप्रयच्छति रू
पंधनंधान्यमायुरारोग्यंचप्रदापये इष्टलाभंचसौभाग्यंवर्धयिष्येवरानने त्रयोदशीव्रतंनास्तिसौभाग्यकरणंपरम्
इतिभविष्योत्तरेअनंगत्रयोदशीव्रतंसंपूर्णं इतित्रयोदशीव्रतातानिसमाप्तानि ७ ७

श्रीगणेशायनमः अथचतुर्दशीव्रतानिलिख्यंते तत्रचैत्रशुक्लचतुर्दशीपूर्वाग्राह्या निशिभ्रमंतिभूतानिशक्तयःशूलभृ
द्यतः अतस्तत्रचतुर्दश्यांसत्यांतत्पूजनंभवेत् मधोःश्रावणमासस्यशुक्लायायातुचतुर्दशी साराविव्यापिनीग्राह्यानान्या
शुक्लाकदाचन चैत्रकृष्णचतुर्दश्यांविशेषोस्मर्यते पृथ्वीचंद्रोदयेपुलस्त्यः चैत्रकृष्णचतुर्दश्यांयःस्नायाच्छिवसन्नि
धौ नमेतत्वमवाप्नोतिगंगायांतुविशेषतः इयंपूर्वाग्राह्या इतिचैत्रकृष्णाशुक्लचतुर्दशी अथवैशाखशुक्लचतुर्दश्यां
नृसिंहचतुर्दशीव्रतं तच्चप्रदोषव्यापिन्यांकार्यं तदुक्तंनृसिंहपुराणेहेमाद्रौ वैशाखशुक्लपक्षेतुचतुर्दश्यांनिशामुखे
मज्जन्मसंभवंपुण्यंव्रतंपापप्रणाशनं वर्षेवर्षेतुकर्तव्यंममसंतुष्टिकारणमिति स्कांदेपि वैशाखस्यचतुर्दश्यांसोमवा
रेनिलर्क्षके अवतारोनृसिंहस्यप्रदोषसमयेद्विजाः अनिलर्क्षंस्वाती दिनद्वयेतद्व्याप्तावव्याप्तौअंशतःसमव्याप्तौच
परा विषमव्याप्तौत्वधिकव्याप्तिरिति दिनद्वयेप्यव्याप्तौपूर्वा पूर्वदिनेगौणकालव्याप्तेःसत्वात्परदिनेचतदभावात् अस्यां
चसंकल्परूपव्रतोपक्रमोमध्यान्हएवकर्तव्यः स्वातीनक्षत्रयोगेचशनिवारेमहद्व्रतं सिद्धियोगस्यसंयोगेवणिजेकर
णेतथा पुंसांसौभाग्ययोगेनलभ्यतेदैवयोगतः एभिर्योगैर्विनापिस्यान्मद्दिनंपापनाशनं सर्वेषामेववर्णानामधि
कारोस्तिमद्व्रते तथा अनंगेनसमायुक्तानसोपोष्याचतुर्दशी धनापत्यैर्वियुज्येततस्मात्तांपरिवर्जयेत् इतितत्रैव-
निषेधात् विज्ञायमद्दिनंयस्तुलंघयेत्पापकृन्नरः सयातिनरकंघोरंयावच्चंद्रदिवाकरौ ततोमध्यान्हवेलायां-

नद्यादौस्नानमाचरेत् परिधायततोवस्त्रंव्रतकर्मसमाचरेत् इतिव्रतविधिः अथकथा सूतउवाच हिरण्यकशिपुंहत्वादेवदेवंजगद्गुरुं सुखा
सीनंचनृहरिंशांतक्रोपरमापतिं प्रह्लादोज्ञानिनांश्रेष्ठोपालयन्राज्यमुत्तमं एकाकीचतदुत्संगेप्रियंवचनमब्रवीत् प्रह्लादउवाच नमः
स्तेभगवन्विष्णोनृसिंहरूपिणेनमः त्वद्भक्तोहंसुरेशैकंत्वांपृच्छामितुतत्वतः स्वामिन्त्वयिममाभिन्नाभक्तिर्जातात्वने
कधा कथंचतेप्रियोजातःकारणंमेवदप्रभो नृसिंहउवाच कथयामिमहाप्राज्ञशृणुष्वैकाग्रमानसः भक्तेर्यत्का
रणंवत्सप्रियत्वस्यचकारणं पुराकालेत्वंभूद्विप्रःकिंचित्त्वंनाप्यधीतवान् नाम्नात्वंवासुदेवोहिवेश्यासंसक्तमानसः
तस्मिन्जातुनचैवत्वंचकर्थसुव्रतंकियत् कृतवान्मद्व्रतंचैकंवेश्यासंगतिलालसः मद्व्रतस्यप्रभावेनभक्तिर्जातातवा
नघ प्रह्लादउवाच श्रीनृसिंहोच्यतांतावत्कस्यपुत्रस्यकिंव्रतं वेश्यायांवर्तमानेनकथंतच्चकृतंमया येनत्वत्प्रीतिमा
पन्नोवक्तुमर्हसिसांप्रतं नृसिंहउवाच पुरावंतीपुरेत्वासीद्ब्राह्मणोवेदपारगः तस्यनामसुशर्मेतिबहुलोकेषुविश्रु
तं नित्यहोमक्रियांचैवविदधातिद्विजोत्तमः ब्रह्मक्रियासुनियतःसर्वासुकिलतत्परः अग्निष्टोमादिभिर्यज्ञैरिष्टाःस
र्वेसुरोत्तमाः तस्यभार्यासुशीलाभूद्विख्याताभुवनत्रये पतिव्रतासदाचारापतिभक्तिपरायणा जज्ञिरेस्यांसुताःपंच
तस्माद्द्विजवरात्तथा सदाचारेषुविद्वांसःपितृभक्तिपरायणाः तेषांमध्येकनिष्ठस्त्वंवेश्यासंगतितत्परः तथापिविद्यमा
नेनसुरापानंसुपातकं सौवर्णंचाप्यपहृतंचौरैःसार्धंत्वयाबहु विलासिन्यासमंचैवत्वयाचीर्णमघंबहु एकदात्तद्गृहे

चासीन्महान्कलिस्त्वयासह तेनकलहभावेनव्रतमेतत्त्वयाकृतं अज्ञानान्मद्व्रतंजातंव्रतानामुत्तमंहितत् तस्याविहारायोगेनरा
त्रौजागरणंकृतं वेश्यायावल्लभंकिंचित्सजातंनत्वयासह रात्रौजागरणंचीर्णंत्यक्तंभोज्यमनेकधा व्रतेनानेनचीर्णेनमोद-
तिदिविदेवताः सृष्ट्यर्थेचपुराब्रह्माचक्रेत्येतदनुत्तमं मद्व्रतस्यप्रभावेननिर्मितंसचराचरं ईश्वरेणपुराचीर्णंवधार्थंत्रिपु-
रस्यच महाभाग्येनविहितंव्रतमेतन्महाफलं एतद्व्रतप्रभावेनसर्वेसिद्धिमुपागताः वेश्यापिमत्प्रियाजातात्रैलोक्येसुख-
चारिणी ईदृशंमद्व्रतंवत्सत्रैलोक्येषुसुविश्रुतं कलहेनविलासिन्याव्रतमेतदुपस्थितं प्रह्लादतेननतेभक्तिर्मयिजातात्व-
नुत्तमा धूर्तयाचविलासिन्याज्ञात्वाव्रतमिदंमहत् कलहश्चकृतोयेनमद्व्रतंयत्कृतंभवेत् सावेश्यातुवराजाताभुक्त्वाभो-
गाननेकशः मुक्ताकर्मविलीनात्वुत्वंप्रह्लादविशस्वमां कार्यार्थंचभवानास्तेमच्छरीरस्थकृतया विधायसर्वकार्याणि-
शीघ्रंचैवगमिष्यसि यइदंव्रतमावश्यंप्रकरिष्यंतिमानवाः नतेषांपुनरावृत्तिर्मत्तःकल्पशतैरपि अपुत्रोलभतेपुत्रंधन-
कामोधनंतथा ज्ञानीचममभक्तश्चदिव्यंसौख्यंलभेन्नरः स्त्रियोवापुरुषाश्चापिकुर्वंतिव्रतमुत्तमं तेभ्योददाम्यहंसौ-
ख्यंभुक्तिमुक्तिसमन्वितं बहुनोक्तेनकिंवत्सव्रतस्यफलमुत्तमं प्रह्लादउवाच व्रतस्यास्यफलंसाधुत्वयिमेभक्तिकारणं
स्वामिन्जातंविशेषेणत्वत्तःपापनिकृंतनं अधुनाश्रोतुमिच्छामिव्रतस्यास्यविधिंपरं कस्मिन्मासेभवेदेतत्कस्मिन्वा
तिथिवासरे एतद्विस्तरतोदेववक्तुमर्हसिसांप्रतं विधिनायेनवैस्वामिन्समग्रफलभुग्भवेत् ममोपरिकृपांकृत्वाब्रूहित्वं

सकलंप्रभो नृसिंहउवाच साधुसाधुमहाभागव्रतस्यास्यविधिंपरं सर्वंकथयतोमेद्यत्वमेकाग्रमनाःशृणु वै
शाखशुक्लपक्षेतुचतुर्दश्यांसमाचरेत् मज्जन्मसंभवंपुण्यंव्रतंपापप्रणाशनं वर्षेवर्षेतुकर्तव्यंममसंतुष्टिकारकं महा॰
पुण्यमिदंश्रेष्ठंमानुषैर्भवभीरुभिः तेनैवक्रियमाणेनसहस्रद्वादशीफलं जायतेमद्व्रताद्भ्विमानुषाणांमहात्मनां
स्वातीनक्षत्रयोगेचशनिवासरसंयुते सिद्धियोगस्ययोगेचवणिजेकरणेतथा पुण्यसौभाग्ययोगेनलभ्यतेदैवयोगतः स
र्वैरेतैस्तुसंयुक्तंहत्याकोटिविनाशनं केवलेपिचकर्तव्यंमद्दिनेव्रतमुत्तमं अन्यथानरकंयातियावच्चंद्रदिवाकरौ यथायथा
मद्व्रतिःस्यात्पातकस्यकलौयुगे तथातथाप्रणश्यंतिसर्वेधर्मानसंशयः एतद्व्रतप्रभावेनमद्भक्तिःस्याद्दुरात्मनां विचार्येत्थंप्रक
र्तव्यंमाधवेमासितद्व्रतं निश्चयश्चप्रकर्तव्योदंतधावनपूर्वकं श्रीनृसिंहदयांकृत्वामहाविष्णोममोपरि अद्याहंतविधास्यामि
व्रतंनिर्विघ्नतांनय इतिनियममंत्रः व्रतस्थेननकर्तव्यासंगतिःपापिभिःसह मिथ्यालापोनकर्तव्यःसमग्रफलकांक्षिभिः
स्त्रीभिर्दुष्टैश्चआलापान्व्रतस्थेनैवकारयेत् स्मर्तव्यंचमहारूपंमद्दिनेसकलंशुभे ततोमध्यान्हवेलायांनद्यादौविम॰
लेजले गृहेवादेवखातेवा तडागेविमलेजले वैदिकेनचमंत्रेणस्नानंकुर्याद्विचक्षणः मृत्तिकागोमयेनैवतथाधात्री
फलेनच तिलैश्चसर्वपापघ्नैःस्नानंकार्यंमहात्मभिः परिधायशुचिर्वासोनित्यकर्मसमाचरेत् ततोगृहंसमागत्यस्म
रन्मांभक्तियोगतः गोमयेनप्रलिप्याथकुर्यादष्टदलंशुभं कलशंतत्रसंस्थाप्यताम्रंरत्नसमन्वितं तस्योपरिन्यसेत्पात्रंवं॰

शजं व्रीहिपूरितं हैमीतत्रचमन्मूर्तिःस्थाप्यालक्ष्म्यास्तथैवच पलेनवातदर्धेनतदर्धार्धेनवापुनः यथाशक्तितमाकार्या
वित्तशाठ्यविवर्जितैः पंचामृतेनसंस्नाप्यपूजनंतुसमाचरेत् ततोब्राह्मणमाहूयतमाचार्यमलोलुपं सदाचारसमायुक्तं
शांतंदांतंजितेंद्रियम् तेनैवकारयेत्पूजांदृष्ट्वाशास्त्रानुसारतः आचार्यवचनाद्धीमान्पूजांकुर्याद्यथाविधि मंडपंकारयेत्तत्र
पुष्पस्तबकशोभितं ऋतुकालोद्भवैःपुष्पैःपूजयेत्स्वस्थमानसः उपचारैःषोडशभिर्मंत्रैर्वेदोद्भवैस्तथा ततःपौराणिकैर्मं
त्रैःपूजनीयोयथाविधि चंदनंशीतलंदिव्यंकस्तूरीकुंकुमंतथा ददामितवतुष्ट्यर्थंनृसिंहपरमेश्वर चंदनं कालोद्भ
वानिपुष्पाणितुलस्यादीनिवैप्रभो सम्यक्गृहाणदेवेशलक्ष्म्यासहनमोस्तुते पुष्पाणि कृष्णागरुमयंधूपंश्रीनृसिंह
जगत्पते तवतुष्ट्यैप्रदास्यामिसर्वदेवनमोस्तुते धूपं सर्वतेजोद्भवंतेजस्तस्माद्दीपंददामिते श्रीनृसिंहमहाबाहो
तिमिरंमेविनाशय दीपं नैवेद्यंगृह्यतांदेवभक्ष्यभोज्यसमन्वितं ददामितेरमाकांतसर्वपापक्षयंकुरु नैवेद्यं पी
तांबरमहाबाहोप्रह्लादभयनाशन तथाभूतेनार्चनेनयथोक्तफलदोभव इतिप्रार्थना रात्रौजागरणंकुर्याद्गीतवा
दित्रनिस्वनैः पुराणश्रवणाद्यैश्चश्रोतव्याश्चकथाःशुभाः ततःप्रभातसमयेस्नानंकृत्वाजितेंद्रियः पूर्वोक्तेनविधा
नेनपूजयेन्मांप्रयत्नतः वैष्णवान्प्रजपेन्मंत्रान्मदग्रेस्वस्थमानसः ततोदानानिदेयानिवक्ष्यमाणानिचानघ पात्रे
भ्यस्तुद्विजेभ्योहिलोकदर्पजिगीषया सिंहःस्वर्णमयोदेवोममसंतोषकारकः गोभूतिलहिरण्यानिदेयानिचफले-

स्फभिः शय्यासतूलिकादेयासप्तधान्यसमन्विता अन्यानिचयथाशक्त्यादेयानिममतुष्टये वित्तशाठ्यंनकुर्वीतयथो
क्तफलकांक्षया ब्राह्मणान्भोजयेत्पश्चात्तेभ्योदद्याच्चदक्षिणां निर्धनेनापिकर्तव्यंदेयंशक्त्यनुसारतः सर्वेषामेव·
वर्णानामधिकारोस्तिमद्व्रते मद्भक्तैस्तुविशेषेणकर्तव्यंमत्परायणैः तद्दर्शनेनभवेद्दुःखंनदोषोमत्प्रसादतः मांसमुद्ध
रदेवेशदुस्तराद्भवसागरात् पातकार्णवमग्नस्यव्याधिदुःखांबुवासिभिः जीवैस्तुपरिभूतस्यमोहदुःखगतस्यमे
करावलंबनंदेहिशेषशायिन्जगत्पते श्रीनृसिंहरमाकांतभक्तानांभयनाशन क्षीरांबुनिधिवासिन्त्वंचक्रपाणेजना
र्दन व्रतेनानेनदेवेशभुक्तिमुक्तिप्रदोभव एवंप्रार्थ्यततोदेवंविसृज्यन्चयथाविधि उपहारादिकंसर्वमाचार्यायनि
वेदयेत् दक्षिणाभिस्तुसंतोष्यब्राह्मणांस्तुविसर्जयेत् मध्यान्हेतुसमायुक्तोभुंजीतसहबंधुभिः यइदंशृणुयाद्भक्त्या
व्रतंपापप्रणाशनं यस्यस्मरणमात्रेणब्रह्महत्याव्यपोहति पवित्रंपरमंगुह्यंकीर्तयेद्यस्तुमानवः सर्वान्कामानवा·
प्नोतिव्रतस्यचफलंलभेत् इतिहेमाद्रौब्रह्मपुराणेनृसिंहचतुर्दशीव्रतकथासमाप्ता अथअनंतचतुर्दशीव्रतं सापरा
कार्यापूजनकालव्यापित्वात् तथाच अनंतपूजयेद्यस्तुप्रातःकालेसमाहितः अनंतांलभतेसिद्धिंचक्रपाणेःप्रसाद·
तः इतिब्रह्मपुराणात् तदभावेपूर्वा उभयदिनेसूर्योदयव्यापित्वेपिपूर्णात्वयुक्तत्वेपिपरैवग्राह्या भाद्रेसितेचतुर्दश्या·
मनंतंपूजयेत्सुधीः ह्रासेनसर्वकर्माणिप्रातरेवहिपूजनं शुक्लाभाद्रपदस्यापिअनंताख्याचतुर्दशी उदयव्यापिनी

ग्राह्याघटिकैकापियाभवेत् इतिहेमाद्रिः तस्मात्परैवेतिसर्वसंमतं अथअनंतपूजाविधिः प्रातर्माध्यान्हिकंस्नात्वानित्यकर्मसमा
प्यच अनंतंहृदयेकृत्वाशुचिस्तत्रसमाहितः अव्रणंकलशंचैववस्त्रयुग्मेनवेष्टितं मुष्टिमात्रेणदर्भैस्तुफणिराजंचकारयेत् स्था
पयेत्कलशस्याग्रेजगदाधारमव्ययं आराधयेदनंतंचतस्मिन्कुंभेविशेषतः गोचर्ममात्रमालिप्यगोमयेनविचक्षणः तन्मध्येस्थं
डिलंकृत्वापद्ममष्टदलंलिखेत् तस्योपरिन्यसेत्कुंभंचूतपल्लवसंयुतं प्राणायामंततःकृत्वातिथ्यादिपरिकल्पयेत् ममसकु
टुंबस्यक्षेमस्थैर्यायुरारोग्यचतुर्विधपुरुषार्थसिध्यर्थममआचरितस्य आचीर्यमाणस्यव्रतस्यसंपूर्णफलप्राप्त्यर्थंश्रीमदनंत
पूजनमहंकरिष्ये तथाचासनादिकलशाराधनंकरिष्ये कलशस्य० सर्वेसमुद्राः० सितासिते० कलशेवरुणंसंपूज्य ततोशंखं
घंटांचपूजयेत् अपवित्रःप० पूजाद्रव्याणिआत्मानंचप्रोक्ष्य यमुनांपूजयेत् श्रीमदनंतव्रतांगत्वेनश्रीयमुनापूजनंकरिष्ये तद्य
था लोकपालस्तुतांदेवीमिंद्रनीलसमुद्भवां यमुनेत्वामहंध्यायेसर्वकामार्थसिद्धये ध्यानं सरस्वतिनमस्तुभ्यंसर्वकामप्रदा
यिनि आगच्छदेवियमुनेव्रतसंपूर्णहेतवे इमंमेगंगेइत्यावाह्य सिंहासनेसमारूढेदेवशक्तिसमन्विते सर्वलक्षणसंपूर्णे
यमुनायैनमोस्तुते आसनं रुद्रपादेनमस्तुभ्यंसर्वलोकहितेप्रिये सर्वपापप्रशमनितरंगिण्यैनमोस्तुते पाद्यं गरुडपादेन
मस्तुभ्यंशंकरप्रियभामिनि सर्वकामप्रदेदेवियमुनेतेनमोनमः अर्घ्यं विष्णुपादोद्भवेदेविसर्वाभरणभूषिते कृष्णामूर्ते
महादेविकृष्णावेण्यैनमोनमः आचमनं सर्वपापहरेदेविविश्वप्रियप्रदर्शिनि सौभाग्यंयमुनेदेहि यमुनायैनमोस्तुते मधुप

कें नंदिपादेमहादेविशंकरार्धशरीरिणि सर्वलोकहितेदेविभीमरथ्येनमोस्तुते पंचामृतस्नानं सिंहपादोत्तमेदेविनारसिंहसमप्र
भे सर्वलक्षणसंपूर्णेभवनाशिनितेनमः शुद्धोदकस्नानं विष्णुपादाब्जसंभूतेगंगेत्रिपथगामिनि सर्वपापहरेदेविभागीरथ्यै
नमोस्तुते श्वेतवस्त्रं त्र्यंबकस्यजटोद्भूतेगौतमस्याघनाशिनि सप्तधासागरंयांतिगोदावरिनमोस्तुते कंचुकीं माणि·
क्यमुक्तावलिकौस्तुभांश्चगोमेदवैडूर्यसुपुष्परागैः वज्रैश्चनीलैश्चसुशोभितानिगृहाणसर्वाभरणानिदेवि आभरणानि
चंदनागरुकस्तूरीरोचनंकुंकुमंतथा कर्पूरेणसमायुक्तंगंधंदद्मिचभक्तितः गंधं श्वेतांश्चचंद्रवर्णाभान्हरिद्रारागरंजिता·
न् अक्षतांश्चसुरश्रेष्ठे ददामियमुनेशुभे अक्षतान् मंदारमालतीजातीकेतकीपाटलैःशुभैः पूजयामिचदेवेशियमुने·
भक्तवत्सले पुष्पाणि अथांगपूजा चंचलायै॰ पादौपूजयामि चपलायै॰ जानुनी॰ भक्तवत्सलायै॰ कटी॰ हरायै॰ नाभिं॰
मन्मथवासिन्यै॰ गुह्यं॰ अज्ञानवासिन्यै॰ हृदयं॰ भद्रायै॰ स्तनौ॰ अघहंत्र्यै॰ भुजौ॰ रक्तकंठ्यै॰ कंठं॰ भवहंत्र्यै॰ मुखं॰ गौर्यै॰ नेत्रे॰
भागीरथ्यै॰ ललाटं॰ यमुनायै॰ शिरःपूजयामि सरस्वत्यै॰ सर्वांगंपू॰ अथनामपूजा यमुनायै॰ सितायै॰ कमलायै॰ उत्प
लायै॰ अभीष्टप्रदायै॰ धात्र्यै॰ हरिहररूपिण्यै॰ गंगायै॰ नर्मदायै॰ गौर्यै॰ भागीरथ्यै॰ तुंगायै॰ भद्रायै॰ कृष्णावेण्यै॰ भवना
शिन्यै॰ सरस्वत्यै॰ कावेर्यै॰ सिंधवे॰ गौतम्यै॰ गोमत्यै॰ गायत्र्यै॰ गरुडायै॰ गिरिजायै॰ चंद्रचूडायै॰ सर्वैश्वर्यै॰ महालक्ष्म्यै॰ स
र्वपापहरेदेविसर्वोपद्रवनाशिनि सर्वसंपत्प्रदेदेवियमुनायैनमोस्तुते इतिनामपूजा दशांगगुग्गुलोद्भूतश्चंदनागरुसंयुतः

कपिलाघृतसंयुक्तोधूपोयंप्रतिगृह्यतां धूपं घृतवर्तिसमायुक्तंवन्हिनायोजितंमया गृहाणदीपकंदेविसर्वैश्वर्यप्रदायिनि
दीपं शर्करामधुसंयुक्तंदधिक्षीरंचसर्पिषा पक्कमन्नंमयादत्तंनैवेद्यंप्रतिगृह्यताम् नैवेद्यं पानीयंपावनंश्रेष्ठंगंगादिसरिदु-
द्भवं हस्तप्रक्षालनंदेविगृहाणमुखशोधनं हस्तप्रक्षालनं मुखप्रक्षालनं कर्पूरेणसमायुक्तंयमुनेचारुचंदनम् समर्पितंमया
तुभ्यंकरोद्वर्तनकंकुरु करोद्वर्तनार्थेचंदनम् इदंफलमितिफलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणा त्रैलोक्यपा-
वनेगंगेअंधकारविनाशिनि पंचार्तिक्यंगृहाणेदंविश्वप्रीत्यैनमोस्तुते आर्तिक्यं केतकीजातिकुसुमैर्मल्लिकामालतीभवैः पु
ष्पांजलिर्मयादत्तोरुद्रप्रीत्यैनमोस्तुते पुष्पांजलिं यानिकानिचेतिप्रदक्षिणा अन्यथाशरणंनास्तीतिनमस्कारं सुरासुरें
द्रादिकिरीटमौक्तिकैर्युक्तंसदायत्तवपादपंकजं परावरंपातुवरंसुमंगलंनमामिभक्त्याममकामसिद्धये भवानित्वमहालक्ष्मि-
सर्वकामप्रदायिनि व्रतंसंपूर्णतांयातुयमुनायैनमोस्तुते इतिप्रार्थनां इतियमुनापूजासमाप्ता अथानंतपूजा ततस्तुमू-
लमंत्रेणनमस्कृत्यजनार्दनं नवाम्रपल्लवाभासंपिंगभ्रूश्मश्रुलोचनं पीतांबरधरंदेवंशंखचक्रगदाधरं अलंकृतसमुद्रस्थं
विश्वरूपंविचिंतये ध्यायामि आगच्छानंतदेवेशतेजोराशेजगत्पते इमांमयाकृतांपूजांगृहाणपुरुषोत्तम सहस्रशीर्षे-
त्यावाहनं विष्टरंधेहिगोविंदगोवर्धनधरप्रभो अनंतदीयतेयन्मेरत्नसिंहासनेविश पुरुषएवेदमित्यासनं यथात्वंसर्वदे
वानामिंद्रादीनांचरक्षसि तथामांपालयानंतत्वदंघ्रिशरणागतं एतावानस्येतिपाद्यं अनंतानंतदेवेशअनंतफलदायक

अनंतानंतरूपोसिगृहाणार्घ्यंनमोस्तुते त्रिपादूर्ध्वअर्घ्यं गंगोदकंसमानीतंहेमकुंभेनयोजितं आचम्यतांहृषीकेशप्रसीद
पुरुषोत्तम तस्माद्विराळेत्याचमनीयं अनंतगुणरूपायविश्वरूपधरायच नमोमाहात्म्यदेवायअनंतायनमोनमः यत्पु
रुषेणेतिस्नानं ततोपंचामृतस्नानं सुरभेस्तुसमुत्पन्नंदेवानामपिदुर्लभं पयोददामिदेवेशस्नानार्थंप्रतिगृह्यतां आप्या
यस्वेतिपयस्नानं चंद्रमंडलसंकाशंसर्वदेवप्रियंहियत् दधिददामिदेवेशस्नानार्थंप्रतिगृह्यताम् दधिक्राव्णोअकारि
षमितिदधिस्नानं आज्यंसुराणामाहारआज्यंयज्ञेप्रतिष्ठितं आज्यंपवित्रंपरमंस्नानार्थंप्रतिगृह्यताम् घृतंमिमिक्षेइ·
तिघृतस्नानं सर्वौषधिसमुत्पन्नंपीयूषसदृशंमधु स्नानायतेमयादत्तंगृहाणपरमेश्वर मधुवातेतिमधु॰ इक्षुदंडात्समुद्भूतां
शर्करांमधुरांशुभां स्नानायतेमयादत्तांगृहाणपरमेश्वर स्वादुःपवस्वेतिशर्करास्नानं शुद्धोदकस्नानं नाममंत्रैःपूर्वपू
जांकुर्यात् पुरुषसूक्तेनअभिषेकः तप्तकांचनवर्णाभंकौशेयंचसुनिर्मितम् वस्त्रंगृहाणदेवेशलक्ष्मीयुक्तनमोस्तुते तं
यज्ञमितिवस्त्रं वस्त्रानंतरमाचमनीयं दामोदरनमस्तेस्तुत्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम य·
ज्ञोपवीतपरमंपवित्रंप्रजा॰ तस्माद्यज्ञादित्युपवीतं उपवीतानंतरमाचमनीयं श्रीखंडंचंदनंदिव्यं॰तस्माद्यज्ञात्सर्वहुतऋ
चइतिचंदनं अक्षताश्चसुरश्रेष्ठ॰ अलंकारार्थेअक्षतां माल्यादीनिसुगंधीनि॰ तस्मादश्वेतिपुष्पं अथग्रंथिपू·
जा श्रियैनमः मोहिन्यै॰ पद्मिन्यै॰ महाबलायै॰ अजायै॰ मंगलायै॰ वरदायै॰ शुभायै॰ जयायै विजयायै॰ जयंत्यै॰

पापनाशिन्यै॰ विश्वरूपायै॰ सर्वमंगलायै॰ इतिग्रंथिपूजा अथांगपूजा मत्स्याय॰ पादौपू॰ कूर्माय॰ गुल्फौ॰ वराहा-
य॰ जानुनी॰ नारसिंहाय॰ ऊरूपूजयामि वामनायकटी॰ रामाय॰ उदरं॰ श्रीरामायहृदयं॰ कृष्णायमुखं॰ सहस्र-
शिरसेनमः शिरःपूजयामि श्रीमदनंताय सर्वांगंपूजयामि अथावरणपूजा अनंतस्यदक्षिणपार्श्वेरमायै॰ वाम-
पार्श्वेभूम्यै॰ इतिप्रथमावरणं आवरणदेवतामावाह्यहस्तंप्रक्षाल्यगंधपुष्पंतर्जनीमध्यमांगुष्टैर्धृत्वामध्येशंखोद-
कंगृहीत्वामंत्रांतेशंखोदकंभूमौनिक्षिप्यपुष्पंदेवोपरिनिक्षिपेत् दयाब्धेत्राहिसंसारसर्पान्मांशरणागतम् भक्त्या
समर्पयेतुभ्यंप्रथमावरणार्चनं इतिमंत्रमुच्चार्यजलंत्यक्त्वापुष्पंदेवोपरिन्यसेत् इतिपूर्वादिक्रमेण उल्कोल्काय॰ महो-
ल्काय॰ शतोल्कायन॰ सहस्रोल्काय॰ दयाब्धेत्राहिसंसार॰ द्वितीयावरणं२तथैव वासुदेवाय॰ संकर्षणाय॰ प्रद्युम्ना-
य॰ अनिरुद्धाय॰ दयाब्धेत्राहिसंसार॰ तृतीयावरणं ३ प्राच्यांकेशवाय॰ नारायणाय॰ माधवाय॰ गोविंदाय॰ वि-
ष्णवे॰ मधुसूदनाय॰ त्रिविक्रमाय॰ वामनाय॰ श्रीधराय॰ हृषीकेशाय॰ पद्मनाभाय॰ दामोदराय॰ दयाब्धेत्राहिसं॰
चतुर्थावरणं ४ पूर्वादिक्रमेण मत्स्याय॰ कूर्माय॰ वराहाय॰ नारसिंहाय॰ वामनाय॰ रामाय॰ श्रीरामाय॰ कृष्णाय॰ बौ-
द्धाय॰ कल्किने॰ अनंताय॰ विश्वरूपिणे॰ दयाब्धेत्राहि॰ पंचमावरणं ५ पूर्वादिक्रमेण अनंताय॰ दक्षिणायां॰ ब्रह्मणे॰ प-
श्चिमायां॰ वायवे॰ उत्तरायां॰ ईशानाय॰ आग्नेय्यां वारुण्यै॰ नैर्ऋत्यां गायत्र्यै॰ वायव्यां॰ भारत्यै॰ ईशान्यां गिरिजायै॰ अ-

ग्रेगरुडाय॰ वामेसत्पुण्याय॰ दयाब्धेत्राहि॰ षष्ठावरणं ६ पूर्वादिक्रमेण इंद्राय॰ अग्नये॰ यमाय॰ निर्ऋतयेव्वरुणाय॰ वाय-
वे॰सोमाय॰ ईशानाय॰ दयाब्धेत्राहि॰ इतिसप्तमावरणं ७ आग्नेय्यांशेषाय॰ नैर्ऋत्यां विष्णवे॰ वायव्यांविधये॰ ईशान्यां
प्रजापतये॰ दयाब्धेत्राहि॰ इत्यष्टमावरणं ८ आग्नेय्यां गणपतये॰ नैर्ऋत्यांसप्तमातृभ्यो॰ वायव्यांदुर्गायै॰ ईशान्यांक्षेत्रा
धिपतये॰ दयाब्धेत्राहि॰ इतिनवमावरणं ९ मध्ये ब्रह्मणे॰ भास्कराय॰ शेषाय॰ सर्वव्यापिने॰ ईश्वराय॰ विश्वरूपाय॰ महा-
कामाय॰ सृष्टिकर्त्रे॰ कृष्णाय॰ हरये॰ शिवाय॰ स्थितिकारकाय॰ अंतकाय॰ दयाब्धेत्राहि॰ इतिदशमावरणं १० शौरये॰ वै
कुंठाय॰ महाबलाय॰ पुरुषोत्तमाय॰ अजाय॰ पद्मनाभाय॰ मंगलाय॰ हृषीकेशाय॰ वरदाय॰ माधवाय॰ मधुसूदनाय॰ अ-
च्युताय॰ अनंताय॰ गोविंदाय॰ विजयाय॰ अपराजिताय॰ कृष्णाय॰ दयाब्धेत्राहि॰ इतिएकादशावरणं ११ अनंताय॰ कपि-
लाय॰ शेषाय॰ संकर्षणाय॰ हलायुधाय॰ तारणाय॰ सीरपाणये॰ बलभद्राय॰ दयाब्धेत्राहि॰ इतिद्वादशावरणं १२ क्षीरा-
ब्धिशायिनेनमः अच्युताय॰ भूम्याधाराय॰ लोकनाथाय॰ फणामणिविभूषणाय॰ सहस्रमूर्ध्ने॰ सहस्रार्चिषे॰ दयाब्धेत्रा-
हि॰ इतित्रयोदशावरणं १३ केशवादिचतुर्विंशतिनामभिः दयाब्धेत्राहि॰ इतिचतुर्दशावरणं १४ अथपत्रपूजा कृष्णा
यपलाशपत्रं॰ विष्णवे॰ औदुंबरपत्रं॰ हरये॰ अश्वत्थपत्रं॰ शंभवे॰ भृंगिराजपत्रं॰ ब्रह्मणे॰ जटाधरपत्रं॰ भास्कराय॰ अशो
कपत्रं॰ शेषाय॰ कपित्थपत्रं॰ सर्वव्यापिने॰ वटपत्रं॰ ईश्वराय॰ आम्रपत्रं॰ विश्वरूपिणे॰ कदलीपत्रं॰ महाकायाय॰ अपामार्ग

पत्रं० सृष्टिकर्त्रे० करवीरपत्रं० स्थितिकर्त्रे० पुन्नागपत्रं० अंतकाय० नागवल्लीपत्रं १४ अथपुष्पपूजा अनंताय० पद्मपुष्पं० विष्णवे० जातीपुष्पं० केशवाय० चंपकपुष्पं० अव्ययाय० कल्हारपुष्पं० सहस्रजिते० केतकीपुष्पं० अनंतरूपिणे० बकुलपुष्पं० इष्टायश-तपुष्पं० विशिष्टाय० पुन्नागपुष्पं० शिष्टेष्टाय० करवीरपुष्पं० शिखंडिने० धत्तूरपुष्पं० नहुषाय० कुंद पुष्पं० विश्वबाहवे० मल्लिकापुष्पं० महीधराय० मालतीपुष्पं० अच्युताय० कर्णिकापुष्पं० १४ अथाष्टोत्तरशतनामभिः पूजयेत् अनंताय० अच्युताय० अद्भुतकर्मणे० अमितविक्रमाय० अपराजिताय० अखंडाय० अग्निनेत्राय० अग्निवपुषे० अदृश्याय० अत्रिपुत्राय० १० अनुकूलाय० अनाशिने० अनघाय० अप्कनिलयाय० अहरहाय० अष्टमूर्तये० अनिरुद्धाय० अनिर्दिष्टाय० अचंचलाय० अब्दादिकाय २० अचलरूपाय० अखिलधराय० अव्यक्ताय० अनुरूपाय० अभयंकराय० अक्षताय० अवपुषे० अयोनिजाय० अरविंदाक्षाय० अशनवर्जिताय० अधोक्षजाय० ३१ अदितिपुत्राय० अंबिकापतिपूर्वजाय० अपस्मारनाशिने० अव्ययाय० अनादिने० अप्रमेयाय० अघशत्रवे० अमरारिघ्नाय० अनीश्वराय० अजाय० ४१ अघोराय० अनादिनिधनाय० अमरप्रभवे० अग्राह्याय० अक्रूराय० अनुत्तमाय० अरूपाय० अन्हे० अमोघाधिपतये० अजाय० ५० अक्षमाय० अमृताय० अघोरवीर्याय० अव्यंगाय० अविघ्नाय० अतींद्रियाय० अमिततेजसे० अमितये० अष्टमूर्तये० अनिलाय० अवशाय० अणोरणीयसे० अशांकाय० अरविंदाय० अधिष्ठाय० अमितनयनाय० अरण्यवासिने० अप्रमत्ताय० अनंतरूपाय० अनलाय० अनिमिषाय० अ-

ब्र॰रा॰ ७

स्वरूपाय॰ अग्रगण्याय॰ अप्रमिताय॰ अंतकाय॰ अनित्याय॰ अपांनिधये॰ अतिस्कंदराय॰ अमरप्रियाय॰ अष्टसिद्धिप्रदा-
य॰८१ अरविंदप्रियाय॰ अरविंदोद्भवाय॰ अनयाय॰ अर्थाय॰ अक्षोभ्याय॰ अर्चिष्मते॰ अनेकमूर्तये॰ अनंतब्रह्मांडपतये॰ अ
नंतशयनाय॰ अमराधिपतये॰ अनाधाराय॰ अनंतनाम्ने॰ अनंतश्रिये॰ अक्षराय॰ अमाय॰ आश्रमस्थाय॰ आश्रमाती
ताय॰ अन्नादाय॰ आत्मयोनये॰ अवनीपतये॰ अवनीधराय॰ अनादिने॰ आदित्याय॰ अमृताय॰ अपवर्गप्रदाय॰ अनंता
यनमः १०८ इत्यष्टोत्तरशतनामपूजा दशांगंगुग्गुलोद्भूतंचंदनागरुसंयुतं सर्वेषामुत्तमंधूपंगृहाणसुरपूजित यत्पुरुषं
व्यदधुरितिधूपंस॰ साज्यंचवर्तिसंयुक्तंवन्हिनायोजितंमया दीपंगृहाणदेवशत्रैलोक्यतिमिरापहन् ब्राह्मणोस्येतिदीपं
अन्नंचतुर्विधंस्वादुपयोदधिघृतंतथा नानाव्यंजनशोभाढ्यंनैवेद्यंप्रतिगृह्यताम् चंद्रमामनसइतिनैवेद्यं नैवेद्यमध्येपा
नीयं॰ उत्तरापोशनार्थंतेदद्मितोयंसुवासितं गृहाणसुमुखोभूत्वाअनंतायनमोनमः उत्तरापोशनं॰ मुखप्रक्षालनं॰ हस्त
प्रक्षालनं॰ करोद्वर्तनकंदेवमयादत्तंहिभक्तितः चारुचंद्रप्रभंदिव्यंगृहाणजगदीश्वर करोद्वर्तनं॰ इदंफलंमयादेवस्थापि
तंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि नारिकेलफलं॰ पूगीफलमहद्दिव्यंनागवल्यादलैर्युतं कर्पूरेणस-
मायुक्तंतांबूलंप्रतिगृह्यताम् तांबूलंस॰ हिरण्यगर्भेतिदक्षिणां यानिकानिचपापानिजन्मांतरकृतानिच तानितानिविन-
श्यंतिप्रदक्षिणपदेपदे नाभ्याआसीतिप्रदक्षिणां नमस्तेभगवन्भूयोनमस्तेधरणीधर नमस्तेसर्वनागेंद्रनमस्तेमधुसू-

दन समास्येतिनमस्कारं नमस्तेदेवदेवेशनमस्तेगरुडध्वज नमस्तेकमलाकांतअनंतायनमोनमः यज्ञेनयज्ञमितिमंत्र
पुष्पं अथदोरकप्रार्थना अनंतायनमस्तुभ्यंसहस्रशिरसेनमः नमोस्तुपद्मनाभायनागानांपतयेनमः अनंतःकामदः
श्रीमाननंतोमेप्रयच्छतु अनंतोदोररूपेणपुत्रपौत्रान्प्रवर्धतु इतिदोरकं अथदोरकबंधनमंत्रः अनंतसंसारमहा
समुद्रमग्नंसमभ्युद्धरवासुदेव अनंतरूपेविनियोजयस्वत्वनंतसूत्रायनमोनमस्ते इतिबध्वा अथजीर्णदोरकविस
र्जनमंत्रः नमःसर्वहितानंतजगदानंदकारक जीर्णदोरममुंदेवविसृज्येहंत्वदाज्ञया इतिविसृजेत् अथवायनमंत्रः
गृहाणेदंद्विजश्रेष्ठवायनंदक्षिणायुतं त्वत्प्रसादादहंदेवमुच्यतेकर्मबंधनात् प्रतिगृह्णद्विजश्रेष्ठअनंतफलदायक पक्वान्नफल
संयुक्तंदक्षिणाघृतसंयुतं अथजीर्णदोरकदानमंत्रः अनंतःप्रतिगृह्णातिअनंतोवैददातिच अनंतस्तारकोभाभ्यामनंतायन
मोनमः इतिदद्यात् ततःयथाशक्तिब्राह्मणान्भोजयेत् अनेनकृतपूजनेनश्रीमदनंतःप्रीयतां इतिपूजाविधिः अथक
था सूतउवाच पुरातुजान्हवीतीरेधर्मोधर्मपराक्रमः जरासंधवधार्थायराजसूयमुपाक्रमत् कृष्णेनसहधर्मोसौभीमार्जु
नसमन्वितः यज्ञशालांप्रकुर्वीतमहेंद्रालयसन्निभां यज्ञार्थान्भूपतीन्सर्वान्समानीयप्रयत्नतः गांधारीतनयोराजाए
कदानृपनंदनः दुर्योधनइतिख्यातोसमागत्यमखालयं दृष्ट्वादुर्योधनेनात्रप्रांगणंजलसन्निभं ऊर्ध्वंकृत्वातुवस्त्राणितत्रग
च्छन्शनैःशनैः स्मितवक्त्रास्मिताःसर्वाद्रौपद्यादिवरांगनाः दुर्योधनस्ततोगच्छन्जलमध्येपपातह पुनःसर्वेनृपाश्चैवक्र

षयश्चतपोधनाः उपहासंचचक्रुस्ताद्रौपद्यादिस्त्रलोचनाः महाराजाधिराजासौमहान्क्रोधपरायणः विनिर्गत्यस्वकंराष्ट्रंमा-
तुलेनाहृतोनृपः तस्मिन्कालेतुशकुनिःप्रोवाचमधुरंवचः मुंचराजन्महारोषंपुरतःकार्यगौरवात् गंतुमुत्तिष्ठराजेंद्रसत्रा-
त्स्वसदनंप्रति तथेत्युक्त्वामहाराजासमागत्यमखालयात् विनिर्गच्छन्नृपाःसर्वेत्यक्त्वायज्ञंस्वराष्ट्रकं राजभिःससमाग
त्यदुर्योधनगजाह्वयम् आनीयपांडुपुत्राणांधर्मभीमार्जुनान्वरान् द्यूतारंभमकुरुतस्वंराज्यंप्राप्नुयात्ततः द्यूतेनैवजिताःस
र्वेपांडवावीतकल्मषाः ततोरण्यांतरेगत्वावर्त्ततेवनचारिणः ततोवृत्तांतमापन्नोभ्रातृभिःसहपांडवः सूतउवाच अ
रण्येवर्त्तमानास्तेपांडवादुःखकर्शिताः कृष्णंदृष्ट्वामहात्मानंप्रणिपत्ययथाक्रमं युधिष्ठिरउवाच अहंदुःखीहसंजातो
भ्रातृभिःपरिवारितः कथंमुक्तिर्वदास्माकमनंताद्दुःखसागरात् कंदेवंपूजयिष्यामिराज्यंप्राप्स्यामिउत्तमं अथवाकिंव्र-
तंकृत्वात्वत्प्रसादाद्भवेद्धितं श्रीकृष्णउवाच अनंतव्रतमस्त्येकंतिथावस्यामनुत्तमं सर्वपापहरंनृणांस्त्रीणांचैवयुधि
ष्ठिर शुक्लपक्षेचतुर्दश्यांमासिभाद्रपदेभवेत् तस्यानुष्ठानमात्रेणसर्वपापंव्यपोहति युधिष्ठिरउवाच कृष्णकोयमनं
तेतिप्रोच्यतेयस्त्वयाविभो किंशेषनागआहोस्विदनंतस्तक्षकस्मृतः परमात्माथवानंतउताहोब्रह्मगीयते कएषोनं
तसंज्ञोवैतथ्यंमेब्रूहिकेशव कृष्णउवाच अनंतइत्यहंपार्थममरूपंनिबोधत आदित्यादिग्रहात्मासौयःकालइति
पठ्यते कलाकाष्ठामुहूर्तादिदिवारात्रिशरीरवान् पक्षमासर्तुवर्षाणियुगकालव्यवस्थया योयंकालोमयाख्यातोसोनं

तद्इतिकीर्त्यते सोहंकृष्णोवतीर्णोत्रभूभारोत्तारणायच दानवानांवधार्थायवस्कदेवकुलोद्भवं मांविद्धिसनतंपार्थसाधूनांपा
लनायच अनादिमध्यनिधनंकृष्णंविष्णुंहरिंशिवम् वैकुंठंभास्करंसोमंसर्वव्यापिनमीश्वरं विश्वरूपंमहाबाहोयोगि
ध्येयमनुत्तमं विश्वरूपमनंतंचयस्मिन्निंद्राश्चतुर्दश वसवोद्वादशादित्यारुद्राएकादशस्मृताः सप्तर्षयःसमुद्राश्वपर्वताः
सरितोद्रुमाः नक्षत्राणिदिशोभूमिःपातालंभूर्भुवादिकं माकुरुधात्रसंदेहंसोहंपार्थनसंशयः युधिष्ठिरउवाच अ
नंतव्रतमाहात्म्यंविधिंवदविदांवर किंपुण्यंकिंफलंचास्यअनुष्ठानवतांनृणाम् केनचादौपुराचीर्णमर्त्येकेनप्रकाशितं
एवंसविस्तरंसर्वंब्रूह्यनंतव्रतंमम कृष्णउवाच आसीत्पुराकृतयुगेस्कमंतुर्नामवैद्विजः वसिष्ठगोत्रसंभूतांस्करूपांच
भृगोःस्कतां दीक्षानाम्नींचोपयेमेवेदोक्तविधिनान्रप तस्याःकालेनसंजातादुहितानंतलक्षणा शीलानाम्नीस्कशीला
सावर्धतेपितृवेश्मनि मातान्चतस्याःकालेनज्वरदाहेनपीडिता विनष्टासानदीतोयेययौस्वर्गंपतिव्रता स्कमंतुस्तुत
तोन्यांवैधर्मपुंसःसुतांपुनः उपयेमेविधानेनदुःशीलांनामनामतः दुःशीलांकर्कशींचंडींनित्यंकलहकारिणीं सापि
शीलापितुर्गेहेगृहार्चनपराबभौ कुड्यस्तंभबहिर्द्वारदेहलीतोरणादिषु वर्णिकैश्चित्रमकरोन्नीलपीतसितासितैः स्व
स्तिकैःशंखपद्मैश्चअर्चयंतीपुनःपुनः ततःकालेबहुगतेकौमारवशवर्तिनी एवंसावर्धतेशीलापितृवेश्मनिमंगला
तांदृष्ट्वाचिंतयामासवरान्स्वगुणान्भवि कस्मैदेयामयाकन्याविचार्येतिस्कदुःखितः एतस्मिन्नेवकालेतुमुनिर्वेदः

विदांवरः कन्यार्थीचागतःश्रीमान्कौंडिण्योमुनिसत्तमः उवाचरूपसंपन्नांत्वदीयांतनयांवृणे पितादद्दौद्विजेंद्रायकौं
डिण्यायशुभेदिने गृह्योक्तविधिनापार्थविवाहमकरोत्तदा मंगलाचारनिर्घोषंतत्रकुर्वंतियोषितः ब्राह्मणाःस्वस्तिवच
नंजयघोषंचबंदिनः निवर्त्यौद्वाहिकंसर्वंप्रोक्तवान्कर्कशांद्विजः सुमंतुरुवाच किंचिद्द्रव्यादिकंदेयंजामातुःपरि
तोषकं तच्छ्रुत्वाकर्कशाक्रुद्धाप्रोत्सार्यगृहमंडनं पेटकेसुस्थिरंबध्वास्वगृहंगम्यतामिति उवाचवित्तंनैवास्तिगृ
हेपश्ययदिस्थितं तच्छ्रुत्वाविमनाःपार्थसंयतात्मामुनिस्तदा भोज्यावशिष्टचूर्णेनपाथेयंचचकारसा कौंडिण्यो
पिविवाह्येनापथिगच्छन्शनैःशनैः शीलांसुमंतोरादायनवोढांगोरथेनहि ददर्शयमुनांपुण्यांतामुत्तीर्यतटेर
थ संस्थाप्यावश्यककर्तुंगतःशिष्यान्नियुज्यवै मध्यान्हेभोज्यवेलायांसमुत्तीर्यसरित्तटे ददर्शशीलासास्त्रीणां
समूहंरक्तवाससां चतुर्दश्यामर्चयंतंभक्त्यादेवंजनार्दनं उपगम्यशनैःशीलापप्रच्छस्त्रीकदंबकं आर्याःकिमे
तन्मेब्रूतकिन्नामव्रतमीदृशं ताऊचुर्योषितस्तांतुशीलांशीलविभूषणां अनंतव्रतमेतद्धिव्रतेनंतस्तुपूज्यते साब्रवी
दहमप्येतत्करिष्येव्रतमुत्तमं विधानंकीदृशंतत्रकिंदानंकोत्रपूज्यते स्त्रियऊचुः शीलेसदन्नप्रस्थस्यपुन्नाम्ना
सस्कृतस्यच अर्धंविप्रायदातव्यमर्धमात्मनिभोजनं शक्त्याचदक्षिणांदद्याद्वित्तशाठ्यविवर्जितः कर्तव्यंयत्स
रित्तीरेकथांश्रुत्वाहरेरिमां शेषंकुशमयंकृत्वावंशपात्रेनिधायच स्नात्वानंतंसमभ्यर्च्यमंडलेगंधदीपकैः पुष्पैर्धू

पैश्चनैवेद्यैर्नानापक्वान्नसंयुतैः तस्याग्रतोहढंसूत्रंकुंकुमाक्तंस्फदोरकम् चतुर्दशग्रंथियुतंवामेकरतलेन्यसेत् अनंतसंसारमहास
मुद्रेमग्नंसमभ्युद्धरवासुदेव अनंतरूपेविनियोजयस्वह्यनंतसूत्रायनमोनमस्ते अनंतंचकरेबध्वाभोक्तव्यंस्वस्थमानसैः ध्या
त्वानारायणंदेवमनंतंविश्वरूपिणं भुक्त्वाचांतेव्रजेद्वेश्मभद्रेप्रोक्तंव्रतंतव कृष्णउवाच एवमाकर्ण्यराजेंद्रप्रहृष्टेनांतरात्मना
सापिचक्रेव्रतंशीलाकरेबध्वास्फदोरकम् चतुर्दशग्रंथियुतंवामेबाहौयथोदितम् पाथेयमर्धंविप्रायदत्वाफत्कास्वयंततः पु
नर्जगामसंहृष्टागोरथेनस्वकंगृहं भर्त्रासहैवशनकैःप्रत्ययस्तत्क्षणादभूत् तेनानंतव्रतेनास्यबभौगोधनसंकुलं गृहाश्रममभि
याज्जुष्टंधनधान्यसमन्वितम् आकुलंव्याकुलंरम्यंसर्वदातिथिपूजनैः सापिमाणिक्यकांचीभिर्मुक्ताहारैर्विभूषिता देवां-
गवस्त्रसंछन्नासावित्रीप्रतिमाभवत् विचचारगृहेभर्तुःसमीपेस्फरवरूपिणी कदाचिदुपविष्टाया दृष्टोबद्धःस्फदोरकः शी
लायाहस्तमूलेतुभर्त्रातस्याद्विजन्मना किमिदंदोरकंशीलेममवश्यायकल्पितम् धृतंस्फदोरकंत्वेतत्किमर्थंब्रूहितत्वतः य
स्यप्रसादात्सकलाधनधान्यादिसंपदः लभ्यंतेमानवैश्चापिसोनंतोयंमयाधृतः शीलायास्तद्वचःश्रुत्वाभर्त्रातेनद्विजन्मना
श्रीमदांधेनकौरव्यसाक्षेपंत्रोटितस्तदा कोनंतइतिमूढेनजल्पतापापकारिणा क्षिप्तोज्वालाकुलेवन्हौहाहाकृत्वाप्रधाव
ती शीलागृहीत्वातत्सूत्रंक्षीरमध्येसमाक्षिपत् तेनकर्मविपाकेनसाश्रीस्तस्यक्षयंगता गोधनंतस्करैर्नीतं गृहंदग्धंधनं
गतम् यद्यथैवागतंगेहेतत्तथैवपुनर्गतम् स्वजनैःकलहोनित्यंबंधुभिस्ताडनंनथा अनंताक्षेपदोषेणदारिद्र्यंपतितंगृहे नक

श्चिद्दत्तेलोकेन्नेनसार्धंयुधिष्ठिर शरीरेणातिसंतप्तोमनसाप्यतिदुःखितः निर्वेदंपरमंप्राप्तःकौंडिण्यःप्राहतांप्रिया
म् कौंडिण्यउवाच शीलेममेदमुत्पन्नंसहसाशोककारणम् येनातिदुःखितोस्माकंजातःसर्वधनक्षयः स्वजनैःक
लहोगेहेनकश्चिन्मांप्रभाषते शरीरेनित्यसंतापःखेदश्चेनसिदारुणः जानासिदुर्नयःकोत्रकिंकृत्वासुकृतंभवेत् शीलो
वाच प्रत्युवाचाथतंशीलासुशीलाशीलमंडना प्रायोनंतकृताक्षेपपापसंभवजंफलम् भविष्यतिमहाभागनदर्थंयत्न
माचर एवमुक्तःसविप्रर्षिर्जगाममनसाहरिम् निर्वेदंनिर्जगामाथकौंडिन्यःप्रगतोवनम् तपसेकृतसंकल्पोवायुभक्षोद्विजो-
त्तमः मनसाध्यायमानंतंकद्रक्ष्यामिचतंविभुम् यस्यप्रसादात्संजातमाक्षेपान्निधनंगतम् धनादिकंममातीवसुखदुःख
प्रदायकं एवंसंचिंतयन्सोथबभ्रामविपिनेवने तत्रापश्यन्महाचूतंपुष्पितंफलितंद्रुमं वर्जितंपक्षिसंघातैःकीटकोटीसमावृतं
तमपृच्छद्द्विजोनंतःक्वचिदृष्टोमहाद्रुम ब्रूहिसौम्यममातीवदुःखंचेतसिवर्तते सोब्रवीद्द्रनानंतोक्वचिदृष्टोमयाद्विज ए
वंनिराकृतस्तेनसंजगामाथदुःखितः क्वद्रक्ष्यामीतिगच्छन्सगांददर्शसवत्सकाम् वनमध्येप्रधावंतीमितश्चेतश्चपांडव सो
ब्रवीद्धेनुकेब्रूहियद्यनंतस्त्वयेक्षितः गौतमुवाच गौरुवाचाथकौंडिन्यंनानंतंवेद्म्यहंद्विज ततोव्रजन्ददर्शाग्रेवृषभंशाद्वले
स्थितं दृष्ट्वापप्रच्छगोस्वामिन्नानंतोवीक्षितस्त्वया वृषभस्तमुवाचेदंनानंतोवीक्षितोमया ततोव्रजन्ददर्शाग्रेरम्यंपुष्करि-
णीद्वयम् अन्योन्यजलकल्लोलैर्वीचीपर्यंतसंगमं छन्नंकमलकल्हारैःकुमुदोत्पलमंडितम् सेवितंभ्रमरैर्हंसैश्चक्रकारंडकैर्ब



१०

कैः तेअपृच्छद्द्विजोनंतोयुवाभ्यांनोपलक्षितः ऊचतुस्तेपुष्करिण्यौनानंतोवीक्षितोद्विज ततोव्रजन्ददर्शाग्रेगर्दभंकुंजरंतथा
तावपृच्छद्द्विजोनंतोभवद्भ्यांनोपलक्षितः एवंसपृच्छन्नष्टाशस्तत्रैवनिषसादह कौंडिन्योविह्वलीभूतोनिराशोजीवितेनृप
दीर्घमुष्णंचनिश्वस्यपपातभुविभारत प्राप्यसंज्ञामनंतेतिजल्पन्नुत्थायसद्विजः नूनंत्यक्ष्याम्यहंप्राणानितिसंकल्प्यचेतसि उ
त्थायोद्बुध्यवृक्षेस्मिंस्तावद्दूरथसत्तम कृपयानंतदेवोपिप्रत्यक्षंसमजायत वृद्धब्राह्मणरूपेणइतएहीत्यवाचतम्
प्रगृह्यदक्षिणेपाणौगुहायांप्रविवेशतम् सांपुरींदर्शयामासदिव्यनारीनरैर्युताम् यस्यांनिविष्टमात्मानंदिव्यसिंहासनेशु
भे पार्श्वस्थशंखचक्राब्जगदागरुडशोभितम् दर्शयामासविप्रायविश्वरूपमनंतकम् विभूतिभेदैश्चानंतैरनंतममि-
तौजसं कौस्तुभेनविराजंतंवनमालाविभूषितम् तंदृष्ट्वातादृशंरूपमनंतमपराजितं वंद्यमानोजगादोच्चैर्जयशब्द पुरःसरं
पापोहंपापकर्माहंपापात्मापापसंभवः त्राहिमांपुंडरीकाक्षसर्वपापहरोभव तच्छ्रुत्वानंतदेवेशःप्राहस्निग्धयागिरा माभै
स्त्वंब्रूहिविप्रेंद्रयत्तेमनसिवर्तते कौंडिण्यउवाच मयाभ्यूत्यवलिप्तेनत्रोटितोनंतदोरकः तेनपापविपाकेनभूति
र्मेप्रलयंगता स्वजनैःकलहोगेहेनकश्चिन्मांप्रभाषते निर्वेदाद्भ्रमतेरण्येतवदर्शनकांक्षया॥ कृपयादेवदेवेशत्वयात्मा
संप्रदर्शितः तस्यपापस्यमेशांतिंकारुण्याद्वक्तुमर्हसि श्रीकृष्णउवाच तच्छ्रुत्वानंतदेवेशउवाचद्विजसत्तमम्
भक्त्यासंतोषितोदेवःकिंनदद्याद्युधिष्ठिर अनंतउवाच स्वगृहेगच्छकौंडिण्यमाविलंबंकुरुद्विज चरानंतव्रतं

भक्त्यानववर्षाणिपंचच सर्वपापविशुद्धात्माप्राप्स्यसेसिद्धिमुत्तमां पुत्रपौत्रान्समुत्पाद्यभुक्त्वाभोगान्यथेप्सितान् अंतेमत्
स्मरणंप्राप्यमामुपेष्यस्यसंशयम् अन्यंचतेवरंदद्मिसर्वलोकोपकारकं इदमाख्यानकवरंशीलानंतव्रतादिकं करिष्यतिनरो
यस्तुकुर्वन्व्रतमिदंशुभम् सोचिरात्तापनिर्मुक्तःप्राप्नोतिपरमांगतिम् गच्छविप्रगृहंशीघ्रंयथायेनागतोह्यसि कौंडि
न्यउवाच स्वामिन्पृच्छामितेब्रूहिकिंचित्कौतूहलंमया अरण्येभ्रमतादृष्टंतद्दस्वजगद्गुरो यश्चूतवृक्षःकस्तत्रकागौः
कोवृषभस्तथा कमलोत्पलकल्हारैःशोभितंसुमनोहरं मयादृष्टंमहारण्येकिंतत्पुष्करिणीद्वयम् कोखरःकुंजरःकोसौ
कोसौवृद्धोद्विजोत्तमः अनंतउवाच सचूतवृक्षोविप्रोसौविद्यावेदविशारदः विद्यानदत्ताशिष्येभ्यस्तेनासौतरुतांगतः या
गौर्वसुंधरादृष्टापूर्वंसाबीजहारिणी वृषोधर्मस्त्वयादृष्टःशाद्वलंसत्यमास्थितः धर्माधर्मव्यवस्थानंतच्चपुष्करिणीद्वयम् ब्रा
ह्मण्यौकेचिदप्यास्तांभगिन्यौतेपरस्परम् धर्माधर्मादियत्किंचित्तन्निवेदयतोमिथः विप्रायवेदविदुषेनदत्तंदुर्बलायवै भि-
क्षादत्तानचार्थिभ्यस्तेनपापेनकर्मणा वीचीकल्लोलमालाभिर्गच्छतस्तेपरस्परम् खरःक्रोधस्तथादृष्टःकुंजरोमदउच्यते
ब्राह्मणोसावनंतोहंगुहासंसारगह्वरं इत्युक्त्वादेवदेवेशस्तत्रैवांतरधीयत स्वप्नप्रायंततोदृष्ट्वाततःस्वगृहमागतः कृत्वानं
तव्रतंसम्यक्नववर्षाणिपंचच भक्त्वासर्वमनंतेनयथोक्तंपांडुनंदन अंतेचस्मरणंप्राप्यगतोनंतपुरेद्विजः तथात्वमपिराज
र्षेकथांशृण्वन्व्रतंकुरु प्राप्स्यसेचिंतितंसर्वमनंतस्यवचोयथा यद्वच्चतुर्दशेवर्षेफलंप्राप्तंद्विजन्मना वर्षैकेनतदाप्नोतिकु

त्वोपाख्यानकव्रतम् एतत्तेकथितंभूपव्रतानामुत्तमंव्रतं यच्छ्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः येपिशृण्वंतिसततंप
ठ्यमानंपठंतिये तेपिपापविनिर्मुक्ताःप्राप्स्यंतिपरंपदं संसारगह्वरगुहासुसुखंविहर्तुंवांछंतियेकुरुकुलोद्भवशुद्धस-
त्वाः संपूज्यचत्रिभुवनेशमनंतदेवंबध्नंतिदक्षिणकरेवरदोरकंते इतिअनंतव्रतकथासमाप्ता अथानंतव्रतोद्यापनम्
युधिष्ठिरउवाच त्वत्प्रसादाच्छ्रुतंकृष्णमयानंतव्रतंशुभं इदानींब्रूहिमेनंतव्रतोद्यापनमुत्तमं कृष्णउवाच शृणु
पांडववक्ष्यामिव्रतोद्यापनमुत्तमं कृतेनसफलंपार्थव्रतंभवतिनिश्चितं आदौमध्येतथाचांतेव्रतस्योद्यापनंभवेत् यदि
वित्तस्यचित्तस्यसंपत्तिःशुभकालता तदाचोद्यापनंकुर्याच्छुभलग्नेशुभेदिने चतुर्दशेषुवर्षेषुमुख्यमुद्यापनंव्रतं कार्यंशु
क्लत्रयोदश्यांब्रह्मचारीव्रतीततः एकभक्तेननियमंकृत्वाभक्तिसमन्वितः ततःप्रातश्चतुर्दश्यांस्नात्वातीर्थेशुभेशुचिः सं
कल्पयेद्रमाकांतंदेशकालावनुस्मरन् ततोनद्यांदेवखातेतीर्थेप्रस्रवणेतथा सर्वौषधीःसर्वगंधैस्तिलकल्कैरथामलैः वेदोक्त
विधिनास्नात्वासंतर्प्यपितृदेवताः ततोगृहंसमागत्यवेदींकृत्वासुशोभनां तन्मध्येह्युपविश्याथदेशकालौस्मरेत्ततः गणेशं
पूजयित्वाथपुण्याहंवाचयेद्द्विजैः आचार्यंचसपत्नीकंवरयेद्वेदपारगम् ब्राह्मणंचसदस्यंचऋत्विजश्चचतुर्दश सर्वान्वस्त्रै
रलंकारैर्जलपात्रादिनार्चयेत् तत्रालिखेच्चमंडलकंपंचवर्णैःसुशोभनैः विरच्यसर्वतोभद्रंमंडपांतस्तुमध्यगं ब्रह्मादिदेवता
स्तस्मिन्नावाह्यापिचपूजयेत् तन्मध्येपंकजेधान्यंयथाशक्तिक्षिपेत्ततः सौवर्णंराजतंवापिताम्रजंवाथमृन्मयं तस्योपरि

न्यसेत्कुंभमव्रणंसूत्रवेष्टितम् तस्मिन्जलंगंधपुष्पफलपल्लवमृत्तिकाःक्षिप्त्वारत्नंहिरण्यंचवस्त्रयुग्मेनवेष्टयेत् सौवर्णंराजतंताम्रंमृ
न्मयंवंशजंतथा पात्रंतदुपरिन्यस्यपट्टकूलादिकंशुभम् लिखेदष्टदलंतत्रचंदनेनसुगंधिना पद्मंविरच्यतन्मध्येनंतमूर्तिं
विधायच पलेनवातदर्धेनमाषकेणापिवाकृताम् सौवर्णींरमयायुक्तांशंखचक्रगदाब्जकाम् आवाहनाद्युपचारैः पूजयेत
सुसमाहितः पंचामृतेनस्नपयेत्ततश्चवसनद्वयम् पट्टकूलादिकंपीतमर्चयित्वार्चयेद्व्रती पुष्पधूपैस्तथादीपैर्नैवेद्यैश्चप्रपू
जयेत् पुनःपुष्पाणिसंगृह्यपूजयेन्नामभिःक्रमात् अनंतायनमःपादौगुल्फौसंकर्षणायच कालात्मनेजानुनीचजघने
विश्वरूपिणे कटीवैविश्वरूपायमेढ्रंवैविश्वसाक्षिणे नाभिंतुपद्मनाभायहृदयंपरमात्मने कंठंश्रीकंठनाथायबाहूसर्वा
स्त्रधारिणे मुखंतुवाचस्पतयेचक्षुषीकपिलायच ललाटंकेशवायेतिशिरःसर्वात्मनेतथा नमःपादौपूजयामीत्येवमा
दिप्रपूजयेत्॥ एवंसंपूज्यविधिनारात्रौजागरणंचरेत् गीतवादित्रनृत्यादिपुराणश्रवणान्वितम् प्रतिमांचप्रकुर्वीतपूजां
गंधादिनाहरेः नानाफलानिभक्ष्याणिखाद्यानिचनिवेदयेत् ततःप्रभातसमयेस्नात्वाचार्यादिभिःसह अनंतंपूजयेत्प्र
ग्वत्जुहुयात्सश्चिमेततः कुंडेवास्थंडिलेकुर्यादग्निस्थापनपूर्वकम् आज्यभागांतमाचार्यःसंगृह्योक्तविधानतः ततोऽ
श्वत्थसमिद्भिस्तदभावेन्याभिरेवच दुग्धमध्वाज्यदधिभिस्तिलैर्वापायसेनच आज्येनचप्रतिद्रव्यमष्टोत्तरसहस्रकम् अ
ष्टोत्तरशतंवाष्टाविंशतिंजुहुयात्क्रमात् अतोदेवेतिमंत्रेणस्त्रीणांवैनाममंत्रतः प्रणवादिचतुर्थ्यंतंनमोंतानंतनामतः नामम-

त्रैश्चजुहुयाच्चतुर्दशभिरादरात् पुरुषसूक्तेनजुहुयादतोदेवेतिवापुनः शतमष्टोत्तरंयावत्प्रत्येकंजुहुयाद्गुरुः चरुहोमस्तथाका
र्योमंत्रैरेतैर्विचक्षणः एतैर्वक्ष्यमाणमंत्रैर्जुहुयाच्चरुणातथा ॐ अनंतायस्वाहा ॐ कालाय० ॐ अहोरात्राय० ॐ अर्धमा-
साय० ॐ मासाय० ॐ ऋतुभ्यः ॐ परिवत्स० ॐ कपिलाय० ॐ शेषायन० ॐ कालात्मने० ॐ उषसे० ॐ काष्ठाय० ॐ मुहूर्ताय० ॐ
शेषाय० १४ ॐ भूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॐ भुवोवायवेचांतरिक्षायचमहतेचस्वाहा ॐ स्वरादित्यायचदिवेचमह
तेचस्वाहा ॐ भूर्भुवःस्वश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहा आज्यतिलैः स्विष्टकृतंप्रजापतिभ्योजुहुयात् स
मिदादिभिरेवंचप्रत्येकंजुहुयात्क्रमात् एवंस्विष्टकृदादीनिपूर्णपात्रांतमाचरेत् जपेत्पुरुषसूक्तंतुस्मृत्वानंतंस्वरोत्तमं पूर्णा
हुतिंचजुहुयाद्धोमांतेविश्वमित्यृचा होमशेषंसमाप्याथकृत्वात्र्यायुषमेवच ततोवैलोकपालांश्चग्रहान्पूज्ययथाक्रमं गीत
वादित्रनिनदैर्दत्वापूर्णाहुतिंप्रति केषांचिन्मतेरात्रौहोमः पूजयित्वाहरिंदेवमाचार्यंपूजयेत्ततः परिपूज्यसपत्नीकंवस्त्राल्रं
कारभूषणैः वस्त्रालंकारभूषाद्यैस्ततोधेनुंसमर्चयेत् पयस्विनींसुशीलांचवस्त्रालंकारभूषितां स्वर्णशृंगींरौप्यखुरींताम्र
पृष्ठींसुशोभनां कांस्यदोहांरत्नपुच्छांनिष्कर्कंठींसवत्सकां सुरभिर्वैष्णवीमातानित्यंविष्णुपदेस्थिता ग्रासंगृण्हमयादत्तंगोमा
तस्मात्तुमर्हसि गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश यस्मात्तस्माच्छुभंमेस्यादिहलोकेपरत्रच गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठ
तः गावोमेहृदयेसंतुगवांमध्येवसाम्यहं मंत्रेणानेनसंपूज्यआचार्यायनिवेदयेत् गोदानस्यविधानार्थंदद्यात्स्वर्णंयथाविधि

अनंतंपरिवारंचब्राह्मणायनिवेदयेत् ऋत्विजःपूजयित्वाथतेभ्योदद्याच्चदक्षिणाम् चतुर्दशैवकुंभांश्चपक्वान्नपरिपूरितान्
वस्त्रोपवीतेदद्याच्चअनंतःप्रीयतामिति आचार्यादीन्भोजयित्वापूर्णतांवाचयेत्ततः अथानंतंविसृज्यापिगृह्णीयादाशि
षस्ततः भक्तियुक्तोनमस्कृत्यब्राह्मणानांक्षमापयेत् ततोहृष्टोबंधुयुतोभुंजीयात्सुसमाहितः एवंकृतेनंतफलंदातानंतो
भवेन्नृणाम् इतिश्रीभविष्योत्तरपुराणेअनंतव्रतोद्यापनंसंपूर्णम् अथनष्टदोरकविधिः युधिष्ठिरउवाच अनंतव्रत
माहात्म्यंकृत्स्नंकृष्णात्वयोदितम् भगवन्दोररूपेणभाग्यदोसिमहात्मनाम् दोरंप्रमादतोनष्टंयदिस्याद्दैवतंजनैः तदाकिंकर
णीयंस्याद्व्रतंत्रैलोक्यपावनम् कृष्णउवाच दोरेनष्टेमहद्दोषःप्रभवेद्व्रतिनामिह तस्मात्तद्दोषनाशार्थंप्रायश्चित्तंविधीयते
गुरुंप्रदक्षिणीकृत्यनमस्कृत्यसमाहितः विज्ञाप्यदोरनाशंचकृत्वादोरंव्रतीततः हव्यवाहंप्रतिष्ठाप्यतस्मिन्ध्यात्वाहरिंपरं आ
ज्यमग्नावधिश्रित्यदद्याद्विप्रायचासनं अष्टोत्तरशतंहुत्वामूलमंत्रेणवैष्णवं नाममंत्रेणतत्कृत्वाद्वादशाक्षरसंयुतं केशवादिस-
कृद्धुत्वाप्रायश्चित्तंतुशक्तितः पूर्णाहुतिंततोहुत्वाहोमशेषंसमापयेत् व्रतछिद्रंजपछिद्रंयच्छिद्रंव्रतकर्मणि वचनाद्भूमिदेवानां
सर्वंसंपूर्णतांव्रजेत् मंत्रहीनंक्रियाहीनंभक्तिहीनंजनार्दन यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे आचार्यपूजनंकार्यंदक्षिणाधेनुर्नृ-
पोत्तम एवंशांतिविधिंकृत्वापूर्ववद्व्रतमाचरेत् तस्मात्सर्वप्रयत्नेनप्रायश्चित्तंचरेत्सुधीः इतिभविष्योत्तरेनष्टदोरकविधिःस
माप्तः अथभाद्रपदशुक्लचतुर्दश्यांकार्तिक्यांवामाघ्यांवावैशाख्यांवाकदलीव्रतंहेमाद्रौभविष्योत्तरेसापूर्वाण्हव्यापिनीग्राह्याअथरं

भारोपणविधिः रंभावृक्षंलापयितुंस्वहस्तेनशुभभूमिकाम् वर्षमेकंतुसंपूज्यउदकुंभेनसिंचयेत् यावत्प्रसवपर्यंतंपूजयेच्चय
थाविधि पूर्वस्यांतुतथासम्यगुत्तरस्यांतथैवच दक्षिणेपश्चिमेहानी रंभाप्रसवलक्षणं अथकदलीव्रतविधिः यदावित्त
स्यवित्तस्यसंपत्तिःशुभकालता तदाचोद्यापनंकुर्याच्छुभलग्नेशुभेदिने कायशुद्धिस्त्रयोदश्यांब्रह्मचारीव्रतीकृती एकभक्ते
ननियमंकृत्वाभक्तिसमन्वितः ततःप्रातश्चतुर्दश्यांस्नात्वातीर्थेशुभेशुचिः उपवासंतुसंकल्प्यदेशकालावनुस्मरन् ततोगृहंसमा
गत्यवेदींकृत्वासुशोभनां तन्मध्येउपविश्याथदेशकालौस्मरेत्ततः गणेशंपूजयित्वाथपुण्याहंवाचयेद्द्विजैः आचार्यंचसपत्नीकं
वरयेद्वेदपारगं गोचर्ममात्रंसंलिप्यसर्वतोमंडलंशुभं लिखेत्सम्यक्तथावर्णैर्नीलपीतैःसितासितैः विरच्यलिंगतोभद्रंमंड
पांतस्तुमध्यगं ब्रह्माद्यादेवतास्तत्रस्थापयित्वाप्रपूजयेत्॥ अथवास्वस्तिकंकुर्यात्पद्ममष्टदलंतुवा ततःसाग्रांशुपर्णांतुसम्यग्
वृत्तांसुशोभनां समूलांकदलींस्थाप्यपूजयेत्तांयथाविधि उत्तमोदकमानीयसेचयेत्तांसमाहितः यथारंभोविवृद्धिस्तेशाखा
दीनांसदाभवेत् तथावर्धयमांदेविसेचयेपार्वतीप्रिये इतिसेचनमंत्रः तन्मध्येपंकजेधान्यंयथाशक्तिक्षिपेत्ततः सौव-
र्णराजतंवापिताम्रजंवापिमृन्मयं कुंभंन्यसेत्तदुपरिअव्रणंशुनवं दृढम् तस्मिन्जलंगंधपुष्पंफलपल्लवमृत्तिकाः क्षिप्त्वार-
त्नहिरण्यंचवस्त्रयुग्मेनवेष्टयेत् सौवर्णंराजतंताम्रंमृन्मयंवंशजंतथा पात्रंतदुपरिन्यस्यपट्टकूलादिकंशुभम् लिखेदष्टदलं
तत्रचंदनेनसुगंधिना पलेनवातदर्धेनमाषकेणापिवाकृतौ उमामहेश्वरौतत्रमूलमंत्रेणपूजयेत् इतिकदलीव्रतविधिः

अथउमामहेश्वरसहितकदलीपूजनम् मासपक्षाद्युक्तिरव्ययममपापनिर्मुक्त्युत्तमसिद्धिपुत्रपौत्रादिवैधव्याभावसिनभोगधनधान्य-
प्राप्त्यर्थंउमामहेश्वरसहितकदलीपूजनंकरिष्ये तथाचकलशार्चनंचकरिष्ये कदल्यागच्छहेदेविसौभाग्यफलदायिनि रूपंदेहिज
यंदेहियशोदेहिस्त्रनिश्चितं आगच्छवरदेदेविशंकरेणमहेश्वरि करिष्यमाणांपूजांमेगृहाणानुग्रहंकुरु आवाहनं कार्तस्वरमयं
दिव्यंनानामणिगणान्वितम् अधितिष्ठमहादेविशिवेनसहपार्वति आसनं दूर्वाक्षतादिभिर्युक्तंस्वर्णपात्रेस्थितंशुभम्
पाद्यार्थंकल्पितंभक्त्यागृहाणपरमेश्वरि पाद्यं॰ अर्घ्यपात्रेस्थितंतोयंफलपुष्पसमन्वितं अर्घ्यंगृहाणमेदेविभक्त्यादत्तं
शिवप्रिये अर्घ्यं कर्पूरोशीरसुरभिशीतलंविमलंजलं गंगायास्तुसमानीतंगृहाणाचमनीयकम् आचम॰ गंगादिसर्वतीर्थे-
भ्योमयाप्रार्थनयाहृतं स्नानार्थंतुमयादेविगृहाणेदंसुरेश्वरि स्नानं यथारंभोविवृद्धिस्तेशाखादीनांसदाभवेत् तथावर्ध
यमांदेविसेचनात्पार्वतीप्रिये सेचनं॰ वस्त्रंशुभमिदंदिव्यंकुंकुमाक्तंसुशोभनं गृहाणाच्छादनंदेवितथाच्छादयमांसदा॥ वस्त्रं
उपवीतं कंचुकीसुपवस्त्रंचनानारत्नैःसमन्वितं गृहाणत्वंमयादत्तंपार्वत्यैचनमोस्तुते कंचुकीउपवस्त्रं गंगादिसर्वतीर्थेभ्यो
मयानीतंसुनिर्मलम् तोयमेतत्सुखस्पर्शंगृहाणाचमनीयकं आचमनं श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरं विलेपनंगृ
हाणेदंरुद्राणीप्रियवल्लभे चंदनं॰ अक्षताश्चसुरश्रेष्ठ कुं॰ हरिद्राकुंकु॰ सौभाग्यद्रव्याः॰ मालतीचंपकादीनिशतपत्रा-
दिकानिच सुगंधीनिगृहाणत्वंपूजार्थंसुमनांसिच पुष्पाणि अगरुंगुग्गुलंधूपंदशांगंसुमनोहरं गृहाणेमंतृप्तिकरंघ्राण-

स्पदर्थितंपरं धूपं चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणं आर्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वरि दीपं नानापक्वान्न
संयुक्तंरसैःषड्भिःसमन्वितं नैवेद्यंविविधंभक्त्याकल्पितंत्वंगृहाणमे नैवेद्यं कर्पूरैलालवंगादिनागवल्लिदलान्वितं पूगीफलस
मायुक्तंतांबूलंप्रतिगृह्यताम् तांबूलं इदंफलमितिफलं हिरण्यगर्भेतिदक्षिणां नीराजयामिदेवेशिभक्तानांभयनाशिनि दे
हिमेसर्वसौभाग्यंपार्वत्यासहितेनघे नीराजनं यानिकानिचपापानि॰ प्रदक्षिणां॰ आश्रयेदेवपत्नीनांपूजितेचश्रियाख्य
यम् सौभाग्यारोग्यआयुश्चदेहिरंभेनमोस्तुते नमस्कारं त्वमिंद्राणीप्रियानित्यंपार्वत्याश्चातिवल्लभा सतीनांकामदाप्र
ज्याकामान्मेपरिपूरय प्रार्थनां इतिपूजनं अथकथा युधिष्ठिरउवाच कृष्णकृष्णमहाबाहोसर्वविद्याविशा
रद् अनाथनाथविश्वात्मन्दीनदैन्यनिकृंतन त्वमस्माकंपरोबंधुःत्वमस्माकंपरंसखा त्वयाभिरक्षितानित्यंविचरामोत्रनि
र्भयाः किंचित्पृच्छामिदेवेशकृपांकुरुवदस्वमे यद्गुह्यंसर्वधर्मेषुकृतेयस्मिन्महत्फलं सौभाग्यारोग्यदंपुण्यंधनधान्यविव
र्धनम् अन्नाच्छादनपुत्रादिवर्धनंश्रीनिकेतनम् तन्ममाचक्ष्वभगवन्लोकानामुपकारकम् श्रीकृष्णउवाच शृणु
राजन्प्रवक्ष्यामिव्रतानामुत्तमंव्रतम् यत्कृत्वासर्वदुःखेभ्योनारीमुच्येतसंकटात् वस्त्रान्नपानविच्छित्तिर्नभवेत्तुकदाच
न पुरामामेत्यवैकांतांरुक्मिणीप्राणवल्लभा प्रणिपत्याब्रवीद्दीनासर्वकामासयेशुभा सौभाग्यंमेकथंदेवभवेज्जन्म-
निजन्मनि सपत्नीनांश्रियंवीक्ष्यस्पृहामेजायतेप्रभो इतिप्रियायावचनंश्रुत्वाहंतांसमब्रुवम् रंभाव्रतंकुरुघाशु

सौभाग्यावासयेशुभम् कृतेयस्मिन्व्रतेदेविपरंसौभाग्यमाप्स्यसि इतिश्रुत्वावचोदेविरुक्मिणीमामभाषत रंभाव्रतेभवेत्
किंभोकोविधिःकिंचपूजनम् केनचादौपुराचीर्णंमर्त्येकेनप्रकाशितं रुक्मिण्याभाषणंश्रुत्वापुनरेवाहमब्रुवम् रंभाव्रतविधिंव-
क्ष्येशृणुदेवियथोदितम् गोचर्ममात्रंसंलिप्यसर्वतोलिंगभद्रकम् लिखेत्सम्यक्पंचवर्णैर्नीलपीतैःसितासितैः ब्रह्माद्यादेवताः
सर्वाःस्थापयित्वाप्रपूजयेत् कलशोपरिसंस्थाप्यवैणवेपटलेशुभे उमामहेश्वरौतत्रमूलमंत्रेणपूजयेत् अथवास्वस्तिकंकृत्वापद्म
मष्टदलंतुवै ततःसाग्रांसपर्णांचसम्यग्वृत्तांसुशोभनाम् समूलांकदलिंस्थाप्यपूजयेत्तांयथाविधि उत्तमोदकमानीयसेच
येत्तांसमाहितः यथारंभेविवृद्धिस्तेशाखादीनांसदाभवेत् तथावर्धयमांदेविसेचनात्पार्वतीप्रिये सदायथातेप्रसवोवर्धते
कदलीशुभे तथामनोरथानांमेप्रभावोभवतुस्थिरम् एवंसंपूज्यविधिवद्भक्तियुक्तेनचेतसा रात्रौजागरणंकुर्याद्गीतवादित्रनिः
स्वनैः एवंयाकुरुतेनारीव्रतानामुत्तमंव्रतम् भु॰कृत्वातुविविधान्भोगान्सौभाग्यंविंदतेध्रुवम् एवंयाकुरुतेदेविकदलीव्र
तमुत्तमम् तस्मात्कुरुविधानेनयथोक्तफलमाप्स्यसि इतिश्रुत्वाविधानेनचकारव्रतमुत्तमम् अवापसकलंकामंमनसायदभी
प्सितम् अन्यच्चशृणुराजेंद्रव्रतस्यफलमुत्तमम् अत्याश्चर्यकरंपुंसांशृणुष्वावहितोभवान् द्यूतेयदाजिनापूर्वंकृष्णानीता
सभांप्रति दुःशासनेनदुष्टेनद्रौपदीमुक्तमूर्धजा आकृष्यमाणेवस्त्रेतुचित्तेमामस्मरत्तदा तूर्णंतत्रगतोराजन्द्रौपद्या
स्त्राणनायवै अदृश्योहंतुकृष्णायैव्रतंसमुपदिष्टवान् तदाकर्तुमशक्येतुव्रतेस्मिन्राजसत्तम रुक्मिण्याचरि-

तंपूर्वंयदेत द्व्रतमुत्तमम् तस्यपुण्यफलंदत्तंकृष्णायैराजसत्तम तत्कालमेववस्त्राणांसमृद्धिरभवत्पुरा दुःशासनेनदुष्टेनआक्षिप्ते
षंशकेषुच प्रादुर्भूतानिवस्त्राणिनानावर्णानिभारत खिन्नोदुःशासनोपापोविररामांशुकग्रहात् तावद्भूरिवस्त्राणिकद
लीगर्भवन्नृप इत्थंव्रतप्रभावोयंगुह्योपिकथितोमया कारयस्वविधानेनपूर्णकामोभविष्यसि इतिकथा अथोद्यापनम्
युधिष्ठिरउवाच कस्मिन्मासेतिथौकस्यामाचरेद्व्रतमुत्तमम् कदल्यभावेकिंकार्यंतन्मामाचक्ष्वकेशव श्रीकृष्णउवाच ॥
शुक्लपक्षेचतुर्दश्यामासिभाद्रपदेनृप कार्तिकेमाघमासेवावैशाखेचेत्तरेतथा पुण्येमासिप्रकुर्वीतपौर्णमास्यांशुभेदिने ति
थिक्षयंवर्जयीतशुभायांसुसमाहितः यस्मिन्देशेनलभ्येतकदलीराजसत्तम सुवर्णस्यशुभांतत्रकृत्वापूजांसमाचरेत् ॥
यदिलभ्येतकदलीमारोप्यादौप्रपूजयेत् यावत्तस्यांफलंतावत्सिंचेन्नीरेणभूपते फलेषुपक्वजातेषुपश्चाद्विप्रान्समा
ह्वयेत् प्रभातेविमलेस्नात्वानद्यादौविमलेजले अहतेवाससीगृह्यकृत्वासंध्यादिकर्मच अरत्निमात्रंकृत्वातुस्थंडिलं
वाग्यतःशुचिः अग्निंसंस्थाप्यविधिवत्तत्रहोमंसमाचरेत् शतमष्टोत्तरंविद्वान्तिलाज्याहुतिभिस्तथा एकाग्रचित्तःसं
तुष्टःकुर्याद्व्याहृतिभिःपृथक् ब्रह्मादिदेवताभ्यश्चनाममंत्रैःपृथक्पृथक् उमामहेश्वरायापिमूलमंत्रेणदापयेत् आ
चार्यंचसपत्नीकंवस्त्राद्यैःपूजयेत्ततः धेनुंपयस्विनींवत्सवस्त्रालंकारभूषिताम् स्वर्णशृंगींरौप्यखुरींताम्रपृष्ठींसुवास
सं कांस्यदोग्ध्रींरत्नपुच्छांनिष्ककंठींसघंटकाम् अभ्यर्च्यवेदविदुषेआचार्यायनिवेदयेत् पादुकोपानहौछत्रमलंकारानने

शः यथाशक्तिप्रदेयानिव्रतस्यपरिपूर्तये चतुर्विंशत्षोडशवायुग्मान्याहूयसंयतः वस्त्रालंकारगंधाद्यैः पूजयित्वातुभोजयेत् वा
यनानिचदेयानिवंशपात्रैस्तुशक्तितः दद्याच्चदक्षिणांसम्यक्यथाविभवसारतः अन्येभ्योपियथाशक्तिदद्यादन्नंसुसंस्कृत
म् क्षमापयित्वातांदेवींव्रतस्यपरिपूर्णताम् कदलीकामदायिन्यैमेधायैतेनमोनमः रंभायैभूतिसारायैसर्वसौख्यप्रदेनमः
यथायथातेप्रसवोवर्ततेकदलिध्रुवं तथामनोरथानांमेप्रभवोवर्धतुस्वयं इतिकदलीदानमंत्रः एवंनारीनरोवापियःकुर्या
त्कदलीव्रतम् सर्वान्कामानवाप्नोतिस्वर्गलोकेमहीयते इतिश्रीभविष्योक्त॰ कदलीव्रतोद्यापनंसंपूर्णम् अथपौर्णिमां-
तमासेनकार्तिककृष्णचतुर्दशीनरकचतुर्दशी तस्यांतिलतैलेनस्नानमुक्तंभविष्ये कार्तिकस्यासितेपक्षेचतुर्दश्यांनिशामु-
खे यमदीपंबहिर्दद्यादपमृत्युर्विनश्यति कार्तिकस्यासितेपक्षेचतुर्दश्यांविधूदये अवश्यमेवकर्तव्यंस्नानंनरकभीरुभिः दि
नद्वयेविधूदयेचतुर्दशीसत्वे पूर्वविद्धचतुर्दश्यांकार्तिकस्यसितेतरे पक्षेप्रत्यूषसमयेस्नानंकुर्यात्प्रयत्नतः निर्णयदीपि
कोक्तेः परदिनएवेत्यन्ये दिनद्वयेचतुर्दश्याभावेतु चतुर्दश्यांचतुर्थयामेस्नानमितिदिवोदासनिबंधे स्मृतिदर्पणेपि ॥
चतुर्दशीयाश्वयुजस्यकृष्णास्वात्यर्क्षयुक्ताचभवेत्प्रभाते स्नानंसमभ्यर्च्यनरैस्तुकार्यंसुगंधतैलेनचविप्रयुक्तैः तैलेलक्ष्मी
र्जलेगंगादीपावल्याश्चतुर्दशीम् प्रातःस्नानंतिशेषः आश्विनस्यासितेपक्षेभूतायांनोदितोरविः यामिन्याःपश्चिमे-
यामेतैलाभ्यंगोविशिष्यते मृगांकोदयवेलायांत्रयोदश्यांयदाभवेत् दर्शेवामंगलंस्नानंदुःखशोकभयप्रदम् कालादर्शे

त्रयोदशीनिषेधश्च त्रयोदशीयदाप्राप्तास्वयंयातिचतुर्दशी रात्रिशेषोऽमावास्यातदाभ्यंगोत्रयोदशीं चतुर्थयामेस्नानमुक्तं-
ज्योतिर्निबंधेनारदोपि इषासितेचतुर्दश्यामिंदुक्षयतिथावपि ओर्जादौस्वातिसंयुक्तेतदादीपावलीभवेत् तैलेलक्ष्मीर्जलेगंगा
दीपावल्याश्चतुर्दशीं प्रातःस्नानंतुयःकुर्याद्यमलोकंनपश्यति अपामार्गमथोतुंबीभ्रामयेच्छिरसोपरि अपामार्गस्यपत्राणि
नरकस्यक्षयायवै ततश्चतर्पणंकार्यंधर्मराजस्यनामभिः अमावास्याचतुर्दश्योःप्रदोषेदीपदानतः यममार्गांधकारेभ्योमु-
च्यतेकार्तिकेनरः अथकथा वालखिल्याऊचुः पूर्वविद्धचतुर्दश्यामाश्विनस्यसितेतरे पक्षेप्रत्यूषसमयेस्नानं-
कुर्यात्सुयत्नतः अरुणोदयतोन्यत्ररिक्तायांस्नातियोनरः तस्याब्दिकभवोधर्मोनश्यत्येवनसंशयः तथाकृष्णचतुर्दश्यामा
श्विनेर्कोदयेस्फुराः यामिन्याःपश्चिमेयामेतैलाभ्यंगोविशिष्यते यदाचतुर्दशीनस्यादिंदुदिनंचेद्विधूदये दिनद्वयंभवेच्चापि
सदापूर्वैवगृह्यते बलात्कारादुदाद्वापिशिष्टत्वान्नकरोतिचेत् तैलाभ्यंगंचतुर्दश्यांरौरवंनरकंव्रजेत् तैलेलक्ष्मीर्जलेगंगादी
पावल्याश्चतुर्दशीम् अपामार्गमथोतुंबींप्रपुंनाटमथापरम् भ्रामयेत्स्नानमध्येतुनरकस्यक्षयायवै दिनत्रयंत्रिवारंच
पठित्वामंत्रमुत्तमम् सितालोष्ठसमायुक्तंसकंटकदलान्वितम् हरपापमपामार्गभ्राम्यमाणःपुनःपुनः इष्टबंधुजनैःसार्धं
एवंस्नानंसमाचरेत् ततोमंगलवासांसिपरिधायात्मभूषणं कृत्वाचतिलकंदत्वाकार्तिकस्नानमाचरेत् स्नानांगतर्पणंकृ-
त्वायमंसंतर्पयेत्ततः यमायधर्मराजायमृत्यवेचांतकायच वैवस्वतायकालायसर्वभूतक्षयायच औदुंबरायदध्नायनी

लायपरमेष्ठिने वृकोदरायचित्रायचित्रगुप्तायतेनमः चतुर्दशैतेमंत्रास्युःप्रत्येकंचनमोन्विताः एकैकेननिलैर्मिश्रान् दद्यात्
त्रीन्नुदकांजलीन् यज्ञोपवीतिनाकार्यंप्राचीनावीतिनातथा देवत्वंचपितृत्वंचयमस्यास्तिद्विरूपना जीवत्पितापिकुर्वीततर्पणं
यमभीष्मयोः नरकायप्रदातव्योदीपःसंपूज्यदेवताः अत्रैवलक्ष्मीकामस्यविधिःस्नानेमयोच्यते इषेभूतेचदर्शेचकार्तिक
प्रथमेदिने यदास्नायीतदाभ्यंगस्नानंकुर्यादिनोदये ऊर्जेशुक्लद्वितीयायांयदिस्वातीभवेत्तदा मानवोमंगलस्नायीनैवल
क्ष्याविमुच्यते दीपैर्नीराजनादत्रसैषादीपावलीस्मृता इंदुक्षयेपिसंक्रांतौरवौपातेदिनक्षये अत्राभ्यंगोनदोषायप्रातःपा
पापनुत्तये माषपत्रस्यशाकेनभुक्त्वातस्मिन्दिनेनरः प्रेताख्यायांचतुर्दश्यांसर्वपापैःप्रमुच्यते इषासितचतुर्दश्यामिंदु
क्षयतिथावपि ऊर्जादौस्वातिसंयुक्तेतदादीपावलीभवेत् कुर्यात्संलग्नमेतच्चदीपोत्सवदिनत्रयम् आश्विनस्यासितेपक्षे
त्रयोदश्यादिषुत्रिषु क्रमात्पादैस्त्रिभिर्विष्णुरग्रहीद्भुवनत्रयम् महाराजोबलिःप्रोक्तस्तुष्टेनहरिणाततः वरंयाचयभद्रं
तेयद्यन्मनसिवर्तते इतिविष्णुवचःश्रुत्वाबलिर्वचनमब्रवीत् आत्मार्थेनचयाचेहंसर्वंदत्तंमयातव लोकार्थंयाचयिष्या
मिशक्तश्चेद्देहिमेप्रभो मयायातेधरादत्तावामनच्छद्मरूपिणे त्रिभिःपादैस्त्रिदिवसैःसाचाक्रांतायतस्त्वया तस्मादेतद्ब
लेराज्यमस्तुअन्हत्रयंहरे मद्राज्येदीपदानंयेभुविकुर्वंतिमानवाः तेषांगृहेतवस्त्रीयंसदातिष्ठतुसुस्थिरा ममरा
ज्येगृहेयेषामंधकारःपतिष्यति अलक्ष्मीसहितस्तेषामंधकारोस्तुसर्वदा चतुर्दश्यांतुयेदीपान्नरकायददंतिच ॥

तेषांपितृगणः सर्वेनरकात्स्वर्गमाप्नुयात् बलिराज्यंसमासाद्ययैर्नदीपावलीकृता तेषांगृहेकथंदीपाः प्रज्वलिष्यंतिकेशव बलिरा
ज्यंतुयेलोकाः शोकदुःखानुकारिणः तेषांगृहेसदाशोकः पतेदितिनचान्यथा चतुर्दशीदिनेराज्यंबलेरस्त्वितियाचयेत् पुरावा-
मनरूपेणप्रार्थयित्वाधरामिमाम् ददावतिथिरिंद्रायबलिंपातालवासिनम् कृत्वादैत्यपतिंदध्यादहोरात्रत्रयंहरिः तस्मान्
महोत्सवंचात्रसर्वथैवहिकारयेत् महारात्रिः समुत्पन्नाचतुर्दश्यांमुनीश्वराः अतस्तदुत्सवः कार्यः शक्तिपूजापरायणैः
बलिराज्यंसमासाद्ययक्षगंधर्वकिंन्नराः औषध्यश्चपिशाचानिमंत्राश्चमणयस्तथा सर्वेएवप्रहृष्यंतिनृत्यंतिचनिशामु-
खे नत्तन्मंत्राश्चसिध्यंतिबलिराज्येनसंशयः बलिराज्यंसमासाद्ययथालोकाःप्रहर्षिताः तथातद्दिनमध्येपिजनाःस्युर्हर्षिता
भृशम् तुलासंस्थेसहस्रांशौप्रदोषेभूतदर्शयोः उल्काहस्तानराः कुर्युःपितृणांमार्गदर्शनम् नरकस्थाश्चयेप्रेतास्तेमार्गंतु
प्रतास्सदा पश्यंत्येवनसंदेहः कार्योत्रमुनिपुंगवैः आश्विनस्यासितेपक्षेभूतादितिथयस्त्रयः दीपदानादिकार्येषुग्रा-
ह्यामध्यान्हकालना ततः प्रदोषसमयेदीपान्दद्यान्मनोरमान् ब्रह्मविष्णुशिवादीनांमठेषुभवनेषुच प्राकारोद्यान-
वापीषुप्रतोलिनिकटेषुच मंदुरासुविविक्तासुहस्तिशालासुचैवहि इतिविशेषांतरंलैंगे ततः प्रेतचतुर्दश्यां
भोजयित्वातपोधनान् शैवान्विप्रांस्तथपरान् शिवलोकेमहीयते दानंदत्वातुतेभ्यश्चयमलोकंनगच्छति नक्तंप्रेत-
चतुर्दश्यांयः कुर्याच्छिवतुष्टये ततः क्रतुशतेनापिप्राप्यतेपुण्यमीदृशम् शिवरात्रेस्तथातस्यालिंगस्यापिप्रपूजया अक्ष

यांल्लुभतेभोगान्शिवसायुज्यमाप्नुयात् यदिस्युःसंगवादर्वागेताश्चतिथयस्त्रयः दीपदानादिकार्येषु कर्तव्याःपूर्वसंयुताः इति
नरकचतुर्दशीदीपदानंसमाप्तम् अथकार्तिकशुक्लचतुर्दश्यांवैकुंठचतुर्दशीव्रतम् तदुक्तंसनत्कुमारसंहितायां वर्षेवै-
हेमलंबाख्येमासिश्रीमतिकार्तिके शुक्लपक्षेचतुर्दश्यामरुणोदयसंभवे महादेवतिथौब्राह्मेमुहूर्तेमणिकर्णिके स्नात्वाविश्वेश्व
रोदेव्याविश्वेश्वरमपूजयत् संक्षेपंज्योतिषस्तस्यप्रतिष्ठाख्यंतदाकरोत् स्वयमेवतदात्मानंचरन्पाशुपतव्रतं ततःप्रभातेवि
मलेकृत्वापूजांमहाद्भुतां दंडपाणेर्महानाम्निवनेस्मिन्कृतपारणः श्रीमद्भवानीसदनंप्रविश्येदमनुत्तमम् इतिसनत्कुमारसंहि
तोक्तेः अथकथा वालखिल्याऊचुः कार्तिकस्यासितेपक्षेचतुर्दश्यांसमागमत् वैकुंठेशस्तुवैकुंठात्वाराणस्यांकृतेयुगे रव्यां
तुर्यांशशेषायांस्नात्वासोमणिकर्णिके गृहीत्वाहेमपद्मानांसहस्रंवैततोव्रजत् अतिभक्त्यापूजयितुंशिवयासहितंविभुं वि
धायपूजांवैश्वेशींततःपद्मैरपूजयत् सहस्रसंख्यांकृत्वादावेकनाम्नाततःपरं आरब्धंपूजनंतेनशिवस्तद्भक्तिमैक्षत एक
पद्मंपद्ममध्यान्निवीयात्तंहरेणतु ततःपूजितवान्विष्णुरेकोनंकमलंत्वभूत् इतस्ततस्तेनदृष्टंपद्मंतिष्ठतिनक्वचित् कम
लेषुभ्रमोजातोऽथवानामसुमेभ्रमः क्षणंविचार्यसहरिर्नमेनामभ्रमोभवत् पद्मेष्वेवभ्रमोजातोविचार्यैवंपुनःपुनः सह
स्रपद्मसंकल्पःपूजार्थंतुकृतोमया अर्च्यःकथंमहादेवोएकोनकमलैर्मया यद्यानेतुंगमिष्यामिभंगःस्यादासनस्यतु किंवि-
धेयमतःशंभोःपूजनेचिंतयद्धरिः एकःप्रकारउत्पन्नोहृदयेस्यमुनीश्वराः पुंडरीकाक्षइत्येवंमांवदंतिमुनीश्वराः ने

त्रंमेपद्मसहस्रंपद्मार्थेत्वर्पयाम्यहम् इतिनिश्चित्यमनसिदत्वानर्जनिकांसतु नेत्रमध्येतदुत्पाद्यमहादेवस्तुपूजितः ततोमहेश्व
रस्तुष्टोवाक्यमेतदुवाचह महादेवउवाच त्वत्समोनास्तिमद्भक्तस्त्रैलोक्येसचराचरे राज्यंदत्तंत्रिलोक्यास्तेभवत्वंलोकपा
लकः अन्यद्वरयभद्रंतेवरंयंमनसेप्सितम् अवश्यमेवदास्यामिनात्रकार्याविचारणा मद्भक्तिंतुसमालंब्ययेद्विषंतिजनार्दनं
तेमद्द्वेष्टानराविष्णोव्रजेयुर्नरकंध्रुवम् विष्णुरुवाच त्रैलोक्यरक्षाचरणंममादिष्टंमहेश्वर दुर्मदाश्चमहासत्वादैत्यामार्या
कथंमया शिवउवाच एतत्सुदर्शनंचक्रंसर्वदैत्यनिकृंतनम् गृहाणभगवन्विष्णोमयातुभ्यंनिवेदितम् अनेनसर्वदै
त्यानांभगवन्कदनंकुरु एवंचक्रंहरेणास्यदत्वावचनमब्रवीत् शिवउवाच वर्षेचहेमलंबाख्येमासिश्रीमतिकार्त्तिके शुक्ल
पक्षेचतुर्दश्यामरुणाभ्युदयंप्रति महादेवतिथौब्राह्मेमुहूर्त्तेमणिकर्णिके स्नात्वाविश्वेश्वरंलिंगंवैकुंठादेत्यपूजनम् सहस्रक
मलैस्तस्माद्भविष्यतिममप्रिया विख्यातासर्वलोकेषुवैकुंठाख्यचतुर्दशी अन्यंवरंप्रदास्यामिशृणुविष्णोवचोमम पूर्वरा
त्रौतुते पूजाकर्त्तव्यासर्वजातिभिः उपवासंदिवाकुर्यात्सायंकालेतवार्चनम् पश्चान्ममार्चनंकार्यमन्यथानिष्फलं
भवेत् ग्राह्यातुहरिपूजायांरात्रिव्याप्ताचतुर्दशी अरुणोदयवेलायांशिवपूजांसमाचरेत् सहस्रकमलैर्विष्णुरादौयैःपू
जितोनरैः पश्चादीशःपूजितश्चेज्जीवन्मुक्तःसएवहि सायंस्नात्वापंचनदेबिंदुमाधवमर्चयेत् सहस्रनामभिः
र्विष्णोःकमलैःसुमनोहरैः मणिकर्ण्यांततःस्नात्वाविश्वेशमर्चयेद्विधि॥ ॥ सहस्रनामभिःपुण्येर्जीवन्मु

क्तः सएवहि स्नात्वायोविष्णुकांच्यांवाअनंतेशंसमर्चयेत् रुद्रकांच्यांततःस्नात्वाप्रणवेशंसमर्चयेत् पृथिव्यांचश्रुतौयेयेधर्माःप्रो
क्तामहर्षिभिः सर्वेषांफलमाप्नोतिनात्रकार्याविचारणा आदौस्नात्वावन्हितीर्थेयजेन्नारायणंततः रेतोदकेनतःस्नात्वा
केदारेशंसमर्चयेत् इहैवार्थवतांनाथोभवेन्नास्त्यत्रसंशयः स्थलपद्मैस्त्वत्रपूजाकर्तव्याजलजक्षयात् आदौस्नात्वासूर्य
पुत्र्यांवेणीमाधवमर्चयेत् जान्हव्यांचततःस्नात्वासंगमेशंप्रपूजयेत् रक्तपद्मैःश्वेतपद्मैर्हरिंरुद्रंक्रमेणतु सर्वास्त्रिय
स्तस्यवश्याःसत्यंविप्रोमयोदितम् मोक्षार्थंकाशिकामध्येतिष्ठतःशुभदायकौ बिंदुमाधवविश्वेशौजगदानंददायकौ नल
भेत्पूजयित्वाकिंमोक्षोविश्वेश्वरंहरिम् विनायोहरिपूजांतुकुर्याद्रुद्रस्यचार्चनम् वृथातस्यभवेत्पूजासत्यमेतद्वचोमम ए
वंतस्मैवरंदत्वातत्रैवांतरधीयत तस्मात्सर्वप्रयत्नेनपूज्योहरिहरावुभौ प्राप्तेकलियुगेघोरेशौचाचारविवर्जिते तत्वसं-
ख्यैर्वर्षशतैर्गतैर्देवोमहेश्वरः वाराणसीस्थलिंगानिपातालेसन्नियुंक्षति ततोद्विगुणवर्षैस्तुगंगावाराणसीतथा भवि
ष्यतिअदृश्यासाततोवैश्रृणुमुनीश्वराः अंतर्हितायदाकाशीभविष्यतितदामुने नाशस्तुलिंगचिन्हानांनिःप्रभाःसकुला
जनाः चतुर्दश्याब्दंदुर्भिक्षंमहामारीसमुद्भवः गोवर्धनाश्मापिसर्वामृत्तिकाभस्मसन्निभा गंगोत्तर्यांतुयाधारापतेद्भ
गीरथाश्रमे हरिद्वाराच्चवायव्येतस्यालोपोभविष्यति भागीरथ्यांगतायांतुमर्कटीतंतुसन्निभाः भविष्यंतिजलेकीटा-
स्तोयंनीलीनिभंतथा चतुर्वर्षसहस्रेस्तुशैलस्थाःसर्वदेवताः सत्वंत्यक्त्वागमिष्यंतिमानसंचसरोवरम् गतेषुशैल-

देवेषुराजानोधैर्यविच्युताः पापिष्ठाश्चदुराचारानानादुःखेनदुःखिताः कलेरयुतवर्षाणिभविष्यंतियदाखग श्रोतमार्गस्य
लोपोहिभविष्यतिनसंशयः तदास्त्रीकाभविष्यंतिमद्यपानपरायणाः स्वल्पायुषःस्वल्पभाग्यानानारोगैश्चपीडिताः द्विजा
स्तुदक्षिणेदेशेवेदज्ञाःसंभवंतिच आनीयतान्शाककर्ताधर्मंसंस्थापयिष्यति इतिसनत्कुमारसंहितायांवैकुंठचतुर्दशी
कथासमाप्ता अथशिवरात्रिव्रतम् अमांतमासेनमाघकृष्णचतुर्दश्यांशिवरात्रिव्रतम् तच्चार्धरात्रव्यापि-
न्यांकार्यम् तदुक्तंनारदसंहितायाम् अर्धरात्रयुतायत्रमाघकृष्णाचतुर्दशी शिवरात्रिव्रतंतत्रसोश्वमेधफलंलभेत् ईशा
नसंहितायामपि माघकृष्णचतुर्दश्यामादिदेवोमहानिशि शिवलिंगमभूत्तत्रकोटिसूर्यसमप्रभम् तत्कालव्यापिनी
ग्राह्याशिवरात्रिव्रतेतिथिः माघकृष्णत्वंचात्रामांतमासपरत्वेन अतएव चतुर्दश्यांतुकृष्णायांफाल्गुनेशिवपू
जनम् तामुपोष्यप्रयत्नेनविषयान्परिवर्जयेत् इतिस्कंमंतुवचनेपौर्णमांतमासोप्युक्तः महानिशाच महानि
शाद्वेघटिकेरात्रेर्मध्यमयामयोरितिदेवलोक्तेर्निशीथरूपैव एवंचार्धरात्रशब्दोपितत्परएव दिनद्वयेनिशिथव्याप्तावव्या-
प्तौवापरैवप्रदोषव्यापिनीत्वाभात् निशिद्वयेचतुर्दश्यांपूर्वात्याज्यापराशुभा आदित्यास्तमयेकालेअस्तिचेद्याचतुर्दशी
प्रदोषव्यापिनीग्राह्याशिवरात्रेश्चतुर्दशी रात्रौजागरणंयस्मात्तस्मात्तांसमुपोषयेत् अहोरात्रव्रतंयच्चएकमेव
तिथौगतम् तस्यामुभययोगिन्यामाचरेत्तद्व्रतंव्रतीतिकामिकाशिवरात्रिःशिवरहस्येस्मृत्यंतरादिवचनाच्च नचपूर्वदिने

धिकव्याप्तिवशात्पूर्वैवेतिशंक्यम् एतस्यभूयसांस्यादनुग्रहत्वमितिन्यायमात्रत्वेनवचनबाधकत्वायोगात् प्रत्युतनिरुक्तवचनैरेव
तद्बाधाच्च पूर्वदिनेनिशीथेपरदिनेप्रदोषेतदापूर्वैव अर्धरात्रात्पुरस्तात्तुजयायोगोयदाभवेत् पूर्वविद्धैवकर्तव्याशिवरात्रिःशिवप्रि
या इतिपाद्मेजयायोगस्यविहितत्वात् महतामपिपापानांदृष्टावैनिःकृतिःपुरा नदृष्टाकुर्वतांपुंसांकुहुयुक्तांतिथिंशिवाम्
इतिस्कांदे दर्शयोगस्यनिंदितत्वाच्च यत्तुकालतत्त्वविवेचनेनव्योर्दिनद्वयेनिशीथव्याप्तावेवपूर्वविद्धाविधायकान्युत्तरविद्धानिषे
धकानिवचनानिसावकाशानीत्यतःपूर्वैवग्राह्येत्युक्तम् तन्नसमंजसम् निशाद्वयेचतुर्दश्यांपूर्वात्याज्यापराशुभेतिमा
धवाद्युदाहृतकामिकवचनविरोधात् नचपूर्वविद्धाविधायकानांउत्तरविद्धानिषेधकानांविषयालाभइतिशंक्यम् प्रदोषनि
शीथयोर्विरोधे निशीथग्राह्यतायाउपोद्घातबलत्वेनविषयलाभस्यानुपदमेवोक्तत्वात् प्रदोषव्याप्तिभावात् यदादिनद्वये
निशीथव्याप्तितदापरैव मायासितेभूतदिनंहिराजन्नुपैतियोगंयदिपंचदश्याः जयाप्रयुक्तांनतुजातुकुर्याच्छिवस्यरात्रिंप्रि
यकृच्छिवस्य इतिहेमाद्रिमाधवेप्युदाहृतपुराणवचनादितिपरैव अस्मिन्व्रतेउपवासजागरणपूजानांफलसंबंधात् त्र
यमपिप्रधानम् तथाचनागरखंडे उपवासप्रभावेनबलादपिचजागरात् शिवरात्रेस्तथातस्यांलिंगस्यापिप्रपूजया अक्ष
य्यांल्लभतेकामान्शिवसायुज्यमाप्नुयात् इदंचव्रतंसंयोगपृथक्त्वन्यायेननित्यंकाम्यंच परात्परतरंनास्तिशिवरात्रिःपरा
त्परा नपूजयतिभक्त्येशंरुद्रंत्रिभुवनेश्वरम् जंतुर्जन्मसहस्रेषुयुज्यतेनात्रसंशयः इतिस्कांदे पारणंचैतद्व्रते स्कांदेतिथिमध्येतदंते

चोक्तम् उपोषणंचतुर्दश्यांचतुर्दश्यांतुपारणम् कृतैःसुकृतलक्षैश्चलभ्यतेयदिवानवा ब्रह्मांडोदरमध्येतुयानितीर्थानिसंतिवै
संस्थितानिभवंतीहभूतायांपारणेकृते तिथ्यंतेपारणंकुर्याद्विनाशिवचतुर्दशीम् तथा कृष्णाष्टमीस्कंदषष्ठीशिवरात्रिस्तथै
वच एताःपूर्वयुताकार्यास्तिथ्यंतेपारणंभवेत् अनयोर्विरुद्धवचनयोर्व्यवस्थैवंमाधवेनोक्ता यामत्रयोर्ध्वगामिन्यांप्रातरेव
हिपारणम् वचनाद्यामत्रयमध्येचतुर्दशीसमाप्तौतिथ्यंतेनदुत्तरगामित्वेतुप्रातस्तिथिमध्येएवेति तिथिमध्यकालोमुख्यस्तद
तकालोगौणःउत्तरभावित्वादित्याहुः केचित्तु शक्तिस्तिथ्यंतेअशक्तस्तिथिमध्येएवेत्यूचुः शिवरात्रिग्रहणंतुपूर्वविद्धाविधाना
र्थमिति वस्तुतस्तुसाकल्यमयपर्यंतव्यापिनीचेत्परेहनि दिवैवपारणंकुर्यात्पारणेनैवदोषभाक् शिवरात्रिप्रकरणपठि-
तकालादर्शादिलिखितवचनाद्दिवातिथिसमाप्तौतिथ्यंतेन्यथातन्मध्यएवेति इतिनिर्णयः अथव्रतविधिः मास
पक्षाद्युल्लिख्यममपापक्षयार्थमक्षय्यभोगमोक्षप्राप्त्यर्थंशिवरात्रिव्रतंकरिष्ये इतिसंकल्प्य षोडशोपचारैःशिवपूजांकुर्यात्
तत्रपूजा आगच्छदेवदेवेशमर्त्यलोकहितेच्छया पूजयामिविधानेनप्रसन्नःसुमुखोभव सहस्रशीर्षेत्यावाहनम् पा-
दासनंकुरुप्राज्ञनिर्मलंस्वर्णनिर्मितम् भूषितंविविधैरत्नैःकुरुत्वंपादुकासनम् पुरुषएवेदमित्यासनम् गंगादिसर्वती
र्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां एतावानस्येतिपाद्यं गंधोदकेनपुष्पेणचंदनेनसुगंधि-
ना अर्घ्यंगृहाणदेवेशभक्तिंमेह्यचलांकुरु त्रिपादूर्ध्वइत्यर्घ्यम् कर्पूरोशीरसुरभिशीतलंविमलंजलम् ॥ ॥ गंगा-

श्रु·रा·
२१

यास्तुसमानीतंगृह्णाणाचमनीयकं तस्माद्विराळेत्याचमनीयं मंदाकिन्याःसमानीतंहेमांभोरुहवासितं स्नानायतेमयाभ
क्त्यानीरंस्वीक्रियतांविभो यत्पुरुषेणेतिस्नानं वस्त्रंसूक्ष्मंदुकूलंचदेवानामपिदुर्लभम् गृहाणत्वंमाकांतप्रसन्नोभवस
र्वदा तंयज्ञमितिवस्त्रं यज्ञोपवीतंसहजंब्रह्मणानिर्मितंपुरा आयुष्यंभववर्चस्व्यमुपवीतंगृहाणमे तस्माद्यज्ञात्सर्वेत्युपवी
तं श्रीखंडंचंदनंदिव्यंगधाढ्यंसुमनोहरम् विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यताम् तस्माद्यज्ञात्सर्वहुतइतिगंधम् माल्या-
दीनिसुगंधीनिमालत्यादीनिवैप्रभो मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यताम् तस्मादश्वेतिपुष्पम् वनस्पतिरसोद्भूतो
गंधाढ्यश्चमनोहरः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यताम् यत्पुरुषमितिधूपम् साज्यंचवर्तिसंयुक्तंवह्निनायोजि
तंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहम् ब्राह्मणोस्येतिदीपम् नैवेद्यंगृह्यतांदेवभक्तिंमेह्यचलांकुरु ईप्सितंमेव
रंदेहिपरत्रचपरांगतिम् चंद्रमामनसइतिनैवेद्यम् पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतम् कर्पूरैलासमायुक्तंतांबू
लंप्रतिगृह्यताम् तांबूलम् हिरण्यगर्भेतिदक्षिणां चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणम् आर्तिक्यंकल्पितंभक्त्या
गृहाणपरमेश्वर नीरांजनम् फलेनफलितंसर्वंत्रैलोक्यंसचराचरम् तस्मात्फलप्रदानेनसफलाश्चमनोरथाः फलं॰
यानिकानिचपापानि ब्रह्महत्यासमानिच तानितानिविनश्यंति प्रदक्षिणपदेपदे नाभ्याआसीतिप्रदक्षिणाः मंत्रहीनंक्रियाही
नंभक्तिहीनंसुरेश्वर यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे समास्यासन्नितिनमस्कारं सद्योजातमितिवामदेवायेतिवा यज्ञेन

च·दि·
१४

२१

यज्ञभितिमंत्रपुष्पांजलिं श्रूयतांधर्मसर्वस्वंशिवरात्रौशिवार्चनं व्रतयज्ञविधानेनस्वर्गपुण्येनकर्मणा कृत्वास्नानंशुचि
र्भूत्वाधौतवस्त्रसमन्वितः स्थापयेद्देवदेवेशंमंत्रैर्वेदसमुद्भवैः ततःपूजाप्रकर्तव्यापूर्वोक्तविधिनाततः नमोयज्ञजगन्नाथन
मस्त्रिभुवनेश्वर पूजांगृहाणमद्दत्तांमहेशप्रथमंपदे प्रथमप्रहरपूजा पूर्वेनंदीमहाकालौगणभृंगीचदक्षिणे वृषस्कंदौ
पश्चिमेचदेशकालौतथोत्तरे गंगाचयमुनाचैवपार्श्वेचैवव्यवस्थिते नमोव्यक्तायसूक्ष्मायनमस्तेत्रिपुरांतक पूजांगृहा
णदेवेशयथाशक्त्योपपादितां द्वितीयप्रहरे बद्धोहंविविधैःपाशैःसंसारभयबंधने पतितंमोहजालेमांत्वंसमुद्धरशंकर
तृतीये चतुर्थेप्रहरेआद्यवत् नमःशिवायशांतायसर्वपापहरायच शिवरात्रौमयादत्तंगृहाणार्घ्यंप्रसीदमे द्वितीये
दुःखदारिद्र्यभावैश्चदग्धोहंपार्वतीपते मांवैत्राहिमहादेवगृहाणार्घ्यंनमोस्तुते तृतीये किंनजानासिदेवेशतावद्भक्तिं
प्रयच्छमे स्वपादाग्रतलेदेवदास्यंदेहिजगत्पते चतुर्थे इतिप्रार्थना इतिशिवपूजासमाप्ता अथकथा सूतउवाच
सकारणमशेषस्यजगतःसर्वदाशिवः॥ गोब्राह्मणनृपाणांचशिवंभवतुमेसदा कैलासशिखरासीनंदेवदेवजगद्गुरुम्
पंचवक्त्रंदशभुजंत्रिनेत्रंशूलपाणिनं पिनाकशोभितकरंखड्गखेटकधारिणं कपालखट्वांगधरंनीलकंठस्फशोभितम् भ
स्मांगव्यालशोभाढ्यमस्थिमालाविभूषितं नीलजीमूतसंकाशंसूर्यकोटिसमप्रभम् क्रीडंतंचशिवंतत्रगणैश्चपरिवारि
तं विसृज्यदेवताःसर्वास्तिष्ठंतंपरमेश्वरं तंदृष्ट्वादेवदेवेशंप्रहस्योत्फुल्ललोचनं पार्वतीपरिपप्रच्छविनयावनतास्थिता

गौरीप्रोवाचभर्त्तारंविस्मयोत्फुल्ललोचना पार्वत्युवाच कथयस्वप्रसादेनयद्गोप्यंव्रतमुत्तमं श्रुतास्त्वयोक्तादेवेशाव्रतानां
निर्णयाःशुभाः तथावेदानधर्माश्चतीर्थधर्मास्त्वयोदिताः नास्तिमेनिश्चयोदेवभ्रांताहंचपुनःपुनः तस्माद्वदस्वमेदेवह्येकं
निःसंशयंप्रभो व्रतानामुत्तमंदेवभुक्तिमुक्तिप्रदायकं तदहंश्रोतुमिच्छामिकथयस्वममप्रभो ईश्वरउवाच शृणुदेवि
परंगुह्यंव्रतानामुत्तमंव्रतं यन्नकस्यचिदाख्यातंरहस्यंमुक्तिदायकं येनैवकथ्यमानेनयमोविलयतांव्रजेत् तदहंकथयि
ष्यामिशृणुष्वैकमनाःप्रिये माघमासेकृष्णापक्षेअमायुक्ताचतुर्दशी शिवरात्रिस्तुसाज्ञेयासर्वयज्ञोत्तमोत्तमा दानैर्यज्ञै-
स्तपोभिश्चव्रतैश्चविविधैरपि नतीर्थैस्तद्भवेत्पुण्यंशिवरात्रिव्रतंपरं शिवरात्रिसमन्नास्तिव्रतानामुत्तमंव्रतम् अज्ञान
ज्ञानतोवापिकृत्वामोक्षमवाप्नुयात् मृतास्तेनिरयंत्यक्त्वागतास्तेशिवसन्निधौ सर्वमंगलशीलाचसर्वामंगलनाशिनी।
भुक्तिमुक्तिप्रदाचैषासत्यंसत्यंवरानने देव्युवाच कथंयमपुरंत्यक्त्वाशिवलोकंव्रजेन्नरः एतन्मेमहदाश्चर्यंप्रत्यक्षंकुरु
शंकर शंकरउवाच शृणुदेवियथावृत्तांकथांपौराणिकींशुभां यमशासनहंत्रींचशिवस्थानप्रदायिनीं कश्चिदासी
त्पुरादेविनिषादोजीवघातकः प्रत्यंतदेशवासीचपर्वतधरासन्निकेतनः सीमांतेससदातिष्ठन्कुटुंबपरिपालकः शूरोनित्यं-
धनुर्धारीश्यामांगःकृष्णकंचुकः बद्धगोधांगुलित्राणःसदैवमृगयारतः एवंविधोनिषादोसौचतुर्दश्यांदिनेशुभे व्यवहारि
कैश्चद्रव्यार्थंदेवागारेप्ररोधितः तेनापिदेवतादृष्टाजनानांवचनंश्रुतं उपवासव्रतानांचशिवःशिवशिवेतिच दिनांते

तैस्तदामुक्तःप्रातर्द्रव्यंप्रदीयताम् ततोसौधनुरादायदक्षिणेनगतःस्वयं आगच्छन्सवनोद्देशोजनहासंचकारसः शिवः
शिवकिमेतद्धैकुर्वंतिनगरेजनाः वनेचरान्निरीक्षंस्तत्रचतुर्दिक्षइतस्ततः पदंचमृगमार्गंचअन्वेष्यन्सूकरान्मृगान् इतश्चेत
श्चधावन्वैआमिषेलुब्धमानसः वनंचपर्वतान्सर्वान्भ्रमित्वागिरिकंदराः संप्राप्तेतेननोकिंचित्मृगस्सूकरश्चित्तलं निरा
शोलुब्धकस्तिष्ठन्तदास्यस्तंगतोरविः चिंतयित्वाजलोपांतेजागरंजीववधातनं संविधास्याम्यहोरात्रौनिश्चितंममजीवनम्
गतोसौजलसामीप्यंतीरस्थोजालिमध्यतः आश्रमंकर्तुमारेभेआत्मनोगुप्तिकारणात् जालिमध्येमहालिंगंस्थितंस्वायं
भुवंशुभं बिल्ववृक्षोमहान्दिव्योजालिमध्येचसंस्थितः गृहीत्वातस्यपर्णानिमार्गशुध्यर्थमक्षिपत् क्षिप्तानिदक्षिणे-
भागेनिपेतुर्लिंगमूर्धनि नदिवाभोजनंतस्यआमिषेलुब्धमानसः ततश्चिंतयमानस्यननिद्रासमजायत तस्यगंधंसमा-
साद्यलुब्धकस्यवरानने नतिष्ठंतिमृगाःसर्वेशरघातभयात्तदा मृगान्निरीक्षतस्तस्यनिद्रानाशोप्यजायत बिल्वमध्येगत
स्यास्यप्रथमःप्रहरोगतः ततोजलार्थमायाताहरिणीगर्भसंयुता यौवनस्थासरूपाचस्तनपीनाशुशोभना निरीक्षंतीदि
शःसर्वाभृशमुत्फुल्ललोचना लुब्धकेनापिसादृष्टाबाणगोचरमागता बाणश्चसंधितस्तेनएकदृष्टेनचेतसा भ्रोदयित्वाथप
त्राणिप्रक्षिप्तानिशिवोपरि शिवंदेवंसदाध्यायन्शीतेनपरिपीडितः एतस्मिन्नंतरेदृष्टोहरिण्यालुब्धकस्तदा लुब्धकस्त
स्वरूपेणकृतांतइवदृश्यते दृष्ट्वातुतस्यसंधानंयमदंष्ट्रासमप्रभम् मृग्युवाच सामृगीदिव्ययावाचालुब्धकंवाक्य-

श्रं· रा·
२३

च· र्द
१४

ब्रवीत् स्थिरोभवमहाव्याधसर्वजीवनिकृंतन कथयस्वमहाबाहोकिमर्थंमांहनिष्यसि लुब्धकउवाच कुटुंबंपीडितंमेद्य
क्षुधयात्वमयासह पोष्याम्यहंसदैवापित्वामिषाहारभोजनैः धनंवैमद्गृहेनास्तितेनत्वांहन्मिशोभने॥ सूतउवाच
यामपूजाप्रभावेनजागरोपोषणेनच चतुर्थांशेनपापानांविमुक्तोलुब्धकस्तदा लुब्धकस्ततोदृष्ट्वामृगीमानुषभाषिणीं
आश्चर्यपरमंदृष्ट्वाकिंचिद्धर्मसमन्वितः लुब्धकउवाच मयाहिघातिताजीवाउत्तमाधममध्यमाः नश्रुताईदृशीवाणी
श्वापदानांकथंचन कस्मिन्देशेत्वमुत्पन्नाकस्मात्स्थानादिहागता कथयस्वप्रयत्नेनपरंकौतूहलंहिमे मृग्युवाच शृ
णुत्वंलुब्धकश्रेष्ठकथयामितवाखिलं आसीत्पूर्वंमहारम्यास्वर्गेशक्रस्यचाप्सरा अनंतरूपलावण्यासौभाग्येनचगर्विता
सौभाग्यमदपुष्टांगोदानवोबलगर्वितः मयैवचकृतोभर्त्ताहिरण्याक्षोमहासुरः तेनसार्धंमयाभुक्तंचिरकालंयथेप्सितम्
एवंकालोगतोव्याधक्रीडंत्यामेसुरेणच एकदाप्रेक्षितुंनृत्यंशंकरस्यगतातदा यावद्गच्छाम्यहंतत्रतावन्मांशंकरोब्रवीत् क्वग
तात्वंवरारोहेकेनवासंगताशुभे किंवासौभाग्यगर्वेणनायातामममंदिरं सत्यंकथयशीघ्रंत्वंनोवाशापंददामिते शाप
भीत्यामयातत्रइत्युक्तंशंकराग्रतः शृणुदेवप्रवक्ष्यामिशापानुग्रहकारक मामास्तिभर्त्ताविश्वेशदानवेंद्रोमहाबलः तेनसा
र्धंमयादेवक्रीडितंनिजमंदिरे तेनाहंनागताशीघ्रंसृष्टिसंहारकारकरुद्रस्तद्वचनंश्रुत्वासकोपोवाक्यमब्रवीत् मृगः कामा-
तुरोनित्यंहिरण्याक्षोभविष्यति त्वंमृगीतस्यभार्यावैभविष्यसिनसंशयः त्यक्त्वास्वर्गंतथादेवान्दानवंभोक्तुमर्हसि

१५

द्वादशाब्दानि भोभद्रेभविताशापएवते परस्परस्यशोकेनशापांतोपिभविष्यति अनुग्रहःपुनस्तेषःशंकरेणकृतःस्वयम्
कदाचिद्विव्याधवरोममसान्निध्यमाश्रितः वधार्थंतस्यसंप्राप्तापूर्वजन्मस्मरिष्यसि ततऊर्ध्वंतदारुद्रंदृष्ट्वामोक्षमवाप्
स्यसि शंकरोनमयादृष्टोवसंत्यास्मिन्महावने ततोदुःखमनुप्राप्तामांसमेदोविवर्जिता गर्भाक्रांताविशेषेणनवध्याचे
ति निश्चितं त्वत्कुटुंबस्यतेनूनंभोजनंनभविष्यति आयास्यतिमृगीत्वन्यामार्गेणानेनलुब्धक पीनायौवनसंपन्नावहुमां
सामदोद्भूता भोजनंसकुटंबस्यतवसद्योभविष्यति अथवान्योमृगोव्याधपानार्थंतुजलाशये आगमिष्यतिप्रत्यूषेक्षुधा
र्थस्यनसंशयः गर्भंत्यक्त्वापुनःप्रातर्बालान्संदिश्यबंधुषु शपथैरागमिष्यामिसंदिश्यचसखीजनं तस्यास्तद्वचनंश्रुत्वा
व्याधोविस्मयमागतः क्षणमेकंतथास्थित्वाव्याधोवचनमब्रवीत् नागमिष्यतिचेदन्योजीवंस्त्वमपिगच्छसि क्षुधयापी
डितोहंवैकुटुंबंचविशेषतः प्रातस्त्वयाममगृहमागंतव्यंयथापथम् शपथैश्चध्वजत्वंहियथामेप्रत्ययोभवेत् पृथिवीवायु
रादित्यःसत्येतिष्ठंतिदेवताः तस्मात्सत्येनगंतव्यंभवत्यास्वगृहंप्रति तस्यतद्वचनंश्रुत्वागर्भार्तासामृगीतदा चक्रेसत्यम
तिज्ञांवैव्याधस्याग्रेपुनःपुनः मृग्युवाच द्विजोभूत्वातुयोव्याधवेदभ्रष्टोभिजायते स्वाध्यायसंध्यारहितःसत्यशौच
विवर्जितः अविक्रय्याणांविक्रेताअयाज्यानांचयाजकः तस्यपापेनलिप्यामियद्यहंनागमेपुनः दुष्टबुद्धौतुयत्पापंधूर्ते
वाग्ग्रामकंटके नास्तिकेचविशीलेचपरदाररतेतथा वेदविक्रयिणिचैवशवसूतकभोजने तेनपापेनलिप्यामिये-

ग्रहं नागमेपुनः मृतशय्याप्रतिग्राहेमातापित्रोरपालके तेनपापेनलिप्यामियदिनायामितेगृहं दानंदातुंप्रवृत्तस्ययोंतरा
यकरोनरः तेनपापेनलिप्यामियदिनायामितेगृहं देवद्रव्यंगुरुद्रव्यंब्रह्मद्रव्यंहरेत्तुयः तेनपापेनलिप्यामियदिनायामितेगृ
हं दीपंदीपेनयःकुर्यात्पादंपादेनधावयेत् तेनपापेनलिप्यामियदिनायामितेगृहं भर्त्तारंस्वामिनंमित्रंआत्मानंबालमेवच
गांविप्रंचगुरुंनारींयोमारयतिदुर्मतिः तेनपापेनलिप्यामियदिनायामितेगृहं अवैष्णवेचयत्पापंयत्पापंदांभिकेजने अजि
तेंद्रियेषुयत्पापंपरदोषानुकीर्तने कृतघ्नेचकदर्येचपरदाररतेतथा सदाचारविहीनेचपरपीडाप्रदायके परपैशून्ययुक्ते-
चकन्याविक्रयकारके हैतुकेबकवृत्तौचकूटसाक्षीप्रदेतथा एतेषांपातकंमह्यंयदिनायामितेगृहं यत्पापंब्रह्महत्यायांपितृ
मातृवधेतथा तेनपापेनलिप्यामियदिनायामितेगृहं यत्पापंलुब्धकानांचयत्पापंगरदायिनां तेनपापेनलिप्यामियदिनाया
मितेगृहं द्विभार्यःपुरुषोयस्तुसमदृष्ट्यानपश्यति तस्यपापेनलिप्यामियदिनायामितेगृहं सकृद्दत्वातुयःकन्यांद्वितीया
यप्रयच्छति तेनपापेनलिप्यामियदिनायामितेगृहं कथायांकथ्यमानायामंतरंकुरुतेनरः तस्यपापेनलिप्यामियदिनाया
मितेगृहं पतिनिंदापरोनित्यंवेदनिंदापरोहियः तस्यपापेनलिप्यामियदिनायामितेगृहं यस्यसंग्रहणीभार्याब्राह्मणीच-
विशेषतः तस्यपापेनलिप्यामियदिनायामितेगृहं प्रेतश्राद्धेतुयोभुंक्तेपतितेबहुयाजके असच्छास्त्रार्थनिरतेपुराणार्थ
विवर्जिते मूर्खेपाखंडनिरतेक्रयविक्रयकेद्विजे एतेषांपातकंमह्यंयदिनायामितेगृहं एकाकीमिष्टमश्नातिभार्यापुत्र

विवर्जितः आत्मजांगुणसंपन्नांसमानसदृशेवरे नप्रयच्छतियःकन्यांनरोवैज्ञानदुर्लभः तेनपापेनलिप्यामियदिनायामि
तेगृहम् मृगीवाक्यंततःश्रुत्वालुब्धकोहृष्टमानसः संहृत्यबाणसंधानान्मुमोचहरिणींतदा तस्यामुक्तिप्रभावेनलिंगस्यापि
प्रपूजनात् मुक्तोसौपातकैःसर्वैस्तत्क्षणान्नात्रसंशयः द्वितीयेप्रहरेप्राप्तेमध्यरात्रेमहानिशि तस्मिन्नेवक्षणेप्राप्तेपरा
प्राप्तामृगीतदा संत्रस्ताभयसंमग्नापतिमन्वेष्यतीमुहुः जालिमध्येस्थितेनाथदृष्टासालुब्धकेनतु पुनर्वृक्षस्यपत्रा
णित्रोटयित्वाकरेणतु क्षिप्तानिदक्षिणेभागेलिंगोपरिदिदृक्षया तस्यावधार्थंतेनाथोबाणोधनुषिसंधितः तिष्ठंस्तत्रैक
चित्तेनकुटुंबार्थंजिघांसया निरीक्ष्यलुब्धकोयावद्बाणंतस्यांविमुंचति तावन्मृग्यासमंदृष्टोदृष्ट्वातंविह्वलाभवत् अद्यै
वभगिनीमेहिलुब्धकेनविनाशिता ममकिंजीवितव्येनतस्यादुःखेनपीडिता १०० वरोमृत्युर्नशोकोवैदृष्ट्वाव्याधंवि
शेषतः एवंसंचिंत्यहरिणीलुब्धकंवाक्यमब्रवीत् हरिण्युवाच धनुर्धरवलव्याधसर्वजीवनिकृंतन देहिमेवचनंचै
कंपश्चात्त्वंमांनिपातय आयाताहरिणीचैकामार्गेणानेनलुब्धक समायाताथवानेवसत्यंकथयसुव्रत तच्छ्रुत्वालु
ब्धकस्तत्रविस्मितोक्षणमैक्षत तस्यास्तुयादृशीवाणीअस्याश्चैवतुतादृशी साचैषाचागतानूनंप्रतिज्ञापालनीयच
अथवान्यासमायातायातयाकथितापुरा लुब्धकउवाच अहोरात्रंकृतंकष्टंकुटुंबार्थेमयामृगि अधुनात्वांहनि
ष्यामिदेवानांस्मरणंकुरु व्याधोक्तवचनंश्रुत्वाहरिणीदुःखिताभृशम् व्याधंप्राहरुदित्वावैभोमांव्याधनिपातयतेजो

स्कं

बलंनथासर्वंनिर्दग्धंविरहाग्निना अहंप्राणान्विमोक्ष्यामिभोजनंतेनजायते बलवांश्चमहातेजामेदमांससमन्वितः अन्यश्च
पीनगौरांगोमृगोद्यत्रागमिष्यति अहंचदुर्बलानूनंमेदमांसविवर्जिता केवलंपापभाक्त्वंहिममप्राणविमोचकः मार्गेणा
नेनभोव्याधमृगआयास्यतिस्फुटम् तंहत्वातेकुटुंबस्यतृप्तिर्नूनंभविष्यति तयोक्तंलुब्धकःश्रुत्वाकिंकरोमीत्यचिंतय
त् मृग्योक्तोहिसंयुक्तमर्थएषमेनिश्चयोहृदि संचिंत्यलुब्धकःप्राहमृगींशोकातुरांकृशां सत्यंवदमहाभागेप्रत्ययोमेयथाभवे
त् तस्यतद्वचनंश्रुत्वाहरिणीदुःखकर्शिता चक्रेसत्यप्रतिज्ञांतुव्याधस्याग्रेपुनःपुनः मृग्युवाच क्षत्रियस्त्वरणंश्रुत्वासंग्रामंयो
नगच्छति तस्यपापेनलिप्येहंयदिनायामितेगृहं भेदयंतितडागानिवापीश्चाथगवामपि मार्गस्थानंचयेघ्नंतिसर्वसत्वभयं
कराः तेषांवैपातकंमह्यंयदिनायामितेगृहम् एतच्छ्रुत्वातुव्याधेनसापिमुक्तामृगीतदा जलंपीत्वातुबहुशोगतासद्यो
यथागतम् जालिमध्येस्थितस्यास्यद्वितीयःप्रहरोगतः त्रोटित्वाबिल्वपत्राणिपुनर्देवेनियोजयत् पीडितोतीवशीते
नक्षुधयागृहचिंतया शिवःशिवेतिजल्पन्वैनेननिद्रामुपलब्धवान् कृतंस्करार्चनंतेनप्रहरेप्रहरंगते वीक्ष्यंश्चैवदिशःसर्वाः
सत्वमार्गान्निरीक्षयत् लुब्धकेनाथदृष्टोसौहरिणश्चंचलेक्षणः विलोकयन्दिशःसर्वामार्गमाणोमृगीपदः सौभाग्य
बलदर्पाढ्योमदनोन्मत्तपीवरः तंदृष्ट्वाबाणमाकृष्यत्वाकर्णंतुष्टमानसः बाणंमुंचतियावद्धैतावद्दृष्टोमृगेणस
कालरूपंतुतंदृष्ट्वामृगश्चिंतितवान्भृशम् निश्चितंभवितामृत्युर्गोचरस्यखलोयतः भार्याप्राणसमामेद्यव्याधे

नेहनिपातिता तयाविरहितस्याद्यनूनंमृत्युर्भविष्यति हाहाकालकृतंपापंयद्भार्यादुःखमागतम् भार्ययानसमंसौख्यंगृ
हेपिचवनेपिच तयाविनानधर्मोस्तिनार्थकामौविशेषतः वृक्षमूलेपिदयितायत्रतिष्ठतितद्गृहम् प्रासादोपितयाहीनः
कांतारादतिरिच्यते धर्मकामार्थकार्येषुभार्यापुंसःसहायिनी विदेशेचगतस्यापिसैवविश्वासकारिणी नास्तिभार्यास
मोबंधुर्नास्तिभार्यासमंसुखम् नास्तिभार्यासमंलोकेनरस्यार्त्तस्यभेषजम् यस्यभार्यागृहेनास्तिसापिचेत्प्रियवादिनी ॥
अरण्यंतेनगंतव्यंयथारण्यंतथागृहम् एकाप्राणसमामेभूद्द्वितीयाप्राणदामम इत्येवंचिंतयित्वातुलुब्धकंवाक्यमब्रवीत्
मृगउवाच शृणुव्याधनरश्रेष्ठत्वामिषाहारभोजन यत्तेपृच्छाम्यहंवीरतद्व्यक्तंवदमेप्रभो आगतंहरिणीयुग्मंकेनमा
र्गेणतद्गतम् त्वयाविनाशितंवाथसत्यंकथयमेधुना तस्यतद्वचनंश्रुत्वालुब्धकोविस्मयंगतः असावपिनसामान्योदेव
ताकाप्यनुत्तमा लुब्धकउवाच उवाचलुब्धकःसद्यस्तस्यायेवाक्यमुत्तमम् तेगतेनेनमार्गेणसत्यंकृत्वाममाग्रतः
ताभ्यांदत्तोसिभुक्त्यर्थममत्वमधुनानघ संप्रतित्वांहनिष्यामिनैवमोक्ष्यामिकर्हिचित् मृगउवाच तत्सत्यंकीदृ
शंताभ्यांवाक्यमुक्तंतवाग्रतः येनतेप्रत्ययोजातोमुक्तंतद्धरिणीद्वयम् तेगतेकेनमार्गेणयेमुक्तेव्याधतेधुना व्याधउ०
तेगतेनेनमार्गेणस्वमाश्रमपदंप्रति व्याधेनकथितास्ताभ्यांशपथायेकृतास्तदा तच्छ्रुत्वावचनंतस्यहरिणोहृष्टमान
सः मृगउवाच ताभ्यांव्याधयदुक्तंचतत्करोमिनचान्यथा प्रभातेत्वद्गृहंनूनमागमिष्यामिनिश्चितं भार्याऋतुमती

मेघकामार्त्ताप्यधुनाभृशम् गत्वागृहेथभक्ष्त्वातामापृछ्यचसुहृज्जनान् शपथैरागमिष्यामिगृहंतेनात्रसंशयः मदेहंस्वगृहे नाद्यनेतुंशक्तः कथंचन तद्दृथामरणंमेस्याद्यद्यहंघातितस्त्वया लुब्धकउवाच असत्यंभाषसेधूर्तप्रतारयसिमांत्वृथा कृत्वामृत्यंकंस्थिलंतत्र तदागछतिकोत्यधीः व्याधस्यवचनंश्रुत्वाहरिणोवाक्यमब्रवीत् शपथैरागमिष्यामियथातेप्रत्ययो भवेत् व्याधउवाच मृगत्वंशपथान्ब्रूहिविश्वासोमेभवेद्यथा यथाहिप्रेषयामित्वांस्वगृहंप्रतिकामुक मृगउवाच भर्त्तारंवंचयेद्यास्त्रीस्वामिनंवंचतेनरः मित्रंचवंचयेद्यस्तुगुरुद्रोहंकरोतियः विरसंतुरसंदद्यात्प्रेमभेदंकरोतुयः भेदयेद्यस्तडागानिप्रासादंपातयेत्तथा प्रवासशीलोयोविप्रःक्रियविक्रयकारकः संध्यास्नानविहीनश्चवेदशास्त्रविवर्जितः मद्यपास्त्रीषुरक्तायेपरनिंदारताश्चये परस्त्रीसेवकाविप्राःपरपैशून्यसूचकाः शूद्रान्नभोजिनोयेचभार्यापुत्रांस्त्यजंतिये वेदनिंदापरायेचवेदशास्त्रार्थनिंदकाः तेषांवैपातकंमह्यंयदिनायामितेगृहम् भार्यासंग्रहणीयस्यव्रतशौचविवर्जिता सर्वाशीसर्वविक्रेताद्विजानामपिनिंदकः त्रिषुवर्णेषुशुश्रूषांयःशूद्रश्चकरोतिवै विप्रवाक्यंपरित्यज्यपाखंडाभिरताःसदा ब्रह्मचर्यरताःशूद्रायेचपाखंडसंश्रिताः तेषांवैपातकंमह्यंयदिनायामितेगृहम् तिलांस्तैलंघृतंक्षौद्रंकंबलंलवणंगुडम् लोहंलाक्षादिकंसर्वरंगान्नानाविधानपि विक्रियात्तानिशूद्रश्चतत्रदोषोनविद्यते मद्यंमांसंविषंदुग्धंनीलंचवृषभंतथा मीनंक्षीरंसर्पक्रूटंचित्रान्नकफलानिच मद्यादिविक्रियेद्यस्तुशूद्रोपिमदमोहितः आदित्यंविष्णुमीशानंगणाध्यक्षंतुपार्व

नीं एतांस्त्यक्त्वागृहेमूढो योन्यंपूजयतेनरः तस्यपापेनलिप्यामियदिनायामितेगृहं योगांस्पृशतिपापेनत्वुदितेर्केचस्कष्ट

ति एकाकीमिष्टमश्नातितस्यपापस्यभाग्यहं मातापित्रोरपोषाचक्रियामुद्दिश्यपाचकः कन्याशुल्कोपजीवीचदेवब्रा-

ह्मणनिंदकः गोग्रासंहंतकारंचअतिथीनांचपूजनं येनकुर्वंतिगृहीणस्तेषांपापंभवेन्मम वृंताकंचपटोलंचकालिंगंतुं

बिकाफलम् मूलकंलशुनंकंदंकुसुंभंकनशाकक एतानिभक्षयेद्यस्तुनरोवैज्ञानदुर्बलः तस्यवैजायतेशुद्धिर्भ्वांद्रा

यणशतैरपि एतेषांपातकंमह्यंयदिनायामितेगृहम् यःपठेत्स्वरहीनंचलक्षणेनविवर्जितम् इयासकःसंचरन्तिप्रावेदा

नुच्चारयेत्तुयः विप्रस्यपठतःक्वापिशृणोतिदृहचांत्यजः वेदोपिजीविकोविप्रोतिलोभाच्छूद्रभोजनः तस्यपापेनलिप्यामि

यदिनायामितेग्रहं शूद्रान्नेषुचयेसक्ताःशूद्रसंपर्कदूषिताः तेनपापेनलिप्यामियदिनायामितेगृहं लेखकश्चित्रकर्ताचवैं

द्योनक्षत्रसूचकः कूटकर्ताद्विजोयश्चतस्यपापस्यभाग्यहम् कूटसाक्षीमृषावादीपरद्रव्यस्यतस्करः परदाराभिगामीच

येचविश्वासघातकाः द्रव्येद्रव्यंविनिक्षिप्यपानकूटसमाश्रिताः वेश्यारताःसदायेचदानदातुर्निवारकाः भर्त्तारंद्रव्यही

नंचकुरूपंव्याधिपीडितं यानपूजयतेनारीरूपयौवनगर्विता एकादशींतथामाघेयासौशिवचतुर्दशी पूर्वविद्धांप्रकु

र्वंतितेषांपापस्यभाग्यहं अथकिंबहुनोक्तेनभोलुब्धकृतवाग्रतः यदिनायामितेगेहंममसत्यंभवेत्तव तेनवाक्येन

संतुष्टोव्याधोवैवीतकल्मषः संहृत्यधनुषोवाणं मृगोसुक्तोगृहंप्रति जलंपीत्वातुहरिणःप्रविष्टोगहनंप्रति गतोसौतेन

मार्गेणगतंयेनमृगीद्वयं लुब्धकेनतदानत्रजालिमध्येस्थितेनहि प्रक्षेपैर्बिल्वपत्राणित्रोटयित्वाप्रतर्प्यच शिवःशिवेतिजल्प
न्वैद्याशङ्कयातानिजाश्रयम् अथोदितेसूर्यबिंबेअकामाज्जागरेकृते पापान्मुक्तोप्यसौसद्यः शिवपूजाप्रभावतः यावद्दि
शोनिरीक्षेतनिराशोभोजनंप्रति तावच्छिशुव्रताचान्यामृगीतत्रसमागता दृष्ट्वामृगींतदाव्याधोबाणंधनुषियोजयत् या
वन्मुंचत्यसौबाणं तावदुक्तंतयातदा माबाणान्मुंचधर्मात्मन्धर्मंमामुंचसुव्रत अहंनवध्यासर्वेषामितिशास्त्रविनिश्चयः
शयानोमैथुनासक्तोस्तनपोव्याधिपीडितः नहंतव्योमृगोराज्ञामृगीचशिशुनावृता अथवाधर्ममुत्सृज्यमांहनिष्यसिमान
दबालकंस्वगृहेमुक्त्वासखीनांचनिवेद्यवै शपथैरामयिष्यामिशृणुव्याधवाचोमम यास्वभर्तारमुत्सृज्यपरेपुंसिरतासदा
तस्याःपापेनलिप्यामियदिनायामितेगृहम् मद्यंमांसंविषंदुग्धंनीलीकुंभफलानिच एतानिविक्रयेद्यस्तुनरोमोहस-
मन्वितः तेषांपापेनलिप्यामियदिनायामितेगृहम् तस्यास्तद्वचनंश्रुत्वाव्याधोविस्मयमागमत् ततोव्याधेनसामुक्ता
गतावैनिजमंदिरम् व्याधोपितत्स्थलंत्यक्त्वाजगामस्वगृहंप्रति सर्वेषांवचनंध्यायन्मृगाणांसत्यवादिनाम् एतेषां
घातकोनित्यमहंयास्यामिकांगतिम् क्रमाद्गृहंसमायाताबालकाःक्षुधयावृताः नान्नंमांसंगृहेतस्यभोजनंयेनजायते
निरामिषंतुतंदृष्ट्वानिराशास्तेभवंस्तदा व्याधोपिचतदातत्रतेषांवाक्यानिसंस्मरन् नभोजनंननिद्रांचलभतेविस्मित-
स्यवै आगमिष्यंतितेनूनंशपथैरपियंत्रिताः नतानहंवधिष्यामिसतांव्रतमनुस्मरन् लुब्धकेनतदामुक्तोहरिणः

शपथैर्वृतः स्वमाश्रमंतुसंप्राप्तोयत्रतद्धरिणीद्वयम् सद्यःप्रसूतासाचैकाद्वितीयारतिलालसा तृतीयापिसमायाताबा
लकैर्बहुभिर्वृता सर्वाःसमेताएकत्रमरणेकृतनिश्चयाः परस्परंप्रजल्पंतोलुब्धकस्यविचेष्टितं आयातांहरिणींमुक्त्वारू
पाढ्यां रतिलालसां कृतकृत्योभवत्ताभिस्तेभ्योवाक्यमथाब्रवीत् युष्मद्भिरिहसंस्थेयंकर्तव्यंप्राणरक्षणं व्याघ्राद्वीपा
लुब्धकेभ्योबालकानांप्रयत्नतः योहिसत्यात्तुगोभार्यांनभुंक्तेमोहसंवृतः भ्रूणहासतुविज्ञेयस्तस्यजन्मनिरर्थकम् सं
तानात्स्वर्गमाप्नोतिइहकीर्तिंचशाश्वतीं संततिर्यत्नतःपाल्यास्वर्गसौख्यप्रदायिका अपुत्रस्यगतिर्नास्तिइहलोकेपरत्र
च येनकेनाप्युपायेनपुत्रमुत्पादयेत्सुमान् मयाचतत्रगंतव्यंयत्रव्याधस्यमंदिरं सत्यंतुपालनीयंस्यात्सत्येधर्मःप्रति
ष्ठितः एतच्छ्रुत्वातुतानार्योवाक्यमूचुःसुदुःखिताः वयमप्यागमिष्याम स्त्वयासार्द्धंमृगोत्तम तथात्वेविप्रियंकांतन
स्मरामःकदाचन पुष्पितेषुवनांतेषु नदीनांसंगमेषुच कंदरेषुचशैलानांयुष्माभीरक्षितावयम् नकार्यमद्यमस्मा
कंक्रीडितेनत्वयाविना नारीणांपतिहीनानांजीवितैःकिंप्रयोजनं मितंददातिहिपितामितंभ्रातामितंसुतः अमि
तस्यहिदातारंभर्त्तारंकानपूजयेत् अपिद्रव्ययुतानारीबहुपुत्रसुहृद्वृता साशोच्याबंधुगर्वस्यपतिहीनाकुलांगना
गंधमाल्यैःस्त्रियोनित्यंप्रीयंतेभर्त्तुरग्रतः नातंत्रीवाद्यतेवीणानाचक्रोभ्रमतेरथः नापतिःसुखमाप्नोतिना-
रीपुत्रशतैर्वृता नास्तिभर्त्तासमोधर्मोनास्तिधर्मःसमःसुहृत् नास्तिभर्त्तासमोनाथःस्त्रीणांभर्त्तापरागतिः

एवंविनिश्चिताःसर्वाःमरणेकृतनिश्चयाः बालकैस्तैःसमायुक्ताभर्तृशोकेनदुःखिताः मृगस्तासांवचःश्रुत्वाहृदितापपरोभ
वत् गंतव्यंकिंनगंतव्यंमयाव्याधस्यमंदिरं एकतस्तुकृतंरक्षन्कुटुंबस्यक्षयोभवेत् तदंतिकंनचेद्यामिममसत्यंक्षयंव्रजेत्
वरंपुत्रस्यमरणंभार्यायाआत्मनस्तथा सत्येत्यक्तेनरोनित्यमाकल्पंरौरवंव्रजेत् तस्मात्सत्यंपालनीयंनरैःश्रेयोर्थिभिःस
दा एवंसंचिंत्यहरिणोधर्मात्माहृदिमनोरमान् ताभिःसहैवशनकैःक्षणात्तस्याश्रमंययौ तस्मिन्सरसिसंस्नात्वाकर्मन्यासंच
कारह तल्लिंगंप्रणिपत्याशुहृदिध्यायन्सदाशिवम् स्नानंपानंपरित्यज्यमैथुनंभोगमेवच कामंक्रोधंतथालोभंमायांमो
क्षविनाशिनीं वंदयित्वातुतंदेवंलुब्धकाभिमुखंययौ तस्यभार्याश्चपुत्राश्चमरणेकृतनिश्चयाः अनशनंव्रतंगृह्यपृष्ठल
ग्नाःसमाययुः भार्यापुत्रैःपरिवृतोमृगस्तंदेशमागमत् क्षुधितैर्बालकैर्युक्तोलुब्धकोयत्रतिष्ठति मृगस्तंदेशमागत्यकुटुंबे
नसमन्वितः पालयन्सर्ववाक्यानिलुब्धकंवाक्यमब्रवीत् मृगउवाच हनमांप्रथमंव्याधपश्चादेतान्क्रमेण
तु बालकानिततःपश्चाद्धन्यतांमाविलंबय लुब्धकैस्तुमृगाभक्ष्यानास्तिदोषःकदाचन वयंयास्यामःस्वर्लोकंस-
त्यपूतानसंशयः तथातेसकुटुंबस्यप्राणपुष्टिर्भविष्यति एतच्छ्रुत्वातुवचनंमृगेणपरिभाषितम् आत्मानंनिंदयित्वा
तुलुब्धकोवाक्यमब्रवीत् व्याधउवाच अहोमृगमहासत्वगच्छगच्छस्वमाश्रमम् आमिषेणनमेकार्यंयद्भाव्यंतद्भ
विष्यति जीवानांघातने—— नैवविमुखस्त्वर्जनेतथा नैवपापंकरिष्यामिकुटुंबार्थेकदाचन त्वंगुरुर्ममधर्माणाम्प्रदे

ष्टामृगोत्तम गच्छगच्छमृगश्रेष्ठकुटुंबेनसमन्वितः मयात्यक्तानिशस्त्राणिसत्यधर्मःसमाश्रितः मृगउवाच कर्मन्यास
महंकृत्वात्वत्सकाशमिहागतः हन्यतांहन्यतांशीघ्रंनतेपापंभविष्यति मयादत्तापुरावाक्तत्त्वयाबद्धोनयाम्यहं एतच्छ्रुत्वा
तुवचनंलुब्धकोवाक्यमब्रवीत् लुब्धकउवाच त्वंबंधुस्त्वंगुरुस्त्वात्वंमेमातापितासुहृत् मयात्यक्तानिशस्त्राणि
त्यक्तंमायादिकंबलम् कस्यभार्यासुताःकस्यकुटुंबंकस्यतन्मृग तैःस्वकर्मन्चभोक्तव्यंमृगगच्छंयथासुखं इत्युक्त्वा
सतदातूर्णबभंजसशरंधनुः मृगंप्रदक्षिणीकृत्यनमस्कृत्यक्षमापयत् एतस्मिन्नंतरेनेदुर्देवदुंदुभयोदिवि आकाशा
त्पुष्पवृष्टिस्तुपपातसुमनोहरा तदादूतःसमायातोविमानंगृह्यशोभनम् देवदूतउवाच अहोव्याधमहासत्व
सर्वसत्वक्षयंकर विमानमिदमारुह्यसदेहःस्वर्गमाविश शिवरात्रिप्रभावेनपातकंतेक्षयंगतं उपवासस्तुसंजातोनिशि
जागरणंकृतम् यामेयामेकृतापूजा अज्ञानेनशिवस्यच सर्वपापविनिर्मुक्तोगच्छत्वंरुद्रमंदिरम् विमानंचसमारुह्य
सत्याच्चित्रपदंव्रज मृगराजमहासत्वभार्यापुत्रसमन्वितः भार्यात्रितयसंयुक्तोनक्षत्रपदमाप्नुहि तवनाम्नातुतद्धिसंलो
केख्यातंभविष्यति एतच्छ्रुत्वातुवचनंलुब्धकेनसमन्वितः विमानंतुतदारुह्यनक्षत्रपदमागतः हरिणीद्वयमन्वेषुंपृष्ठ
तोमृगमेवच तारात्रितयसंयुक्तंमृगशीर्षंतदुच्यते बालकद्वितयंचाग्रेतृतीयापृष्ठतोमृगी पृष्ठतस्तत्रसंप्रासामृग-
शीर्षस्यसन्निधौ मृगराट्दृश्यतेद्यापिऋक्षंव्योमगमुत्तमम् उपवासंकरिष्यंतिजागरेणसमन्वितं यथोक्तशास्त्रमार्गेणाते

षांमोक्षनसंशयः शिवरात्रिसमन्नास्तिव्रतंपापक्षयापहं यत्कृत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः अश्वमेधसहस्राणिवाजपेयशतानि
च प्राप्नोतितत्फलंसर्वंनात्रकार्याविचारणा इतिश्रीलिंगपु॰ उमाम॰ संवा॰ शिव॰ व्रतक॰स॰ अथोद्या॰ स्कंदउ॰ व्रतस्योद्यापनंक
र्मकथंकार्यंचमानवैः कोविधिःकानिकर्माणिकथयस्वममप्रभो ईश्वरउ॰ शृणुषण्मुखयत्नेनलोकानांहितकाम्यया उद्यापनविधिंवै
वकथयामितवाग्रतः यदासंजायतेवित्तंभक्तिश्रद्धासमन्वितम् सएवव्रतकालःस्याद्यतोनिस्संहिजीवितं चतुर्दशाब्दं
कर्तव्यंशिवरात्रिव्रतंशुभं एकभक्तंत्रयोदश्यांचतुर्दश्यामुपोषणं संपाद्यसर्वसंभारान्मंडपंतत्रकारयेत् वस्त्रैःपुष्पैःस
माच्छन्नंपट्टवस्त्रैश्चशोभितम् तन्मध्येलेखयेद्दिव्यंलिंगतोभद्रमंडलं अथवासर्वतोभद्रंमंडपांतःप्रकल्पयेत् शोभोप
शोभासंयुक्तंदीपैःसर्वत्रसोज्वलं आचार्यंपूजयेत्तत्रऋत्विग्भिःसहितंशुचिः शिवरूपाश्चतेविप्राःपूज्याश्चंदनपुष्पकैः
अनुज्ञातश्चतैर्विप्रैःशिवपूजांसमारभेत् रुद्रनाम्नानमोंतेनब्राह्मणानपिपूजयेत् अव्रणंसजलंकुंभंतस्योपरितुवि
न्यसेत् सौवर्णंराजतंताम्रंमृन्मयंवानवंदृढं कुंभोपरिन्यसेद्देवंउमयासहितंशिवं सौवर्णंप्यथवारोप्यंवृषभेसंस्थि
तंशुभे रत्नालंकारणैर्हेमैरलंकृत्यप्रपूजयेत् पलेनवातदर्धेनतदर्धार्धेनवापुनः वस्त्रयुग्मेनसंवेष्ट्यबिल्वपत्रैः
प्रपूजयेत् उमामहेश्वरींमूर्तिंपूजयेद्वृषभेस्थिताम् सोमंचसगणंचैवपूजयित्वामहेश्वरम् पुराणस्तोत्रपाठै
श्चरात्रिशेषंनयेद्बुधः ततःप्रभातसमयेकृत्वासंध्यादिकाःक्रियाः ततःपूजांप्रकुर्वीततत्तोहोमंसमाचरेत्

तिलव्रीहियवैश्चैवपायसान्नेनभक्तितः त्र्यंबकमितिमंत्रेणनमःशंभवेचेतिच गौरीर्मिमायमंत्रेणशतमष्टोत्तरद्वयम्
होमंकुर्याच्चमतिमान्बिल्वपत्रैस्तुनामभिः अजैकपादहिर्बुध्न्योभवःशर्वउमापतिः रुद्रःपशुपतिःशंभुर्वरदःशिवईश्वरः
महादेवोहरोभीमोसामान्येवंचतुर्दश पूर्णाहुतिंततोहुत्वाकर्मशेषंसमापयेत् एतैर्होमःप्रकर्तव्यःकुंभदानेपितान्स्मरेत्
भोज्यंसमापयेदेवमेभिर्नामपदैःपृथक् प्रतिमांकुंभसहितामाचार्यायनिवेदयेत् शंभोप्रसीददेवेशसर्वलोकेश्वरप्र
भो तवरूपप्रदानेनममसंतुमनोरथाः आचार्यंपूजयेद्भक्त्यावस्त्रालंकारभूषणैः सवस्त्रांगांततोदद्याद्व्रतसंपूर्णहेत
वे अन्येभ्योपियथाशक्त्याब्राह्मणेभ्योहिदक्षिणाम् चतुर्दशप्रदातव्याविप्रेभ्योजलपूरिताः कुंभान्यज्ञोपवीतानिवस्त्रा
णिचपृथक्पृथक् ससूत्राणिचवस्त्राणिशय्यांसोपस्करांतथा द्वादशैवतुगांदद्यात्परिधानादिकंतथा अथवादक्षिणा
मेवप्रदद्यात्तुष्टयेद्विजान् व्रतमेतत्कृतंयन्मेपूर्णंवापूर्णमेवच सर्वसंपूर्णतांयातुप्रसादाद्भवतांमम इतिसंप्रार्थितान्
विप्रान्प्रणम्यचपुनःपुनः ततश्चस्वजनैःसार्धंस्वयंभुंजीतसुव्रती इतिश्रीस्कंदपुराणेशिवरात्रिव्रतोद्यापनंसंपूर्णम्
इतिचतुर्दशीव्रतानिसमाप्तानि ॥ ७ ॥ ७ ७

श्रीगणेशायनमः अथपौर्णमासीव्रतानिलिख्यंते चैत्रीपौर्णमासीसामान्यनिर्णयात्परैव अत्रविशेषोनिर्णयामृतेविष्णु
स्मृतौ चित्राऋक्षयुताचैत्रीपरास्नानादिकर्मणि चित्रवस्त्रप्रदानेनसिद्धिर्भवतुतेनरः मंदार्केचगुरौवारेयदाभवतिपू
र्णिमा तत्राश्वमेधजंपुण्यंस्नानश्राद्धादिभिर्भवेत् वायवीये संवत्सरकृतार्चायाःसाफल्यायाखिलान्क्रूरान् दमनेना-
र्चयेच्चैत्र्यांविशेषेणसदाशिवं इयंमन्वादिरपि इतिचैत्रीपौर्णिमा वैशाखपौर्णमास्यांविशेषःस्मर्यतेभविष्ये वैशाखी
कार्तिकीमाघीतिथयोतीवपूजिताः स्नानदानविहीनास्तानग्नेयाःपांडुनंदन अथज्येष्ठशुक्लपौर्णमास्यांअमायांवावट
सावित्रीव्रतंलिख्यते इयंचपूर्वविद्धाग्राह्या भूतविद्धानकर्तव्याअमावास्याचपूर्णिमा वर्जयित्वामुनिश्रेष्ठसावित्रीव्र
तमुत्तमं इतिब्रह्मवैवर्तात् ज्येष्ठेमासिसितेपक्षेद्वादश्यांरजनीमुखे इत्युपक्रम्य व्रतंत्रिरात्रमुद्दिश्यदिवारात्रि-
स्थिराभवेत्ज्येष्ठेमासिसितेपक्षेपूर्णिमायांतथाव्रतं चीर्णंव्रतंमहाभक्त्याकथितंतेमयानघे धर्मराजउवाच
इतिदाक्षिणात्याश्चैवमाचरंति पाश्चात्यादयस्तुअमावास्यायांआचरंति तच्चोक्तंनिर्णयामृतेभविष्ये अमायांच
तथाज्येष्ठेवटमूलेमहासती त्रिरात्रोपोषितानारीविधिनानेनपूजयेत् अशक्तौतुत्रयोदश्यांनक्तंकुर्याज्जितेंद्रिया अ
याचितंचतुर्दश्यांअमायांसमुपोषणमिति हेमाद्र्यादिभिस्तुभाद्रपदपौर्णिमास्यांइदंउक्तं तत्तुतदानींआचरंति यदा
त्वष्टादशघटिकाचतुर्दशीतदापरैव पूर्वविद्धैवसावित्रीव्रतेपंचदशीतिथिः नाड्योष्टादशभूतस्यतत्रपरेहनीतिमाधवो

क्तेः वस्तुतस्तुभूतविद्धानिषेध एव भूतोष्टादशनाडीभिरितिवाक्यं अन्यथासावित्रीव्रतेष्टादशनाडीवेधदोषकल्पना-
यांनिषेधांतरकल्पनागौरवंस्यात् ज्येष्ठेमासित्रयोदश्यांदंतधावनपूर्वकं दंतकाष्ठंसमंशुभंजातीयंचतुरंगुलं तस्या-
पराह्णसमयेनद्यादौविमलेजले तिलामलककल्केनकेशान्संशोध्ययत्नतः स्नात्वाचैवशुचिर्भूत्वावटंसिंचेद्बहूदकैः
वृद्धिक्षयेतथारोगेकर्तुमत्यांतथैवच कारयेद्विप्रहस्तेनसर्वंसंपद्यतेशुभं इदंचत्रयोदशीमारभ्यपौर्णिमांतंकर्तव्यं नारी
वाविधवावापिसपुत्रापुत्रवर्जिता सभर्तृकासपुत्रावाकुर्याद्व्रतमिदंशुभं ज्येष्ठेमासेतुसंप्राप्तेपौर्णमास्यांपतिव्रता स्ना-
त्वाचैवशुचिर्भूत्वानियमंकारयेत्ततः अथव्रतविधिः वटसमीपेगत्वातच्चसंस्कारयुक्तवटपूजाउक्ता आचम्यमासप-
क्षाद्युल्लिख्यममभर्तुःपुत्राणांआयुरारोग्यप्राप्तयेजन्मजन्मनिअवैधव्यप्राप्तयेचसावित्रीव्रतमहंकरिष्येइतिसंकल्प्य वट
मूलेस्थितोब्रह्मावटमध्येजनार्दनः वटाग्रेतुशिवांस्थित्वासावित्रीवटसंयुता वटसिंचामितेमूलंसलिलैरमृतोपमैः सू-
त्रेणवेष्टयेद्भक्त्यागंधपुष्पाक्षतैःशुभैः नमोवटसावित्रीभ्यांभ्रामयंतीप्रदक्षिणं वटंसावित्रींचसम्यगेभिर्मंत्रैःप्रपूजयेत्
एवंविधिंबहिःकृत्वासम्यग्वैगृहमागता हरिद्राचंदनेनैवगृहमध्येलिखेद्वटं ततोपविश्यसंकल्प्यपूजाकार्याप्रयत्नतः
तिथ्यादिसंकीर्त्यममजन्मजन्मनिअवैधव्यप्राप्तयेभर्तृचिरायुरारोग्यसंपदादिकामनयासावित्रीव्रतमहंकरिष्ये नियम
मंत्रः त्रिरात्रंलंघयित्वातुचतुर्थेदिवसेन्वहं चंद्रायार्घ्यंप्रदत्वाचपूजयित्वाहृतांसतीं मिष्टान्नानियथाशक्त्याभोजयित्वा-



१

द्विजोत्तमान् भोक्ष्येहंतुजगद्धात्रिनिर्विघ्नंकुरुमेशुभे इतिनियममंत्रः अथपूजा ततःभूमिंस्पृष्ट्वा महीद्यौःपृथिवीति
ऋक् ओषधयःसं०आकलशेषु० कलशंनिधाय पंचपल्लवसप्तमृत्तिकाहिरण्ययवांस्तुंभेनिक्षिप्य तदुपरिवंशपात्रंनिधा
य तस्योपरिसप्तधान्यानिपृथक्स्थाप्यानितदुपरिवस्त्रंवस्त्रोपरिद्वात्रिंशदंगुलपरिमितांवालुकाप्रतिमांब्रह्मणासहसं-
स्थाप्यपूजयेत् पद्मपत्रासनस्थश्चब्रह्माकार्यश्चतुर्मुखः सावित्रीतस्यकर्तव्यावामोत्संगगतातथा आदित्यवर्णाधर्मज्ञा-
साक्षमालाकरातथा ध्यानं ब्रह्मणासहितांदेवींसावित्रींलोकमातरं सत्यव्रतंचसावित्रींवटंचावाहयाम्यहं आवाहनं ब्र-
ह्मणासहसावित्रिसत्यवत्सहितेप्रिये हेमासनंगृह्यतांतुधर्मराजसुरेश्वर आसनं गंगाजलंसमानीतंपाद्यार्थंब्रह्मणःप्रिये
भक्त्यादत्तंधर्मराजसावित्रीप्रतिगृह्यताम् पाद्यं भक्त्यासमाहृतंतोयंफलपुष्पसमन्वितं अर्घ्यंगृहाणसावित्रिममसत्य
व्रतप्रिये अर्घ्यं सुगंधिसहकर्पूरंसुरभिस्वादुशीतलं ब्रह्मणासहसावित्रिकुरुष्वाचमनीयकं आचमनीयं पयोदधि-
घृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनंप्रीयतांपरमेश्वरि पंचामृतस्नानं मंदाकिन्याःसमानीतंहेमांभोरुहवा-
सितं सावित्रीब्रह्मराजेनस्नानार्थंप्रतिगृह्यताम् स्नानं० सूक्ष्मतंतुयुतंवस्त्रयुग्मंकार्पाससंभवं सावित्रीसत्यवत्कांते-
भक्त्यादत्तंप्रगृह्यताम् वस्त्रं सावित्रिसत्यवत्कांतेधर्मराजसुरेश्वरि सावित्रिब्रह्मणासार्धमुपवीतंप्रगृह्यताम् उ
पवीतं भूषणानिचदिव्यानिमुक्ताहारयुतानिच त्वदर्थमुपक्लृप्तानिगृहाणशुभलोचने भूषणानि कुंकुमागरुकर्पूरकस्तूरी

रोचनाद्युतं चंदनंतेमयादत्तंसावित्रिप्रतिगृह्यताम् चंदनं अक्षताश्चसुरश्रेष्ठाःकुंकुमाक्ताःसुशोभनाः मयानिवेदिता
भक्त्यागृहाणपरमेश्वरि अक्षताः हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितं सौभाग्यद्रव्यसंयुक्तंसावित्रिप्रतिगृह्यताम् सौ॰
भाग्यद्रव्यं माल्यादीनिसुगंधीनिमालत्यादीनिवैप्रभो मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यताम् पुष्पाणि अथांगपूजा
सावित्र्यैनमः पादौपूजयामि वटप्रियायै॰ जंघे॰ कमलपत्राक्ष्यै॰ कटी॰ भूतधारिण्यै॰ उदरं॰ गायत्र्यै॰ कंठं॰ ब्रह्मणः प्रियायै॰
मुखं॰ सौभाग्यदात्र्यै॰ शिरः पू॰ अथब्रह्मसत्यवत्पूजा धात्रेनमः पादौ॰ विधात्रेनमः जंघे॰ त्वष्ट्रे॰ ऊरू॰ प्रजापतये॰
मेढ्रं॰ परमेष्ठिने॰ कटी॰ अग्निरूपाय॰ नाभिं॰ पद्मनाभाय॰ हृदयं॰ वेधसे॰ बाहू॰ विधये॰ कंठं॰ हिरण्यगर्भाय॰ मुखं॰ ब्रह्म
णे॰ शिरः पू॰ विष्णवे॰ सर्वांगं॰ देवद्रुमरसोद्भूतंकालागरुसमन्वितं आघ्रेयतामयंधूपोसावित्रिप्रतिगृह्यताम् धूपं॰ चक्षु
र्दंसर्वलोकानांतिमिरस्यनिवारणं आर्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वरि दीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिः समन्वि-
तं मयानिवेदितंभक्त्यानैवेद्यंप्रतिगृह्यताम् नैवेद्यं मध्येपानीयं उत्तरापोशनं मुखप्रक्षालनं इदंफलमितिफलं पूगी॰
फलमितितांबूलं हिरण्यगर्भेतिदक्षिणां नमोब्रह्मण्यदेवित्वंसततंब्रह्मणःप्रिये पंचार्तिक्यंमयादत्तंगृहाणसुरपूजिते
नीराजनं यानिकानिचपापानीतिप्रदक्षिणां सावित्रीचप्रसावित्रीसततंब्रह्मणःप्रिये पूजितासिद्विजैः सर्वैःस्त्रीभिर्मुनिग
णैस्तथा त्रिसंध्यंदेविभूतानांवंदनीयासुशोभने मयादत्ताचपूजेयंत्वंगृहाणनमोस्तुते पुष्पांजलिं ततोर्घ्यत्रयंदद्यात्

ॐकारपूर्वकेदेविसर्वदुःखनिवारिणि वेदमातर्नमस्तुभ्यंसौभाग्यंचप्रयच्छमे इदमर्घ्यं० पतिव्रतेमहाभागेब्रह्माणिचशुचिस्मिते दृढव्रतेदृढमतेभर्तुश्चप्रियवादिनि अर्घ्यं अवैधव्यंचसौभाग्यंदेहित्वंममसुव्रते पुत्रान्पौत्रांश्चसौख्यंचगृहाणार्घ्यंनमोस्तुते अर्घ्यं०३ सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणी तेनसत्येनमांपाहिदुःखसंसारसागरात् त्वंगौरीत्वंशचीलक्ष्मीस्त्वंप्रभाचंद्रमंडले त्वमेवचजगन्मातात्वमुद्धरवरानने यन्मयादुष्कृतंसर्वंकृतंजन्मशतैरपि भस्मीभवतुतत्सर्वंअवैधव्यंचदेहिमे अवियोगोयथादेवसावित्र्यासहितस्यते अवियोगस्तथास्माकंभूयाज्जन्मनिजन्मनि इतिप्रार्थना सुवासिन्यस्ततःपूज्यादिवसेदिवसेगते सिंदूरंकुंकुमंचैवतांबूलंचपवित्रकं तथादद्याच्चशूर्पाणिभक्ष्यभोज्यादिकंसदा माहात्म्यंचैवसावित्र्याःश्रोतव्यंमुनिसत्तम पुराणश्रवणंकार्यंसतीनांचरितंशुभं इतिपूजाविधिः ततःव्रतपूजासांगतासिध्यर्थंब्राह्मणायवायनप्रदानंकरिष्ये फलवस्त्रसमायुक्तंसौभाग्यद्रव्यसंयुतं वंशपात्रेनिधायादौब्राह्मणायनिवेदयेत् उपायनमिदंद्रव्यंव्रतसंपूर्णहेतवे वाणकंद्विजवर्यायसहिरण्यंददाम्यहं इतिवायनं इतिवटसावित्रीपूजनंसमाप्तं अथकथा सनत्कुमारउवाच कुलस्त्रीणांव्रतंदेवमहाभाग्यंतथैवच अवैधव्यकरंस्त्रीणांपुत्रपौत्रप्रदायकं ईश्वरउवाच आसीन्मद्रेषुधर्मात्माब्रह्मज्ञानीपरमधार्मिकः नाम्नाचाश्वपतिर्वीरोवेदवेदांगपारगः अनपत्योमहाबाहुःसर्वैश्वर्यसमन्वितः सपत्नीकस्तपस्तेपेसमाराधयतेनृपः सावित्रींचप्रसावित्रींजपन्नास्तेमहामनाः जुहोति

न्नैवसावित्रीभक्त्यापरमयायुतः ततस्तुष्टातुसावित्रीसादेवीद्विजसत्तम सावित्र्यहवतीदेवीतस्यदर्शनमागता भूर्भुवः
स्वरात्वत्येषासाक्षसूत्रकमंडलुः तांतुदृष्ट्वाजगद्वंद्यांसावित्रींचनृपोत्तमः प्रणिपत्यनृपोभक्त्याप्रहृष्टेनांतरात्मना तंदृष्ट्वा
पतितंभूमौतुष्टादेवीजगादह सावित्र्युवाच तुष्टाहंतवराजेंद्रवरंवरयसुव्रत एवमुक्तस्तयाराजाप्रसन्नांतामुवा-
चह अनपत्योत्वहंदेविपुत्रमिच्छामिशोभने नान्यंदृणोमिसाविनिपुत्रमेवजगन्मये अन्यदस्तिसमग्रंमेक्षितौय-
च्चापिदुर्लभं प्रसादात्तवदेवेशितत्सर्वंविद्यतेगृहे एवमुक्तातुसादेवीप्रत्युवाचनराधिपं सावित्र्युवाच पुत्रस्तेना-
स्तिराजेंद्रकन्यकातेभविष्यति कुलद्वयंतुसाराजन्नुद्धरिष्यतिभामिनी मन्नाम्नाराजशार्दूलतस्यानामभविष्य-
ति इत्युक्त्वातंमुनिश्रेष्ठराजानंब्राह्मणःप्रिया अंतर्धानंगतादेवीसंतुष्टोसौमहीपतिः ततःकतिपयाहोभि
स्तस्यराज्ञीमहीभुजः ससत्वासमजायेतपूर्णेकालेसुषावह सावित्र्यातुष्टयादत्तासावित्र्याजसयातथा सावित्रीते
नवरदातस्यानामबभूवह राजतेदेवगर्भाभाकन्याकमललोचना तांदृष्ट्वाहेमगर्भाभांराजाचिंतामुपेयिवान्
अयाच्यमानांचवरैरूपेणाप्रतिमाभुवि तस्यारूपेणतेसर्वेसन्निरुद्धामहीभुजः ततःसराजाचाहूयउवाचकमलेक्षणां
पुत्रिप्रदानकालस्तेनचयाचंतिकेचन स्वयंवरयहद्यंतेपतिंगुणसमन्वितं मनःप्रल्हादकरणंशीलेनाभिजनेनच इ
त्युक्त्वातांचराजेंद्रोवृद्धामात्यैःसहैवतां वस्त्रालंकारसहितांधनरत्नैःसमन्वितां विसृज्यचक्षणंतत्रयावत्तिष्ठति



३

भूमिपः तावत्तत्रसमागच्छन्नारदोभगवानृषिः संपूज्यचततोराजा अर्घ्यपाद्येनतंमुनिं आसनेचसुखासीनः पू
जितस्तेनभूभुजा पूजयित्वामुनिंराजाप्रोवाचेदंद्विजोत्तम पावितोहंत्वयाविप्रदर्शनेनाद्यनारद यावदेवंवदेद्राजाता
वत्साकमलेक्षणा आश्रमादागतादेवीवृद्धामात्यैःसमन्विता अभिवाद्यपितुःपादौववंदेसामुनिंततः नारदेनतुदृष्ट्वा
तांदृष्ट्वाप्रोवाचभूमिपं कन्यांचदेवगर्भाभांकिमर्थंनप्रयच्छसि वरायत्वंमहाबाहोवरयोग्यांहिसुंदरीं एवमुक्तस्त-
दातेनमुनिनानृपसत्तमः उवाचतंमुनिंवाक्यमनेनार्थेनप्रेषिता आगतेयंविशालाक्षीमयासंप्रेषितासती अनयाच
वृतोभर्तापृच्छत्वंमुनिसत्तम सापृष्टातेनमुनिनातस्मैचाचष्टभामिनी सावित्र्युवाच द्युमत्सेनस्यराज्यंवैवैरिणा
रुक्मिणाहृतं दैवादंधःस्त्रीसहितःसत्यवान्तत्सुतोवने आश्रमेसत्यवान्नामद्युमत्सेनसुतोमुने भर्तेतिमनसा-
विप्रवृतोसौराजनंदनः नारदउवाच कष्टंकृतंमहाराजदुहित्रानवसुव्रत अजानंत्यावृतोभर्तागुणवानितिवि
श्रुतः सत्यंवदत्यस्यपितासत्यंमाताप्रभाषते स्वयंसत्यंप्रभाषेणसत्यवानितितेनसः तथाचाश्वाःप्रियास्तस्यअश्वैः
क्रीडतिमृन्मयैः चित्रेपिविलिखत्यश्वान्चित्राश्वस्तेनचोच्यते रूपवान्गुणवांश्चैवसर्वशास्त्रविशारदः नतस्यसदृ
शोलोकेविद्यतेचेहमानवः सर्वैर्गुणैश्चसंपन्नोरत्नैरिवमहार्णवः एकोदोषोमहानस्यगुणानावृत्यतिष्ठति संवत्स
रेणक्षीणायुर्देहत्यागंकरिष्यति अश्वपतिरुवाच अन्यंवरयभद्रंतेवरंसावित्रिगम्यतां विवाहस्यतुकालोयंच

र्तते शुभलोचने सावित्र्युवाच नान्यमिच्छाम्यहंतातमनसापिवरंप्रभो योमयाचवृतोभर्तासमेनान्योभविष्य
ति विचिंत्यमनसापूर्वंवाचापश्चात्समुच्चरेत् क्रियतेचततःपश्चाच्छुभंवायदिवाशुभं तस्मात्तुमांसंमनसाकथंचा·
न्यंवृणोम्यहं सकृज्जल्पंतिराजानःसकृज्जल्पंतिपंडिताः सकृत्कन्याप्रदीयंतेत्रीण्येतानिसकृत्सकृत् पतिंमत्वा·
नमेबुद्धिर्विचलेच्चकथंचन सगुणोनिर्गुणोवापिमूर्खःपंडितएवच दीर्घायुरथचाल्पायुःसवैभर्तामिमप्रभो नान्यं
वृणोमिभर्तारंयदिवास्याच्छचीपतिः इतिमत्वात्वयाताततत्कर्तव्यंसुखेनच नारदउवाच स्थिराबुद्धिश्वरा
जेंद्रसावित्र्याःसत्यवान्प्रति त्वरयस्वविवाहायभर्त्रासहकुरुत्विमां ईश्वरउवाच निश्चितांतुमतिंज्ञात्वास्थिता
बुद्धिश्चनिश्चला सावित्र्याचमहाराजःप्रतस्थेसोवनंप्रति गृहीत्वातुधनंराजाद्युमत्सेनस्यसन्निधौ स्वल्पानुगोम
हाराजोवृद्धामात्यैःसमन्वितः नारदस्तुततोखेवैतत्रैवांतरधीयत सगत्वाराजशार्दूलोद्युमत्सेनेनसंगतः वृद्धश्चां
धश्चराजासौवृक्षमूलमुपाश्रितः सावित्र्यश्वपतीराजापादौजग्राहवीर्यवान् स्वनामचसमुच्चार्यतस्थौतस्यसमीप·
तः उवाचराजातंभूपंकिमागमनकारणं पूजयित्वार्घ्यदानेनवन्यमूलफलैश्चसः ततःपप्रच्छकुशलंसराजामुनिस·
त्तमः अश्वपतिरुवाच कुशलंदर्शनेनाद्यतवराजन्ममाद्यवै दुहितामामसावित्रीतवपुत्रमभीप्सति भर्तारंराज·
शार्दूलप्राप्तोत्वियमनिंदिता ममेदंकांक्षितंपूर्वंभर्तारमनयाविभो आवयोश्चैवसंबंधोभवत्वद्यममेप्सितः द्युमत्सेनउ

हृद्धश्वांधश्वराजेंद्रफलमूलाशनोनृप राज्याच्च्युतश्वमेपुत्रोवन्येनाद्यचजीवति साकथंसहतेदुःखंदुहितातवकानने
अनभिज्ञाचदुःखानामित्यहंनाभिकांक्षये अश्वपतिरुवाच अनयाचवृतोभर्ताजानंत्याराजसत्तम अनेनस
हवासस्तेतवपुत्रेणमानद स्वर्गतुल्योमहाराजभविष्यतिनसंशयः एवमुक्तस्तदातेनराज्ञाराजर्षिसत्तमः तथेतिस·
प्रतिज्ञायचकारोद्वाहमुत्तमं कृत्वाविवाहंराजेंद्रसंपूज्यविविधैर्धनैः अभिवाद्यद्युमत्सेनंजगामनगरंप्रति सावित्री
तुपतिंलब्ध्वाइंद्रंप्राप्यशचीयथा सत्यवानपिब्रह्मर्षेतयापत्न्याभिनंदितः क्रीडतेतद्वनोद्देशेपौलोम्यामघवाइव नारद·
स्यचतद्वाक्यंहृदयेतुमनस्विनी वहंतीनियमंचक्रेव्रतस्यास्यचभामिनी गणयंतीदिनान्येवनलेभेहर्षमुत्तमं ज्ञात्वातद्दिवसं
विप्रभर्तुर्मरणकारणं व्रतंत्रिरात्रमुद्दिश्यदिवारात्रौस्थिराभवत् ततस्त्रिरात्रंनिर्वर्त्यसंतर्प्यपितृदेवताः अस्यांतेनियमंकृत्वा
त्रिदिनस्यमनस्विनी अस्मिन्दिनेचमर्तव्यमितिसत्यवतामुने कुठारंसंपरिगृह्यपिटकंचैवदारुकं प्रस्थितंचवनायैवसावि
त्रीवाक्यमब्रवीत् नगंतव्यंवनंत्वद्यममवाक्येनमानद अथवागम्यतेसाधोमयासहवनंव्रज संवत्सरंभवेत्पूर्णमाश्रमेस्मि·
न्ममप्रभो तद्वनंद्रष्टुमिच्छामिप्रसादंकुरुमेप्रभो सत्यवानुवाच नाहंस्वतंत्रःसुश्रोणिपृच्छस्वपितरौमम ताभ्यांप्रस्था
पितागच्छमयासहशुचिस्मिते एवमुक्तातदातेनभर्त्रासाकमलेक्षणा श्वश्रूश्वशुरयोःपादौअभिवाद्येदमब्रवीत् वनंद्रष्टुंग
मिष्यामिआज्ञामह्यंप्रदीयताम् उवाचवचनंसाध्वीवरमेकंप्रयच्छमे भर्त्रासहवनंगंतुमेतत्त्वरयतेमनः तस्यास्तद्वचनंश्रु·

त्यद्युमत्सेनोब्रवीदिदं व्रतं कृतं त्वयाभद्रेपारणं कुरु सुव्रते पारणांतेततोभीरुवनंगंतुं त्वमर्हसि सावित्र्युवाच नियमश्च कृतोस्माभी रात्रौचंद्रोदयेसति जातेमयाप्रकर्तव्यंभोजनंनातमेशृणु वनदर्शनकामोस्तिभर्त्रासहममाद्यवै नमेतत्रभवेद्गानिर्भर्त्रासहनराधिप इत्युक्तस्तुतयाराजाद्युमत्सेनोमहीपतिः यत्तेभिलषितंपुत्रितत्कुरुष्वसुमध्यमे नमस्कृत्वातुसावित्रीश्वश्रूश्वशुरयोरपि सहितारराजशार्दूलतेनसत्यवताविभो विलोकयंतीभर्तारंप्राप्तकालंमनस्विनी वनंचफलितंदृष्ट्वापुष्पितंद्रुमसंकुलं द्रुमाणांचैवनामानिमृगाणांचैवभामिनी पश्यंतीमृगयूथानिहृदयेनप्रवेपती तत्रगत्वासत्यवान्वैफलान्यादायसत्वरं काष्ठानिचसमादायबबंधभारकंतदा काष्ठभारंक्षणात्कृत्वावटशाखावलंबनं वटवृक्षस्यसासार्ध्वाउपविष्टामहासती काष्ठंपानयनस्तस्यजाताशिरसिवेदना ग्लानिश्चमहतीजानागात्राणांवेपथुस्तदा आगत्यवृक्षसामीप्यंसावित्रीमिदमब्रवीत् ममगात्रेतिकंपश्चजाताशिरसिवेदना कंटकैर्भिद्यतेभद्रेशिरोमेशूलसंभिनैः उत्संगेतववसुश्रोणिस्वप्तुमिच्छामिसुव्रते अभिज्ञातुंविशालाक्षीतस्यमृत्योर्मनस्विनी प्राप्तकालंमन्यमानातस्यतत्रैवभामिनी सत्यवानपिसुप्तस्तुकृत्वोत्संगेशिरस्तदा तावत्तत्रसमागच्छत्पुरुषःकृष्णपिंगलः जाज्वल्यमानोवपुषाददर्शाथमनस्विनी उवाचवाक्यंवाक्यज्ञाकस्त्वंलोकेभयंकरः नाहंधर्षयितुंशक्यापुरुषेणापिकेनचित् इत्युक्तःसत्यवाचेदंयमोलोकभयंकरः यमउवाच क्षीणायुस्तुवरारोहेभर्तातवमनस्विनि नेष्यास्म्येनमहंबध्वात्वेतन्मेचचिकीर्षितं

इत्युक्त्वापितृराजस्तांभगवान्स्वंचिकीर्षितं यथावत्सर्वमाख्यातंसत्प्रियार्थंप्रचक्रमे अयंहिधर्मसंयुक्तोरूपवान्गुणसा-
गरः नार्होमत्पुरुषैर्नेतुमतोस्मिस्वयमागतः ततःसत्यवतःकायात्पाशबद्धंवशंगतं अंगुष्ठमात्रंपुरुषंनिश्चकर्षयमोब
लात् ततःसमुद्धृतप्राणंगतश्वासंहतप्रभं निर्विचेष्टंशरीरंतद्बभूवाप्रियदर्शनम् यमस्तुतंततोबध्वाप्रययौदक्षिणा
मुखः सावित्रीचापिदुःखार्तायममेवान्वगच्छत नियमव्रतसंपन्नामहाभागापतिव्रता यमउवाच निवर्तगच्छ
सावित्रिकुरुष्वास्योर्ध्वदेहिकं कृतंभर्तुस्त्वयानृण्यंयावद्गम्यंगतंत्वया सावित्र्युवाच यत्रमेनीयतेभर्तास्वयंवायत्र
गच्छति मयापितत्रगंतव्यंएषधर्मःसनातनः तपसागुरुवृत्त्याचभर्तृस्नेहाद्व्रतेनच तवचैवप्रसादेननमेप्रतिहता
गतिः प्राहुःसप्तपदंमैत्रंबुधास्तत्त्वार्थदर्शिनः मित्रतांतुपुरस्कृत्यकिंचिद्वक्ष्यामितच्छृणु नानात्मवंतोहिवनेचरंति
धर्मंचवसंचपरिश्रमंच विज्ञानतोधर्ममुदाहरंतितस्मात्संतोधर्ममाहुःप्रधानं यमउवाच निवर्ततुष्टोस्मित-
वानयागिरास्वराक्षरव्यंजनहेतुयुक्तया वरंवृणीष्वेहविनास्यजीवितंददामितेसर्वमनिंदितेवरं सावित्र्युवाच-
च्युतःस्वराज्याद्वनवासमाश्रितोअलब्धचक्षुःश्वशुरोममाश्रमे सलब्धचक्षुर्बलवान्भवेन्नृपस्तवप्रसादाज्ज्वलना
र्कसन्निभः यमउवाच ददामितेसर्वमनिंदितेवरंयथात्वयोक्तंभविताचतत्तथा तवाध्वनोग्लानिमिवोपलक्ष
येनिवर्तगच्छस्वनतेश्रमोभवेत् सावित्र्युवाच कुतःश्रमोभर्तृसमीपतोह्यमेयतोहिभर्ताममसागतिर्ध्रुवा यतः

पतिंनेष्यसितत्रमेगतिः स्फुरेशभूयश्चवचोनिबोधमे सतांसकृत्संगतमीप्सितंवरंततःपरंमित्रमितिप्रचक्षते नचाफ-
लंसत्पुरुषेणसंगतंततःसतांसन्निवसेत्समागमे यमउवाच मनोनुकूलंबुधबुद्धिवर्धनंत्वयाथचोक्तंवचनंहिताश्रयं
विनापुनःसत्यवतोहिजीवितंवरंद्वितीयंवरयस्वभामिनि सावित्र्युवाच हृतंपुरामेश्वशुरस्यधीमतःस्वमेवराज्यंस-
लभेतपार्थिवः नचस्वधर्मंप्रजहीतमेगुरुर्द्वितीयमेवंवरयामितेवरं यमउवाच स्वमेवराज्यंप्रतिपत्स्यतेचिरान्नच
स्वधर्मान्परिहास्यतेनृपः कृतेनकामेनमयानृपात्मजेनिवर्तगच्छस्वनतेश्रमोभवेत् सावित्र्युवाच प्रजास्त्वयेता-
नियमेनसंयतानियम्यचैतानयसेचकाम्यया ततोयमत्वंतवदेवविश्रुतंनिबोधयेमांगिरमीरितांमया अद्रोहःसर्व-
भूतेषुकर्मणामनसागिरा अनुग्रहश्चदानंचसतांधर्मःसनातनः एवंप्रायश्चलोकोयंमनुष्याःशक्तिपेशलाः सन्तस्त्व
येह्यमित्रेषुदयांप्राप्तेषुकुर्वते यमउवाच पिपासितस्येवयथाभवेत्पयस्तथात्वयावाक्यमिदंसमीरितं विनापुनःसत्य
वतोस्यजीवितंवरंवृणीष्वेहशुभेयदीच्छसि सावित्र्युवाच ममानपत्यःपृथिवीपतिःपिताभवेत्पितुःपुत्रशतंतथौर
सं कुलस्यसंतानकरंचतद्भवेत्तृतीयमेवंवरयामितेवरं यमउवाच कुलस्यसंतानकरंसुवर्चसंशतंसुतानांपितुर
स्तुतेशुभे कृतेनकामेननराधिपात्मजेअतीवदूरंहिपथस्त्वमागता सावित्र्युवाच नदूरमेतन्ममभर्तृसन्निधौमनो
हिमेदूरतरंप्रधावति अथव्रजन्नेवगिरासमुद्यतांमयोच्यमानांशृणुधर्ममेवचः विवस्वतस्त्वंतनयःप्रतापवांस्ततोहिवै

यस्त्वनउच्यतेबुधैः समेनधर्मेणाचरंजिताःप्रजास्ततस्तवेहेश्वरधर्मराजता आत्मन्यपिनविश्वासस्तावद्भवतिसत्सुयः
तस्मात्सत्सुविशेषेणसर्वःप्रणयमृच्छति सौहृदात्सर्वभूतानांविश्वासोनामजायते तस्मात्सत्सुविशेषेणविश्वासंकुरु
तेजनः यमउवाच उदाहृतंतेवचनंयदंगनेशुभंनताहृक्त्वदृतेमयाश्रुतम् अनेनतुष्टोस्मिविनास्यजीवितंवरंचतुर्थंव
रयस्वगच्छ सावित्र्युवाच ममात्मजंसत्यवतस्तथौरसंभवेदुभाभ्यामिहयत्कुलोद्वहं शतंसुतानांबलिनांमहात्म
नामिमंचतुर्थंवरयामितेवरं यमउवाच शतंसुतानांबलवीर्यशालिनांभविष्यतिप्रीतिकरंतवाबले प-
रिश्रमस्तेनभवेन्नृपात्मजेनिवर्तदूरंहिपथस्त्वमागता सावित्र्युवाच सतांहियाशाश्वतधर्मवृत्तिःसंतोनसीदंतिनच
व्यथंतिते सतांसद्भिर्नाभिफलंसंभयातिसद्भ्योभयंनानुवर्ततिसंतः संतोहिसत्येननयंतिसूर्यंसंतोभूमिंतपसाधारयंति सं
तोगतिर्भूतभव्यस्यराजन्सतांमध्येनावसीदंतिसंतः आयुर्जुष्टमिदंवृत्तमितिविज्ञायशाश्वतं संतःपरार्थंकुर्वाणानावे-
क्षंतेप्रतिक्रियां नचप्रसादःसत्पुरुषेषुमोघोनचाप्यर्थोनश्यतिनापिमानः यस्मादेतन्नियतंसत्सुनित्यंतस्मात्संतोरक्षिता
रोभवंति यमउवाच यथायथाभाषसिधर्मसंहितंमनोनुकूलंसुपदंसहार्थवत् तथातथामेत्वयिभक्तिरुत्तमावरंवृणी
ष्वाप्रतिमंपतिव्रते सावित्र्यु० नतेपवर्गःसुकृताद्विनाकृतस्तथान्यथान्येषुवरेषुमानद वरंवृणेजीवतुसत्यवानयंयथामृताह्येवमहं
विनापतिं नकामयेभर्तृविनाकृतासुखंनकामयेभर्तृविनागतादिवं नकामयेभर्तृविनाकृताश्रियंनभर्तृहीनाव्यवसामि-

जीवितुं वरोपिवैवस्वतस्त्वोरसात्मजशतेचदत्तोभवताहृपालुना वरंवृणेजीवतुसत्यवानयंतवैवसत्यंवचनंभविष्यति तथेत्यु
क्त्वातुतान्पाशान्मुक्त्वावैवस्वतोयमः धर्मराजःप्रहृष्टात्मासावित्रीमिदमब्रवीत् एषभद्रेमयामुक्तोभर्तातेकुलनंदिनि आ
रोग्यवयसीप्राप्स्यसिद्धार्थश्चभविष्यति चतुर्वर्षशतंचायुस्त्वयासार्धमुपैष्यति सागतावटसामीप्यंकृत्वोत्संगेशिरस्ततः
प्रबुद्धस्तुततोब्रह्मन्सत्यवानिदमब्रवीत् मयास्वप्नोवरारोहेदृष्टोधैर्यवत्प्राभामिनि तत्सर्वंकथितंतस्यायद्वृत्तंसर्वमेवतत् त-
थान्वकथितःसर्वःसंवादश्चयमेनहि अस्तंगतेततःसूर्येद्युमत्सेनोमहीपतिः पुत्रस्यागमनेकांक्षीइतश्चेतश्चधावति आ-
श्रमादाश्रमंगच्छन्पुत्रदर्शनकांक्षया आवयोरंधयोर्यष्टिःक्वगतोसिविनावयोः एवंसविविधंक्रोशन्सपत्नीकोमही
पतिः चकारदुःखसंतप्तःपुत्रपुत्रेतिचासकृत् अकस्मादेवराजेंद्रोलब्धचक्षुर्महीश्वरः तदृष्ट्वापरमाश्चर्यंचक्षुःप्राप्ति
द्विजोत्तमाः सांत्वपूर्वंतदावाक्यमूचुस्तेतापसाभृशं चक्षुःप्राप्स्यामहाराजसूचितंतेमहीपते पुत्रेणचसमंयोगंप्रा-
प्स्यसेनृपसत्तम ईश्वरउवाच यावदेवंवदंत्येतेतापसाद्विजसत्तम सावित्रीसहितःप्राप्तःसत्यवान्द्विजसत्त
म नमस्कृत्यद्विजान्सर्वान्मातरंपितरंतथा सावित्रीचततोब्रह्मन्ववंदेचरणाविति श्वश्रूश्वशुरयोर्ब्रह्मन्सावित्रीकम
लेक्षणा मुनयऊचुः वरंसावित्रिजानासिकारणंवरवर्णिनि वृद्धयोश्चक्षुषःप्राप्तेःश्वश्रूश्वशुरयोःशुभे सावि·
त्र्युवाच नजानामिमुनिश्रेष्ठाश्चक्षुषःप्राप्तिकारणं चिरंसुप्तस्तुमेभर्तातेनकालव्यतिक्रमः सत्यवानुवाच अ-

स्याः प्रभावात्संजातं दृश्यते कारणं नच तत्सर्वं विद्यते विप्राः सावित्र्यास्तपसः फलं व्रतस्यैव तु माहात्म्यं दृष्टमेतन्मयाधुना
ईश्वरउवाच एवं तु वदतस्तस्य तदा सत्यवतः प्रभो पौराः समागतास्तस्य आचरन्नृपतेर्हितं येन राज्यं बलाद्राजन्हृ
तमेतेन मंत्रिणा अमात्येन हतः सोपि इति पौराः समागताः पौराऊचुः उत्तिष्ठ राजशार्दूल त्वं राज्यं पालय प्रभो
अभिषिंचस्व राजेंद्र पुरे मंत्रिपुरोहितैः ईश्वरउवाच सगत्वा राजशार्दूलः स्वपुरं जनसंवृतः पितृपितामहं रा
ज्यं समाप्तं च महात्मना सावित्री सत्यवांश्चैव परां मुदमवापतुः जनयामास पुत्राणां शतं वै बाहुशालिनां व्रतस्यैव तु-
माहात्म्यात्तस्याः पितुरजायत पुत्राणां च शतं ब्रह्मन्प्रसन्नाच्च यमात्तथा एतत्ते कथितं सर्वं व्रतमाहात्म्यमुत्तमं क्षीणा
युर्जीवितो भर्ता व्रतस्यास्य प्रभावतः कर्तव्यं सर्वनारीणामवैधव्यफलप्रदं सनत्कुमारउवाच विधानं ब्रूहि देवेश
व्रतस्यास्य च त्र्यंबक क्रियते विधिना केन स्त्रीभिस्त्रिपुरसूदन ईश्वरउवाच वर्षैकं नियमं कृत्वा एकभक्तेन मानद
नक्ताहारेण वा विप्र भुंक्ते प्राप्य द्विजर्षभ त्रिदिनं लंघयित्वा च चतुर्थे दिवसे शुभे चंद्रायार्घ्यं प्रदद्याच्च पूजयित्वा सुवासि-
नीं सावित्रीं च प्रसावित्रीं गंधपुष्पैश्च पूजयेत् मिथुनानि यथाशक्त्या भोजयित्वा यथासुखं भोक्ष्येहं तु जगद्धात्रि निर्विघ्नं कु
रु मे शुभे दिनं प्रतिदिनं श्रेयः कुर्यान्न्यग्रोधसेचनं कृत्वा वंशमये पात्रे वालुकाप्रस्थमेव च सप्तधान्यभृतं पात्रं प्रस्थैकेन
द्विजोत्तम प्रस्थं द्वात्रिंशद्बुकपरिमितसंख्यं कारयेन्मुनिशार्दूल वस्त्रयुग्मेन वेष्टयेत् तस्योपरि न्यसेद्देवीं सावित्रीं ब्र-

ह्मणासह सावित्रीसत्यवांश्चैव कार्यौरौप्यमयौशुभौ पिटकंचकुठारंचकुलारौप्यमयौशुभौ फलैःकालोद्भवैर्देवीपूजये-
द्ब्रह्मणःप्रिया हरिद्रारंजितैश्चैव कंठसूत्रैःसमर्चयेत् सखीनांकंठसूत्राणित्रिदिनंप्रतिपादयेत् पक्वान्नानिचदेयानिनि
त्यमेवद्विजोत्तमान् माहात्म्यंचैवसावित्र्याश्रोतव्यंमुनिसत्तम पुराणश्रवणंकार्यंसतीनांचरितंशुभं पूजयेच्चतथानि·
त्यंमंत्रेणानेनसुव्रत सावित्रीचप्रसावित्रीसततंब्रह्मणःप्रिया पूज्यसेहूयसेदेविद्विजैर्मुनिगणैःसदा त्रिसंध्यंदेविभू-
तानांवंदितात्वंजगन्मये सावित्रीत्वंप्रसावित्रीद्विधाप्रभूतासिशोभने जगत्त्रयस्थितादेवित्रिसंध्यंचतथानघे श्रेष्ठेदे·
वित्रिलोकेचत्रेताग्नीत्वंमुनेश्वरी व्यापितःसकलोलोकअतोमांपाहिसर्वदा रूपंदेहियशोदेहिसौभाग्यंदेहिमेशुभे
पुत्रान्देहिधनंदेहिसर्वदाजन्मजन्मसु यथातेनवियोगोस्तिभर्त्रासहसुरेश्वरि तथाममममहाभागेकुरुत्वंजन्मजन्मनि
एवंसंपूजयेद्देवींकमलासनसंस्थितां एवंदिनत्रयंनीत्वाचतुर्थेहनिसत्तम मिथुनानिचसंभोज्यषोडशानिद्विजोत्तम
अर्चयित्वातथाचार्यंसपत्नीकंसुसंमतं तस्मैसंकल्पितंसर्वंहेमसावित्रिसंयुतं मंत्रेणानेनदातव्यंद्विजमुख्यायसुव्र
त सावित्रीकल्पविदुषंप्रणिपत्यतथामुने सावित्रीजगतांमातासावित्रीजगतःपिता मयादत्तांचसावित्रींब्रह्मणःप्रति·
गृह्यताम् अवैधव्यंचमेनित्यंभूयाज्जन्मनिजन्मनि मृताचवसतेल्लोकेब्रह्मणापतिनासह तत्रैवचचिरंकालंभुक्त्वाभो
गाननुत्तमान् धर्मराजवरदानानंतरं सावित्र्युवाच यामदीयंव्रतंदेवभक्त्यानारीकरिष्यति भर्तुःसासहितासाध्वी·

समस्तस्फरवभाग्भवेत् धर्मराजउवाच गौरीप्रमुग्धावृद्धावाअपुत्रापतिवर्जिता सभर्तृकासपुत्रावाकुर्याद्व्रतमिदंशु-
भं ज्येष्ठमासेतुसंप्राप्तेपौर्णमास्यांपतिव्रता स्नात्वांचैवशुचिर्भूत्वावटंसिंच्यबहूदकैः सूत्रेणवेष्टयेद्भक्त्यागंधपुष्पाक्षतैः
शुभैः नमोवैवस्वतायेतिभ्रामयंतीप्रदक्षिणां रात्रौकुर्वीतनक्तंचत्र्यब्दमेकंसमाहिता तथैववटवृक्षंचपक्षेपक्षेप्रपू-
जयेत् अनेनैवविधानेनकर्तव्यंव्रतमुत्तमं सर्वमनोरथान्प्राप्यह्यंतेरुद्रोपिजायते इतिस्कंदपुराणेवटसावि-
त्रीकथासमाप्ता अथोद्यापनं संप्राप्तेतुपुनर्ज्येष्ठेनक्तभुक्द्वादशींनयेत् दंतधावनपूर्वादिस्नात्वानियमकारये-
त् त्रिरात्रंलंघयित्वातुचतुर्थेदिवसेत्वहं चंद्रायार्घ्यंप्रदत्वाचपूजयित्वातुतांसतीं मिष्टान्नानियथाशक्त्याभोजयित्वा
द्विजोत्तमान् भोक्ष्येहंतुजगद्धात्रिनिर्विघ्नंकुरुमेशुभे नियममंत्रः कृत्वावंशमयेपात्रेवालुकाप्रस्थमेवच सप्तधान्य-
युतंपात्रंप्रस्थैकेनद्विजोत्तम वस्त्रद्वयोपरिस्थाप्यसावित्रींब्रह्मणासह हैमींकृत्वातयोर्मूर्तिंत्रिरात्रव्रतमाचरेत्
न्यग्रोधस्यतलेतिष्ठेद्यावच्चैवदिनत्रयं सौवर्णींचैवसावित्रींसत्यैनसहकारयेत् रौप्यपर्यंकमारोप्यरथस्थोपरिविन्य
सेत् पलादूर्ध्वंयथाशक्त्यारथंरौप्यमयंशुभं काष्ठभारंकुठारंचवटंचैवस्कविस्तृतं धर्मराजंनारदंचतत्रैवपरिकल्प-
येत् वटमूलेप्रकुर्वीतमंडलंगोमयेनहि संस्थाप्यतत्रसावित्रींचतुष्कोपरिशोभनीं एवंचमिथुनंकृत्वापूजयेद्गतमत्
सरा पचामृतेनस्नपनंगंधपुष्पोदकेनच चंदनागरुकर्पूरमाल्यवस्त्रविभूषणैः पीतपिष्टेनपद्मंचचंदनेनाथवालि-

रवेत् देवींसंपूजयेत्तत्रमंत्रैरेभिर्विधानतः नमःसावित्र्यैपादौतुप्रसावित्र्यैतुजानुनी कटिंकमलपत्राक्ष्यैउदरंभूतधा
रिणि गायत्र्यैचनमःकंठेशिरसिब्रह्मणःप्रिये अथब्रह्मसत्यवतोः पादौधात्रेनमःपूज्यावूरूज्येष्ठायवैनमः पर
मेष्ठिनेवैमेंढ्रमग्निरूपायवैकटी वेधसेचोदरंपूज्यंपद्मनाभायवैहृदि कंठंविधात्रेपूज्यंहिहेमगर्भायवैमुखं ब्रह्मणे॰
वैशिरःपूज्यंसर्वांगंविष्णवेनमः अभ्यर्च्यैवंक्रमेणैवशास्त्रोक्तविधिनाशुभं ततोरजतपात्रेणअर्घ्यंदद्याद्द्वयोरपि अ
थार्घ्यमंत्रः ॐकारपूर्वकेदेविवीणापुस्तकधारिणि देवमातर्नमस्तेस्तुह्यवैधव्यंप्रयच्छमे पतिव्रतेमहाभागेवन्हिजा
तेशुचिस्मिते दृढव्रतेदृढमतेभर्तुश्चप्रियवादिनि अवैधव्यंचसौभाग्यंदेहित्वंममसुव्रते पुत्रान्पौत्रांश्चसौख्यंचगृ
ह्णाणार्घ्यंनमोनमः अथब्रह्मसत्यवतोरर्घ्यमंत्रः त्वयासृष्टंजगत्सर्वंसदेवासुरमानुषं सत्यव्रतधरोदेवब्रह्मरूपन॰
मोस्तुते अथयमस्यार्घ्यमंत्रः त्वंकर्मसाक्षीलोकानांशुभाशुभविवेककृत् वैवस्वतगृह्णाणार्घ्यंधर्मराजनमोस्तुते धर्म
राजःपितृपतिःसाक्षीभूतोसिजंतुषु कालरूपगृह्णाणार्घ्यमवैधव्यंचदेहिमे गंधपुष्पैश्चनैवेद्यैःफलैःकर्पूरदीपकैः रक्तव
स्त्रैरलंकारैः पूजयेद्गतमत्सरा सावित्रीप्रार्थना सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणी तेनसत्येनमांपाहिदुःखसं
सारसागरात्त्वंगौरीत्वंशचीलक्ष्मीस्त्वंप्रभाचंद्रमंडले त्वमेवचजगन्माताप्रासुद्धरवरानने सौभाग्यंकुलवृद्धिंचदेहि
त्वंममसुव्रते यन्मयादुष्कृतंसर्वंकृतंजन्मशतैरपि भस्मीभवतुतत्सर्वमवैधव्यंचदेहिमे अथब्रह्मसत्यवतोःप्रार्थना

अवियोगोयथादेवसावित्र्यासहितस्यते अवियोगस्तथास्माकंभूयाज्जन्मनिजन्मनि यमप्रार्थना कर्मसाक्षिजगत्पूज्य
सर्ववंद्यप्रसीदमे संवत्सरव्रतंसर्वंपरिपूर्णंतदस्तुमे सावित्रीप्रार्थना सावित्रीत्वंयथादेविचतुर्वर्षशतायुषं पतिंप्राप्ता
सिद्गुणिनंममदेवितथाकुरु सावित्रीचप्रसावित्रीसततंब्रह्मणःप्रिये पूजितासिद्विजैःसर्वैःस्त्रीभिर्मुनिगणैस्तथा त्रि-
संध्यंदेविभूतानांवंदनीयासिसुव्रते मयादत्तांचपूजेयंत्वंगृहाणनमोस्तुते जागरंतत्रकुर्वीतगीतवाद्यादिमंगलैः सुवा
सिन्यस्ततःपूज्यादिवसेदिवसेशुभाः सिंदूरंकुंकुमंचैवताबूलंचसुपूगकं तथादद्याच्चशूर्पाणिभक्ष्यंसौभाग्यमष्टकं संति-
ष्ठेच्चदिवारात्रौकामक्रोधविवर्जिता दिनत्रयेपिकर्तव्यमेवमर्घ्यादिपूजनं ततश्चतुर्थदिवसेयत्कार्यंतच्छृणुष्वमे मिथुना-
निचतुर्विंशत्षोडशद्वादशाष्टवा पूजयेद्वस्त्रगोदानैर्भूषणाच्छादनासनैः अथवागुरुमेकंवाव्रतस्यविधिकारकं सर्वलक्ष
णसंपन्नंसर्वशास्त्रार्थपारगं वेदविद्याव्रतस्नातंशांतंतुविजितेंद्रियं सपत्नीकंसमभ्यर्च्यवस्त्रालंकारमंडलैः शय्यांसोप-
स्करांदद्याद्गृहंचैवातिशोभनं अशक्तस्तुयथाशक्त्यास्तोकंस्तोकंचकल्पयेत् सावित्रीत्वंयथादेवीचतुर्वर्षशतायुषा सत्य-
वत्पतिनासार्धंमयादत्तातथाकुरु मयादत्तांचसावित्रींब्राह्मणःप्रतिगृह्यताम् मयागृहीतासावित्रीत्वयादत्तासुशोभने
यावच्चंद्रश्चसूर्यश्चसहभर्त्रासुखीभव न्यग्रोधस्यसमीपेतुगृहेवास्थंडिलेपिवा सावित्र्याश्चैवमंत्रेणघृतहोमंतुकारयेत्
पायसंजुहुयाद्भक्त्याघृतेननसहभामिनी व्याहृत्याचैवमंत्रेणतिलव्रीहियवांस्तथा गुरुंचगुरुपत्नींचततोभक्त्याक्षमापयेत्

धर्मराजोयमोधातानीलःकालांतकोव्ययः वैवस्वतश्चित्रगुप्तो दध्नोमृत्युःक्षयोदरः मासिमासितथाह्येतैर्नामभिःसेचयेद्वट
न्यग्रोधेहंवसाम्येवतस्माद्यत्नेनसेचयेत् होमांतेदक्षिणांदद्यादृत्विजश्चक्षमापयेत् भुंजीतवासरांतेतुनक्तेशांतातपस्विनी
अर्घ्यंदद्यादरुंधत्यैहृष्ट्वाचैवप्रणम्यच अरुंधतिनमस्तेस्तुवसिष्ठस्यप्रियेशुभे अर्घ्यमेतन्मयादत्तंफलपुष्पसमन्वितम् पु
त्रान्देहिसुखंदेहिगृहाणार्घ्यंनमोस्तुते सखिभिर्ब्राह्मणैःसार्द्धंभुंजीतविजितेंद्रिया एवंकरोतियानारीव्रतमेतदनुत्तमं भ्रात
रःपितरोपुत्राःश्वशुरौस्वजनास्तथा चिरायुषस्तथारोगाभवंतिनचसंशयः भर्त्राचसहितासाध्वीब्रह्मलोकेमहीयते इति
श्रीस्कंदपुराणेसावित्रीव्रतोद्यापनंसंपूर्णम् अथआषाढपौर्णमास्यांगोपद्मव्रतंतत्रपूजा चतुर्भुजंमहाकायंजांबून
दसमप्रभम् शंखचक्रगदापद्मरमागरुडशोभितम् सेवितंमुनिभिर्देवैर्यक्षगंधर्वकिन्नरैः एवंविधिंहरिंध्यात्वानतोय-
जनमारभेत् ध्यानं आवाहयामिदेवेशंभक्तानामभयप्रदं स्निग्धकोमलकेशंचमनसावाहयेद्धरिं सहस्रशीर्षेत्यावाहनं
सुवर्णमणिभिर्दिव्यैरचितेदेवनिर्मिते दिव्यसिंहासनेकृष्णउपविश्यप्रसीदमे पुरुषएवेदमित्यासनं पादोदकंसुरश्रेष्ठसु
वर्णकलशेस्थितं गंधपुष्पाक्षतैर्युक्तंपाद्यंमेप्रतिगृह्यतां एतावानस्येतिपाद्यं अष्टद्रव्यसमायुक्तंस्वर्णपात्रोदकंशुभं भोऽ
भयंकरभक्तानांगृहाणार्घ्यंजगत्पते त्रिपादूर्ध्वइत्यर्घ्यं कर्पूरेणसमायुक्त मुशीरेणसुवासितम् दत्तमाचमनीयार्थंनीरं
स्वीकुरुतांविभो तस्माद्विराळित्याचमनीयं गंगागोदावरीचैवयमुनाचसरस्वती नर्मदासिंधुकावेरीताभ्यःस्नानार्थमाहृ

तं यत्पुरुषेणेतिस्नानं वस्त्रयुग्मंसमानीतंपट्टसूत्रेणनिर्मितं सुवर्णखचितंदिव्यंगृहाणत्वंसुरेश्वर तंयज्ञमितिवस्त्रं
कार्पासतंतुभिर्युक्तंब्रह्मणानिर्मितंपुरा अनेकरत्नखचितमुपवीतंगृहाणभो तस्माद्यज्ञादितियज्ञोपवीतं चंदनंमलयोद्भूतंक
स्तूरीचारुचंदनं कर्पूरेणचसंयुक्तंस्वीकुरुष्वानुलेपनं तस्माद्यज्ञात्सर्वहुतमितिगंधं शतपत्रैःकर्णिकारैश्चंपकैर्मल्लिकादिभिः
॥तुलसीयुक्तपुष्पाणिगृहाणपुरुषोत्तम तस्मादश्वेतिपुष्पं दशांगंगुग्गुलोद्भूतंसुगंधिंचमनोहरं कृष्णागरुसमायुक्तंधू
पंदेवगृहाणमे यत्पुरुषंव्यदधुरितिधूपं साज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहम्
ब्राह्मणोस्येतिदीपं॰ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितम् भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यताम् चंद्रमामनसइति
नैवेद्यं आचमनीयं॰ करोद्वर्तनं॰ इदंफलमितिफलं॰ पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षि॰ यानिकानि॰ नाभ्याआ-
सीतिप्रदक्षिणां नमोस्त्वनंताय॰ सप्तास्यासन्नितिनमस्कारः देवदेवजगन्नाथगोपालप्रतिपालक गोपदेहकृतसंत्राणगृहा
णकुसुमांजलिम् यज्ञेनयज्ञमितिपुष्पांजलिं तद्दूर्वोक्तंवायनं परमान्नमिदंविप्रकांस्यपात्रेणसंयुतं त्वत्प्रसादादहंविप्र
व्रतस्यफलमाप्नुयाम् मंत्रहीनंक्रियाहीनमितिप्रार्थना इतिगोपद्मपूजा अथकथा सूतउवा॰ नाथैकंत्वांहिपृच्छा
मिचतुर्वर्गफलप्रदं सर्वरोगप्रशमनंविष्णुसारूप्यमुक्तिदं नारीणामथवापुंसांभक्तिमुक्तिफलप्रदं ब्रूहिचेदस्तिदेवर्षेकृपांकृत्वा
ममोपरि नारदउवाच भगवन्सर्वमाख्यास्येयत्पृष्टंविदुषात्वया गोपद्मकंव्रतंश्रेष्ठतद्व्रतानांव्रतमुत्तमम् कर्तुःसिद्धिकरंदिव्यं-

विख्यातंभुवनत्रये सनत्कुमारउवाच भगवन्भूतभव्येशसर्वशास्त्रविशारद तद्व्रतंब्रूहिमेब्रह्मन्कथमुद्यापनंभवेत्
पुरेदंकेनवाचीर्णंदेवर्षेकथयव्रतं नारदउवाच आषाढपौर्णमास्यांवातथाष्टम्यांहरेर्दिने प्रारभेद्व्रतमेतच्चकार्तिकावधि
तत्तिथौ तिलामलककल्केनस्नानंनित्यंविधायच नदीतीरेथवागोष्ठेशिवागारेहरेर्गृहे वृंदावनेवापिलिखेद्गोपद्मकपदं
शुभं त्रयस्त्रिंशत्तुपद्मानिकुर्याद्भक्त्यादिनेदिने तत्संख्ययाप्रकर्तव्याअर्घ्यप्रदक्षिणानतीः बालकृष्णंसमुद्दिश्यलक्ष्म्या
सहजगद्गुरुं गंधाद्यैरुपचारैस्तुयथाशक्त्याप्रपूजयेत् ब्राह्मणांस्तुततःपूज्यपद्मसंख्यात्रमुत्सृजेत् प्रथमाब्देथवटकैर्द्वि
तीयेपूपकैर्व्रती तृतीयेशालिपिष्टान्नैश्चतुर्थेपूरिकादिभिः पंचमेपरमान्नैस्तुसम्यगेवंपूजयेद्व्रती अत्रैवोदाहरंतीममिति
हासंपुरातनं ऋषीणांपृच्छमानानांसूतेनोक्तंपुरातनं सूतउवाच पुराशक्रोमरावत्यांदेवदानवकिंन्नरैः रुद्रैरादित्ययक्
क्षाद्यैर्गंधर्वैर्वसुभिःसह रंभानृत्यंसमारेभेक्रीडालोभेनविह्वला एवंनृत्येक्रियमाणेत्रुटितंवाद्यमंडलं क्षणमात्रंविचार्याऽ
थधर्मराजस्तुउक्तवान् यमउवाच जन्ममध्येव्रतंयैश्चनकृतंप्राणिभिःक्वचित् तच्चर्मस्नायुभिःशक्रकर्तव्यंछादनं
ढके नारदेनश्रुतंतच्चजगादयदुनंदनं स्वर्चयित्वातुतंकृष्णोवचनंचेदमब्रवीत् कृष्णउवाच सर्वलोकज्ञदेवर्षेभ्रुव
नेषुचरन्सदा आश्चर्यंवददेवर्षेयद्यस्तिशुभदायक नारदउवाच गतंमयामरावत्यामाश्चर्यंधर्मसंसदि तत्रसर्वेस
मायाताःसुराइंद्राश्चतुर्दश रुद्राएकादशविधिरादित्याद्वादशापिच वसवोष्टौतथानागायक्षराक्षसपन्नगाः रंभयाचस

मारब्धं नृत्यं शक्रस्य पश्यतः श्रुतिं तं चर्मवाद्यानां अब्रुवंस्तस्य साधनं यमः प्राह तथा दूतान्सुभद्राद्यव्रतास्ति भो तामानयध्व
तच्चर्मवाद्ययोग्यं सदास्त्विति तच्छ्रुत्वा तु मया भीत्या सर्वं त्वयि निवेदितं सूत उवाच इति नारदवाक्यं तु श्रुत्वा कृष्णस्त्वरान्वि
तः सुभद्रायागृहं गत्वा पूजितस्तामुवाच ह श्रीकृष्ण उवाच किंचिद्व्रतं त्वया भद्रे कृतं वा नेति संशयः सुभद्रोवाच सर्वव्रता
नि भो कृष्ण कृतान्येव न संशयः नो चेत्त्वत्सहोदरी चाहं न स्यामर्जुनवल्लभा पुत्रोभिमन्युश्च कथं कथयस्व जगत्पते कृष्ण उ
वाच तथापि त्वं महाभाग व्रतमेकं समाचर गोपद्मेति च विख्यातं त्रिषु लोकेषु विश्रुतम् इति कृष्णवचः श्रुत्वा सुभद्रा तत्तदा
करोत् कृष्णोपदिष्टविधिना सत्वरं च समापितं सोद्यापने व्रते चीर्णकाले यमभटा ययुः दूता ऊचुः सुभद्रे तव देहस्य चर्मा
र्थे ह्यागता वयम् त्वच्चर्मसुरवाद्यार्थं यमेन च प्रकल्पितं इति दूतवचः श्रुत्वा सव्रतास्मीति साब्रवीत् ततो भटाः सर्व एव द
दृशुः सादरास्तदा पद्मानां निचयं तस्य गृहे गां च सवत्सकां स्थंडिले हस्तमात्रे तु सुसमिद्धं हुताशनं कृष्णोपदिष्टं वीक्ष्यैवं
दूता जग्मुर्यमांतिकं प्रतिपेदे प्रभावेन सुभद्रा पदमच्युतं नारद उवाच इति सूतवचः श्रुत्वा ऋषयश्चक्रिरे व्रतं सूत उवाच
भो भो नारद देवर्षे सर्वशास्त्रविशारद शीघ्रं ब्रूहि सखे पद्मव्रतस्योद्यापने विधिः नारद उवाच पूर्णे तु पंचमे वर्षे व्रतस्यो
द्यापनं भवेत् श्रीकृष्णप्रतिमा कार्या सुवर्णस्य पलेन वै पुष्पमंडपिका कार्या चतुर्द्वारसुशोभना तन्मध्ये पूजयेद्भक्त्या रमया स
हितं हरिं त्रयस्त्रिंशत्ततो विप्रान्हुत्वा होमं समाचरेत् अतो देवेति मंत्रेण जुहुयात्तिलपायसं ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिः सं

पूजयेद्व्रती यंयंचिंतयतेकामंतंतंप्राप्नोत्यसंशयं इतिभविष्यपुराणेगोपद्मव्रतोद्यापनंसंपूर्णम् अथआषाढशुक्लपौर्णमास्यांकोकिलाव्रतं यदाआषाढाअधिकमासस्तदाकोकिलानुष्ठानंकार्यं तद्विधिः आचम्यप्राणानायम्यमासपक्षाद्युल्लिख्य ममेहजन्मनिजन्मांतरस्थसर्वपापक्षयार्थंपुत्रपौत्रलक्ष्मीवृद्ध्येसौभाग्यवृद्धिद्वाराअवैधव्यसपत्ननाशायकोकिलारूपगौरीप्रीत्यर्थंकोकिलाव्रतंकरिष्ये इतिसंकल्प्य आषाढपौर्णमास्यांतुसंध्याकालेऽप्युपस्थिते संकल्पयेन्मासमेकंश्रावणेप्रत्यहंह्यहं स्नानंकरिष्येनियमाद्ब्रह्मचर्यस्थितासती भोक्ष्यामिनक्तंभूशय्यांकरिष्येप्राणिनांदयाइत्युक्त्वा स्नानंकरोमिदेवेशिकोकिलेप्रीतयेतव जलेऽस्मिन्पावनेपुण्येसर्वदेवजलाशये इतिमंत्रेण तिलामलककल्केनसर्वौषधिजलेनच वचापिष्टेनवाष्टौदिनानिप्रत्येकंवचौषधियुक्तेनचषड्दिनान्येवंमासावधिस्नानेक्रमः एवंस्नात्वारविंध्यात्वातस्माअर्घ्यंचदापयेत् आदित्यभास्कररवेअर्कसूर्यदिवाकर प्रभाकरनमस्तुभ्यंगृहाणार्घ्यंनमोस्तुते इतिसूर्यार्घ्यमंत्रः ततःस्वर्णपक्षांरौप्यपादांमौक्तिकनेत्रांप्रवालमुखींरत्नपृष्ठांचूतचंपकवृक्षस्थांपक्षिरूपिणींकोकिलांलिखित्वापूजयेदित्युक्तं स्वर्णपक्षांरक्तनेत्रांप्रवालमुखपंकजां कस्तूरीवर्णसंयुक्तांप्रसन्नांनंदनेवने चूतचंपकवृक्षस्थांपुष्टस्वरसमन्वितां चिंतयेत्पार्वतींदेवींकोकिलारूपधारिणीं ध्यानं आगच्छकोकिलेदेविदेहिमेवांछितंफलं चंपकद्रुममारूढाक्रीडंतीनंदनेवने आवाहनं आसनंक्षौमवस्त्रेणनिर्मितंह्यनघेतव गृहाणेदंमयादेविकोकिलेप्रियवर्धिनि आसनं तिलस्नेहेतिलसुखेतिलसौख्येतिलप्रिये सौभाग्यंधनपुत्रांश्च

देहिमेकोकिलेनमः तिलपुष्पफलैर्युक्तंपाद्यंमेप्रतिगृह्यताम् पाद्यं रत्नचंपकपुष्पैश्चपीतचंदनसंयुतं हेमपात्रेस्थितंतोयंगृ
हाणार्घ्यंनमोस्तुते अर्घ्यं निर्मलंसलिलंगांगंकोकिलेपक्षिरूपिणि वासितेनसुगंधेनगृहाणाचमनीयकं आचमनीयं
पंचामृतेनस्नपनंकोकिलेकलकंठके मयादत्तेनप्रीतात्वंभवमेपरमेश्वरि पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेन
स्नपनंदत्तंस्वीकुरुकोकिले पंचामृतस्नानं मंदाकिनीजलंपुण्यंसर्वतीर्थसमन्वितं स्नानार्थंतेमयादत्तंकोकिलेगृह्यतांनमः
स्नानं यस्मात्कार्पाससूत्रेणवासांसिविविधानिच पीतवस्त्रप्रदानेनप्रीताभवममांबिके वस्त्रं कंचुकंचमयादत्तंनानावर्ण
विचित्रितं कोकिलेगृह्यतांदेविप्रसीदपरमेश्वरि कंचुकीं हरिद्रारंजितेदेविकंठसूत्रंसमर्पितं कोकिलेसुभगेदेविवरदा·
भवचांबिके कंठसूत्रं यानिरत्नानिसर्वाणिगंधर्वेषूरगेषुच तैर्युक्तंभूषणंहैमंकोकिलेप्रतिगृह्यताम् भूषणानि श्रीखं·
डंचंदनंदिव्यंगंधाढ्यंसुमनोहरं विलेपनंसुरश्रेष्ठेचंदनंप्रतिगृह्यताम् चंदनं अक्षताश्चसु॰ अक्षतान् कुंकुमालक्तकंदि
व्यंकामिनीभूषणास्पदं सौभाग्यदंगृहाणेदंप्रसीदहरवल्लभे हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितं सौभाग्यद्रव्यसंयुक्तंगृ
हाणपरमेश्वरि सौभाग्यद्रव्यं करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैःशुभैः शतपत्रैश्चकल्हारैरर्चयेसरमेश्व री पुष्पाणि
वनस्पतिरसोद्भूतो॰ धूपं साज्यंचेतिदीपं॰ शर्कराखंडखाद्यानिदधिक्षीरघृतानिच आहारार्थंमयादत्तंनैवेद्यंप्रतिगृह्यताम्
नैवेद्यं पाटलोशीरकर्पूरसुरभिस्वादुशीतलं तोयमेतत्सुखस्पर्शंकोकिलेप्रतिगृह्यताम् आचमनीयं चंदनागरुकर्पू·

रंकस्तूरीकेशरान्वितं करोद्वर्तनकंदेविगृह्यतांहरवल्लभे करोद्वर्तनं कूष्मांडंनालिकेरंचपनसंकदलीफलं जंबीरंमातुलिंगं
चफलंगृह्णनमोस्तुते फलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां॰ कोकिलेकृष्णवर्णेत्वंसदावससिकानने भवानी
हरकांतासिकोकिलायैनमोनमः नीराजनं पूजितापरयाभक्त्या कोकिलागिरिशप्रिया पुष्पैर्नानाविधैःश्रेष्ठैर्वरदास्तुसदा॰
मम पुष्पांजलिं यानिकानिचप्रदक्षिणां नमोदेव्यैनमस्कारं कोकिलारूपधारिण्यैजगन्मात्रेनमोस्तुते शरणागतदीना
नांत्राहिदेविसदांबिके गंधपुष्पाक्षतैर्युक्तंतोयंहेमफलान्वितं अर्घ्यंगृहाणदेवेशिवांछितार्थंप्रयच्छमे आषाढस्यसिते॰
पक्षेमेघवर्णेहरिप्रिये कोकिलेत्वंजगन्मातर्गृहाणार्घ्यंनमोस्तुते पुनरर्घ्यं॰ तिलस्नेहे॰ रूपंदेहिजयंदेहि॰ प्रार्थना॰ व्रतांते॰
हैमींतिलपिष्टजांकोकिलांकृत्वाविप्रायदद्यात् देविचैत्ररथोत्पन्नेविंध्यपर्वतवासिनि अर्चितापूजितासित्वंकोकिलेहरवल्ल
भे कोकिलेकलकंठासिमाधवेमधुरस्वरे वसंतेदेविगच्छत्वंदेवानांनंदनेवने इतिविसर्जनं इतिकोकिलापूजा अथकथा
युधिष्ठिरउवाच स्वभर्त्रासहसंयोगःस्नेहःसौभाग्यमेवच भवेद्यथाकुलस्त्रीणांतद्व्रतंब्रूहिकेशव श्रीकृष्णउवाच य
मुनायास्तटेरम्येमथुरानगरीशुभा तस्यांशत्रुघ्ननामाभूद्राजाराघववंशजः तस्यभार्याकीर्तिमालानाम्नासीत्प्रथिताभुवि
प्रणम्यभगवान्पृष्टोवसिष्ठोमुनिसत्तमः कीर्तिमालोवाच वदमेत्वंमुनिश्रेष्ठसौभाग्यप्राप्तिदंव्रतं पूज्यःकथंचभग॰
वान्शिवःकेनव्रतेनच वसिष्ठउवाच यदिस्वेच्छसिमेत्वंहिव्रतानामुत्तमंव्रतं तारणंसर्वपापानांकथयामिनिबोधतत्

५५

दक्षप्रजापतेर्यज्ञेपुरादेवाःसमागताः ऋषयश्चतथासर्वेविद्याधरगणास्तथा ब्रह्माविष्णुश्चवायुश्चदेवराजस्तथैवच वरुणो-
ग्निर्गुह्यश्चैवयेचान्येचदिवौकसः वसिष्ठोवाल्मिकिर्गार्ग्योविश्वामित्रोमहानृषिः एतेचान्येचऋषयःसर्वेयज्ञार्थमागताः
अपश्यन्नारदस्तत्रसंतिकेत्रागताइति ईश्वरेणविनासम्यक्दृष्ट्वासर्वान्समागतान् शिरवांसंस्पृश्यपाणिभ्यांननर्तकलहप्रि
यः ज्ञात्वांकलहमूलंचततःकैलासमाययौ सर्वाघनाशनंपुण्यंकैलासशिखरंशुभं तत्रदृष्ट्वासमासीनंगौरीसहितशंकरं कृ
तांजलिपुटोभूत्वाप्रणिपत्यमुनिस्थितः ईश्वरस्तमुवाचाथनिश्वसंतमनेकधा किमागमनकृत्यंतेमदीयंसदनंप्रति श्वासोश्वा
सेनसंयुक्तस्तन्मेब्रूहिद्विजोत्तम ईश्वरस्यवचःश्रुत्वाशिखांसंस्पृश्यपाणिना दुःखयुक्तइवोवाचनारदःकलहप्रियः नार
दउवाच यन्निमित्तंमहादेवमर्त्यलोकात्समागतः वदामिदुःखसंयुक्तंतच्छृणुष्वजगत्पते दक्षयज्ञमहंद्रष्टुमद्यदेवास्समा
गतः तत्रयज्ञेस्थिताःसर्वेदक्षजामातरःप्रभो दृष्ट्वातांश्चनतन्मध्येदृष्टस्त्रिभुवनेश्वरः तवावज्ञाकृतातेनदक्षेणापुण्यकर्म
णा तेननिश्वाससंयुक्तआगतोस्मितवांतिकं ईश्वरेणविनाकिंचिद्धर्मकार्यंनसिध्यति अतोस्यविपुलःसर्वःप्रयासःस्मरखं
प्रति तस्यतद्भाषितंश्रुत्वानतन्मिथ्येत्यचिंतयत् सक्रोधस्तत्तदाजातोहीश्वरोजगदीश्वरः गौर्याचप्रार्थितोदेवःश्रुत्वातन्नारदे
रितं तस्ययज्ञस्यघातार्थंदेवतत्रव्रजाम्यहं इत्युक्त्वाञ्चलितारोषादीश्वरेणनिवारिता जगदीशनमस्तुभ्यंव्रजामिपितृवेश्म
नि नारदेनाथसहितागणेशेनचसंयुता यज्ञार्थमागतानेवदक्षद्वारेशिवप्रिया वन्हौदृष्ट्वावसोर्धारांलज्जिताचशिवप्रिया

तिष्ठंतींद्वारितांदक्षो नददर्शमहासतीं क्षणमेकंचतिष्ठंतींयदादक्षोनपश्यति तदैवंचिंतितंगौर्याजीवितव्यंमयाकथं धाविताकुंडनिक
टेहाहाकृत्वाचसाततः क्षिप्तंवन्हौतदागौर्याशापंदत्वाचदारुणं दृष्ट्वातच्चगणेशेनपाशःपरशुरुद्यतः क्रुद्धोथसौनदात्यर्थंगौर्य·
र्थंचगणाधिपः पाशेनबध्वाकतिचित्कोपान्निहतवान्सुरान् दक्षेणनोदितादेवासर्वेयुद्धायनिर्ययुः महद्युद्धमभूद्भूयःसहदेवैर्ग·
णेशितुः तंदृष्ट्वानारदःशीघ्रंपुनःकैलासमाययौ निवेदयामासतदायज्ञेगौर्याविसर्जनं तच्छ्रुत्वास्फालयामासजटांकोपादुमा·
पतिः ततोजातोतिविकटःपुरुषोरक्तलोचनः सबभाषेमहादेवंस्वामिनाज्ञांचदेहिमे वीरभद्रेतिनामास्यकृत्वाचाज्ञांसमर्पयत् द
क्षयज्ञविघातार्थंगच्छवीरातिसत्वरं श्रुत्वातदीश्वरवचःसर्वप्रमथसंवृतः आययौयज्ञसदनमसृग्वन्हिषुनिक्षिपत् ततइंद्रादयो
देवास्तद्धायविनिर्ययुः क्षणात्पराजितास्तेनविद्रुताश्चदिशोदश अनुद्रुतश्चतान्सोपिपूष्णोदंतानपातयत् भगस्यनेत्रेनासांचस
रस्वत्यान्यकृंतत एवंविद्राव्यतान्सर्वान्शिरोदक्षस्यचिच्छिदे कृत्वैवंयज्ञघातंसआजगामशिवांतिकम् नमस्कृत्यपुरस्तस्थौ·
कृतंकार्यमितिब्रुवन् तथाप्यशांतःकोपोस्यज्ञात्वेतिज्ञानचक्षुषा प्रसादयितुमीशानंब्रह्मविष्णूसमीयतुः नमस्कृतस्ततस्ताभ्यां
प्रसन्नोभूत्सदाशिवः नारदस्तुंबुरुश्चैवगीतैःशिवमतोषयत् प्रसन्नंवीक्ष्यतंविप्रशिरवासंस्पृश्यपाणिना ननर्तनारदस्तत्रतोषय
न्नधिकंशिवम् एतस्मिन्नंतरेब्रह्माविष्णुश्चप्रमथाधिपं व्यजिज्ञपत्तंदक्षादीन्कृपादृष्ट्याविलोकय कृत्तांगान्कुरुपूर्णांगान्मृतान्संजीवयप्र·
भो विलोकितास्तेदेवेनकृपादृष्ट्याविलोकिताः पूषादयश्चसांगावैअभूवंस्तत्प्रसादतः उत्थितःपादयोर्मूलंययौदक्षःपिनाकिनः अ-

पराधंक्षमस्वेतिपुनःपुनरुवाचह उत्थापितः करेणासौततोदक्षःपिनाकिना उक्तश्चमापुनःकार्षीरेवमीशावमाननं वि-
चरस्वस्त्वरवेनेतिभूयस्त्वंकोपआविशत् शशापचतदागौरींयज्ञविघ्नकरींशिवः मखेविघ्नंकृतवतीदक्ष स्यैषाततोचिरात्
तिर्यग्योनिसमापन्नाविचरिष्यतिभूतले ततोगौरीबभाषेतंप्रणिपत्यसदाशिवं कथंयास्यामितिर्यक्त्वंभूतलेचस्थितिः
कथं अन्यथाचनभविताशापएषत्वयोदितः कोकिलामधुरालापाभवेयंनंदनेवने कोकिलानांस्वरोरूपंरूपंस्त्रीणांपतिव्रतं
विद्यारूपंकुरूपाणांक्षमारूपंतपस्विनां अचिरादेवचपुनःकुलेमहतिजन्ममे भूयास्त्वमेवभर्ताचनवियोगश्चमेयतः वरये
त्कुलजांप्राज्ञःकुरूपामपिकन्यकां दुष्टेकुलेसमुत्पन्नाभर्तुःपातयतेकुलं नदीपातयतेकूलंनारीपातयतेकुलं नदीनांचैव
नारीणांस्वच्छंदललितागतिः ततस्त्कष्टोमहादेवश्चक्रेशापविमोचनं दशवर्षसहस्राणिकोकिलारूपधारिणी नंदनेदेववि
पिनेचरिष्यसिततःपरं हिमाचलसुताभूत्वामत्प्रिय त्वमुपेष्यसि देवानांतुयथाविष्णुःसहकारोमहीरुहां गंगाचसर्वती
र्थानांतथातिर्यक्षुकोकिला आषाढेह्यद्यदास्यातांकोकिलायास्तदार्चनं तदायाकुरुतेनारीनसावैधव्यमाप्नुयात् वसिष्ठः
उवाच एतद्वाक्यावसानेतुगौरीसाकोकिलाभवत् तदारभ्यशक्रचिह्नेतत्प्रथितंकोकिलाव्रतं यानारीनैवकुरुतेमोहात्साविध
वाभवेत् कुरुत्वमेतत्कल्याणिकीर्तिमालेव्रतोत्तमम् कीर्तिमालोवाच कथमाराध्यतेदेवीकोकिलारूपधारिणी वि-
धानंब्रूहितद्विप्रत्वत्प्रसादात्करोम्यहं वसिष्ठउवाच कोकिलाव्रतमाहात्म्यंविधानंचवदामिते शृणुदेविप्रयत्नेनमंत्रैः

पौराणिकैर्यतं मलमासेत्वनिक्रांतेशक्लाषाढेसमागते आषाढ्यांपौर्णमास्यांतुसंध्याकालेत्वुपस्थिते संकल्पयेन्मासमेकं
श्रावणप्रभृतित्यहम् स्नानंकरिष्येनित्यंचब्रह्मचर्यस्थितासती भोक्ष्येनक्तंचभूशय्यांकरिष्येप्राणिनांदयां सौभाग्यधनधा-
न्यादिप्राप्तयेशिवतुष्टये इतिसंकल्प्यविप्राग्रेनारीविप्रेभ्यएवच प्राप्यानुज्ञांतुसंपाद्यसामग्रींसकलामपि प्रत्यूषेचप्रतिदिनं
दंतधावनपूर्वकं नद्यांगत्वाथवावाप्यांतडागेगिरिनिर्झरे स्नानंकरोमिदेवेशिकोकिलेप्रीतयेतव जलेस्मिन्पावनेपुण्येसर्वदे
वजलाश्रये स्नानंकृत्वाव्रतीदेविस्वगंधामलकैस्तिलैः दिनाष्टकंततःपश्चात्सर्वौषध्यापुनःपृथक् वचापिष्टेनचस्नानंदिना
न्यष्टौसमाचरेत् तिलामलकपिष्टेनवचौषधियुतेनच षड्दिनानिततःस्नानंसंपूर्णफललिप्सया स्नात्वाध्यात्वारविंतस्मै·
दद्यादर्घ्यंप्रयत्नतः आदित्यभास्कररवेअर्कसूर्यदिवाकर प्रभाकरनमस्तुभ्यंगृहाणार्घ्यंनमोस्तुते सूर्यार्घ्यमंत्रः कार
येत्कोकिलांदेवींसौवर्णींसर्वकामदां रौप्यंचरणयोश्चैवनेत्रयोश्चापिमौक्तिके रत्नानिपंचपृष्ठेतुचूतवृक्षसमाश्रितां अथवा
तिलपिष्टेनकोकिलांपक्षिरूपिणीं निधायताम्रपात्रेतांपूजयेत्सुसमाहितः उपचारैःषोडशभिर्यथावित्तंनिबोधमे आवाह-
यामितांदेवींकोकिलारूपधारिणीं अवतारंकुरुष्वात्रप्रसादंकुरुसुव्रते आगच्छकोकिलेदेविदेहिमेवांछितंफलं चूतवृक्षंस-
मारुह्यरमसेनंदनेवने तिर्यग्योनिसमुद्भूतेकोकिलेकलकंठके तिलपुष्पाक्षतैर्युक्तंगृहाणत्वंनमोस्तुते आषाढस्यासितेपक्षे
मेघवर्णस्वरूपिणि कोकिलानामदेवित्वंस्नानार्थंप्रतिगृह्यताम् कुर्यादेवंविधांपूजांश्रावण्यंतंचपूजयेत् विसर्जयेच्चपश्चा

नांसौवर्णीकोकिलांयदि यदाचतिलपिष्टस्यकोकिलाक्रियतेनदा कुर्यास्त्वहमाज्ञानंभिन्नायास्तुविसर्जनम् रम्यंवनंसमागत्यश्रुत्वा
कोकिलकूजितं यदानश्रूयतेशब्दमुपवासंतुनह्निने कोकिले कृष्णवर्णेत्वंसदावासोवनेषुते सौभाग्यमतुलंदेहिगृहाणार्घ्यंनमोस्तुते
वसंतेच समुत्पन्ने विंध्यपर्वतवासिनि गच्छगच्छमहादुर्गेस्वस्थानेनंदनेवने विसर्जनं रूपंदेहिधनंदेहिसर्वसौख्यंचदेहिमे
पुत्रान्देहियशोदेहि सौभाग्यंदेहिसंपदः इत्युक्त्वाचततःपश्चाद्विध्यान्तेनस्त्रवनी नक्तभोजीभवेद्राज्ञियावन्मासःसमाप्य
ते मासांतेताम्रपात्रेतु कोकिलास्वर्णनिर्मितां वस्त्रधान्यगुडैर्युक्तां श्रावण्यांकुंडलंतथा दद्यात्सदक्षिणांचापिदैवज्ञेवापुरो
हिते एवमाषाढमासस्यद्वैविध्येसमुपस्थिते सधवाविधवावापियानारीकोकिलाव्रतं करोतिसप्तजन्मानिसौभाग्यंल
भतेतुसा मृतागौरीपुरंयातिविमानेनार्कतेजसा श्रीभगवानुवाच एतद्व्रतंवसिष्ठेनमुनिनाकथितंपुरा तथाकृतं
तुतत्पार्थसमस्तंकीर्तिमालया तस्याश्चसर्वंनिष्पन्नंवसिष्ठवचनंयथा एवमन्यापिकौंतेयकोकिलाव्रतमुत्तमं नकरोतिय
दानारीव्यालीभवतिकानने एकतःसर्वदानादि कोकिलाव्रतमेकतः कृतंपुराप्सरोभिश्चऋषिपत्नीभिरादरात् अहिल्यया
चसापूर्वमर्चिनाशापमुक्तये अरुंधत्यासहस्नात्वापूजिताकोकिलानृप सीतयापूजितासापिसर्वकामार्थसिद्धये गतया
दंडकारण्येस्नानंकृत्वायथाविधि नलान्वेषणकामेनदमयंत्याचपूजिता रुक्मिण्याचततःस्नात्वापूजिताकोकिलाशि
वा विष्णोःपत्युरवाप्त्यर्थंनत्त्वजातंनसंशयः कुंतेलामलिनादीनापरकमेरनाबथा एवंवंध्याकाकवंध्याविवत्सामृतव

त्सका सर्वास्ताःफलभाजस्युर्व्रतस्यास्यप्रभावतः आयुरारोग्यमैश्वर्यंसुखंवृद्धिंयशःप्रजां सौभाग्यंसुंदरंरूपंनारीप्रा
प्नोतिनान्यथा एतद्व्रतंमयाख्यातंकार्यंवारत्रयंनृप तृतीयांतेचविधिवत्कार्यमुद्यापनंशुभं एकस्माज्जायतेद्रव्यंद्विती
याल्लभतेसुतान् तृतीयाच्चापिसौभाग्यंप्राप्नुयान्नात्रसंशयः इतिवाराहपुराणेकोकिलाव्रतं अथोद्यापनं उद्याप
नविधिंब्रूहिव्रतस्यास्यममप्रभो येनविज्ञानमात्रेणसौभाग्यंचभविष्यति श्रावणेपौर्णिमास्यांतुशुक्लपक्षेतथैवच द्विती
यायामेकभक्तंदंतधावनपूर्वकं उपवासस्यनियमंकर्तुंव्रतपरायणं तृतीयापुण्यफलदामध्यान्हेसमुपोषिता उपलिप्यशु
चौदेशेमंडलंतत्रकारयेत् अष्टदलंलिखेत्पद्मंचतुष्कोणंचभद्रकं कलशंवारिपूर्णंचपंचरत्नसमन्वितं तस्योपरिन्यसेत्पा
त्रंप्रस्थैर्नैकेनपूरयेत् तदभावेतदर्धंवाकुडवेनाथनारद ऊर्णापट्टंकृष्णवर्णंयुग्मंदद्याच्चशक्तितः तस्योपरिन्यसेद्देवींकोकि
लाप्रतिमांतथा अत्रगंधप्रदानेनधूपदीपप्रदानकं नैवेद्यंमोदकान्दद्यात्पक्वान्नंघृतसंयुतं अर्घ्यंचैवप्रदातव्यंतांबूलंफ
लमुत्तमं रात्रौजागरणंकार्यंवाद्यनृत्यप्रभूषितं पूजिताएकचित्तेनफलंप्राप्नोतिचाक्षयं प्रभातेविमलेनद्यांस्नानंकृत्वावि
धानतः पूजयेद्विधिवद्देवींहोमंचविधिवद्द्विज तिलचंपकपुष्पैश्चतंडुलैर्घृतपायसैः अष्टोत्तरशतंहुत्वादुर्गामंत्रैश्चवैदिकैः
कोकिलाप्रीतयेब्रह्मन्व्याहृतीनांशतत्रयं ब्राह्मणान्भोजयेत्सम्यक्सपत्नीकांश्चपंचच अशक्तोऽप्येकयुग्मंचभोजयेच्चत
थागुरुं त्रिस्त्रिभ्यश्चप्रदातव्याधारिकापंचमेवच मोदकांश्चससूत्रांश्चवंशपात्रसमन्वितान् कृष्णवर्णसमायुक्तान्पक्वा॰

न्नेनप्रपूरितान् सर्वोपस्करसंयुक्तांस्त्रिस्त्रिभ्यश्चप्रदापयेत् आचार्यंपूजयेद्भक्त्यागांकृष्णांचसवत्सकां उपानहौतथाशय्यां

चामरंछत्रमेवच मुद्रिकां कर्णवेष्टंचचंदनंकुसुमानिच सर्वंदद्याद्द्विजेंद्रायसपत्नीकायनारद दापयेद्विधिवत्सर्वंब्राह्मणायकु

टुंबिने व्रतोपदिष्टदानंचभोजनंचसदक्षिणं एवंयाकुरुतेराजन्कोकिलाव्रतमुत्तमं सर्वंप्राप्नोतिसौभाग्यंपुत्रधान्यधनानि

च ततोभुंजीतनैवेद्यंपुत्रपौत्रैःसमन्विता कोकिलेपूजितेगच्छविधिवत्सर्वकामदे कारयेत्कोकिलांदेवींसौवर्णींसर्वकामदां

रौप्यचरणचंचूभीरचितांनेत्रमौक्तिकां पंचरत्नानिपृष्ठेचचूतवृक्षसमाश्रितां एवंत्वंचयथापूज्यायथोक्ताचशनैःशनैः वि

प्रकरार्पितालक्ष्मीःसस्वभावमिदंशृणु महाफलमवाप्नोतिमहामायाप्रसादतः इतिवराहपुराणेकोकिलाव्रतोद्यापनंसंपूर्ण

म् अथश्रावणपौर्णमास्यांरक्षाबंधनं उक्तंहेमाद्रौभविष्ये युधिष्ठिरउवाच सर्वरोगोपशमनंसर्वाशुभविनाशनं स

कृत्कृतेनाब्दमेकंयेनरक्षाकृताभवेत् श्रीकृष्णउवाच शृणुपांडवशार्दूलइतिहासंपुरातनं इंद्राण्यायत्कृतंपूर्वंश

क्रस्यजयवृद्धये देवासुरमभूद्युद्धंपुराद्वादशवार्षिकं तत्रासुरैर्जितःशक्रःसहसर्वैःसुरोत्तमैः बृहस्पतिमुपामंत्र्यइदंवच

नमब्रवीत् नस्थातुंचैवशक्नोमिनगंतुंतैरभिद्रुतः सर्वथायोद्धुमिच्छामिगुरुस्त्वंचन्यवारय तयोःसंवदतोरेवशचीप्राह

सुरेश्वरं अद्यभूतदिनंदेवप्रातःसर्वंभविष्यति अहंरक्षांविधास्यामियेनाजेयोभविष्यसि इत्युक्त्वापौर्णमास्यांसापौलोमी-

कृतमंगला बबंधदक्षिणेपाणौरक्षापोटलिकांततः बद्धरक्षस्ततःशक्रःकृतस्वस्त्ययनोद्विजैः दुद्रावदानवानीकंक्षणा

कालइवप्रजाः शक्रश्चविजयीभूत्वापुनरेवजगत्त्रये एषप्रभावोरक्षायाः कथितस्तेयुधिष्ठिर जयदःसुखदश्चैवपुत्रारोग्यध
नप्रदः युधिष्ठिरउवाच क्रियतेकेनविधिनारक्षाबंधःसुरोत्तमे कस्मिन्तिथौकदादेवत्वेतन्मेवक्तुमर्हसि यथाहिभगवद्देव
विचित्राणिप्रभाषसे तथातथानमेतृप्तिर्बह्वर्थाः शृण्वतः कथाः कृष्णउवाच संप्राप्तेश्रावणेमासिपौर्णमास्यांदिनोदये स्ना
नंकुर्वीतमतिमान्श्रुतिस्मृतिविधानतः ततोदेवान्पितॄंश्चैवतर्पयेत्परमांभसा उपाकर्मणिचैवोक्तमृषीणांचैवतर्पणं कुर्या
त्ब्राह्मणैःसार्धंवेदानुद्दिश्ययत्नतः शूद्राणांमंत्ररहितंस्नानंदानंचशस्यते ततोपराह्णसमयेरक्षापोटलिकांशुभां कारयेद
क्षतैस्तद्वत्सिद्धार्थैर्हेमचर्चितैः कार्पासैःक्षौमवस्त्रैर्वाविचित्रैर्मलवर्जितैः विचित्रतंतुग्रथितांस्थापयेद्भाजनोपरि कार्यागृह
स्यरक्षावै गोमयैःशुक्लतंडुलैः दूर्वावर्णैःसितैश्चित्रैः सर्वपापविनाशिनी उपलिप्तेगृहमध्येसान्नंकुंभंचविन्यसेत् पीठोपरि
विशेद्राजासचिवैःसुमुहूर्तके वेश्याजनेनसहितोमंगलैःसहितस्थितैः रक्षाबंधःकार्यसिद्धिःसर्वविघ्नोपशांतिदः पुरोधान्
पतेरक्षांसम्यक्बध्नातमानवः येनबद्धोबलीराजादानवेंद्रोमहाबलः तेनत्वामपिबध्नामिरक्षेमाचलमाचल ब्राह्मणैः
क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्चमानवैः कर्तव्योरक्षिकाबंधोद्विजान्संपूज्यभक्तितः अनेनविधिनायस्तुरक्षाबंधंसमाचरेत् स
सर्वदोषरहितःसुखीसंवत्सरंभवेत् रक्षाबंधोभद्रायांनकार्यः भद्रायांहिनकर्तव्येश्रावणीफाल्गुनीतथा श्रावणीनृपतिं
हंतिग्रामंदहतिफाल्गुनी इतिवचनात् इतिभविष्योक्तंरक्षाबंधनंसंपूर्णम् अथभाद्रपदपौर्णमास्यांउमामहेश्वरव्रतंशि

वरहस्ये राजोवाच भगवन्मुनिशार्दूलव्रतमेकंवदस्वमे सांगेयस्मिन्व्रतेचीर्णेसर्वान्कामानवाप्नुयात् गौतमउवाच
उमामहेश्वरंनामव्रतमस्तिव्रतोत्तमं सांगेयस्मिन्व्रतेचीर्णेकामान्सर्वानवाप्नुयात् मासिभाद्रपदेशुक्लेपौर्णमास्यांप्रयत्नतः
तद्व्रतंकार्यमनघैर्ब्राह्मणाद्यैर्विधानतः भाद्रशुक्लचतुर्दश्यांप्रातःस्नात्वाविधानतः शिवंसंपूज्यविधिवच्छैवानभ्य
र्च्ययत्नतः शिवंध्यात्वाजगद्वंद्यंसोमंसोमार्धशेखरं कृतांजलिपुटोभूत्वामंत्रमेतत्पठेन्नरः श्वःकरिष्येव्रतंयत्नादुमाम
हेश्वराभिधं आज्ञांदेहिमहादेवसोमसोमार्धशेखर इतिविज्ञाप्यवैदेवंपुनःसंपूज्ययत्नतः मध्यान्हेपिमहादेवमर्चयेन्नि
यतोव्रती ततोदेवानृषीन्सर्वानभ्यर्च्यविधिवन्नृप हविष्याशीशिवंसायंपूजयेद्विधिपूर्वकं निद्राकार्यातथायोगंमहादेवस्य
सन्निधौ उत्थायपश्चिमेयामेमहादेवंततःस्मरेत् ततःशौचादिकंसर्वंनिर्वर्त्यप्रीतमानसः स्नानंकुर्याद्यथायोगंयथाशा
स्त्रंयथाक्रमं परिधायततोवस्त्रंक्षालितंशुभ्रमक्षतं उद्धूलनंततःकार्यंत्रिपुंड्रंचयथाक्रमं रुद्राक्षधारणंकार्यंसंध्याकार्या
ततःपरं ततःशिवार्चनंकार्यंबिल्वपत्रादिभिर्नरैः ततोहोमोपिकर्तव्यःशिवप्रीत्यर्थमादरात् ततःपरंनियमनंप्रणमेत्सोम
मव्ययं सग्रंथिकुशपिंजूलंततःसंपाद्यमादरात् गव्यंपंचदशग्रंथितत्पूजितंशिवात्मकं एवंपंचदशग्रंथिदोरकंकुंकुमान्वितं
संपादनीयंयत्नेनव्रतनिष्ठैरनाकुलैः उमामहेश्वरंचैवसौवर्णंप्रतिमाद्वयं संपादनीयंयत्नेनराजतंवामनोहरं पलादूनंन
कर्तव्यंप्रतिमाद्वयमुत्तमं अधिकंचेद्यथाशक्तिकर्तव्यंप्रतियत्नतः सौवर्णोराजतोवापिताम्रोवामृन्मयोनवः संपादनीयो

यत्नेनप्रयत्नैर्व्रततत्परैः ततःसदर्भमूर्त्तिंचवस्त्रयुग्मेनवेष्टयेत् पृथक्पृथक्स्थापनीयंकलशेप्रतिमाद्वयं आपोहिष्ठादिभि
र्मंत्रैस्तथात्र्यंबकमंत्रकैः अभिषिच्यप्रयत्नेनपूजयेत्प्रतिमाद्वयं ततःप्रयत्नतोगच्छेदलंकृतशिवालयं शिवस्थानंत·
तोगच्छेत्तोरणाद्यैरलंकृतं ततःषोडशकेपत्रेबहिरंतश्चतुर्गुणे अलंकृतैःस्वस्तिकाद्यैःस्थापयेत्कलशंनवं ध्यायेत्ततो
महादेवमुमादेहार्धधारिणं मुक्तामालापरीतांगंदुकूलपरिवेष्टितं पंचाननमुमाकांतमनलेंदुरविप्रभं चंद्रार्धशेखरं·
नित्यंजटामुकुटमंडितं त्रिपुंड्रलेखाविलसद्भालनेत्रोपरिस्थितं भस्मोद्धूलितसर्वांगंरुद्राक्षाभरणान्वितं मंदस्मितमः
नाधारमाधारंजगतांप्रभुं देवैरनंतैरनिशंस्तूयमानमनेकधा देवात्मकंदेववंद्यंविष्णुब्रह्मादिवंदितं विष्णुनेत्रान्वितार·
क्तपादपंकजमुत्तमं अप्रतिद्वंद्वमद्वंद्वंसर्ववृंदारकार्चितं सर्वोत्तममनाद्यंतंसर्वदेवनिवेदितं सत्यंशब्दंपरंब्रह्मपुरुषंकृष्ण
पिंगलं ऊर्ध्वकेशंविरूपाक्षंविश्वरूपंचिदात्मकं निष्कलंनिर्गुणंशांतंनिरवद्यंनिरंजनं अप्रमेयंजगन्मध्येस्थितिसंहार·
कारणं विश्वबाहुंविश्वपादंविश्वाक्षंविश्वसंभवं विश्वंनारायणाराध्यमक्षरंपरमंपदं विश्वतःपरमंनित्यंविश्वस्येशमः
नामयं एवंध्यात्वामहादेवंसर्वदेवोत्तमोत्तमं ध्यायेत्ततःपरंगौरीमादिविद्यामनामयीं लक्ष्मीसेवितपादाब्जांशचीसेवित
पादुकां सरस्वत्यादिभिर्नित्यंस्तूयमानपदांबुजां अधरोष्ठधरीभूतपक्वबिंबफलामुमां मुखकांतिकलोपेतांपूर्णचंद्रामना
मयां तिरस्कृतालिमालांतामलकावलिभिःसदा पीनवक्षोजनिर्धूतचक्रवाकवरांगनां नित्यंतिरस्कृतांभोजांनय·

नाभ्यामनिंदितां सीमंतधिक्कृताशेषकामभल्लामहर्निशं भ्रूकुटीद्धीकृताशेषशमभल्लमनाकुलां बाहुतालकलोद्भूतहेमसा
लांविलासिनीं रोमावलीतिरोभूतभ्रमद्भ्रमरनालिकां नाभिरंध्रतिरोभूतघनावर्तामवर्तुलां उन्नमोरुतिरोभूतरंभास्तंभां
शुभावहां पादयुग्मप्रभाकांतिनिर्जितारुणपंकजां ब्रह्मेंद्रोपेंद्रजननींमहेशार्धांगभागिनीं महेशाश्लिष्टवामांगांवरदाभ-
यदांसदा प्रसन्नवदनांशांतांस्मितपूर्वाभिभाषिणीं पूर्णचंद्रदुकूलाढ्यांनानाभरणभूषितां स्तूयमानांसदादेवैर्यज्ञैर्दानै
श्चकोटिशः एवंध्यात्वाततःसम्यगुपचारान्प्रकल्पयेत् ततःपुष्पाणिसंगृह्यशिवमावाहयेच्छिवां महादेवदयासिंधोवि
ष्णुब्रह्मादिवंदित आवाहयामिदेवंत्वांप्रसीदपरमेश्वर इत्यावाहनं आसनं॰ पाद्यं॰ अर्घ्यं॰ आचमनं॰ मधुपर्कं॰ पंचामृ
तस्नानं॰ स्नानं॰ वस्त्रं॰ उपवीतं॰ गंधं॰ आभरणानि॰ बिल्वपत्रं॰ पुष्पाणि॰ धूपं॰ दीपं॰ नैवेद्यं॰ आचमनीयं॰ फलं॰ तांबूलं॰ द-
क्षिणां॰ छत्रंचामरंव्यजनादि॰ नीराजनं॰ पुष्पांजलिं॰ प्रदक्षिणां॰ नमस्कारान्॰ अथांगपूजा कपर्दिने॰ शिरःपूजयामि॰
भाललोचनाय॰ भालं॰ सोमसूर्याग्निलोचनाय॰ नेत्रत्रयं॰ स्रुश्रोत्राय॰ श्रोत्रे॰ घ्राणगंधाय॰ घ्राणं॰ स्मृतिदंताय॰ दंतान्॰
श्रुतिजिह्वाय॰ जिह्वां॰ स्रुकपोलाय॰ कपोलौ॰ ज्ञानोष्ठाय॰ ओष्ठौ॰ विश्वजंघाय॰ जंघे॰ विश्वपादाय॰ पादौ॰ विश्वनखाय॰
नखान्॰ सर्वात्मकाय॰ सर्वांगं॰ अथशक्त्यंगपूजा शिवायै॰ शिरःपू॰ पृथुवेण्यै॰ वेणीं॰ सीमंतराजितायै॰ सीमंतं॰ कुंकु
मभालायै॰ भालं॰ चक्षुष्मत्यै॰ नेत्रे॰ स्तुतिश्रोत्रायै॰ श्रोत्रे॰ गंधप्रियायै॰ घ्राणं॰ सुभगकपोलायै॰ कपोलौ॰ कुड्मलदंतायै॰ द-

तान्॰ विद्याजिह्वायै॰ जिह्वां॰ बिंबोष्ठायै॰ ओष्ठौ॰ वृत्तकंठायै॰ कंठं॰ पृथुलकुचायै॰ कुचौ॰ विश्वगर्भायै॰ उदरं॰ शुभकट्यै॰ कटीं॰ दिव्यो
रुदेशायै॰ ऊरू॰ वृत्तजंघायै॰ जंघे॰ लक्ष्मीसेवितपादुकायै॰ पादौ॰ महेश्वरप्रियायै॰ नखान्॰ शोभनविग्रहायै॰ सर्वांगं पूजयामि
अंगपूजां समाप्यैवं दोरकं च विसर्जयेत् प्रत्येकं ग्रंथिषु स्वच्छैः षट्छैर्बिल्वदलादिभिः प्रथमग्रंथिमारभ्य नमः सोमेति मंत्रतः यथा
क्रमेण संपूज्य ततो धार्यं हि दोरकं तत्रोपचाराः सर्वेपि तेन मंत्रेण सादरं व्रतीभिर्यत्नतः कार्यं कुंकुमांकितदोरकं ततः पंचदशप्र
स्था गोधूमास्तंडुलाश्च वा उपायनार्थमानेयाः शल्हागोघृतपाचिताः यद्वा पंचदशाज्याक्ता गोधूमापूपमंडकाः ततः शिवैकश
रणाः शैवाः शैवव्रतप्रियाः पूजनीयाः प्रयत्नेन गंधपुष्पादिभिः क्रमात् ततः सवस्त्रकलशं शिवयोः प्रतिमाद्वयं शैवाय देयं
यत्नेन सुवर्णफलसंयुतं आदावुपायनं दत्वा देयं ह्येतदतः परं उपायनस्य मंत्रोपि वक्ष्यते त्र विशेषतः उमेशः प्रतिगृह्णाति उ
मेशो वै ददाति च उमेशस्तारकोभाभ्यामुमेशाय नमो नमः अमुं मंत्रं समुच्चार्य दत्वा दानं निवेदयेत् अतः शैवाः प्रयत्नेन भोज
नीया विशेषतः सुवासिन्योपि यत्नेन भोजनीयाः प्रयत्नतः शैवानेवं भोजयित्वा स्वयं भुंजीत वाग्यतः अतिथीनपि संतर्प्य
द्वारदेशस्थितान्नृप एवं प्रयत्नतः कार्यं प्रतिवत्सरमादरात् नियमेनैव विधिवदुक्तरीत्या यथाक्रमं ब्राह्मणाद्यैरिदं कार्यं व्रत
माहितमानसैः सर्वाभीष्टप्रदं पुण्यं व्रतमेतच्छिवात्मकं प्राप्ते तु षोडशे वर्षे कार्यमुद्यापनं नृप उद्यापनविधानं च वक्ष्ये शृणु
यथाक्रमं पौर्णमास्यां भाद्रपद्यां व्रतोद्यापनमादरात् कर्तव्यमिति यत्नेन द्रव्यं संपाद्य सादरं हैमी कार्या सार्धषड्भिः प्रतिमा॰

चपलैःशुभा तदर्धेनाथवाकार्यातदर्धेनाथवानृप रजतेनाथवाकार्यायथोक्तपलमानतः संपादनीयाः कुंभाश्चहैमाःपंचद
शोत्तमाः अथवाराजताःकार्यायद्वाताम्रमयानृप भाद्रशुक्लचतुर्दश्यांशैवाब्राह्मणपुंगवाः निमंत्रणीयायत्नेनप्रातःसप्तद-
शोत्तमाः ततोगृहंवितानाद्यैरलंकृत्यप्रयत्नतः स्वस्तिकाद्यैरलंकुर्याद्भिवस्थानंशुभावहं ततःसायंप्रयत्नेनतस्मिंश्चशंकर-
मंदिरे पूजनीयाःप्रयत्नेनशिवयोः प्रतिमेशुभे पूर्वोक्तेनविधानेनमंत्रैस्तैर्वरसाधनैः रात्रौजागरणंकार्यंसोपवासंप्रयत्नतः
कृत्विग्भिःसहसोत्साहंपयोमात्राशनेनवा रात्रौशिवकथाःश्राव्याःश्रोतव्यायत्नतोनृप कर्तव्यायत्नतोरात्रौपूजायाम-
चतुष्टये ततस्थेयंप्रयत्नेनस्नात्वाशंकरसन्निधौ पूजनीयःप्रयत्नेनशिवोदेवशिखामणिः चतुरस्त्रंततःकार्यंकुंडमष्टद
लान्वितं तत्रवन्हिंप्रतिष्ठाप्यविधिवद्गृह्यमार्गतः साज्येनपरमान्नेनहोमःकार्यस्ततःपरं पंचविंशतिसाहस्रंहोमःसो-
मेतिमंत्रतः कार्यःप्रयत्नतोराजन्नमःपूर्वात्सदारतः ततःपूर्णाहुतिंकृत्वाशैवान्संपूजयेत्ततः बिल्वपत्रैःपुष्पमा
ल्यैर्भस्मनाचयथाक्रमं एकैकस्मैप्रदातव्यंशिवयोःप्रतिमाद्वयं कलशोपिप्रदातव्यस्ततोवस्त्रद्वयान्वितः आचार्या-
यप्रदातव्यंसुवर्णशतमादरात् ततोयत्नेनशैवेंद्राःपूजनीयाःकृतव्रतैः सुवासिन्योपिशैवानांभोजनीयाःप्रयत्नतः त
तोदेयाःस्वशक्त्याचभोजितेभ्यश्चदक्षिणाः ततश्चस्वकृतंकर्मशिवायचनिवेदयेत् उद्यापनंकृतंशंभोमयैतदधुनाप्रभो
इदंसंपूर्णतांयातुत्वत्प्रसादान्महेश्वर मंत्रहीनंभक्तिहीनंशक्तिहीनमुमापते कृतंकर्मभवत्वद्यत्वत्प्रसादात्फलप्रदं प्राय-

श्चित्तंवैदिकानांव्यंगानामपिकर्मणां शिवस्मरणमेवेतिश्रुतिरप्यस्तिशांकरी अतःकृतमिदंश्रौतंकर्मव्यंगमपिप्रभो सांगं
भवतुविश्वेशतवैवस्मरणात्प्रभो इतिसंप्रार्थ्यदेवेशंसांबंसर्वस्करोत्तमं भुंजीयाद्बंधुभिःसार्धंसमौनंतैलवर्जितं एवंयःकु॰
रुतेसम्यग्गुमामहेश्वरव्रतं ससर्वभोगान्भुंक्त्वांतेमोक्षंप्राप्नोतिसर्वथा राजोवाच गौतमेदंव्रतंचीर्णंपुराकेनवदस्वमे
कस्यकाममभूत्सिद्धिर्व्रतस्यास्यप्रभावतः गौतमउवाच पुराशैववरोराजन्दुर्वासाख्योमुनीश्वरः कदाचित्संचरल्लो
कान्ददर्शकमलापतिं ततःसमागतंदृष्ट्वादुर्वासामुनिसत्तमः बिल्वमालांददौतस्मैशंकरेणसमर्पितां गृहीत्वाबिल्वमालां
तांहरिर्गमनसंभ्रमात् शिरसापूजनीयांतांगरुडेसविनिक्षिपत् ततस्तंतादृशंदृष्ट्वादुर्वासाःक्रोधमूर्छितः हरिंशशापवकु॰
धाधिराजन्मेतिचसंवदन् मयाशिवार्पितादत्तामालातुभ्यमघापहा साकथंगरुडस्कंधेविनिक्षिप्तात्वयाहरे गर्वस्यमूलभूतं
यंलक्ष्मीस्तवविनश्यतु लक्ष्मीःपतनुदुग्धाब्धौगरुडोपिविनश्यतु वैकुंठस्याधिकारोपितवयातुममाज्ञया निस्तेजस्कोवनीष्ट
ष्वेसंचराद्यावधिध्रुवं इत्युक्त्वासतुदुर्वासाययौलोकांतरंनृप ततःपपातदुग्धाब्धौलक्ष्मीर्विष्णुमनोहरा ततोतिदुःखितोवि॰
ष्णुःप्रलपन्वनमाश्रितः उवासविपिनेघोरेस्वकृतंकर्मसंस्मरन् ततःकदाचिद्भूपालमयातत्रगतंपुरा तदामामागतंदृष्ट्वापूज
यामासमांहरिः ततोश्रुपूर्णनयनःकृतांजलिपुटोहरिः जगादपूर्ववृत्तांतंस्वलक्ष्मीनाशकारणं ततोतिक्लांतचित्तायविष्णवेव्र
तमुत्तमं तत्स्पष्टेनमयाभूपकथितंसादरंशिवम् ततोविलंबंविधिवच्चकारश्रद्धयान्वितः ततःप्रसन्नोभगवान्हरयेपार्वती

पतिः ददौलक्ष्मींसगरुडांकरुणानिधिरव्ययः इदमेवव्रतंचीर्णमिंद्रेणापिहतौजसा तेनप्राप्तस्ततःस्वर्गःस्वर्गभोगश्चशाश्व-
तः ब्रह्मणापिपुराचीर्णइदमेवव्रतंनृप नष्टावागीश्वरीतेनसंप्राप्तादुर्लभापिसा मुनिभिश्चपुराचीर्णव्रतमेतन्मुमुक्षुभिः
अस्यव्रतस्याचरणान्मुक्तिःप्राप्तामुनीश्वरैः इदंव्रतंप्रयत्नेनयःकरिष्यतिभक्तितः तस्यसौभाग्यसंपत्तिर्भविष्यत्येवसर्वथा
यस्यास्त्यैश्वर्यभोगेच्छामोक्षेच्छाप्यनपायिनी यस्यसर्वाधिपत्येच्छातेनकार्यमिदंव्रतं वैद्यतेनापिविप्रेणमोक्षार्थमतिय
त्नतः कृतमेतद्व्रतंपूर्वंसर्वाभीष्टफलप्रदं मुक्तिःप्राप्ताचतेनापिव्रतस्यास्यप्रभावतः यंयंकाममसमुद्दिश्यव्रतमेतदनुत्तमं यः
करिष्यतितंकामंससमाप्नोतिनिर्मलं इदंव्रतंमहेशेनसमाख्यातमुमांप्रति कुमारायसमाख्यातमुमयेतद्व्रतंशुभं नंदिकेशा
यकथितंमयाचैतद्व्रतंशुभं नंदिकेशेनकथितंदुर्वासोमुनयेततः दुर्वाससापिकथितमगस्त्यायव्रतोत्तमं व्रतंचसागरेमत्य
मगस्त्येनमहात्मना मयातिक्लिन्नचित्तायविष्णवेकथितंपुरा तेनचीर्णव्रतमिदंसर्वसौभाग्यदायकं ब्रह्मणेकथितंपूर्वमि
दमेवव्रतंमया तेनचीर्णव्रतंसांगंवाणीप्राप्त्यर्थमादरात् सूर्यायेंद्रायचंद्रायमयैतत्कथितंव्रतं तैश्चचीर्णव्रतमिदंसर्वसौभा
ग्यदायकं कश्यपादिमुनिभ्यश्चकथितंव्रतमुत्तमं तैश्चचीर्णव्रतंसम्यक्भुक्तिमुक्तिफलप्रदं भूपव्रतानिसंत्येवबहूनिविवि
धानिच नथाप्येतद्व्रतंसर्वंव्रतंनास्त्येवसर्वथा भवानपिकुरुप्रीत्याभूपालव्रतमुत्तमं इदंव्रतंशिवक्षेत्रेयःकरिष्यतिभ-
क्तितः तस्यसर्वार्थसंपत्तिर्भवत्येवनसंशयः शिवउवाच इत्येतद्वचनंश्रुत्वासराजाप्रीतमानसः सपुत्रःपूजया-

मासगौतमंशैवपुंगवं ततोधर्मव्रतंचेदमुपदिश्यसगौतमः पुनःसंपूजितोराज्ञास्वाश्रमंप्रतिसंययौ राजासपुत्रस्तद्वाक्या
दिदंमाहेश्वराभिधं व्रतंचकारविधिवद्यथाक्रममतंद्रितः इतिशिवरहस्येउमामहेश्वरव्रतोद्यापनंसंपूर्णं इदंकर्नाटके
प्रसिद्धं अथाश्विनपौर्णमास्यांकोजागरव्रतं अथाश्विनपौर्णमासीपराग्राह्या अश्वयुजीकर्मणिपूर्वाह्णव्यापिनीदैवक
र्मत्वात्ग्राह्या अत्रकोजागरव्रतेबहुव्यापिनीरात्रौलक्ष्मीपूजनाक्षक्रीडाप्रधानत्वाद्रात्रिव्यापिन्येवकार्या स्कांदे अस्ति
कोजागरंनामव्रतानामुत्तमंव्रतं यत्कृत्वासमवाप्नोतिजंतुर्लोकाननुत्तमान् ऋषयऊचुः कार्तिकस्यउपांगानिव्रता
निकथयंतुनः कृतेषुयेषुभवतिसंपूर्णंकार्तिकव्रतं वालखिल्याऊचुः आश्विनेशुक्लपक्षेतुभवेद्याचैवपूर्णिमा तद्रात्रौपू
जनंकुर्याल्लक्ष्म्याजागृतिपूर्वकं नारिकेरोदकंपीत्वात्द्यक्षक्रीडांसमारभेत् निशीथेवरदालक्ष्मीःकोजागर्तीतिभाषिणी जग
त्प्रभुमतीतस्यांलोकचेष्टावलोकिनी तस्मैवित्तंप्रयच्छामियोजागर्तिमहीतले सर्वथैवप्रकर्तव्यंव्रतंदारिद्र्यभीरुभिः एत
द्व्रतप्रभावेनबलितोपिधनीभवेत् ऋषयऊचुः बलितःप्रोच्यतेकोसौलब्धवान्सकुतोव्रतं एतद्विस्तरतोब्रूतवालखि
ल्याःपरंतपाः वालखिल्याऊचुः ब्राह्मणोबलितोनाममागधःकुशसंभवः नानाविद्याप्रवीणोसौसंध्यास्नानपराय
णः याचनंमरणंतुल्यंमन्यतेसद्विजोत्तमः गृहागतंसगृह्णातिनान्यंयाचयतेक्वचित् तस्यभार्यामहाचंडीनित्यंकलह-
कारिणी मद्भगिन्यःस्वर्णरौप्यालंकारादिविभूषिताः नानामाल्यांबरधराद्दृश्यादेवांगनाइव अहंदरिद्रस्यगृहेपतितास्मि

दुरात्मनः लज्जामांबाधतेस्यंतंज्ञातीनांमुखदर्शने धिगस्त्वैतद्विद्यायानिर्धनस्यकुलस्यच एवंवदतिलोकेषुनकरोतिप-
तीरितं संकल्पंकृतवानेकंयद्यद्भर्तावदिष्यति विपरीतंकरिष्यामियावल्लक्ष्मीःप्रसीदति भर्तःपाषाणबुद्धेत्वंचौर्यंकुरुनृपा
लये आनीयतांधनंभूरिनोचेत्त्वांताडयाम्यहं क्षणंरोदतिनाश्नातिकदाचिद्दुःखादति साकपालंताडयतीत्येवंक्लेशयतेपति
क्षांत्वातस्यास्तुचरितंयाचनादुःखभीतितः नोवाचवचनंकिंचिद्यथालाभेनतोषितः एकस्मिन्श्राद्धपक्षेतुव्याकुलोभूद्द्वि-
जोत्तमः एतस्मिन्वत्सरेसर्वश्राद्धसामग्रिकंगृहे वर्ततेगृहिणीचेयंनकरिष्यतिकिंचन इत्युद्विग्नमनाविप्रोनभाषये
त्किंचन चिंतयाविष्टमेवंतमाययौमित्रमुत्तमं नाम्नागणपतिख्यातंतस्मिन्नभ्यागतेसति नोवाचपूर्ववद्वार्त्तामित्रंव
चनमब्रवीत् भोभोबलितचित्तंतेकिमर्थंचिंतयान्वितं अवश्यंस्वधियाकृत्वाचिंतांतेनिर्हराम्यहं बलितउवाच अ
धुनापितृपक्षेतुपितुःश्राद्धंसमागतं सामग्रिकंचास्तिगृहेविपरीतकरीप्रिया कथंसंपाद्यतेश्राद्धमितिचिंतायुतोस्म्यहं
गणपतिरुवाच धन्योसिकृतकृत्योसिभार्यायस्येदृशीगृहे ब्रूहित्वंवैपरीत्येनभार्याकार्यंकरिष्यति बलितस्तथे-
त्युक्त्वासायंभार्यामभाषत अनर्थकारकेचंडिपरश्वःश्राद्धकंपितुः नस्थापितंधनंयस्मात्मदर्थंतेस्तुपापकैः तस्मान्न-
शीघ्रंपाकंत्वंकुरुदुष्टेकरोषिचेत् ब्राह्मणायेधूर्तकराःशौचाचारविवर्जिताः निमंत्र्यास्तेत्वयाभद्रेनोत्तमास्तुकदाचन इति
भर्तृवचःश्रुत्वासंभारस्तुमहान्कृतः निमंत्रितास्तुसद्विप्राःकालेपाकःकृतस्तया विपरीतैरेववाक्यैःश्राद्धंसंपादितंत-

या पिंडदानंततः कृत्वाभार्यावचनमब्रवीत् विसर्ज्यपिंडान्नीत्वात्वंक्षिपगंगाजलेशुभे पिंडान्नीतांस्तथेत्युक्त्वाशौन्चकूपेव्यन्चि
क्षिपत् तच्छ्रुत्वाबलितोदुःखीबभूवाकुलिताननः क्रोधाद्द्विनिर्ययौगेहात्संकल्पंकृतवानिति लक्ष्मीर्यदिप्रसन्नास्यात्तदान्नं
भक्षयाम्यहं इतिसंकल्प्यसोविप्रोगहनेनिर्जनेवने एकोधर्मनदीतीरेवृक्षवल्कलधारकः त्रिंशद्दिनानिचतदाआगताऽश्वि
षपूर्णिमा कालीवंशसमुद्भूतानागकन्याःसुलोचनाः निवसंतिवनेतस्मिन्व्रतंचक्रूरमातये श्वेतीकृतंतुसुधयागृहंचं
द्रगृहोपमं मंडलानिविचित्राणिनानापिष्टैःकृतानिच पंचामृतानिरत्नानिदर्पणाच्छादनानिच स्थापयित्वेंदिरापूजाकृ
ताताभिःप्रयत्नतः एवंतुप्रथमोयामोबालाभिर्नीतएवहि प्रारब्धंचततोद्यूतंतुर्यतास्तुनलेभिरे चतुर्भिस्तुविनाक्षाणां
क्रीडनंनैवजायते तस्मान्मृग्यस्तुविचरन्विचार्यैवंविनिर्गता कन्यकातुनदीतीरेददर्शबलितंद्विजं ज्ञात्वातंसाधुचरि
तंसचिंतंचसुखाकृतेः उवाचवचनंचारुद्विजकोसिसमागतः यात्वद्यक्रीडितंद्यूतंलक्ष्म्याःप्रीतिकरंपरं इत्थंतद्वचनं
श्रुत्वाबलितोवाक्यमब्रवीत् बलितउवाच द्यूतेनक्षीयतेलक्ष्मीर्द्यूताद्धर्मोविनश्यति मुधैतद्वदसेकिंत्वंकथंल-
क्ष्मीःप्रसीदति कन्योवाच भाषसेत्वंपंडितवत्कर्मतेस्तितुमूर्खवत् इषस्यशुक्लपूर्णायांद्यूताल्लक्ष्मीःप्रसीदति
द्यूतक्रीडांतुकृत्वैवंकौतुकंपश्यचेंदिरं इत्युक्त्वासौतयानीतोक्रीडार्थेस्वस्यमंदिरे दत्वातस्मैनारिकेलजलंभक्ष्यादिकं
तथा आरब्धंचतथाद्यूतंश्रीलक्ष्मीःप्रीयतामिति लापितानिचरत्नानिकन्याभिर्ब्राह्मणेनतु कौपीनंलापितंस्वीयंता-

भिर्निर्जितमेवतत् ब्राह्मणः क्रोधसंयुक्तोकिंकर्तव्यंमयाधुना उपवीतंलापयित्वाततः स्वीयंकलेवरं लापयिष्येविनिश्चित्यत्द्युपवीतं
ललापसः ताभिर्जितंच्चनदपिशरीरंलापितंस्वकं ततोर्धरात्रेसंजातेलक्ष्मीनारायणावुभौ आगतौलोकचरितंद्रष्टुंविप्रंददर्शतुः हीनोपवीतकौपीनंचिंतयातिकृशीकृतं उवाचवचनंविष्णुः शृणुत्वंपद्मलोचने तवव्रतकरोविप्रः कथंजातः सचिंतकः
तस्मादेनंकुरुक्षिप्रंलक्ष्मीवंतंसुखान्वितं इतिविष्णुवचः श्रुत्वापद्मयासौकटाक्षितः बालाचित्तहरोजातस्तत्कालंमदनोपमः त
तः कामेनसंविद्धास्तास्तुयानागकन्यकाः विप्रायवचनंप्रोचुः शृणुविप्रतपोधन यद्यस्माभिर्जितस्त्वंचभर्तास्माकंवचोनुगः य
यंत्वयानिर्जिताश्चेद्यथेच्छसितथाकुरु इतितद्वचनंश्रुत्वातथामेनेसचद्विजः क्रीडनात्ताजिताः कन्यागांधर्वेणविवाहिताः ता
सांरत्नानिताश्चापिगृहीत्वास्वगृहंययौ प्राप्तंचंडीतिरस्कारान्मयेदंभाग्यमुत्तमं तस्मात्संमानिताचंडीसापिप्रीताबभूवह च
कारस्वामिनश्चाज्ञामित्यंलक्ष्मीव्रतंत्विदं बहुरात्रिव्यापिनीयासात्रपूर्णाविशिष्यते तत्राराध्यमहालक्ष्मीमिंद्रमैरावतस्थितं
उपवासंप्रकुर्वीतदीपान्दद्याच्चभक्तितः लक्षंतदर्धमयुतंसहस्रंशतमेववा घृतेनदीपयेद्दीपान् तिलतैलेनवाव्रती रात्रौजागर
णंकुर्यान्नृत्यगीतपुरःसरं यथाविभवतोदेयाः पुरोवीथिषुदीपिकाः देवतायतनेचैवआरामेषुगृहेषुच ततः प्रभातेसुस्नातः सं
पूज्यचशतक्रतुं ब्राह्मणान्भोजयेत्क्षीरघृतशर्करपायसैः वासोभिर्दक्षिणाभिश्चसवस्त्रान्पूजयेद्द्विजान् यथाशक्तिचदातव्या-
दीपाः स्वर्णविनिर्मिताः एवंविधिंविनिर्वर्त्यततः पारणमाचरेत् व्रतस्यास्यप्रभावेनकल्पसंख्यावसेत्ध्रुवं अप्सरोभिः परिवृ-

प्रीयतामितिदद्यात् आवाहनंनजाना॰ इतिपूजनं अथकथा सूतउ॰ पूजितोदेवदैत्यैस्तुमंगलोमंगलप्रदः
गौतमेनपुरापृष्टोलोहितांगोमहाग्रहः गौतमउवाच कथयस्वमहाभागगुह्यंपूजनमुत्तमं मंत्रमाराधनंदानंसर्वपा
पप्रणाशनं रूपंस्रुवर्णसंकाशंवाहनायुधसंयुतं येनपूजितमात्रेणजायतेसुखमुत्तमं धर्मार्थकाममोक्षाणांकालेनैवफलप्रदं
सर्वपापप्रशमनंसर्वव्याधिविनाशनं सर्वसौभाग्यदंदेवस्वयापातकनाशनं सर्वयज्ञफलंप्रोक्तंसर्वकामफलप्रदं तपसांजपदा
नानांफलंचैवतुलभ्यते तद्धतंब्रूहिमेदेवलोहितांगमहाग्रह यस्मिन्नाराधितेमर्त्यःसर्वसौभाग्यवान्भवेत् मंगलउवाच
शृणुविप्रमहाभागसर्वज्ञऋषिसत्तम व्रतंचपूजनंदानंप्रख्यातंभुवनत्रये आसीत्पूर्वंहिसर्वज्ञोब्राह्मणोवेदपारगः तस्यभा-
र्यासुनंदाचनाम्नाख्यातासुलोचना तस्यापत्यंचसंजातंवृद्धत्वान्नकदाचन तेनान्यस्यसुतांपुण्यांगृहीत्वापोषिताध्रुवं
ब्राह्मणस्यकुलेजातासुरूपागुणसंयुता सर्वलक्षणसंपन्नाप्रयत्नेनैवगौतम पुराजनैतयाचाहमेकभावेनपूजितः तांपु
त्रींस्वगृहेनीत्वाब्राह्मणेनैवपालिता नित्यंहिस्रवतेतस्याअष्टांगंकनकंबहु तत्सुवर्णेनविप्रोसौधनाढ्योमदगर्वितः कोटिको
टीश्वरोजातोराजतेभूमिमंडले दृष्ट्वा नंदकविप्रेणदशवर्षावरार्थिनी विवाहार्थंचविप्रायदत्तासोमेश्वरायच वेदोक्तविधि-
नातेनविवाहमकरोत्तदा वर्षैःकतिपयैर्विप्रः स्वांपत्नींप्रौढयौवनां लब्ध्वास्वदेशमार्गेणाव्रजन्विप्रोप्यहर्निशं निशांतेगह्वरे
घोरेअरण्येपर्वतोत्तमे सर्वशून्येवनेतस्मिन्महालुब्धेनलोभितः मार्गेचलतिविप्रेस्मिंश्चोरैश्चविनिपातिते तंपतिंमृतमा

लोक्यसानारीशोकपीडित्ता पतिनासहविप्रेंद्रमरणेकृतनिश्चया स्वपतिंतन्मयंविश्वंचिंतयंतिपदेपदे पतिंप्रदक्षिणीकृ-
त्यन्विताायाश्चसमीपतः तस्मिन्क्षणेचतुष्टोहंवरार्थंचप्रचोदिता वरंब्रूहिमहाभागेयत्तेमनसिवर्त्तते इतिश्रुत्वाततोवब्रे-
सानारीपतिमानसा ब्राह्मण्युवाच यदितुष्टोसिमेदेवतर्हिजीवतुमेपतिः मंगलउवाच अजरामरवस्त्राह्मो
तवभर्त्ताभविष्यति अन्यंयाचमहासाधिवरंत्रिभुवनोत्तमं ब्राह्मण्युवाच यदितुष्टोसिमेदेवग्रहाणामधिपेश्वरः
येत्वांस्मरंतिदेवेशंरक्तचंदनचर्चितं रक्तपुष्पैश्चसंपूज्यप्रत्यूषेभौमवासरे बंधनव्याधिरोगाश्चकदाचिन्नोपजायतां नच
सर्वाग्निशत्रुभ्योभयंचस्वजनैःसह नवियोगोमहीपुत्रभक्तानांसौख्यदोभव मंगलउवाच एकविंशतिभौमांश्च
एकभुक्तजितेंद्रियः एकान्नेनासितान्नेनचतुर्दीपान्वितेगृहे अर्घ्यंचमंगलेर्मंत्रैर्वैदपौराणिकोद्भवैः युवंरक्तमनड्वाहंसर्वो
पस्करसंयुतं स्वशक्त्याभोजयेद्विप्रानूदातव्यंचहिरण्यकं तेषांवैग्रहपीडाचनभवेत्तुकदाचन भूतवेतालशाकिन्योनभवं
तिचहिंसकाः दारिद्र्यंनश्यतेतेषांपुत्रपौत्रश्चवर्धते एवमुक्त्वाचतत्रैवमंगलोपिदिवंगतः एवंव्रतंसमाख्यातंसर्वसौख्यप्रदा
यकम् इदंव्रतंकरिष्यंतितेषांपीडानजायते स्त्रीभिर्व्रतंप्रकर्तव्यंपुरुषैश्चविशेषतः तेषांमुक्तिर्भवत्येवस्वर्गवासोनसंश
यः इतिश्रीपद्मपुराणेभौमवारव्रतकथासंपूर्णा अथोद्यापनं गौतमउवाच उद्यापनविधिंब्रूहिममसम्य-
ग्ग्रहेश्वर येनजातेनजगतोह्युपकारोमहान्भवेत् मंगलउवाच विधेयोमंडपःसम्यगष्टहस्तप्रमाणतः स्थंडिलं

मध्यतःकार्यंहस्तैकेनप्रमाणतः मंडलंतुप्रकर्तव्यंमामकंरक्ततंडुलैः पूर्वोक्तानिचनामानिमंडलेपूजयेत्ततः एकविंशतिकोष्टे
षुचतुर्दीपान्वितेषुच एकविंशतिकुंभांश्चस्थापयित्वामदग्रतः सौवर्णींप्रतिमांतत्रस्थापयेत्कलशोपरि रक्तवस्त्रेणसंवे-
ष्ट्यपूजयेत्कुसुमैःशुभैः अग्निर्मूर्धेतिमंत्रेणहोमंखादि रसंभवैः॥ अष्टोत्तरशतंहुत्वादिक्पालांश्चहुनेत्ततः अंगपूजा
प्रकर्तव्यानामभिर्ममसर्वदा॥ मंगलायचपादौतुभूमिपुत्रेतिगुह्यके॥ ऋणहर्त्रेतुनाभौचमहाकालायवक्षसि सर्व
कामप्रदात्रेतुममबाहूप्रपूजयेत्॥ लोहितोहुस्तयोश्चैवलोहिताक्षश्चकंटके॥ आस्येसंपूजयेन्मांचसामगानांकृपाक
रः धरात्मजंनासिकायांकुजंचनयनद्वये भौमंललाटेपादेचभूमिजायभ्रुवोस्तथा भूमिनंदननामानंमूर्ध्निसंपूज
येत्तथा॥ अंगारकंशिखायांतुयमंतुकवचेसदा॥ सर्वरोगापहारंचअस्त्रदेशेप्रपूजयेत्॥ आकाशेवृष्टिकर्तारंअपहर्ता
मधस्तथा सर्वांगंचप्रभूतोस्मिसर्वकामफलप्रदः एवंपूज्यततोहोमंपश्चाद्गंधादिनार्चयेत्॥ भोज्येकविंशतिंविप्रान्द
द्यात्कुंभान्सवस्त्रकान् आचार्यंपूजयेत्पश्चाद्दत्वाद्धेनुंसवत्सकाम् सर्वंनिवेदयेत्पीठंगुरवेचशुचिस्मितः अच्छिद्रंया
चयत्तेभ्योसर्वेब्रूयुर्व्रतंशुभम्॥ दत्वादीनांधकृपणान्स्वयंभुंजीतवाग्यतः इदंव्रतंकरिष्यंतिदारिद्र्यंनश्यतिध्रुवम्
कर्तव्यंतुप्रयत्नेनउद्यापनसमन्वितम् ॥ ॥इतिश्रीपद्मपुराणेमंगलव्रतोद्यापनंसंपूर्णं॥

श्रीः अथश्रावणेशुक्रवारेवरदलक्ष्मीव्रतम् तत्रपूजाविधिः क्षीरसागरसंभूतांक्षीरवर्णसमप्रभाम् क्षीरवर्णसमंवस्त्रं
दधानांहरिवल्लभाम् ध्यानंस॰ ब्राह्मीहंससमारूढाधारिण्यक्षकमंडलू विष्णुतेजोधिकादेवीसामांपातुवरप्रदा आवाहनं॰ म
हेश्वरिमहादेविआसनंतेददाम्यहम् महैश्वर्यसमायुक्तेब्रह्माणिब्रह्मणःप्रिये आसनं॰ तीर्थोदकैर्महादिव्यैःपापसंहारका
रकैः अर्घ्यंगृहाणभोलक्ष्मीर्देवानामुपकारिणि अर्घ्यं॰ कुमारशक्तिसंपन्नेकौमारिशिखिवाहने पाद्यंददाम्यहंदेविवर
देवरलक्षणे पाद्यं॰ वैष्णवीविष्णुसंयुक्ताअसंख्यायुधधारिणि आचम्यतांदेवपूज्येवरदेसुरमर्दिनि आचमनं॰ पद्मेपंचा
मृतैःशुद्धैःस्नपयिष्येहरिप्रिये वरदेशक्तिसंभूतेवरदेविवरप्रिये पयोदधिघृतंचैवमधुशर्करयातथा पंचामृतेनस्नपनंप्री
यतांपरमेश्वरी॥ पंचामृतस्नानं॰ गंगाजलसमानीतंसुगंधद्रव्यसंयुतम् स्नानार्थंतेमयादत्तंगृहाणपरमेश्वरि स्नानं॰ र
जताद्रिसमंदिव्यंक्षीरसागरसंनिभम् चंद्रप्रभासमंदेविवस्त्रंतेप्रददाम्यहम् वस्त्रं॰ मांगल्यमणिसंयुक्तंमुक्ताफलसम
न्वितम् दत्तंमंगलसूत्रंतेगृहाणसुरवल्लभे कंठसूत्रं॰ सुवर्णभूषितंदिव्यंनानारत्नसुशोभितम् त्रैलोक्यभूषितेदेविगृ
हाणाभरणंशुभम् आभरणानि रक्तगंधंसुगंधाढ्यंअष्टगंधसमन्वितम् दास्यामिदेविवरदेलक्ष्मीर्देविप्रसीदमे गंधंस॰
हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितम् सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्यं॰ नानाविधानिपुष्पाणिना
नावर्णयुतानिच पुष्पाणितेप्रयच्छामिभक्त्यादेविवरप्रदे पुष्पाणि॰ अथांगपूजा वरदलक्ष्म्यैनमः पादौपूजयामि

कमलवासिन्यै॰ गुल्फौपू॰ पद्मालयायै॰ जंघेपू॰ श्रियै॰ जानुनीपू॰ इंदिरायै॰ ऊरूपू॰ हरिप्रियायै॰ नाभिंपू॰ लोकधात्र्यै॰ स्तनौपू॰ विधात्र्यै॰
कंठंपू॰ धात्र्यै॰ नासां॰ सरस्वत्यै॰ मुखं॰ पद्मनिधये॰ नेत्रेपू॰ मांगल्यै॰ कर्णौपू॰ क्षीरसागरजायै॰ ललाटंपू॰ श्रीवरदलक्ष्म्यै॰ शिरःपू॰
जयामि श्रीमहाकाल्यै॰ सर्वांगंपूजयामि ३॰ धूपंदास्यामितेदेविगोघृतेनसमन्वितम् प्रतिगृण्हमहादेविभक्तानांवरदप्रि
ये॥ धूपं॰ साज्यंचवर्तिसंयुक्तं॰ दीपं॰ नैवेद्यंपरमंदिव्यंदृष्टिप्रीतिकरंशुभम् भक्ष्यभोज्यादिसंयुक्तंपरमान्नादिसंयुतम् नै-
वेद्यं॰ नागवल्लीदलैर्युक्तंचूर्णक्रमुकसंयुतम् वरलक्ष्मीर्गृहाणत्वंतांबूलंप्रददाम्यहम् तांबूलं॰ सुवर्णसर्वधातूनांश्रेष्ठंदे-
विपरंसदा भक्त्याददामिवरदेस्वर्णवृष्टिंचदेहिमे दक्षिणां॰ नीराजनंसुमांगल्यंकर्पूरेणसमन्वितम् चंद्रार्कवन्हिसदृशंगृ
ण्हदेविनमोस्तुते नीराजनं॰ सर्वमांगल्यमांगल्येसर्वपापप्रणाशिनि दोरकंप्रतिगृण्हामिसुप्रीताहरिवल्लभे दोरकग्रह
णम् करिष्यामिव्रतंदेवित्वद्भक्तिस्त्वत्परायणः श्रियंदेहियशोदेहिसौभाग्यंदेहिमेशुभे दोरकबंधनम् क्षीरार्णवसुते
लक्ष्मीश्चंद्रस्यचसहोदरि गृहाणार्घ्यमहालक्ष्मीर्देवितुभ्यंनमोस्तुवै पुनरर्घ्यं॰ श्रीवृक्षस्यदलंदेविमहादेविप्रियंसदा॥
बिल्वपत्रंप्रयच्छामिपवित्रंतेसुनिर्मलम् बिल्वपत्रम् इहजन्मनियत्पापंममजन्मांतरेषुच निवारयमहादेविलक्ष्मी
नीरायणप्रिये प्रदक्षिणाः दामोदरिनमस्तेस्तुनमस्त्रैलोक्यनायके हरिकांतेनमस्तेस्तुत्राहिमांदुःखसागरात् नमस्का
रः क्षीरार्णवसमुद्भूतेकमलेकमलालये प्रयच्छसर्वकामांश्चविष्णुवक्षस्थलालये व्रतसमर्पणम् छत्रचामरमांदोलं

दत्वाव्यजनदर्पणौ गीतवादित्रनृत्यैश्चराजसन्माननैस्तथा सूपचारैःसमभ्यर्च्यक्षमाप्यचमहेश्वरीम् वरलक्ष्मीर्महादेविसर्व
कामप्रदायिनी यन्मयाचकृतंदेविपरिपूर्णंकुरुष्वतत् प्रार्थनां एकविंशतिपक्वान्नैर्घृतशर्करसंयुतैः इंदिराप्रीयतांदेविप-
द्मेशांतिंप्रयच्छमे इंदिराप्रतिगृण्हातिइंदिरावैददातिच इंदिरातारकोभाभ्यामिंदिरायैनमोनमः इतिवानमंत्रः पं
थचायनकंदत्वाफलान्नैश्चसदक्षिणैः विप्रायचाथपत्न्यैदेव्यैतुब्रह्मचारिणे एकवासिन्येततस्त्वेकंदापयेच्चयथाविधि ॥
इतिपूजा अथकथा सूतउवाच कैलासशिखरेरम्येसर्वदेवनिषेविते गौर्यासहमहादेवोदिव्यन्नक्षैर्वि
नोदतः जितोसित्वंमयाचाहपार्वतीपरमेश्वरं सोपित्वंचजितेत्याहएकविवादस्तयोरभूत् चित्रनेमिस्तदादृष्टोमृषावादम
भाषत तदाकोपसमाविष्टागौरीशापंददौततः कुष्टीभवमृषावादिन्चित्रनेमिर्हतप्रभः नानृतंहिसमंपापंक्वापिदृष्टंश्रुतंम
या चित्रनेमिर्महाप्राज्ञःसत्यंवदतिनोमृषा प्रसादःक्रियतांदेविदेवीमाहवृषध्वजः प्रसादएकसुखीतस्मैविशापंचजगा
दसा यदासरोवरेरम्येकरिष्यंतिशुक्रचिव्रतम् ततःस्वर्गणिकाःसर्वावक्ष्यंतित्वांसमाहिताः तदातवविशापःस्यादित्युक्तःस
पपातह ततोकतिपयाहोभिश्चित्रनेमिःसरोवरे कुष्टीभूत्वावसं स्तत्रददर्शस्वर्विलासिनीः देवतापूजनासक्ताःपप्रच्छप्रणि
पत्यताः किमेतद्भोमहाभागाःकिंपूजाकिंचवांछितम् किंमयाचह्यनुष्ठेयमिहामुत्रफलप्रदम् इतिव्रतंचित्रनेमिःपप्र
च्छस्वर्विलासिनीः येनाहंगिरिजाशापान्मोक्ष्यामिचिरदुःखितः अप्सरसऊचुः ताऊचुःक्रियतामद्यव्रतमेतदनुत्त

मम् वरलक्ष्मीव्रतंदिव्यंसर्वकामसमृद्धिदम् यदारवौकुलीरस्थेमासेचश्रावणेतथा गंगायमुनयोर्योगेतुंगभद्रासरित्तटे त
स्मिन्वैश्रावणेमासिशुक्लपक्षेभृगोर्दिने प्रारब्धव्यंव्रतंतत्रमहालक्ष्म्यायतात्मभिः सुवर्णप्रतिमांकुर्याच्चतुर्भुजसमन्विताम्
पूर्वंगृहमलंकृत्यतोरणैरंगवल्लिभिः गृहस्यपूर्वदिग्भागेईशान्यांचविशेषतः प्रस्थमितांस्तंडुलांश्चभूमौनिक्षिप्यपूजयेत्
संस्थाप्यकलशंतत्रतीर्थतोयैःप्रपूजयेत् फलानिचविनिक्षिप्यसुवर्णंप्रक्षिपेत्ततः पल्लवांश्चविनिक्षिप्यवस्त्रेणाछाद्ययत्न
तः प्रतिमांस्थापयेत्तत्रपूजयेच्चयथाविधि अग्न्युत्तारणपूर्वंतुशुद्धस्नानंयथाक्रमम् पंचामृतेनस्नपनंकारयेन्मंत्रतःसु
धीः शुद्धस्नानंततःकृत्वादेवीसूक्तेनवैततः अष्टगंधैःसमभ्यर्च्यपल्लवैश्चसमर्चयेत् अश्वत्थवटबिल्वाम्रमालतीदा-
डिमास्तथा एतेषांपत्रमादाय एकविंशतिसंख्यया नानाविधानिपुष्पाणिमालत्यादीनिवैततः धूपदीपैर्महालक्ष्मींपूजये
त्सर्वकामदाम् पायसंभक्ष्यभोज्यंचनानाव्यंजनसंयुतम् एकविंशतिसंख्याकैरपूपैःपूजयेच्छिवाम् निवेद्यसर्वदेवेभ्यलव
रंसत्वरणुयात्ततः एवंसंपूजयित्वाचतांबूलाद्यैश्चषोडशैः उपचारैःषोडशभिर्धूपदीपैरनेकधा नृत्यगीतादिसहितोदेवींसंप्रा
र्थयेच्छ्रियम् रमांसरस्वतींध्यायन्शचींचप्रियवादिनीम् अप्सरोभिःकृतंसम्यक्व्रतंसर्वसमृद्धिदम् पूजावसानपर्यंतं-
चित्रनेमिरलोकयन् होमधूम्रंसमाघ्रायघृतदीपप्रभावतः गत कुष्टःस्वर्णतेजोशुचिस्तद्गतमानसः तत्रैवचिंतयन्सम्य
क्मनःसंधायतद्व्रतम् पंचवायनकंदत्वाकथांशृणवीतयत्नतः तथामौनंगृहीत्वातुपंचार्तिक्येनपूजयेत् व्रतंचकुर्वतां

२३

गृह्यएकंपूग फलंत्तथा पर्णैकंचूर्णरहितंत्वर्वणीयंप्रयत्नतः आरक्तंयदिजायेतकुर्याद्व्रतमनुत्तमम् नोचेन्नतद्व्रतंकार्यंसर्वथाभूमिमिच्छ
ता अनेनैवविधानेनव्रतंगृण्हीतयत्नतः अहंयत्नात्करिष्यामिव्रतंसर्वसमृद्धिदम् इत्युक्त्वासर्वदेवीस्तुकारयामासतत्क्षणात् सु
वर्णनिर्मितांदेवींवस्त्रालंकारसंयुताम् पूर्वोक्तेनविधानेनपूजांकृत्वाप्रयत्नतः पंचवायनकंदत्वाकृत्वातेभ्योयथाक्रमम् ततो
वैणवपात्राणिफलान्नैश्चसदक्षिणैः विप्रायचाथयतयेदद्यात्तुब्रह्मचारिणे सुवासिन्येततस्त्वेकमर्पितंचित्रनेमिना एवंसम्य
गक्रमेणैनदत्वावायनपंचकम् ततोगृहंगतंतेनदेवींनत्वायथाक्रमम् ततोनुज्ञांचसंप्रार्थ्यभक्षणार्थंततोव्रती नागवल्लीदलं
त्वेकंक्रमुकंचूर्णवर्जितम् भक्षयित्वातुचेलांतेदतांनेचनिरीक्ष्यच आरक्तेचततोजातेव्रतस्यास्यप्रभावतः अद्यहंगतपापोस्मि
देव्यादर्शनयोगतः एतत्सम्यग्व्रतंचीर्णंभक्तिभावेनयन्मया चित्रनेमिर्व्रतंकृत्वाकैलासंशंकरालयम् गत्वाप्रणम्यदेवेशंदेवींसा
दरपूर्वकम् पार्वतीचतदाप्राहचित्रनेमेस्वपुत्रवत् पालनीयोमयात्वंचेत्सत्यमित्यवधार्यताम् चित्रनेमिस्तदाप्राहपार्वती ह
रवल्लभे तवपादांबुजंदृष्टंवरलक्ष्मीप्रसादतः महादेवस्ततःप्राहचित्रनेमिंशुचिव्रतम् अद्यप्रभृतिकैलासेभुंक्ष्वभोगान्य
थेप्सितान् पश्चाद्गंतासिवैकुंठंव्रतस्यास्यप्रसादतः पार्वत्यापिकृतंपूर्वंपुत्रलाभार्थमेवच लब्धश्चषण्मुखोदेव्याव्रतराजप्र
सादतः नंदश्चविक्रमादित्योराज्यंप्राप्तोमहाव्रती नंदश्चकांतयाहीनोकांतांलब्धासुलक्षणाम् तयाचतद्व्रतंकृत्वंकृतंवै
पुत्रहेतवे पुत्रंप्रसुषुवेसाचत्रैलोक्यभरणंक्षमम् इहभुक्त्वातुविपुलान्भोगान्वैसुमनोहरान् तदाप्रभृतिलोकेस्मिन्वरलक्ष्मी

व्रतंशुभम् व्रतंकरोतियानारीनरोवापिशुचिव्रतः भुक्त्वाभोगांश्चविपुलानंतेशिवपुरंव्रजेत् ख्यातंपुण्यंमयाविप्रावरलक्ष्मी
व्रतंशुभम् यइदंशृणुयान्नित्यंश्रावयेद्वासमाहितः धनधान्यमवाप्नोतिवरलक्ष्मीप्रसादतः इतिश्रीभविष्योत्तरपुराणेशु
क्रवारेश्रावणयुक्तवरलक्ष्मीव्रतंसंपूर्णम् अथश्रावणमंदवारेशनैश्चरव्रतम् अद्येत्यादिममसमस्तरोगपरिहा-
रार्थंद्दुस्सुदरलत्तागतशनैश्चरपीडानिरासार्थंशनैश्चरव्रतंकरिष्ये निर्विघ्नतासिध्यर्थंगणपतिपूजनंकलशाराधनंचकरिष्ये
कृष्णांगायनमः आवाहयामि नीलाय·आसनं· श्वेतकंठाय·पाद्यं· नीलमयूरवाय· अर्घ्यं· नीलोत्पलदलाय· आचमनं· ॥
नीलदेहाय·स्नानं·कुब्जाय·पंचामृतस्नानं· शनैश्चराय· शुद्धोदकस्नानं·दीप्यमानजटाधरा॰ वस्त्रं॰पुरुषगात्राय·यज्ञोपवीतं·
स्थूलरोमाय· अलंकारान्·नित्याय· गंधं· धूर्ताय· अक्षतान्· सदात्तृप्ताय·पुष्पं· मंदाय· धूपं·निस्पृहाय·दीपं·तामसाय· नैवे-
द्यं·नीलोत्पलाय·आचमनं· कृष्णवपुषे· करोद्वर्तनं·दीर्घदेहाय· तांबूलं· मंदगतये· दक्षिणां·ज्ञाननेत्राय· प्रदक्षिणां· सूर्यपु
त्राय· नमस्कारं· कोणस्थः पिंगलोबभ्रुःकृष्णोरौद्रोंतकोयमः सौरिःशनैश्चरोमंदः पिप्पलादिषुसंस्थितः एतानिशनिनामानि
जपेदश्वत्थसंनिधौ शनैश्चरकृतापीडानकदाचिद्भविष्यति इतिप्रार्थना मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे अग्र
तःशिवरूपायवृक्षराजायतेनमः ॥ सप्तप्रदक्षिणाः सप्तनमस्कारान्कुर्यात् इतिपूजा अथकथा दशरथउवा॰
॥ नमःकृष्णांगनीलायश्वेतकंठनिभायच नमःपुरुषगात्रायस्थूलरोमायतेनमः नमोमंदगतेतुभ्यंनिस्पृहायनमोन

मः नमोनित्यक्षुधार्त्ताय सदात्तृप्ताय तेनमः तपसादग्धदेहाय नित्ययोगधराय च नमस्तेज्ञाननेत्राय काश्यपायार्कसूनवे इति
श्रुत्वा नृपश्रेष्ठं प्रसंनश्च शनिस्तदा शनिरुवाच तुष्टोहं तव राजेंद्र तपसा पौरुषेण च दास्यामि ते वरं भद्रं निश्चयाद्रघुवंशज
दशरथ उवाच अद्यप्रभृति पिंगाक्ष पीडा कार्या न ते मया जगत्त्रये त्वया नाथ पीडितो दुःखितो जनः तस्माज्जगत्त्रयं देव र-
क्षणीयं त्वयानघ शनिरुवाच ग्रहाणामहमेकोहि मदधीना ग्रहाः सदा तपसा तव तुष्टोहं पीडां न च करोम्यहम् जगत्त्रयं
महाराज दुःखितं मे सदैव हि दशरथ उवाच भगवन्केन विधिना त्वदीयाराधनं भवेत् येन तुष्टोसि पिंगाक्ष तत्सर्वं वक्तु-
मर्हसि शनैश्चर उ० श्रावणे मंदवारेषु दंतधावनपूर्वकम् स्नानं सुगंधतैलेन नित्यकर्म समाचरेत् कर्तव्यं सर्ववारेषु ते
न तुष्टोस्म्यहं नृप शुचिर्भूत्वा शमीवृक्षं गत्वा तत्रैव पूजयेत् तदभावे थ राजेंद्र गत्वाश्वत्थं प्रपूजयेत् तत्र संपूज्य मां राजन्गं-
धपुष्पाक्षतादिभिः धूपदीपैश्च नैवेद्यैस्तांबूलप्रार्थनादिभिः वेष्टयेत्सप्तसूत्रैश्च नमस्कारांस्तथैव च सप्त प्रदक्षिणाः कृत्वा
श्रुत्वा पुण्यकथामिमाम् एवंविधांस्त्रयस्त्रिंशन्मंदवारान्करुष्व मे ततः शांतिं च मे वारे कुर्यादुद्यापनं शुभं आचार्यं वरयेत्त-
त्र श्रोत्रियं वेदपारगम् सुवर्णस्य शमीवृक्षं तदभावे तु पिप्पलम् मदीयां प्रतिमां कुर्याल्लोहप्रचुरसंयुताम् द्विभुजं दीर्घदेहं
च दंडपाशधरं तथा पिंगाक्षं स्थूलदेहं च श्वेतग्रीवं तथार्चयेत् रुक्मसूत्रं तथा सप्त कृष्णावस्त्राणि वेष्टयेत् उपवीतादिभि-
र्द्रव्यैः पूर्ववद्देवमर्चयेत् शमाग्निरिति मंत्रेण हुनेदष्टाधिकं शतम् कृसरान्नं होमयेत्तु तेनैव बलिमुद्धरेत् कृष्णाधेनुं सव-

स्तांचदद्यादथपयस्विनीं सप्तविप्रानसमभ्यर्च्यगंधपुष्पफलादिभिः वस्त्राणिदक्षिणांचैवयथाशक्त्याप्रदापयेत् तिलमाषवि-
मिश्रान्नैर्भोजयेद्द्विजसत्तमान् तेषांगृह्याशिषंपश्चाद्भुंजीयाद्बंधुभिःसह॥ सवस्त्रप्रतिमांचैवआचार्यायनिवेदयेत् एवंकृ
तेथराजेंद्रसर्वाभीष्टंददाम्यहम् जपेदिदंपठेत्स्तोत्रंभक्त्याचैवकृतांजलिः सप्तजन्मनिराजेंद्रतस्यैश्वर्यंभविष्यति पुत्रपौ
त्रयुतोनित्यंततोमोक्षमवाप्स्यति तुष्टोहंतवराजेंद्रपीडांचनकरोम्यहम् गोचरेवाथवर्गेपिविषमस्थोयदाशनिः तुष्टोराज्य
प्रदःसद्योक्रुद्धोराज्यापहारकः जन्मस्थोद्वादशस्थोवाअष्टमोवापिकुत्रचित् श्रावणेमंदवारेषुपूजितोहंसुखप्रदः ब्रह्मा
शिवोहरिश्चैववसुनयःसनकादयः लक्ष्मीउमाचसावित्रीमुनिपत्न्यश्चवैशुभाः नृपाअन्येमयासर्वेराज्यभ्रष्टाश्चपीडिताः दे
शाश्चनगरग्रामागजोष्ट्राश्चवाजिनः रौद्रदृष्ट्यामयादृष्टानाशमायांतितत्क्षणात् अतोमयापीडितानांमनुष्याणांनराधिप
परिहर्तुंनशक्ताश्चब्रह्माविष्णुमहेश्वराः एतच्छ्रुत्वाशनैर्वाक्यंराजापरमहर्षितः प्रदक्षिणांनमस्कृत्यवरंप्राप्यपुरंययौ गत्वास्व
नगरंराज्ञापूजितोवैशनैश्चरः श्रावणादिषुवारेषुप्रसंनोभूच्छनैश्चरः पृथ्वीपतिरभूद्राजाग्रहराजप्रसादतः यइदंप्रातरु-
त्थायसौरिवारेसदार्चयेत् तस्याभीष्टप्रदोमंदोभविष्यतिनसंशयः स्त्रियावापुरुषेणापिशनैश्चरव्रतंकृतं मुच्यतेसर्वपा
पेभ्योसर्वाभीष्टंलभेत्क्षणात् ब्राह्मणोवेदसंपूर्णोक्षत्रियोराज्यमाप्नुयात् वैश्यस्तुलभतेवित्तंशूद्रःसुखमवाप्नुयात् कन्यार्थी
लभतेकन्यांपुत्रार्थीलभतेसुतम् कामार्थीलभतेकामान्मोक्षार्थीलभतेगतिम् मुच्यतेसर्वपापेभ्योग्रहलोकंसगच्छति ॥

इतिश्रीस्कंदपुराणेशनिवारव्रतंसोद्यापनंसंपूर्णम् अथव्यतीपातव्रतंलिख्यते युधिष्ठिरउवाच श्रुतानित्वन्मुखाद्दे
वव्रतानिसकलान्यपि व्यतीपातव्रतंब्रूहिसोद्यापनफलान्वितम् कृष्णउवाच पुराव्यासेनकथितंशुकायवंशवृद्धये तद्व्रतंकथयि
ष्यामिशृणुराजन्यसत्तम शुकउवाच कथंयोगोततःपूज्योव्यतीपातोमहामुने पूजितेकिंफलंताताविधिंमेब्रूहिविस्तरात् व्या
सउवाच इममर्थंपुरापृष्टोधरण्याचजगद्गुरुः व्यतीपातव्रतंसर्वंयत्समाख्यातवान्प्रभुः तद्व्रतंकथयिष्यामिपरलोकहितायच
धरण्युवाच यस्त्वयोक्तोव्यतीपातस्तस्यकर्मवदस्वतत् कदाजातःकथंपूज्यःपूजितेचात्रकिंफलम् श्रीवराहउवाच य
दाबृहस्पतेर्भार्यांतारांजग्राहशीतगुः मित्रत्वात्साहतंसूर्यस्त्यजदारान्बृहस्पतेः तदासोमोतिरुष्टश्चरविंक्रूरंविलोकयत् आदि
त्योपितदारुष्टःक्रुधासोमंविलोकयत् उभयोर्दृष्टिसंपातात्क्रुद्धयोःसोमसूर्ययोः उद्यतास्योभवत्घोरःपुरुषःपिंगलेक्षणः दंष्ट्रोष्ठ
दीर्घदशनोभ्रुकुटीकुटिलाननः पिंगलश्मश्रुकेशांतोलंबभ्रूश्चकृशोदरः शिरलोदीर्घजिह्वश्चसूर्याग्नियमसंनिभः त्रैलोक्यं
भक्षितुंप्राप्तोरवींदुभ्यांनिवारितः सोष्टच्छदथसूर्येंदुक्षुधितोभक्षयामिकिम् त्रैलोक्यंभोक्तुकामोहंभवद्भ्यांविनिवारितः क्रो
धक्षुधौमांबाधेतेपात्येतेकुत्रतेमया सोमसूर्यावूचतुः कोपदृष्टेर्नौविविधादतिपाताद्भवानभूत् व्यतीपातस्ततोनाम-
भवान्सुविख्यविष्यति सर्वेषामपियोगानांपतिस्त्वंभवितासदा तेषांमध्येपुण्यतमोभविष्यसिनसंशयः यस्मिन्कालेत्वदुत्पत्तिः
कल्याणंनैवकारयेत् स्नानदानादिकंकिंचित्कृत्वाचैवाक्षयंभवेत् इतिताभ्यांवरोदत्तस्ततःप्रभृतियोगराट् त्रिषुलोकेषुवि-

ख्यातोबहुपुण्यफलप्रदः व्यतीपातमहावीरत्रैलोक्यव्यापकप्रभो त्वयिप्रासेनरैः किंचिद्दातव्यंशुभकांक्षिभिः तदृत्तंक्षुधितोभुंक्ष्वनो
चेत्कोपोनिपात्यताम् व्यतीपातउवाच नमोवांपितरोमेऽस्तुक्रोधपातस्यभाजनः दत्तोभवद्भ्यामधुनाप्रसादःक्रियतांमम ॥
रवींदूऊचतुः स्नानदानजपहोमपूर्वकंयस्त्वदीयसमयेसमाचरेत् तस्यपुण्यमिहतेप्रसादतोनंतमस्तुसुतवैभवार्णवे ॥न
त्कालेतववविदधातिपूजनंयस्तस्येष्टंभवतुभवेत्सभद्ररूपः पुत्रायुर्धनसुखकीर्तिपुष्टिरूपारोगाद्यंगुणिजनवल्लभोत्वपूर्वम् ॥
धरण्युवाच अस्यार्चनविधिंब्रूहिविस्तरेणजगद्गुरो कृतेतस्मिन्व्रतेदेविकिंफलंप्राप्यतेनरैः वराहउवाच एतस्मात्कारणाद्भू
मेव्यतीपातःसउच्यते अर्चितेचफलंयत्स्यात्तदुक्तंचसमासतः विस्तरेणार्चनविधिंकथितुंकेनशक्यते यथार्चितेव्यतीपातःस
विधिःश्रूयतामिह शुभेव्यतीपातदिनेवगाह्यसंसेव्यमानेनमहानदीजलं उपावसेद्द्वैपवमानुजायकोजपेत्त्वमंत्रंव्यतीपातते।
नमः छादितेताम्रवस्त्रेणशर्करापूरितेघटे कांचनाद्येप्रतिष्ठाप्यहेममष्टभुजंनरम् अष्टभुजमष्टादशभुजेउत्पत्तिवाक्येव्यतीपातमूर्तेः
अष्टादशभुजत्वश्रवणात्उत्पत्तिवाक्यानुसारित्वाच्चविनियोगवाक्यस्य० तथाभगवद्गीतासुच चत्वारोमनवस्तथेतिचत्वारश्च
तुर्दशेत्यर्थः गंधपुष्पाक्षतैर्धूपैर्दीपवस्त्रनिवेदनैः भक्ष्यैर्भोज्यैःफलैश्चित्रैर्मासिमार्गशिरेर्चयेत् नमस्तेस्तुव्यतीपातसोमसूर्य
सुतप्रभो यद्दानादिकृतंकिंचित्तदनंतमिहास्तुमे इत्युक्त्वापंचरत्नाढ्यंसुपुष्पाक्षतमंजलिम् प्रक्षिप्यतत्क्षणादेवसर्वपापक्ष
योभवेत् यदिद्वितीयेचदिनेव्यतीपातोभवेन्नहि तदापूर्वोपवासस्तुप्रदद्यात्सकलंगुणैः पारणंत्वव्यतीपातेकुर्यात्संप्राश्यगोमयम् अ

थैकस्मिन्दिनेथात्रिव्यतीपातोभवेद्यदि तत्रैवाह्नितदादत्वाउपवासंसमाचरेत् कुर्यादेवंमासिमासिव्यतीपातांस्त्रयोदश चतुर्दशेतु
संप्राप्तेकुर्यादुद्यापनंबुधः व्यतीपातायस्वाहेतिक्षीरवृक्षसमिच्छतम् आज्यक्षीरफलानांचहोतव्यंवैशतंशतम् शर्करापूर्णकुंभे
नसहसोपस्करंनरम् शय्यांचोपस्करैर्युक्तांप्रदद्याद्गतदेशिने वंदेव्यतीपातमहंमहांतंरविंदुसूनुंसकलेष्टलब्ध्यै समस्तपापस्य
ममक्षयोस्तुपुण्यस्यचानंतफलंममास्तु इतिसमीर्यगुरुंपरिपूज्यतकटककुंडलकंठविभूषणैः सकलमेवसमर्प्ययथोचितं
तदुपलभ्यमिहशृणुतन्माहि गांचपयस्विनींदद्यात्सुवर्णवरदक्षिणाम् तस्मैशय्यांसमादायसारदारुमयींदृढाम् दंतपत्रसितांर
म्यांहेमपट्टैरलंकृताम् हेमतूलीप्रतिच्छिन्नांशुभगेंदूपधानकाम् प्रच्छादनपटीयुक्तांधूपगंधादिवासिताम् तांबूलंकुंकुमंमोदंकर्पू
रागरुचंदनम् दीपकोपानहौछत्रंप्रदद्याच्चामरासने देहांतेसूर्यलोकायविमानैरत्नसन्निभैः अप्सरोगणसंभोगैर्गीतनृत्यविला
सिभिः गत्वाकल्पार्उदशतंसादरंत्रिदशार्च्चितः तदंतेराजराजःस्याद्रूपसौभाग्यभाग्भवेत् कीर्त्याढ्योगुणपुत्रायुरारोग्यधनधा
न्यवान् प्रतापाद्यामहैश्वैर्येयुक्तोभोगीबहुश्रुतः जनसौभाग्यसपन्नोयावज्जन्माष्टकायुतम् दर्शेदशगुणंदानंतच्छतघ्नंदिनक्ष
ये शतघ्नंतच्चसंक्रांतौशतघ्नंविषुवेततः युगादौतद्दशगुणमयनेतच्छतंभवेत् सोमग्रहेतच्छतघ्नंतच्छतघ्नंरविग्रहे असंख्ये
यंव्यतीपातेदानंवेदविदोविदुः उत्सत्तौलक्षगुणंकोटिगुणंभ्रमणंनाडिकांतु अर्बुदगुणितंपतनेजपदानाद्यक्षयंपतिते ज
न्मद्वाविंशतिंनाडीर्भ्रमणंत्वेकविंशतिम् व्यतीपातस्यपतनेदशसप्तस्थितंविदुः संप्रार्थितं यद्व्यतिपानकालेपुनःपुनस्तद्दिशी

तरश्मीःप्रयच्छतःकल्पशतार्बुदानिविवर्धमानंनहिहीयतेतव तस्मान्महीशत्वंव्यतिपातपूजांकुरुष्वचेत्पुण्यमनंतमिष्टम् यदिस्थिर
त्वंशतनंतुवेष्टुंसमस्तवरिष्टंयदिमीसितंतत् गणयित्वाव्यतीपातकार्याभूतिव्रतेनरः सर्वपापहरोतस्यलभतेफलमीप्सितं
पठतिलिखतियःश्रृणोतियेतत्कथयतिपश्यतिकारयत्यवश्यम् इतिशशिदिवसयास्यसोपिदेवैश्चिरमयंपरिपूज्यमानवास्ते
॥ ॥इतिवराहेनोक्तंव्यतीपात व्रतम् अथतत्रैवनारदीयेव्यतीपातव्रतम् युधिष्ठिरउवाच केनव्रतेनची
र्णेननपश्येद्यमशासनं परिपृच्छाम्यहंविप्रव्रतानामुत्तमंव्रतम् तद्व्रतंब्रूहिविप्रर्षेकृत्वाभवतिसुप्रियम् मार्कंडेयउवा॰
शृणुराजन्व्रतमिदंहर्यश्वेनपुराकृतं तेनराज्ञातुवेदत्तंसूकरायचदुःखिने कदाचिन्मृगयांकर्तुंहर्यश्वोराजसत्तमः वेन
मध्येचरन्राजाददर्शतत्रैवसूकरम् दग्धपादकटिंचैवदग्धकंठमुखोदरम् दृष्ट्वातथाविधंतंतुकृपांचक्रेनृपोत्तमः केनकर्मविपा
केनत्त्ववस्थप्राप्तवानयम् अहोकष्टमहंकष्टंसूकरेणोपभुज्यते अ॰ वश्यमपिभोक्तव्यंकृतंकर्मशुभाशुभम् इत्युक्तस्तस
रूपेणराजातंप्राहसूकरम् इदृशीकिमवस्थातेतन्मेब्रूहिचसूकर तच्छ्रुत्वानृपतेर्वाक्यंनिःश्वसन्सूकरोमुहुः स्मृत्वापुराकृ
तंकर्मप्रत्युवाचनृपंप्रति शृणुराज न्नहंपूर्ववैश्योधनबलान्वितः आशाकृद्योनदत्तंहिआश्रितेभ्यश्चकिंचन श्रुताश्चब
हवोधर्माःपुराणश्रुतिचोदिताः तथापिपापबुध्यामेनकृतंआत्मनोहितम् आशापाशमनुप्राप्तोशुभशास्त्रविवर्जितः कृत
वान्पापमेवाहंनकिंचित्सुकृतंकृतम् एकदातुद्विजःकश्चिद्व्यतीपातेगृहंमम आगतोयाचयन्मांचनकिंचिद्दत्तवानहम्

मयानिराकृतोत्यंतंवचोभिर्निष्ठुरैस्तथा व्यतीपातोद्यरेवैश्यकिंचिद्देह्यर्थिनेखलु तन्मेरुरूपंभवतिप्रास्यसेत्वन्यजन्मनि कुपितेनम
यातस्मैनिष्ठुरवाक्समीरिता ततश्वकुपितोविप्रोममशापमथाददत् आशाग्निर्दहतेयद्वन्ममांगानिपृथक्पृथक् तथैवतुतवां
गानिदावाग्निःपुरुषाधम अरण्येनिर्जलेदेशेनिर्जनेद्रुमविस्तृते तत्रसूकरयोनौत्वमुत्पंनोदुःखमाप्नुहि प्रसादितोमयापश्चा
त्पुनरप्युक्तवांस्तदा उद्धरिष्यतिराजात्वांसूकरत्वेद्दयापरः इत्युक्त्वाजगामाथअन्यवैश्यगृहंप्रति तेनशापेनवैराजन्सू
करत्वमवाप्नवान् अहंदुःखीचसंजातोविजनेनिर्जलेवने राजोवाच केनत्वंमुच्यसेपापान्ममाचक्ष्वहसूकर येनश
क्योप्यहंकर्त्तुंतवशापस्यसंक्षयम् वराहउवाच श्रूयतांममराजेंद्रमुक्तिःस्याद्येनकर्मणा व्यतीपातव्रतंनामकृतंराज
स्त्वयापुरा यथामातासुतस्येहसर्वत्रसुखकारिणी तथाव्रतमिदंराजन्निहलोकेपरत्रच यथैवाभ्युदितःसूर्योह्यशेषंचत
मोदहेत् व्यतीपातस्तथैवेहसर्वपापंव्यपोहति यथाविष्णुर्ददातीहनृणांपरमनिर्वृतिम् ददात्येवंनसंदेहस्तथाव्रतमिदंशुभं
शतमिंदुक्षयेदानंसहस्रंतुदिनक्षये विषुवेशतसाहस्रंव्यतीपातेत्वनंतकम् विधानंव्यतिपातस्यशृणुराजन्प्रयत्नतः द्वाविं
शतिःसमुत्पन्नो २२ भ्रमणेचैकविंशतिः २१ पतनेदशनाड्यस्तु १० पतितेसप्तनाडिकाः ७ यत्फलंलक्षमुत्पत्तौभ्रमणेको-
टिरुच्यते पतनेदशकोट्यस्तुपतितेदत्तमक्षयं आकृतिर्मूर्छनाकाद्याशैलतुल्याश्चनाडिकाः लक्षकोट्यर्बुदगुणमनंतंस्या
द्यथाक्रमम् व्यतीपातविभागेषुदानमुक्तंनृपोत्तम शंखकर्णप्रलंबोष्ठंलंबभ्रूदीर्घनासिकम् अष्टनेत्रंचतुर्वक्त्रंभुजैरष्टा

दर्शैर्युतम् शतयोजनविस्तीर्णसोमसूर्य्यसुतंध्रुवम् माघेवाफाल्गुनेमार्गेवैशाखेश्रावणेथवा व्यतीपातोदिनेयस्मिन्नारभेद्व्रत
मुत्तमम् व्यतीपातदिनेप्राप्तेशुचिर्भूत्वाविधानतः पंचगव्यतिलैर्धात्रैः शुचिः स्नायात्समाहितः ततःसंकल्पयेदेतद्व्रतंसर्वार्थ
साधकम् व्यतीपातव्रतेतिष्ठन्स्वर्णदानंकरोम्यहम् नवारोनचनक्षत्रंनतिथिर्नचचंद्रमाः यदावैजायतेभक्तिस्तदाप्रा-
प्यमिदंव्रतं किंव्रतैर्बहुभिःश्चीर्णैःकिंदानैर्बहुभिःकृतैः सर्वेषांफलमाप्नोतिव्यतीपातव्रतेनवै इतिसंकल्प्यमनसाव्यती
पातव्रतंचर सर्वपापविशुध्यर्थंयावत्संवत्सरोभवेत् आमंत्र्यतद्दिनेविप्रंवेदवेदांगपारगं तिलैःपूर्णशरावंचसगुडंगुरवे
र्पयेत् शंखचक्रगदापाणिंपद्महस्तंहिरण्मयं वस्त्रयुग्मेनसंवेष्ट्यपूजयेत्गरुडध्वजम् उपचारैःषोडशभिः पूजयित्वास
माहितः हेमदानंततःकुर्यादद्याद्द्विभवसागरः मंत्रेणानेनविधिवत्करेधृत्वासुवर्णकम् नमस्तेस्तुव्यतीपातसोमसूर्य
सुतप्रभो दास्यामिदानंयत्किंचित्तदक्षय्यमिहास्तुमे गुंजामात्रमपिस्वल्पंहेमविप्रकरार्पितम् गृह्यतांव्रतसिध्यर्थं पू
रयस्वमनोरथान् हेमाद्रिशिखरंभूत्वासुवर्णकोटिरुच्यते इदंक्षेत्रंकुरुक्षेत्रंसाक्षान्नारायणोद्विजः सुवर्णस्यचदानेनप्री
तोभवजनार्दन तवहस्तौव्यतीपातौवैधृतिश्चरणौस्मृतौ संक्रांतिर्हृदयंस्थानममावैनाभिरुच्यते पूर्णिमापृष्ठतोज्ञेया
पंचांगंपंचपर्वणि एवंविष्णुशरीरस्यमुखंवैद्वादशीस्मृता अमाचपितरोज्ञेयामातामन्वादयस्तथा भगिनीद्वादशीज्ञे
याव्यतीपातस्तुसोदरः पितुःशतगुणंप्रोक्तंसहस्रंमातुरेवच भगिन्यांदशसाहस्रंसोदरेदत्तमक्षयम् व्यतीपातदिनेदे

यत्किंचिद्द्विजे समर्पितम् भवत्वनंतफलदं मम जन्मनि जन्मनि एवं प्रार्थ्य हृषीकेशं नत्वा चैव पुनः पुनः तत्सर्वं गुरवे दद्यात्स्त्री
त्रियाय कुटुंबिने व्रतोपदेष्ट्रे विप्राय पुराणज्ञाय भक्तितः ब्राह्मणान्भोजयित्वा तु व्रतमेतत्समापयेत् इदं व्रतं मया देव
गृहीतं पूर्वजन्मनि स्वर्गापवर्गदं नृणां सूकराय ददाम्यहं एवमुक्त्वा नृपश्रेष्ठो सूकराय फलं ददौ तत्क्षणात्तेन पुण्येन सूकरो-
मुक्तकिल्बिषः मुक्तः सूकरदेहाच्च सर्वाभरणभूषितः दिव्यं विमानं संप्राप्य गतो स्वर्गं च सूकरः न जानंति द्विजाः सर्वे व्यती
पातव्रतोत्तमं इहलोके च सुखदं स्वर्गमोक्षप्रदायकम् अतस्त्वं कुरु राजेंद्र व्यतीपातव्रतोत्तमम् सर्वपापक्षयकरं नृणां
भवति सर्वदा कुर्यादेवं मासि मासि व्यतीपातांस्त्रयोदश चतुर्दशे तु संप्राप्ते कुर्यादुद्यापनं बुधः आदौ मध्ये तथा चांते यथा
शक्तिस्तथाचरेत् निष्कत्रयेण चार्धेन तदर्धार्धेन वा पुनः व्यतीपातस्वरूपं हि कुर्याद्दक्षसुजं नरः गणेशपूजनं कार्यं स्वस्ति
वाचनमाचरेत् नांदीमुखांस्ततोभ्यर्च्य आचार्यं वरयेत्सुधीः वरयेच्च ततो विप्रान्कृत्विजश्च त्रयोदश देवागारे तथा गो
ष्ठे शक्रे च स्वीयमंदिरे पुष्पमंडपिकां कृत्वा पट्टकूलादिवेष्टिताम् तन्मध्ये सर्वतोभद्रं रचयेल्लक्षणान्वितं तत्पूर्वे स्थापयेत्
कुंभं शर्करापूरितं शुभं तस्योपरि न्यसेत्पात्रं ताम्रं वैणवमृन्मये निष्कत्रयेण प्रतिमां सुवर्णपरिनिर्मितां स्वशक्त्या कारयेन्मूर्तिं
लक्ष्मीनारायणस्य च लक्ष्मीनारायणीं मूर्तिं व्यतीपातसमन्विताम् स्थापयेत्प्रतिमां तत्र ब्रह्माद्यावाहनं ततः ततः पूजां वि
निर्वर्त्य महासंभारविस्तरैः अर्घ्यं चापि ततो देयं सुगंधैः कुसुमैर्जलैः गृहाणार्घ्यं व्यतीपात सोमसूर्यसुतप्रभो सप्तजन्मकृ-

तंपापंत्वत्प्रसादात्प्रणश्यतु मंत्रेणानेनदेवायदद्यादर्घ्यंसमाहितः होमंसमारभेत्पश्चात्सोमोधेनुमितिस्मृतः आकृष्णेनेतिमं
त्रेणसूर्यायविधिवन्नरः अश्वत्थार्कसमिद्भिश्चशतमष्टोत्तरंतथा इदंविष्णुरितिमंत्रेणहोमःस्यात्पायसेनच व्याहृतीनांफ
लैर्होमंकुर्यादष्टोत्तरंशतम् त्रयोदशब्राह्मणांश्चभोजयेल्लड्डुपायसैः एवमाराधितान्विप्रान्दक्षिणाभिश्चतोषयेत् आचा
र्यंपूजयेत्पश्चाद्गांचदद्यात्पयस्विनीं इत्थंव्रतंतुयःकुर्यान्नरोभक्तिसमन्वितः कोटिजन्मकृतैःपापैर्मुच्यतेनात्रसंशयः॥
अस्मिन्कृतेव्रतेराजन्वैधव्यंस्त्रीनचाप्नुयात् अकालमृत्युर्दारिद्र्यंशोकोदुःखंनजायते सर्वसौख्यमवाप्नोतिव्यतीपात
प्रसादतः इतिश्रीवराहपुराणेव्यतीपातव्रतंसोद्यापनंसंपूर्णम् अथआश्विनशुक्लैकादशीमारभ्यकार्तिक
शुक्लैकादशीपर्यंतंमासोपवासव्रतंलिख्यते हेमाद्रौविष्णुरहस्ये नारदउवाच भगवन्श्रोतुमिच्छामिव्र-
तानामुत्तमव्रतम् विधिंमासोपवासस्यफलंचास्ययथोदितम् यथाविधानेनरैःकार्याव्रतचर्यायथाभवेत् आरभ्यतेक
थंपूर्वंसमाप्यंचयथाविधि यावत्संख्यांहिकर्तव्यंतद्ब्रवीहिपितामह व्रतमेतत्सुरश्रेष्ठविस्तरेणममानघ ब्रह्मोवाच
साधुनारदपृष्टंहिसर्वेषांहितकारकम् यादृक्मतिमतांश्रेष्ठतच्छृणुष्वब्रवीमिते सुराणांचयथाविष्णुस्तपतांचयथार
विः मेरुःशिखरिणांयद्वद्वैनतेयस्तुपक्षिणां तीर्थानांतुयथागंगाप्रजानांतुयथाद्विजः श्रेष्ठंसर्वव्रतानांहितद्वन्मासोपवा
सकम् सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयद्भवेत् सर्वदानोद्भवंवापिलभेन्मासोपवासकृत् अग्निष्टोमादिभिर्यज्ञैर्विधिवद्

रिदक्षिणेः नतत्पुण्यमवाप्नोति यन्मासपरिलंघनात्॥ तेनदत्तंहुतंजप्तंतपस्तप्तंस्वधाकृतम् यः करोतिविधानेननरोमाससुपो
षणम् प्रविश्यवैष्णवंयज्ञंपूजयेच्चजनार्दनम् गुरोराज्ञांततोलब्ध्वाकुर्यान्मासोपवासनम् वैष्णवानियथोक्तानिकृत्वाचैव-
व्रतानितु द्वादश्यादीनिपुण्यानिततोमासमुपावसेत् अतिकृच्छ्रंपराकंचकृच्छ्रंचांद्रायणंतथा मासोपवासंकुर्वीतज्ञात्वा-
देहबलाबलम् वानप्रस्थोयतिर्वापिनारीवाविधवामुने मासोपवासंकुर्वीतगुरुविप्राज्ञयाततः आश्विनस्यामलेपक्षेए
कादश्यामुपोषितः व्रतमेतत्तुगृण्हीयाद्यावत्त्रिंशद्दिनावधि वासुदेवंसमुद्दिश्यकार्तिकंसकलंनरः मासंचोपवसेद्यस्तुस
मुक्तिफलभाक्भवेत् अच्युतस्यालयेभक्त्यात्रिकालंकुसुमैःशुभैः मालतींदीवरैःपद्मैःकमलैःसुसुगंधिभिः कुंकु
मागरुकर्पूरैर्विलेप्यंचसुगंधकैः नैवेद्यैर्धूपदीपाद्यैरर्चयेत्तुजनार्दनम् मनसाकर्मणावाचापूजयेद्गरुडध्वजम् कुर्यान्न
रस्त्रिषवणंमहद्भक्त्याजितेंद्रियः नाम्नामेवतथालापंविष्णोःकुर्यादहर्निशम् मुखेनचस्तुतिर्वाच्यांमृषावादंविवर्जयेत्
सर्वसत्वेदयायुक्तःशांतवृत्तिरहिंसकः सुप्तोवाआसनस्थोवावासुदेवंप्रकीर्तयेत् स्पृष्ट्वालोकानगंधादिस्वादून्नंनच
कीर्तयेत् अंनस्यवर्जयेत्सर्वेआत्मनःशुभकांक्षिभिः गात्राभ्यंगंशिरोभ्यंगंतांबूलंचविलेपनम् व्रतस्थोवर्जयेत्सर्वंयच्चान्य
त्रनिराकृतम् व्रतस्थोनसदाकिंचि दुष्कर्मस्थानचालयेत् देवतायतनेतिष्ठेन्नगृहस्थश्चरेद्व्रतम् कृत्वामासोपवासंतुसं
यतात्माजितेंद्रियः ततोर्चयेन्महाभक्त्याद्वादश्यांगरुडध्वजम् पूजयेत्पुष्पमालाभिर्गंधधूपविलेपनैः वस्त्रालंकारवा

द्दैश्चतोषयेदच्युतंनरः स्नापयेत्तुहरिंभक्त्यातीर्थचंदनवारिभिः चंदनेनानुलिप्तांगंपुष्पधूपैरनेकशः वस्त्रदानादिभिश्चैव
भोजयेच्चद्विजोत्तमान् दद्याच्चदक्षिणांतेभ्योतांबूलादिचदापयेत् क्षमापयित्वाविप्रांश्चविसृजेन्नियतोव्रती एवंवित्तानु
सारेणभक्तियुक्तेनचेतसा एवंमासोपवासंतुकृत्वाभ्यर्च्यजनार्दनम् भोजयित्वाद्विजांश्चैवविष्णुलोकेमहीयते एवंमा
सोपवासस्यत्रिंशदाब्दिद्विजोत्तमः निर्वापयेत्ततश्चोद्येविधिनायेनतच्छृणु कारयेद्वैष्णवंयज्ञमेकादश्यामुपोषितः पूज
यित्वाचदेवेशमाचार्याज्ञयाहरिम् अर्चयित्वाहरिंभक्त्याअभिवाद्यगुरुंतथा ततोनुभोजयेद्विप्रान्यथाशक्तियथावि
धि विशुद्धकुलचारित्रान्विष्णुपूजनतत्परान् पूजयित्वाद्विजान्सम्यक्त्रिंशद्वैभोजयेत्सुधीः तावंतिवस्त्रयुग्मानि
आसनादिकमंडलून् योगपट्टादिशुभ्राणिब्रह्मसूत्राणिचैवहि दद्याच्चैवद्विजाग्र्येभ्योपूजयित्वाप्रणम्यच ततोनुक
ल्पयेच्छय्यांशस्तास्तरणसंस्थिताम् वितानसंयुतांश्रेष्ठांसोपधानामलंकृतां विष्णोस्तुकारयेन्मूर्त्तिंकांचनींतुस्वशक्ति
तः न्यसेत्तस्यांतुशय्यायांअर्चयित्वास्रगादिभिः आसनंपादुकेछत्रंवस्त्रयुग्ममुपानहौ पवित्राणिचपुष्पाणिशय्या
यामुपकल्पयेत् एवंशय्यांतुसंकल्प्यप्रणिपत्यचतान्द्विजान् प्रार्थयेच्चानुमोदार्थंविष्णुलोकंव्रजाम्यहम् एवमभ्य
र्चिताविप्रावदेयुर्व्रतिनंतदा व्रजव्रजनरश्रेष्ठविष्णोःस्थानमनामयम् विमानंवैष्णवंदिव्यंसशय्यापरिकल्पितम्
तेनविष्णुपदंयाहिसदानंदमनामयं ततोविसर्जयेद्विप्रान्प्रणिपत्यानुगम्यच ततस्तुपूजयेद्भक्त्यागुरुंज्ञानप्रदाय

कम् तांशय्यांकल्पितांसम्यग्गुरुंव्रतसमापकम् प्रणम्यशिरसाशांतोगुरवेप्रतिपादयेत् एवंपूज्यहरिंविप्रगुरुंज्ञानप्रकाशकं
कृत्वामासोपवासंचनिर्वाप्यविधिवन्मुने कुलानांशतमुद्धृत्यविष्णुलोकंव्रजेन्नरः यस्मिन्वरेमहापुण्येकुलेमासोपवासकृ
त् सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते नरोमासोपवासानांकर्ताप्युण्यकृतांवरः पितृमातृकुलाभ्यांचसमंविष्णुपुरंव्रजे
त् नारीयाविधवाजातायथोक्तव्रतचारिणी कृत्वामासोपवासंचव्रजेद्विष्णुंसनातनम् नारदउवाच कृदुष्करमि
मिदंदेवमूर्छाग्लानिकरंपरं व्रतंमासोपवासाख्यंभक्तिंजनयतेच्युते पीडितस्यभृशंदेवमुमूर्षोर्व्रतिनस्तदा त्यागोवा
नुग्रहोवाथकिंतुकार्यंपितामह ब्रह्मोवाच व्रतस्थंकर्षितंदृष्ट्वामुमूर्षुंवातपोधनम् दृष्ट्वातुब्राह्मणास्तस्यकुर्युःसम्यग
नुग्रहम् अमृतंपाययेत्क्षीरमिच्छमानंसकृन्निशि यथेहनवियुज्येतप्राणैःकृशपीडितोव्रती अतिमूर्छान्वितंक्षीणंमुमूर्षुं-
कृशपीडितं पाययित्वाशृतंक्षीरंरक्षेद्दत्वाफलानिच अहोरात्रंवयोनित्यंव्रतस्थःपरिपालयेत् पयोमूलंफलंदत्वारक्षेच्च
व्रतिनंसदा एवंमासोपवासस्थआरूढप्राणसंशये अव्रतघ्नगुणैर्दिव्यैःपरिषेद्ब्राह्मणाज्ञया तैर्नव्रतंविनिघ्नंतिहविर्वि
प्रानुमोदनम् क्षीरौषधंगुरोराज्ञात्पयोमूलंफलानिच एवंकृत्वापिरक्षेतसगुडंपायसंतथा पाययेत्क्षीरतोयंचव्रतंप
श्चात्समापयेत् अथविष्णवर्चनंविष्णुर्दाताविष्णुर्व्रतीतथा सर्वंविष्णुमयंज्ञात्वाव्रतस्थंक्षीणमुद्धरेत् यदामुमूर्षुर्निश्चे
ष्टःपरिग्लानोतिमूर्छितः नदासमुद्धरेत्क्षीणंइच्छंतंविमुखंस्थितं परिपाल्यव्रतीदेहंव्रतशेषंसमापयेत् यथोक्तंद्विगुणं

तस्यफलंविप्रमुखोदितम् इंद्रियार्थेषसक्तोयोसदैवविमलामतिः परितोषयतेविष्णुंनोपवासोयतात्मनां किंतस्यबहुभिस्तीर्थैः
स्नानहोमजपव्रतैः अजितोपींद्रियगणोजितोयेनस्वचेतसा जितेंद्रियःसदाशांतः सर्वभूतहितेरतः वासुदेवपरोनित्यंनक्लेशंक
र्तुमर्हसि कृत्वानूनंयथोक्तंतुवैष्णवंपदमव्ययम् प्राप्नोतिपुरुषोन्नित्यंपुनरावृत्तिर्दुर्लभम् येस्मरंतिसदाविष्णुंविशुद्धेनांत
रात्मना तेप्रयांतिभयंत्यक्त्वा विष्णुलोकमनामयम् ततोविष्णवर्चनंसम्यक्प्रातःसायान्हमेवच कीर्त्तयंत्यच्युतंयेवैतेतरं
तिभवार्णवम् आनंदितोथदुःखार्तःक्रुद्धःशांतोथवाहरिम् एवंयःकीर्तयेद्भक्त्यासगच्छेद्वैष्णवींपुरीम् गर्भजन्मजरारो-
गदुःखसंसारबंधनैः नबाध्यतेनरोनित्यंवासुदेवंमनःस्मरन् स्थावरेजंगमेसत्वेस्थूलसूक्ष्मेशुभाशुभे विष्णुंपश्यतिसर्वत्रयः
सविष्णुःस्वयंनरः सर्वंविष्णुमयंज्ञात्वात्रैलोक्यंसचराचरम् यस्यशांतामतिस्तेनपूजितोगरुडध्वजः इदंकल्पानुकल्पाभ्यां
व्रतानामुत्तमव्रतम् विष्णुलोकमवाप्नोतिचक्रपाणेःप्रसादतः विधिर्मासोपवासस्ययथावत्परिकीर्तितः कृतस्नेहान्मुनि-
श्रेष्ठसर्वलोकहितायच कृत्वाविष्णवर्चनंभक्त्यानरोविष्णुपुरींव्रजेत् नाभक्तायप्रदातव्यंनदेयंदुष्टचेतसे॥ ॥इ
तिविष्णुरहस्योक्तंमासोपवासव्रतंसंपूर्णम् अथआषाढशुक्लैकादशीमारभ्यकार्त्तिकशुक्लैकादशीपर्यंतंधारणापा
रणाव्रतंलिख्यते कृष्णउवाच शृणुकौंतेयवक्ष्यामिधारणापारणाव्रतम् बांधवादिवधोत्पन्नदोषघ्नंचसुखप्रदम्
कुलवृद्धिकरंचैवसर्वेंद्रियनियामकं चातुर्मास्येतथाचादौमासिकौंतेयसुव्रतः पुण्याहंकारयेत्पूर्वमेकादश्यांशुभेदिने॥

पश्चात्संकल्प्य राजेंद्र तदारभ्य व्रतं चरेत् आदौ मासि तथा चांते चातुर्मास्यमथापि वा एकस्मिन्धारणं कार्यं पारणं च तथापरम् उपवासो
धारणं स्यात्पारणं भोजनं भवेत् पारणे तु दिने प्राप्ते अर्घ्यं पूर्वं निवेदयेत् पारणं तु ततः कार्यं मंत्रमष्टाक्षरं जपेत् अष्टोत्तरशतं दद्या
दर्घ्यं देवाय तन्मनाः समाप्ते मासि राजेंद्र कुर्यादुद्यापनं बुधैः चातुर्मास्यव्रतं चाथ मासे मासे तु कारयेत् उपवासदिने प्राप्ते पु
ण्याहं कारयेत्सुरा आचार्यं वरयेत्पश्चाद्ब्राह्मणं तु ततः परम् कुर्यात्तु प्रतिमां शुद्धां लक्ष्मीनारायणस्य वै पंचामृतैः स्तथा शु
द्धैस्तुलसीदलचंपकैः मालतीकेतकीभिश्च मल्लिकाकुसुमैस्तथा रात्रौ जागरणं कुर्यात्पुराणपठनादिभिः प्रातःकाले स
मायाते ब्राह्मणांस्तु निमंत्रयेत् मासे विप्राः पंचदश द्विमासे द्विगुणं भवेत् चातुर्मास्ये तथा राजन् तथा विंशति भूसु-
रान् आनीय संख्यया राजन् ब्राह्मणांस्तु शुचिव्रतान् पश्चात्स्नानादिकं कृत्वा देवपूजां समाचरेत् पश्चादग्निं समाधाय-
होमं कुर्याद्यथाविधि निषुसीदेति मंत्रेण जुहुयाच्च तिलौदनम् अ रायिकाणे मंत्रेण जुहुयाच्च घृतौदनम् अष्टाक्षरेण
मंत्रेण पायसं जुहुयात्ततः लक्ष्मीनारायणं देवं स्थापयेत्तत्र देवताः पूर्णाहुतिं ततो हुत्वा होमशेषं समापयेत् ब्राह्मणा
न्भोजयेत्पश्चादाचार्यं पूजयेत्ततः एवं कृत्वा महाभाग ब्रह्महत्यादिपातकैः मुच्यते नात्र संदेहस्तस्मात्कुरु महाव्रतम्
सुग्रीवस्तु पुरा राजन् हत्वा वालिनमाहवे रामादिष्टं ततो कृत्वा धारणापारणाव्रतम् विमुक्तः सन्तदा दोषान्नानापातकं
संचयात् नारदेन तथा राजन् पूर्वजन्मनि शूद्रतः द्विजानामुपदेशाच्च धारणापारणा कृता होमादिकं विधायाथ तस्य

पुण्यप्रभावतः जितेंद्रियस्ततोजातोब्रह्मलोकादिकांश्चरन् तस्मात्सर्वप्रयत्नेनकुर्याद्धारणपारणम् इंद्रियाणांवशार्थायसर्व
पापापनुत्तये तस्मात्वमपिराजेंद्रकुरुष्वव्रतमुत्तमम् किंदानैस्तपसाकिंवानियमैश्चव्रतैर्यमैः धारणापारणंकुर्याद्व्रतानां
मुत्तमंव्रतम् सर्वयज्ञेषुतीर्थेषु सर्वदानेषुयत्फलम् तत्फलंसमवाप्नोतिकृत्वाधारणपारणं इदंव्रतंमहापुण्यंतपसामुत्त
मंतपः तस्मात्त्वमपिराजेंद्रकुर्विदंविधिपूर्वकम् बांधवादिवधाद्दोषान्मुच्यतेनात्रसंशयः इतितंसंभविष्यायविष्णुःस्वां
चपुरींययो वंद्यमानःपौरजनैःसमस्तैःपांडुनंदनैः युधिष्ठिरोपिराजर्षिश्चकारेदंमहाव्रतम् विमुक्तःसर्वपापेभ्योवंशवृ
द्धिःस्ततोभवत् इतिश्रीभविष्यपुराणेधारणापारणव्रतंसंपूर्णम् शुभंभवतु छ छ

अथसंक्रांतिव्रतानिलिख्यंते तत्रादौधान्यसंक्रांतिव्रतं हेमाद्रौस्कांदे नंदिकेश्वरउ॰ अथाहंसंप्रवक्ष्यामिधान्यव्रतमनुत्तमं यत्
कृत्वेहनरोराजन्सर्वान्कामानवाप्नुयात् अयनेविषुवेचैवस्नानंकृत्वायथाविधि व्रतस्यनियमंकुर्यात्ध्यात्वादेवंदिवाकरं करि-
ष्यामिव्रतंदेवत्वद्भक्तस्त्वत्परायणः तत्रविघ्नोनमेभूयात्तवदेवप्रसादतः इत्युच्चार्यलिखेत्पद्मंकुंकुमेनाष्टपत्रकं भास्करंपूर्वपत्रेतु
आग्नेयेचतथारविं विवस्वंतंतथायाम्येनैर्ऋत्येपूषणंतथा अदित्यंवारुणेपत्रेवायव्येतपनंतथा मार्तंडमितिकौबेरऐशान्येभानुमेवच
एवंचक्रमशोभ्यर्च्यविश्वात्मामध्यदेवता कृतांजलिपुटोभूत्वाअर्घ्यंदद्यात्समंत्रकं कालात्मासर्वदेवात्मावेदात्माविश्वतोमुखः व्याधि
मृत्युजराशोकसंसारभयनाशनः इत्यर्घ्यमंत्रः पुष्पैर्धूपैःसमभ्यर्च्यशिरसाप्रणिपत्यच रविंध्यात्वाततोदद्याद्धान्यंप्रस्थंद्विजातये
प्रतिमासंपुनस्तद्वत्सूर्योदेवःसहस्रपात् एवंसदाप्रदातव्यंधान्यप्रस्थंद्विजातये एवंसंवत्सरेपूर्णेकुर्यादुद्यापनक्रियां अर्घ्यपात्रं
हिसौवर्णंकारयेन्मंडलेशुभं द्विभुजंपूजयेद्भानुं रक्तवस्त्रयुगान्वितं धान्यद्रोणेनसहितंतदर्धेनस्वशक्तितः स्वर्णशृंगींरौप्यखु
रींकांस्यदोहांपयस्विनीं रविरूपंद्विजंध्यात्वातत्सर्वंविनिवेदयेत् अग्निष्टोमसहस्राणांफलंप्राप्नोतिमानवः सप्तजन्मसहस्रा
णिधनधान्यसमन्वितः निर्व्याधिर्निरुजोधीमान्रूपवानभिजायते इतिश्रीस्कंदपुराणेधान्यसंक्रांतिव्रतं अथलवणसंक्रांतिव्रतं अ
थातःसंप्रवक्ष्यामिलवणसंक्रांतिमुत्तमं संक्रांतिवासरंप्राप्यस्नानंकृत्वाशुभेजले वस्त्रालंकारसंवीतोभक्तिभावसमन्वितः कुंकुमेनलिखेत्प
द्ममष्टपत्रंसकर्णिकं भास्करंपूजयेद्भक्त्याधान्यप्रस्थसमन्वितः तदग्रेलवणंपात्रंसगुडंस्थापयेत्ततः पूजितस्त्वंयथाशक्त्याप्रसीदम-

मभास्कर लवणंसगुडंपात्रंब्राह्मणायनिवेदयेत् एवंसंवत्सरेपूर्णेभानुंकुर्याद्धिरण्मयं रक्तवस्त्रयुगच्छन्नंरक्तचंदनचर्चितं कंबलंल
वणंपात्रंधेन्वासार्धंद्विजातये प्रदद्याद्भानुमुद्दिश्यविश्वात्माप्रीयतामिति एवंकृत्वायत्पुण्यंप्राप्यतेभुविमानवैः तत्केनगदितुंशक्यंवर्ष
कोटिशतैरपि लवणाचलदानस्य फलंप्राप्नोतिमानवः सर्वकामसमृद्धात्माविमानवरमध्यगः सूर्यलोकेवसेत्कल्पंपूज्यमानःसुरासुरैः
इतिलवणसंक्रांतिव्रतं अथभोगसंक्रांतिव्रतं तत्रैव संक्रांतिदिवसंप्राप्यस्नात्वाचैवशुचिव्रतः सुवासिन्यैप्रदातव्यंनानासौभाग्य
कंचुकान् कुंकुमंकज्जलंचैवसिंदूरंकुसुमानिच सुगंधीनिचद्रव्याणितांबूलंचशताधिकं तंदुलान्गुडसंयुक्तान्ताभ्योदद्याद्विचक्ष
णः दद्यात्सहृष्टमनसामिथुनेभ्योयथाविधि भोजयित्वायथाशक्त्यावस्त्रयुग्मंप्रदापये एवंसंवत्सरस्यांतेरविंसंपूज्यपूर्ववत् धे
नुंसदक्षिणांदद्यात्सपत्नीकद्विजायते स्यात्सुखीसर्वमर्त्येषुभोगीजन्मनिजन्मनि इतिभोगसंक्रांतिव्रतं अथभोगसंक्रांतिव्र
तत्रैव संक्रांतिवासरेस्नानंकुर्यात्तैलेनवैसुधीः हेमपात्रंघृतयुतंहिरण्येनसमन्वितं स्वरूपंवीक्ष्यतत्पात्रेब्राह्मणायनिवेदये
त् एकभक्तंततःकृत्वापूजयित्वारविंव्रती व्रतांतेकांचनंदद्यात् घृतधेनुसमन्वितं इतिरूपसंक्रांतिः अथतेजःसंक्रांति
व्रतं शालितंदुलसंयुक्तंकरकंकारयेच्छुभम् दीपंसंस्थाप्यतन्मध्येज्वलितंतुस्वतेजसा सन्मुखेमोदकंस्थाप्यब्राह्मणाय-
निवेदयेत् रविंसंपूज्ययत्नेनअर्घ्यंदद्याद्विचक्षणः एकभक्तंचकर्तव्यंयावत्संवत्सरंभवेत् संवत्सरेतुसंपूर्णेकुर्यादुद्यापनंबुधः
शोभनंदीपकंकार्यंसुवर्णेनतुनारद ताम्रस्यकरकंकुर्याद्दीपंन्यस्यनत्तोपरि कपिलासहदातव्याकरकेणद्विजातये इतिते

जः संक्रांतिः अथसौभाग्यसंक्रांतिव्रतं संक्रांतिवासरेप्राप्तेस्नात्वाचैवशुचिव्रतः पूर्ववद्भानुमभ्यर्च्यतथाचैवसुवासि
नीं सौभाग्याष्टकसंयुक्तंवस्त्रयुग्मंतुयोषिते विप्रायवेदविदुषेभक्त्यातत्प्रतिपादयेत् एवंसंवत्सरेपूर्णेकुर्याद्ब्राह्मणपूजनं पर्व
तंलवणंकृत्वायथाविभवसारतः कांचनंकमलंकृत्वाभास्करंचैवकारयेत् गंधपुष्पादिनापूज्यविप्रायप्रतिपादयेत् ऐक्षवंतृण
राजंचनिष्पावाश्चसुशोभनाः धान्यकंजीरकंचैवकौसुंभंकुंकुमंतथा लवणंचाष्टमंतत्रविप्रायविनिवेदयेत् इतिसौभाग्यसं
क्रांतिः अथतांबूलसंक्रांतिव्रतं संक्रांतौप्रातरुत्थायस्नात्वाचैवयथाविधि रविमभ्यर्च्ययत्नेनचंदनेनसुगंधिना तांबूलं
चंदनाद्यैश्चपूजयेच्चद्विजोत्तमान् एवंसंवत्सरंकार्यंसंक्रांतौरविपूजनं तांबूलंभक्षयेद्विप्रैःकारयेत्तत्पुरःसरं वत्सरांतेतुकमलंकृ
त्वाचैवतुकांचनं पर्णकोशंप्रकुर्वीततथापूगफलालयं चूर्णभांडंप्रकुर्वीतपूगप्रस्फोटनंतथा मुखवासादिचूर्णानांभांडानिविवि
धानिच द्विजदांपत्यमावाह्यसर्वोपस्करसंयुतैः द्रव्यैस्तुपूजयेद्भक्त्याषड्रसैर्भोजयेद्द्विजान् उपकल्पितंतुयत्किंचिद्ब्राह्मणायनि
वेदयेत् एवंकरोतियानारीतांबूलाख्यंव्रतोत्तमं भर्त्रापुत्रैश्चपौत्रैश्चमोदतेस्वगृहेसदा इतितांबूलसंक्रांतिः अथमनो
रथसंक्रांतिव्रतं गुडेनपूर्णकुंभेनवत्सरंतुस्वशक्तितः संक्रांतिवासरेदद्याद्ब्राह्मणायकुटुंबिने एवंसंवत्सरेपूर्णेप्रतिसंक्रम
णेर्चिते रविमभ्यर्च्ययत्नेनकुर्यादुद्यापनंशुभं गुडस्यपर्वतंकृत्वावस्त्ररत्नैश्चभूषितं अयनेचोत्तरेदद्याद्वित्तशाठ्यंनकारयेत्
यंयंकामयतेकामंतंतंप्राप्नोतिपुष्कलं शेषंधान्यसंक्रांतिवत् इतिमनोरथसंक्रांतिव्रतंसंपूर्णं अ

थअशोकसंक्रांतिव्रतं अयनेविषुवेचैवव्यतीपातोभवेद्यदि एकभुक्तंततःकुर्यात्तिलदानप्रपूर्वकं कांचनंभास्करंकृत्वायथावि
भवशक्तितः स्नापयेत्पंचगव्येनगंधपुष्पैस्तुपूजयेत् संछाद्यरक्तवस्त्राभ्यांताम्रपात्रेनिधायच भास्करायनमःपादौपूजयामि
रवयेन॰ जंघेपू॰ आदित्याय॰ जानुनी॰ दिवाकराय॰ ऊरूपू॰ अर्यम्णेन॰ कटीपू॰ भानवे॰ उदरं॰ पूष्णेन॰ बाहूपू॰ मित्राय॰स्तनौ॰
विवस्वते॰ कंठंपू॰ सहस्रांशवे॰ मुखंपू॰ तमोहंत्रे॰ नेत्रेपू॰ तेजोराश॰ शिरःपू॰ अरुणसारथिनेन॰ सर्वांगंपूजया॰ अर्घ्यंचपूर्वव
त्कार्यंब्राह्मणायनिवेदयेत् एवंसंवत्सरेपूर्णेकांचनेनदिवाकरं संपूज्यपद्मकुसुमैर्यथाविभवसारतः धूपैर्दीपैश्चनैवेद्यैरक्तवस्त्रे
णावेष्टितं ततोहोमंप्रकुर्वीतरविमंत्रेणनारद द्वादशाःकपिलादेयावस्त्रालंकारसंयुताः अशक्तःकपिलामेकांवित्तशाठ्यविव-
र्जितः आयुरारोग्यमैश्वर्यंभार्यापुत्रसमन्वितः इतिअशोकसंक्रांतिः अथआयुःसंक्रांतिः अथान्यांचप्रवक्ष्यामिआयुः
संक्रांतिमुत्तमां संक्रांतिदिवसेस्नात्वापूजयेच्चदिवाकरः कांस्येक्षीरघृतंदद्यात्सहिरण्यंस्वशक्तितः मंत्राःपृथकूचवक्तव्याःपू
जासैवप्रकीर्तिता तत्क्षीरंसुरभीजातंपीयुषंसमसर्पिषुक् आयुरारोग्यमैश्वर्यमतोदेहिद्विजातये अनेनविधिनावर्षंसर्वंद
द्यात्तंद्विनः उद्यापनादिकंसर्वंधान्यसंक्रांतिवद्भवेत् निर्व्याधिश्चैवदीर्घायुस्तेजस्वीकीर्तिमांस्तथा अपमृत्युभयंनास्तिजीवेच्चश
रदांशतं इतिआयुःसंक्रांतिः अथधनसंक्रांतिव्रतं संक्रांतिदिवसेपूज्योभास्कररक्तविधानतः कलशंनिर्व्रणंगृह्यवारि
पूर्णंनिधापयेत् सुवर्णप्रतिमांकृत्वाप्रतिमासंतुदापयेत् विधिनानेनवर्षांतेप्रीयतांमेदिवाकरः भानोरुदयवेलायांस्नात्वास

र्वभिप्रूजयेत् कृसरान्नेनपक्वान्नघृतयुक्तेनभूरिणा ब्राह्मणान्भोजयेद्धलाव्यापे प्राप्तेदिवाकरे पूजाविधानंतद्वत्तुधान्यसंक्रांति
वद्भवेत् सौवर्णकलशंकृत्वासूर्यंचोपरिविन्यसेत् सुवर्णघटितंपद्मंसूर्यायविनिवेदयेत् गोदानंतत्रदातव्यमेवंसंपूर्णतांव्रजेत्
जन्मनांशतसाहस्रंधनयुक्तोभवेन्नरः आयुरारोग्यसंपन्नोसूर्यलोकेमहीयते इतिधनसंक्रांतिः अथसर्वसंक्रांत्युद्या
पनंलिख्यते हेमाद्रौमात्स्ये नंदिकेश्वरउवाच अथान्यदपिवक्ष्यामिसंक्रांत्युद्यापनंफलं विषुवेचायनेचैवसंक्रां
तिव्रतमाचरेत् पूर्वेद्युरेकभक्तेनदंतधावनपूर्वकं संक्रांतिवासरेप्राप्तेतिलैःस्नानंसमाचरेत् रविसंक्रमणेभूमौचंदनेनाष्टपत्र-
कं पद्मंसकर्णिकंकुर्यात्तस्मिन्नावाहयेद्रविं कर्णिकायान्यसेद्देवंआदित्यंपूर्ववत्तथा नमःसोमार्चिषेचाग्नेयाम्येऋग्मंडलायच
नमःसवित्रेनैर्ऋत्येवारुणेतपनंबुधः वायव्येमित्रमावाह्यपूजयेत्तुयथाक्रमं मार्तंडउत्तरेविष्णुमीशान्येविन्यसेत्सदा द्विजा
यसोदकंकुंभंतिलपात्रंहिरण्मयं कमलंतुयथाशक्त्याकारयित्वानिवेदयेत् चंदनोदकपुष्पैश्चदेवायार्घ्यंन्यसेद्भुवि विश्वाय
विश्वरूपायविश्वधाम्नेस्वयंभुवे नमोनंतनमोधात्रेऋक्सामयजुषांपते अनेनविधिनासर्वमासिमासिसमाचरेत् वत्सरांते
तथाकुर्यात्सूर्यंद्वादशधानरः संवत्सरांतेघृतपायसेनसंतर्प्यवह्निद्विजपुंगवान्वै कुंभान्पुनर्द्वादशधेनुयुक्तान्समर्प्यहैरण्म
यपद्मगर्भात् पयस्विनीःशीलवतीश्चदद्यात्ताम्राःस्वरूपेणसुवर्णयुक्ताः गावोथवासमत्रकांस्यदोहामाल्यांबरावात्तुरोप्यश
फः द्वेवाप्यशक्तःकपिलामथैकांनिवेदयेद्ब्राह्मणपुंगवाय हैमींचदद्यात्पृथिवीमशेषांकृत्वाथरोप्यामथवायताम्रीं ॥पैष्टीमश

क्रोथतिलैर्विधायसौवर्णस्तुर्येणसमंप्रदद्यात् नवित्तशाठ्यंपुरुषोत्रकुर्यात्कुर्वन्नधोयातिनसंशयोत्र यावन्महेंद्रप्रमुखानगें
द्राःपृथ्वीचसप्ताब्धियुनेहतिष्टेत् तावत्सगंधर्वगणैरशेषैःसंपूज्यतेनारदनाकपृष्टे ततस्तुभूमौद्विजवर्यजोवाक्षत्राधिपःस्या
त्कुलशीलयुक्तः स्पष्टेर्सुखेपंगवपुःसभार्यःप्रभूतपुत्रोरिपुवंदितांघ्रिः इतिसंक्रांत्युद्यापनं अथधनसंक्रमणेविशे
षः रवौधनुःस्थेसंप्राप्तेस्नायादर्णोदयेसदा सर्वंनैत्यंचसंपाद्यमुहूर्तेनगतोरविः कृसरान्नेनविप्रान्वैभोजयेत्घृतपायसैः
दक्षिणोर्णैश्वसंतोष्यस्वयंभुंजीतवाग्यतः एवंनिरंतरंकुर्यादशक्तोभानुवासरे इहभुक्त्वातुभोगान्वैसूर्यलोकंचगछति इति
धनुर्मासमहिमा अथरवेर्घृतस्नपनंहेमाद्रौ भविष्येउत्तरेत्वयनेप्राप्तेघृतप्रस्थेनयोहरिं स्नापयित्वाब्राह्मणेभ्योयःप्रय
छतिमानदः घृतधेनुंतथादद्याद्ब्राह्मणायकुटुंबिने सर्वपापविनिर्मुक्तःसूर्यलोकेचिरंवसेत् ततोभवतिभूपालोप्रजानंदवि
वर्धनं इतिउदगयनेघृतस्नपनं अथमकरसंक्रांतौशिवरहस्येघृतकंबलदानमहिमा माघेमासिमहादेवंयःकुर्यात्
घृतकंबलं सभुक्त्वासकलान्भोगानंतेमोक्षंचविंदति नराभूपतयोजाताघृतकंबलदानतः जातिस्मराश्वतेजातामुक्ताश्वां
तेशिवार्चकाः पुरासुनागसंविप्रंजाबालिंश्रुतिपारगं पप्रछभूलकर्णाभोधर्मंदारिद्र्यनाशकं सुनागाउवाच असि
तायाःसितायावाधेनोर्घृतमनुत्तमं संपादनीयंयत्नेनघनीभूतंचशोधिनं तत्घृतंतुलयोत्तीर्णप्रस्थंसार्धशतत्रयं महाकंब
लमेतद्धिघृतस्यपरिकीर्तितं तदर्धंवातदर्धंवासायंनेयंशिवालये घृतेनान्येनदेवेशमभिषिंच्यमहेश्वरं ततोघनघनीभूत

मर्पयेच्छिवमस्तके ततस्तिलैः सर्षपैश्चबिल्वपत्रैश्चकोमलैः हेमपद्मैश्चदेवेशः पूजनीयोमहेश्वरः धूपदीपादिकंदेयंमहानैवेद्य
मादरात् ततोनीराजनंदत्वादेयः पुष्पांजलिस्ततः प्रदक्षिणांनमस्कारान्कृत्वाचतदनंतरं शैवंपंचाक्षरंजप्त्वाशिवायैतन्निवेदये
त् ततोजागरणंकार्यंशिवस्मरणपूर्वकं ततः प्रातः समुत्थायकृत्वास्नानादिकंपुनः पूजनीयोमहादेवोघृतसेचनपूर्वकं भोजनी
यास्तथाशैवाभक्ष्यैर्भोज्यैश्चयत्नतः ततः स्वयंचभोक्तव्यंबंधुभिः सहसादरं अनेनतवदारिद्र्यंनाशमेष्यतिसर्वथा भोगांश्चवि
पुलान्भुक्त्वाशिवलोकंगमिष्यसि इतिमकरसंक्रांतौघृतकंबलदानंसमाप्तं अथमकरसंक्रमणेदधिमंथनदानं त
द्विधिः मासपक्षाद्युल्लिख्य ममेहजन्मनिजन्मांतरेचअखंडितसौभाग्यपुत्रपौत्रधनधान्याभिवृद्ध्यर्थंश्रीसवितृसूर्यनारा
यणप्रीत्यर्थंसूर्यनारायणस्वरूपिणेब्राह्मणायदधिमंथनदानंकरिष्ये इतिसंकल्प्य तिलोद्वर्तनपूर्वकंस्नात्वाशुचिवस्त्रं
परिधाययशोदाकृष्णासुवर्णप्रतिमांसंपूज्यप्रार्थयेत् यशोदेत्वंमहाभागेसुतंदेहिमनोरमं पूजितासिमयादेविदधिमंथनभा
जने श्रीकृष्णपरमानंदसंसारार्णवतारक पुत्रंदेहिमनोज्ञंचऋणत्रयविमोक्षणं इतिप्रार्थ्य दानमंत्रः गृहाणत्वंद्विजश्रे-
ष्ठदधिमंथनभाजनं नवनीतेनसहितंदेवक्यासहितंहरिं प्रसादः क्रियतांमह्यंसूर्यरूपनमोस्तुते ब्रह्मांडपुराणेरंगदान
महात्म्येरूपींप्रतिदुर्वाससोपदिष्टं अथकथा सूतउवाच पीडिताहंदरिद्रेणअपुत्राचतपोधनं तपसोभंगभीत्या
चयत्नंनाचरतेपतिः ममसर्वस्वमेकागौः स्वल्पदोहावयोमहत् जीवनंममतक्रेणधर्मवार्तागरीयसी केनोपायेनभोब्रह्म

न् तन्मेब्रूहिसुखंमम दुर्वासाउवाच दानंदेहिचसुभगेयेनपूर्णमनोरथाः नंदजायासुतंलेभेब्रह्माद्यैःपूजितंमहत्
श्रीकृष्णाख्यंपरंतत्त्वंयोगिभिश्चदुरासदं दधिमंथनदानंचपुत्रप्राप्तिकरंपरं नान्यदस्तिदरिद्राणांदानादस्मात्कथंचन तस्मात्त्वम
पिदेयंमेक्षुधितायतपस्विने भविष्यतितवसुतोचिरंजीवीशुचिव्रतः विरच्यस्वस्तिकंपूर्वमनुलिप्यमहीतलं द्रोणमानंधान्यपुंजं
गोधूमैश्चविशेषतः दध्यमत्रकमासाद्यकृष्णलीलाहृदिस्मरन् संसिद्धमथनेतस्मिन्सौवर्णींप्रतिमांतथा संकल्पादिविधायाशु
पूज्यभाजनमंथकं हरिद्राकुंकुमाद्यैश्चदधिभांडंविलेपयेत् रक्तसूत्रेणसंवीतंरक्तवस्त्रेणवेष्टयेत् माल्यैरन्यैश्चसंयुक्तेदेवीमावा
हयेत्तथा सूर्यंचावाहयेद्द्वंदेदीपानष्टौप्रदीपयेत् लड्डुकान्पृथुकान्लाजान्इक्षुखंडानिवैतथा नानाविधानिखाद्यानिसमंता
त्स्थापयेत्ततः कृष्णप्रीतिकरंह्येतद्धनधान्यसमृद्धिदं क्षौमंवासःपृथुकटितटेबिभ्रतीसूत्रनद्धंपुत्रस्नेहस्नुतकुचयुगंजातकंपं
चसुभ्रूः रज्वाकर्षश्रमभुजचलत्कंकणौकुंडलेचस्विन्नंवक्त्रंकबरविगलन्मालतीनिर्ममंथ परिधीवस्त्रमासाद्ययाचेजननींह
रिः गृहीत्वादधिमंथानंन्यषेधत्प्रीतिमावहन् नानाखाद्यैर्वारितोपिनचमुंचतिमाधवः अंकमारुह्यस्तन्यंसपिबन्मुखंविलोकयन्
विचित्रैःपट्टकूलैश्चगंधमाल्यैर्विशेषतः पूजयित्वाप्रसाद्यैवंयशोदांपुत्रवत्सलां यशोदेत्वंमहाभागेसुतंदेहिमनोरमं पूजितासिम
यादेविदधिमंथनभाजने श्रीकृष्णपरमानंदसंसारार्णवतारक पुत्रंदेहिमनोज्ञंमेऋणत्रयविमोक्षणं ब्राह्मणंवेदवेत्तारमुपवेश्य
सुखासने गंधमाल्यैश्चसंपूज्यदानंदद्याद्द्विजातये गृहाणत्वंद्विजश्रेष्ठदधिमंथनभाजनं नवनीतेनसहितंदेवक्यासहितंहरिं

प्रसादः क्रियतां मह्यं सूर्यरूपनमोस्तुते दुर्वाससोपदिष्टा सा द्रोणभार्या सुलोचना मकरस्थे यदा सूर्ये तिलोद्वर्तनपूर्वकं स्नात्वा
च जाह्नवीतोये संप्रार्थ्य मुनिपुंगवं पूजयित्वा मुनिं सापि अददद्दधिमंथनं अश्वत्थामानं च सुतं दधिमंथनदानतः रूपी लेभे स्वय
शः संऋणत्रयविमोक्षणं मुक्ता दारिद्र्यदुःखात्सा बभुजे भोगमुत्तमं एवं पूर्वं स्वरूपी कृत्वा आनंदे समपद्यत एवं या कुरुते नारी वि
त्तशाठ्यविवर्जिता सर्वान्कामानवाप्नोति सूर्यलोके महीयते इति श्रीब्रह्मांडपुराणे मकरसंक्रांतौ दधिमंथनदानं संपूर्णं अ
थ तांबूलोद्यापनं युधिष्ठिर उवाच तांबूलदानमाहात्म्यं कथयस्व मम प्रभो उद्यापनविधिं तस्य सर्वकामार्थसिद्धये
श्रीकृष्ण उवाच सर्वेषामेव दानानां तांबूलं चोत्तमं स्मृतं आनंदो दीर्घमायुष्यं सौमनस्यं च पुष्टिदं सौभाग्यं चंदनादि
भ्यो विद्यालाभस्तथैव च एतच्चतुष्टयं राजन् तांबूलान्लभते नरः क्षुत्पिपासाहरं स्वादु सौभाग्यं निर्मलं स्मृतं द्वात्रिंशत्पत्रकै
र्युक्तं पूगीफलसमन्वितम् एलालवंगकर्पूरैर्युक्तं तांबूलमुच्यते यथालाभं भवेद्वापि देयं द्विजवराय च द्विजाभावे सुवासिन्यै तद
भावे कुमारिकां उद्यापनं प्रकर्तव्यं यथाविभवसारतः शुभे द्विमासे कर्तव्यं सुक्षेत्रे वा हि केवलं ततः पंच सप्त च सद्विप्रान् सपत्नी-
कान्प्रपूजयेत् पूर्वाण्हरात्रौ संपूज्य लक्ष्मीनारायणावुभौ उमामहेश्वरौ पूज्यौ ब्रह्माणं सावित्र्या सह रतिं च पंचबाणं च पूजये
च्च यथाविधि ऋद्धिं सिद्धिं विघ्नराजं लोकपालांश्च पूजयेत् रात्रौ पूजा प्रकर्तव्या षोडशैरुपचारकैः तांबूलोपस्करांस्तत्र संस्था
प्योत्तरदेवताः पुरुषोत्तमाय॰ शार्ङ्गपाणये॰ गरुडध्वजाय॰ अनंताय॰ यज्ञपुरुषा॰ पुंडरीकाक्षाय॰ नित्याय॰ वेदगर्भाय॰ गो

वर्धनायनमः सुब्रह्मण्या॰ शौरिणेनमः ईश्वरायन॰ एतानिद्वादशनामानिपूजनेहवनेतथा घृतंवापायसंवापिपंचामृत
तिलोदनं तत्तन्मंत्रैश्चहोतव्यंअष्टाविंशतिसंख्यया पर्णस्थापनपात्रंचचूर्णपात्रंतथैवच स्वर्णरौप्यमयंवापिपैत्तलंसीससंभवं
सर्वशोभासमायुक्तांलोहजांपूगभाजिकां तेषांपूजाप्रकर्तव्यागंधपुष्पादिभिस्तथा पूर्णाहुतिंततःकुर्याद्ब्राह्मणान्भोजयेत्त
तः तांबूलंसुशुयोदद्याद्ब्राह्मणेभ्योतिभक्तितः मेधावीसुभगःप्राज्ञोदर्शनीयश्चजायते फलेनतृप्यतेब्रह्मापत्रेणभगवान्हरिः
चूर्णमीश्वरतृप्त्यर्थंखदिरोकामतृप्तये कर्पूरैलालवंगादिजातिपत्रफलैस्तथा इंद्राद्यालोकपालाश्चसंतुष्टाश्चभवंतिहि धा
रिदःसुखमाप्नोतिराज्यंप्राप्नोतिचान्नदः दीपदश्चक्षुराप्नोतित्रयंतांबूलदानतः एवंकृतेविधानेनसर्वान्कामानवाप्नुयात्
इतिवायुपुराणेतांबूलव्रतोद्यापनंसंपूर्णं अथमौनव्रतोद्यापनं नारदउवाच ब्रह्मन्ब्रूहिममत्वंवैमौनव्रतफलंशु
भं फलंकिमस्यदानंवाकथमुद्यापनंभवेत् ब्रह्मोवाच शृणुनारदयत्नेनसावधानेनचेतसा चातुर्मास्येव्रतंकुर्यात्मौ
नाख्यंव्रतमुत्तमं यस्याचरणमात्रेणगम्यतेविष्णुमंदिरं विधिंतस्यप्रवक्ष्यामिशृणुनारदमन्मुखात् व्रतमध्येव्रतस्यांतेव्र
तादौवायथाविधि उद्यापनंप्रकुर्वीतव्रतसंपूर्णहेतवे स्नात्वानित्यविधिंकृत्वाकुर्यात्संकल्पमादृतः सर्वतोभद्रमालिख्यत
त्रविष्णुंप्रपूजयेत् लक्ष्म्यायुतंतुदेवेशंब्रह्माद्यादेवतास्तथा द्वारदेशेतुसंपूज्योपुण्यशीलसुशीलकौ जयंचविजयंचैवगदा
दीन्यायुधानिच मंडपंतोरणैर्युक्तंपट्टवस्त्रेणभूषितं सुवर्णप्रतिमांतत्रघंटागरुडलांछितां उपचारैःषोडशभिरर्चयित्वारमा

५

मापतिंरात्रौजागरणंकुर्याद्गीतवाद्यादिमंगलैः घृतेनाष्टोत्तरशतंपावकेहवनंचरेत् अतोदेवेतिमंत्रेणब्राह्मणान् भोजयेत्ततः पीठदानंततः
कुर्यात् घंटादानंतथैवच घंटादानस्यमाहात्म्यंवक्तुंकेनचशक्यते दीपदानंततःकुर्याद्व्रतसंपूर्णहेतवे इदंव्रतंमयापूर्वं कृतमुत्पत्तिहेत
वे तेनव्रतप्रभावेनसृष्ट्युत्पत्तिर्मयाकृता कर्तव्यंतुप्रयत्नेनसर्वकामार्थसिद्धये यइदंकुरुतेवत्ससस्साक्षान्मामकीतनुः इतिश्रीब्र
ह्मांडपुराणेब्रह्मनारदसंवादेमौनव्रतोद्यापनंसंपूर्णं अथप्रपादानविधानं युधिष्ठिरउवाच कथंकृष्णातरंतत्रसंसा
राङ्कह्रन्नराः स्वल्पेनैवतुकालेनतथादानेनमेवद कृष्णउवाच विधानमेकमतुलंसामान्यंनरसेवितं विधिंप्रपाख्यं
राजेंद्रकथ्यमानंशृणुष्वतत् यस्मिन्पथिजलंनास्तिनास्तिग्रामःसमीपगः प्रपातत्रप्रकर्तव्यास्वर्गकामेप्सुभिर्नरैः माघमासे-
सितपक्षेशिवरात्रौविशेषतः कृत्वातुमंडपंरम्यंचतुर्द्वारंसुशोभितं छायाशीतमयीकार्यादृढैस्तंभैर्विशेषतः एकवक्त्राद्विवक्त्रा
वापूर्वोत्तरमुखाशुभा मार्गाणांयत्रबाहुल्यंतत्रकार्याविचक्षणैः दृढांस्ताम्रमयान्रम्यान्मृन्मयान्वासमाहितः पूजांचैवसमादिश्य
स्वर्गकामःप्रयत्नतः आषाढायातियावद्वैजलैःकुंभान्प्रपूरयेत् यवागूतक्रसंयुक्तांव्यंजनैस्तुसमन्वितां अन्यैश्चबहुभिर्द्रव्यैःशर्करापानकैर्यु
तां तक्रंलवणसंयुक्तंतांबूलंचयथाविधि प्रपायांभोजयेच्छन्नमाजलंवाकेवलंशुभं ब्राह्मणार्थंपृथक्पात्रंब्रह्मचिन्हेनलक्षितं स्वस्तिवा
चनपूर्वंतुसर्वमेतत्प्रकल्पयेत् एवंविधाप्रपाप्रोक्ताविद्वद्भिर्धर्मकोविदैः शिशूनांजननीयद्वत्स्तनदाहरणेक्षणा सर्वेषामपिवर्णानांप्र
पावैपोषणेक्षमा नंदंतिपितरस्तस्यतुष्यंतिकुलदेवताः स्तुवंतिमनुजास्तंतुयेनाध्वनिकृताप्रपा क्रतुकोटिशतैर्यत्तुपुण्यंचलभतेनरः

उद्यापनंविधिंकृत्वाप्रपादानमनुत्तमं तस्याःसर्वाणिपात्राणिब्राह्मणायनिवेदयेत् भोजयेच्चयथाशक्त्याब्राह्मणांस्तोषयेत्त
तः प्रपामंदीरदानेनकृतकृत्योभवेन्नरः दुर्भिक्षेग्रासमात्रान्नंग्रीष्मेबिंदुसमंजलं तत्तुल्यंक्रतुलक्षेणद्वयमेतत्ततोधिकं एवंवि
धाप्रपाप्रोक्तामुनिभिस्तत्त्वदर्शिभिः वरावालघुवाराजन्सर्वकामविवर्धिनी कावडिस्थेनयत्नेनमार्गेतत्स्थापयेज्जलं इ
तिभविष्योत्तरपुराणेप्रपादानंसोद्यापनंसंपूर्णं अथलक्षपद्मविधिः ब्रूहिकृष्णाव्रतंश्रेष्ठंमुक्तिदंदुःखनाशनं पुत्रपौ
त्रादिकंचैवकृपयामधुसूदन श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिव्रतंनामाधिकंव्रतं सर्वदुःखहरंस्त्रीणांसर्वका-
मफलप्रदं लक्षपद्मंरंगवल्याशुभेमासिसमारभेत् गुरुशुक्रास्तरहितेशुक्लवर्णेनयत्नतः तंदुलैःपूजयेच्छुक्लैःसूर्यस्थंपूजयेद्धरिं
उद्यापनंसमाप्तौचकुर्याद्यत्नेनसिद्धये संपूर्णंजायतेयेनतच्छृणुष्वप्रयत्नतः सूर्यस्यप्रतिमांकुर्यात्सुवर्णस्यचशक्तितः वेदि
कायांप्रकर्तव्यंस्वस्तिकंपद्मसंयुतं तन्मध्येकलशंस्थाप्यरक्तवस्त्रेणवेष्टितं पंचामृतेनसंस्नाप्यदेवंतत्रप्रपूजयेत् गंधपुष्पा
क्षतैर्दिव्यैर्धूपदीपादिभिःशुभैः सुवर्णनिर्मितंपद्मंदेवायविनिवेदयेत् आचार्यंवरयेत्तत्रवेदवेदांगपारगं ततोहोमःप्रकर्त-
व्यस्तिलाज्यैःपायसैस्तथा अष्टोत्तरंसहस्रंवाशतत्रयमथापिवा गायत्रीमंत्रतःकुर्यान्मूलमंत्रेणहोमयेत् गोदानंचप्रकर्त
व्यं सूर्यस्यहरितुष्टये ब्राह्मणान्भोजयेच्छक्त्याशर्कराघृतपायसैः तेभ्योपिदक्षिणांदद्याद्वित्तशाठ्यविवर्जितः प्रतिमां
कलशंचैवदद्यात्स्रजादिकंतथा अतोदेवेतिमंत्रेणआचार्यायनिवेदयेत् प्रदक्षिणांनमस्कारंकुर्यान्मूर्ध्निकृतांजलिः श्री

कृष्णउ॰ एतत्तेव्रतमाख्यातंस्त्रीणांकामफलाप्तये पुत्रपौत्रादिसंतानवृध्यर्थंकुरुनंदन यानारीकुरुतेभक्त्याहरिःस्तस्याप्रसीदति
इतिसौरपुराणेलक्षपद्मप्रकरणउद्यापनंसंपूर्णं अथलक्षदीपदानविधिः स्कंदउवाच रुद्रसंख्याशिवायाथअर्पयेद्दीपमु-
त्तमं वर्षमेकंतदर्धंवावर्षद्वयमथापिवा लक्षसंख्यानदर्धंवाद्विलक्षंवास्वशक्तितः लक्षदीपंप्रकुर्वंतिनराःपरमधार्मिकाः घृतेनयेप्र
कुर्वंतितेषांपुण्यंवदामिते दीपमालायथाशक्त्याकार्तिकेश्रद्धयान्विताः यावत्कालंप्रज्वलंतिदीपायस्यशिवाग्रतः तावद्युगसहस्राणिस्व
र्गलोकेमहीयते कौसुंभेनचतैलेनदीपान्दद्याच्छिवालये तेनपुण्येनकैलासेवसतेशिवसन्निधौ अतसीतैलसंयुक्तान्दीपान्दद्यात्
शिवालये दशपूर्वान्दशपरान्युक्तोगच्छेच्छिवालये ज्ञानिनोहिभविष्यंतिदीपदानफलेनहि तिलतैलेनयोदीपान्दद्दतेचशिवा
लये तेजस्विनोमहाभागाःकुलेनचशतेनवै तैलयुक्ताःकृतादीपादापिताश्चशिवालये आर्तिक्यंचसकर्पूरंयेकुर्वंतिदिनेदिने ते
प्राप्नुवंतिसायुज्यंनात्रकार्याविचारणा लक्षदीपस्यसंपूर्त्यैकुर्यादुद्यापनंबुधैः उपवासंप्रकुर्वीतपूर्वस्मिन्दिवसेतदा कर्षमात्रसुवर्णे
नतदर्धार्धेनवापुनः प्रतिमांशंकरस्याथउमयासहितस्यच आचार्यंवरयेत्तत्रअभिज्ञंवेदपारगं कलशंस्थापयेद्रात्रौस्वस्तिवाच
नपूर्वकं उमामहेश्वरंरम्यंस्थापयेत्कलशोपरि उपचारैःषोडशभिःपूजयेच्चपृथक्पृथक् रात्रौजागरणंकुर्यात्पुराणश्रवणादिभिः
प्रातःस्नानंविधायाथहोमकर्मसमारभेत् तिलसर्पियवैश्चापिचरुणाबिल्वपत्रकैः आज्यप्लुतैश्चप्रत्येकंसद्योजातादिमंत्रतः शतम
ष्टोत्तरंहुत्वाहोमशेषंसमापयेत् उमामहेश्वरंदेवंपूजयेत्तुपुनर्व्रती प्रतिमांवस्त्रसहितामाचार्यायनिवेदयेत् सहिरण्यांसवत्सां

चधेनुंदद्यात्प्रयत्नतः अनेनविधिनायस्तुव्रतमेतत्समाचरेत् सभुक्त्वाविपुलान्भोगान्शिवसायुज्यमाप्नुयात् ब्राह्मणान्भो
जयेसम्यग्वस्त्रालंकारभूषणैः गुरोराज्ञांगृहीत्वातुभुंजीयाद्बंधुभिःसह एवंयःकुरुतेमर्त्योलक्षदीपप्रदीपनं नरोवाप्यथवाना
रीसोश्नुतेपदमव्ययम् ज्ञानमुत्पद्यतेतस्यसंसारभयनाशनं सर्वपापक्षयकरंजन्मजन्मार्जितंचयत् बाल्येवयसियत्पापंयौ
वनेवापियत्कृतं वार्धकेपिकृतंपापंतत्सर्वंनश्यतिध्रुवं सर्वपापविनिर्मुक्तोभुक्त्वाभोगान्महीतले सर्वान्कामानवाप्याथसो
श्नुतेपदमव्ययं इतिश्रीस्कंदपुराणेलक्षदीपोद्यापनंसंपूर्णं अथलक्षदूर्वापूजनविधिः शूरसेनउवाच लक्ष
पूजाविधिंसम्यक्कथयस्वममाग्रतः यंकृत्वाप्राणिनःसर्वेभवंतिसुखभागिनः श्रावणेचचतुर्थ्यांतुभौमवारोयदाभवेत्
शुभेन्हिवासरेवापिपूजाकर्मसमारभेत् दंपत्यूचतुः चक्रवर्तीनृपोजातोनेनतृप्तिंनवैगमः आवाभ्यांतुदरिद्राभ्यांकिं
देयंतृप्तिकारकं नदीनदजलैर्योब्धिरसंख्येर्नाभिपूर्यते बिंदुमात्रेणसहसासकथंपूर्यतेवद कौंडिन्यउवाच भक्त्याद
त्तंस्वल्पमपिबहुतृप्तिकरंमम अभक्त्यायच्चदंभेनबहुदत्तंवृथाभवेत् दंपत्यूचतुः आवयोर्नगृहेकिंचिच्छुभंवस्तुद्विजोत्त
म पूजायैगणनाथास्यप्रातर्दूर्वांकुराहृताः पूजितोगणनाथस्तुसएकोह्यवशिष्यते भक्त्यादत्तःसएकोपित्वत्प्रसादात्प्रदी-
यतां कौंडिन्यउवाच विरोचनाददौतस्मैश्रुत्वावाक्यंतदीरितं एकंदूर्वांकुरंभक्त्यातेनतृप्तोभवद्द्विजः शाल्यन्नंपाय
सान्नंचनानापक्वान्नमेवच व्यंजनान्यपिसर्वाणिलेह्यचोष्यान्यनेकधा भक्त्याविरोचनादत्तेजातंदूर्वांकुरेखिलं गृहीत्वा

ब्राह्मणस्तंतुबुभुक्षुःपरयामुदा तस्मिन्दूर्वांकुरेभक्त्याद्त्तेतेनाथभक्षिते प्रशमस्याद्द्विजस्यास्य तत्क्षणाज्जठरानलः तृप्तिश्चपर
मातेनप्राप्तातत्क्षणमात्रतः आलिलिंगत्रिशिरसंतृप्तोहंहर्षयन्द्विजः तत्याजकुत्सितंरूपंप्रकटोभूद्गजाननः चतुर्भुजोरविंदा
क्षःशुंडादंडोविराजितः कमलंपरशुंमालांदंतंकरतलेदधत् महार्हमुकुटोराजन्कर्णकुंडलमंडितः दिव्यवस्त्रपरीधानोदिव्य
गंधानुलेपनः उवाचतोप्रसन्नात्मादंपतीसगजाननः वृणीतमंवरंशीघ्रंमनसायोयदृच्छितः तावूचतुः जन्मजन्मांतरेवापि
भक्तिरस्तु हृदावयोः मुनिर्वादीयतांदेवअस्मात्संसारसागरात् नायाचेकिंचिदन्यंहिपादपद्माद्विभानन कौंडिन्यउवाच
इतितद्वाक्यमाकर्ण्यतथेत्युक्त्वागजाननः पुनरालिंग्यप्रददौभक्तिंत्रिपुरसूदनः एतस्मात्दूर्वभारोस्मैदीयतांदीयतेमया असं
ख्यभक्षणाद्देवोनतृप्तिंचसमाययौ दूर्वांकुरेणचैकेनसन्तृप्तिंपरमांययौ इतिसम्यक्समाश्राव्यमहिमानंपरंशुभं दूर्वासमर्पण
भवेच्छ्रवणात्सर्वकामदः इतिहासमिमंभक्त्याश्रृणुतेश्रावयेच्चयः सपुत्रधनमाप्नोतिस्वर्गलोकेचमोदते गजाननेचयोभक्तिं
निष्कामोमुक्तिमाप्नुयात् श्रुत्वापीत्थमितीहासंआश्रयात्संशयंपुनः प्रपेदेत्हृदितंज्ञात्वाकौंडिन्योमुनिरब्रवीत् आश्रयेश्रृणुमेवा
क्यंसंशयस्यापनुत्तये यद्दाभिर्हृदिस्थस्यमयाज्ञातस्यतेनघे एकंदूर्वांकुरंगृह्यगच्छशीघ्रंबिडौजसं वदाशीर्वचनंपूर्वंपश्चा
द्याचस्वकांचनं दूर्वांकुरेणतुलितंगृहीत्वातुइहानय नन्यूनं नाधिकंग्राह्यंतस्यभाराच्छुभानने आज्ञांप्राप्यमुनेःसातुप्रस्थिता
स्वार्थसिद्ध्येएकंदूर्वांकुरंगृह्यशक्रसंनिधिमाययौ तमुवाचाश्रमाशक्रदेहिमेकांचनंशुभं याचितुंत्वांसमायाताभर्तृवाक्या

सुरेश्वर इंद्र उवाच किमर्थं त्वमिहायाता ममाज्ञा प्रेषिता भवत् मयातु प्रेषितं तस्य स्वशक्त्यातु सुवर्णकं आश्रयो
वाच दूर्वांकुरस्य तुलया यद्भवेत्कांचनं शुभं गृहिष्ये शचि भर्तस्त्वं न्यूनं न च ह्यतोधिकं इंद्र उवाच दूर्वांकुरप्रमाणं मे नास्ति द्रव्यं-
शुभानने कुबेरभवनं गच्छ जातरूपं प्रदास्यति इंद्रेण प्रेषिता साध्वी मुनिपत्नी मयासह प्रापितं भवनं तेद्य देहि दूर्वामितं धनं कुबेर उ
वाच अत्याश्चर्यमहं मन्ये मुनेः शक्रस्य चाश्रये मोहाविष्टो न जानाति दूर्वांकुरमितं कियत् कांचनेन किमेतेन बहुलं नेच्छते कुतः आ
ज्ञापयद्धनाध्यक्षो कोशाकारं धनस्य च देहि अस्या धनं स्वेच्छं मुनिपत्न्या ममाज्ञया एवं श्रुत्वा ददौ तस्यै बहुलं कांचनं तु सः नज-
ग्राह भयाद्भर्तुर्दूर्वाधिकविशंकया स्वर्णकारतुलायां तं दूर्वांकुरमधारयत् नाभवत्तुलया तस्य पर्याप्तं तत्तु हाटकं वणिक्तुला समा
नीता तत्रापि नाभवत्समं तैलकारसमानीता न जाना पूरणेक्षमा धटे महत्यतो क्षिप्रं हाटकं दत्तमेकतः दूर्वांकुरे पितत्रापि अधस्ता
द्याति भारतः अन्यदन्यद्ददौ तत्र कुबेरः कांचनं बहु तदपि नाभवत्तेन समं दूर्वांकुरेण च सर्वकोशगतं द्रव्यं दत्तं गुरु ततो भवेत् न
थापि नाभवत्तुल्यं तेन दूर्वांकुरेण च पत्नीमाहूय तां प्राह कुबेरः कौतुकान्वितः कुरु मद्वाक्यतः सुभ्रू र्धटारोहणमग्रतः न समं चेत्स
मारोक्ष्ये निजसत्वरिरक्षया पतिव्रताज्ञया तस्ये धटमारुरुहे तदा ततोपि न समाजाता ततः सर्वां पुरीं ददौ धटमध्ये कुबेरोपि
नोर्ध्वं जातोंकुरस्ततः श्रुत्वा दूतमुखादिंद्रो गजारूढः समाययौ स्वकीयद्रव्यसहितो धटमारुरुहे स्वयं समं न याति दूर्वा वै ध
टभारेण चानघ अधोमुखो गतः श्चिंतां किमेतदिति चिंतयन् विष्णुं हरं च संस्मार तत्रारोहणकाम्यया शिवो विष्णुः समागत्य

धटमारूरुहेतदा तथापिनोर्ध्वगमनं नदादूर्वांकुरस्यहि शिवोविष्णुःकुबेरोपिआश्चर्यसमपद्यत वरुणेंद्राग्निमरुतोकौंडिन्यंच
समाययुः देवादेवर्षयश्चापिसिद्धविद्याधरोरगाः द्विनांनेसमनुप्राप्तेयथागच्छंतिपक्षिणः नमस्कृत्यमुनिंसर्वेप्रोचुर्विद्याधरोर
गाः सर्वेऊचुः अज्ञानंविलयंयातंदर्शनान्नोमुनेतव पूर्वपुण्यभवादग्रेकल्याणंनोभविष्यति तवपल्याहृतंसर्वसर्वेषा
मघनस्फुटं महिमानंनजानीमोदूर्वांकुरसमुद्भवं एवंदूर्वांकुरस्तुलांत्रैलोक्यमपिनाभवत् गजाननशिरस्थस्यत्वयाभक्त्यार्पित
स्यच जानीयान्महिमानंकः सम्यक्दूर्वांकुरस्यच गजाननैकभक्तस्यजपतस्तपतोभृशं तवापिमहिमानंकोजानातिभुवन
त्रये एवमुक्त्वामुनिंसर्वेपूज्यमानंगजाननं सर्वेसभार्याययजुस्तुष्टुवुर्ननृतुर्जगुः नब्रह्मानहरिःशिवेंद्रमरुतोनाग्निर्विवस्वान्म
रुच्छेषोशेषकलानिधिश्चवरुणोनोचंद्रमानाश्विनौ नोवाचामधिपोननैवगरुडोयक्षाधिपोनांगिरामाहात्म्यंपरिवेदवेदनिग
मैरज्ञातरूपस्यते एवंसंतोष्यसर्वेतेदेवदेवंगजाननं मुनिंचसमनुप्राप्य ययुःस्वंस्वंनिकेतनं आश्रयापिततोज्ञात्वादूर्वामा
हात्म्यमुत्तमं विश्वस्ताभर्तृवाक्येनसादूर्वांपर्यपूजयत् विघ्नेश्वरंसर्वदेवंसर्वदूर्वाभिरर्चितं प्रणनामचकौंडिन्यंभर्तारंस
त्यवादिनं उवाचतंप्रसन्नात्मासात्मानंनिंदतीभृशम् मादृशीनैवदुष्टास्तिपतिवाक्येनशासिता विशेषविदुषास्वामिन्वि-
शेषविदुषात्वया सम्यक्कृतंप्रभविभोसर्वभूतदयावता तत्क्षमस्वापराधंमेत्वामहंशरणागता ततःप्रातःसमुत्थायदूर्वामादा
यसत्वरौ स्नात्वादेवंसमभ्यर्च्यदूर्वार्पणमकुर्वतां अनन्यभक्त्याज्ञात्वातौदूर्वामाहात्म्यमुत्तमं सायंप्रातर्देवदेवंपूजयंतौनिरंत

रंसंयत्कायज्ञंग्रंतंदानंज्ञात्वादेवोगजाननः कृपयापरयाविष्टोस्वधामप्रत्यचोदयत् गणाऊचुः अगाधंवर्णितंदूर्वामहात्म्यमि
दमुत्तमं अशेषवर्णनेशेषोनशक्तिंसमपद्यत त्रैलोक्यंतुलयाअस्यानसंजातंमहामुने दूर्वेतिस्मरणात्पापंत्रिविधंविलयंव्र
जेत् तत्स्मृतंस्मर्यतेनदेवोयतःसोपिगजाननः इतिचिंतामणेःक्षेत्रमहिमावर्णितःस्फुटं श्रवणात्कीर्तनाद्ध्यानात्भुक्तिमुक्तिफल-
प्रदः एतस्मात्कारणाद्दानंत्रयाणांप्रेषितंशुभं रासभस्यमुखाद्दूर्वागतादेवोपरिप्रभो चांडालशीतनाशायआनीतात्तृणभारतः
वायुनाप्रेरितासापिगतादूर्वागजानने यतश्चास्यप्रियादूर्वासंतुष्टोसौविनायकः निःपापत्वात्त्रयाणांचसान्निध्यंदत्तवान्निजं
गंधमात्रेणदूर्वायाःसंतुष्टोजायतेविभुः प्रसन्नोवतिभक्त्यावैकिंपुनर्मस्तकार्पणात् ब्राह्मणाऊचुः इतिदूतमुखाद्राजन्
संश्रुतोमहिमातदा दूर्वायामुनिभिःसर्वैःसंकष्टोनचसंश्रुतः स्नात्वादूर्वांकुरान्गृह्य युयुजुस्तेविनायकं सेवकाश्चापिदूर्वा
भिरानर्चुःश्रीगजाननं॥ आसन्सर्वेदिव्यदेहास्तेजसासूर्यवर्चसः शृण्वंतोदिव्यविद्यानांनानारावान्समंततः विमानवरमा
रूढादिव्यवस्त्रानुलेपनाः यातावैनायकंधामकेचिद्रूपंचधारिणः नरानागरिकाःकेचिदागतास्तंमहोत्सवं द्रष्टुंदूर्वाभिरानर्चुरेके
विंशत्पृथक्पृथक् भक्त्याभोगांश्चतेसर्वेगणेशस्थानमागमन् विमानमपिचलितमूर्ध्वंतत्पुण्यतेजसः तस्माद्गणेशभक्तेनकार्यंदू
र्वाभिरर्चनं नकरोतिनरोयस्तुप्रसादात्ताभिरर्चनं चांडालःसतुविज्ञेयोनरकान्प्राप्नुयान्बहून् नतन्मुखंनिरीक्षेतकदाचि
दपिमानवः यस्तुदूर्वाभिपूज्येतदेवदेवंगजाननं तस्यदर्शनतोन्योपिपापीशक्रत्वमाप्नुयात् लक्षसंख्याभिर्दूर्वाभिः पूजयेद्दि

गजाननं तेनापिकोटिगुणिताकृतापूजानसंशयः ब्रह्मोवाच उद्यापनंचकुर्यात्तुदेशकालानुसारतः ॥ माघेवाकार्तिके
भाद्रे आषाढेश्रावणेपिवा अन्येषुपुण्यमासेषुव्रतमेतत्समाचरेत् प्रातःस्नानंविधायाथदंतधावनपूर्वकं धौतवस्त्रधरोभूत्वा
नित्यकर्मसमाचरेत् देवपूजागृहंवापिदेवालयमथापिवा गोमयेनानुलिप्याथ धातुनामृन्मयेनवा पंचभिर्ब्राह्मणैः सार्धं कृत्वा
चस्वस्तिवाचनं नांदीश्राद्धंप्रकुर्वीतलक्षपूजाविधौद्विजः प्राणायामत्रयंकृत्वादेशकालौस्मरेत्सुधीः गजाननंचतुर्बाहुंएकदंतवि
पाटितं विधायहेम्नाविघ्नेशंहेमपीठासनस्थितं तथाहेममयींदूर्वांतदाधारेव्यवस्थितां संस्थाप्यविघ्नहर्तारंकलशेताम्रभाजने
वेष्टितंरक्तवस्त्रेणसर्वतोभद्रमंडले पूजयेदुक्तकुसुमैः शमीदूर्वाभिरर्चयेत् गंधपुष्पैश्चधूपैश्चदीपैर्नैवेद्यतोषकैः पश्चाद्गंधादिदू
र्वाभिरर्चयेद्गणनायकं गणाधीशंसहस्रेणअथवाशतनामभिः लक्षसंख्यासफलापूजासंख्याहीनातुनिष्फला एवंसंपूज्यविधि
वत्पूजांतेहोममारभेत् आचार्यंवरयेत्पूर्वंऋत्विग्भिश्चैकविंशतिः गणानांत्वेतिमंत्रेणअयुतंहोममाचरेत् अथवादूर्वामंत्रेणअयुतं
तुसमाचरेत् दूर्वामंत्रः त्वंदूर्वेऽमृतजन्मासिवंदितासिसुरासुरैः सौभाग्यंसंततिंदेहिसर्वकार्यकरीभव यथाशाखाप्रशाखाभिर्विस्तृता
सिमहीतले तथाममापिसंतानंदेहित्वमजरामरं सहस्रनामभिर्होमंस्वाहाकारसमन्वितं मधुमिश्रैस्तिलैर्लाजैः पृथुकैरिक्षुखंडकैः ल
ड्डुकैःपायसान्नेनसघृतेनहुनेत्ततः पूर्णाहुतिंततःकृत्वाबलिदानंततश्चरेत् होमशेषंसमाप्येतब्राह्मणान्भोजयेत्ततः आचार्यंपू
जयेत्पश्चाद्वस्त्रालंकारभूषणैः एवंमेब्रह्मणादिष्टंव्रतंलोकोपकारकं तदेतत्कथितंतेघकुरुपुत्रार्थमादरात् इतिनानाविधोराजन्महिमाकथि

नरस्तत्र सेतिहासस्तुदूर्वाणांश्रवणात्पापनाशनः नाख्येयोदुष्टबुद्धेस्तु प्रियपुत्रेनिवेदयेत् यइदंशृणुयाद्भक्त्यावाजपेयफलंल
भेत् इतिश्रीगणेशपुराणेउपासनाकांडेदूर्वामाहात्म्येलक्षदूर्वापूजोद्यापनंसंपूर्णं अथशिवलक्षप्रदक्षिणाविधिः
युधिष्ठिरउवाच पुरातुऋषयःसर्वेनैमिषारण्यवासिनः शौनकाद्यामहात्मानः सर्वशास्त्रविशारदाः तीर्थयात्राप्रसंगेनगंगाद्वा
रमुपागमन् तत्रस्नाताःकृतजपाविधिवद्दत्तदक्षिणाः यावत्सुखोपविष्टास्तेहर्षनिर्भरमानसाः तावत्तेददृशुस्तत्रसूतंशास्त्रार्थ
कोविदं ददर्शसोपितांस्तत्रऋषीन्विगतकल्मषान् ननामदंडवद्भक्त्यातैश्वापिप्रतिपूजितः तेचक्रुःपरमातिथ्यंकुशलंप्रश्नमेव
च सुखोपविष्टंतंसूतंपप्रच्छुरिदमादरात् ऋषयऊचुः सूतसूतमहाप्राज्ञचिरंदृष्टोसिसुव्रत कस्मिन्तीर्थेथवादेशेका
लोहिनिहतस्त्वया त्वद्दर्शनेनसौख्यंतुजातंनःपरमाद्भुतं किंविधिंज्ञातुमिच्छामःस्तच्छृणुष्वमहामते त्वयोक्ताविविधाधर्मास्त
थानानाविधाःकथाः व्रतानिचविचित्राणिमनोरथकराणिच इदानींवददेवस्यव्रतंपरमपावनं यत्कृत्वासर्वसिद्धिःस्यान्नरा
णांवांछितप्रदं सूतउ॰ सम्यक्पृष्टंऋषिगणाव्रतंदेवस्यचाद्भुतं ममापिकथितुंहर्षोजायतेनात्रसंशयः युधिष्ठिरउवा
च धर्माबहुविधाःप्रोक्तास्त्वयानंतफलप्रदाः इदानींश्रोतुमिच्छामिव्रतंसंपत्करंशुभं श्रीकृष्णउवाच शृणुराजन्प्रव
क्ष्यामिशिवस्यव्रतमुत्तमं लक्षप्रदक्षिणानामव्रतमस्तिसुदुर्लभं ब्रह्मघ्नस्यसुरापस्यगुरुदारावमर्शिनः संकीर्णकानिपापानि
संकलीकरणानिच प्रकीर्णकानिपापानिमलिनीकरणानिच भ्रातृपत्नीसुतादीनांगामिनःकाममोहिताः गुरोर्विश्वासहीनस्य

व्रतभ्रष्टस्यपापिनः संध्याकर्मविहीनस्यजगधुर्मार्गवर्त्तिनः दासीवेश्यासंगिनश्चचांडालीगामिनस्तथा परस्वहारिणश्चापिदेवद्र
व्यापहारिणः ब्राह्मणद्वेषिणश्चापिवृत्तिछेदनकस्यच रहस्यभेदकस्यापिरहसीकृतपापिनः ब्रह्मयज्ञविहीनस्यदुःशास्त्रनिर
तस्यच गुरुनिंदादिश्रोतुश्चगुरुद्रव्यापहारिणः ब्रह्महत्यादिपापानांप्रायश्चित्तंयदीछसि संकलीकरणानांचमलिनीकरणस्यच
अपात्रीकरणानांचप्रायश्चित्तंयदिछसि भ्रातृपत्नीसुतानांचगामिनःशमनंतथा श्वश्रुभ्रातृवधूनांचइछयागामिनांतथा ल
क्षप्रदक्षिणानामव्रतंकुर्यान्महीपते संध्याकर्मादित्यागस्यचांडालीगामिनस्यवै दासीवेश्यासंगिनश्चक्षयंयांतिनसंशयः व
र्धनंसर्वभूतानांसदाविजयकारणं किमेभिर्बहुभिर्वाक्यैःकथितैश्चपुनःपुनः दारिद्र्यनाशनंपुण्यंसर्वैश्वर्यप्रदंशिवं दुर्लभंसर्वमर्त्या-
नांपुत्रपौत्रप्रवर्धनं योयान्प्रार्थयतेकामान्सतानाप्नोतिमानवः ऋषयऊचुः सूतसूतमहाभागवेदविद्याविशारद यथा
प्रदक्षिणाकार्यामनुजैर्विधिपूर्वकं सूतउवाच एवमेवपुरापृष्टोभगवान्शिवयाशिवः तद्ब्रवीमिमुनिश्रेष्ठाःशृण्वंतुविधि
मुत्तमं देव्युवाच भगवन्देवदेवेशप्रदक्षिणविधिंवद शिवलक्षेप्ययेनाशुनिःपापःपुण्यवान्भवेत् श्रीमहादेवउवाच
श्रावणेमाधवेऊर्जेमाघमासेव्रतंचरेत् लिंगप्रदक्षिणाःकुर्यात्सुंदरीविधिपूर्वकाः श्रीदेव्युवाच लिंगप्रदक्षिणेदेवनियमाः
केभवंतितान् वदस्वेतितदाशेषविश्वनाथकृपानिधे शिवउवाच प्रतिग्रहंपरान्नंचपरदाराभिभाषणं परस्वग्रहणं
स्नेहादसद्वार्त्तांचवर्जयेत् असतांपापिनांसंगंनकुर्यात्प्रयतोनरः असत्समागमात्सर्वंनिःफलंजायतेनृणां ममद्रोहपरैःसाकं

न व्रजेद्विष्णुनिंदकैः परापवादंनोकुर्यात् परद्रोहंनकारयेत् निंदांचगुरुशास्त्राणांशिवधर्मरतात्मनां तीर्थलिंग तपोनिंदांनकु
र्यात्तुप्रदक्षिणी ब्रह्महत्यादिपापानांप्रायश्चित्तंनचापरं शिवलिंगेमहादेवियेकुर्वंतिप्रदक्षिणाः अनंतकोटिगुणितंभवेत्सर्वंन
संशयः शिवापतेःप्रत्यहंचपूजाकार्याप्रयत्नतः उमापतेःपूजनेनसिद्धिर्भवतिनान्यथा एवंयःकुरुतेमर्त्योव्रतमेतत्सुदुर्लभं यंयंचिं
तयतेकामंतंतंप्राप्नोत्यसंशयः शिवउवाच लक्षंसमाप्यपश्चात्तुकुर्यादुद्यापनंव्रती एवंसंपाद्यविधिवच्छुभेमासेशुभेदिने
देव्युवाच व्रतस्योद्यापनंकर्मकथंकार्यंचमानवैः कोविधिःकानिद्रव्याणिकथयस्वममप्रभो ईश्वरउवाच शृणुभद्रेप्रयत्ने
नलोकानांहितकाम्यया उद्यापनविधिंचैवकथयामितवाग्रतः यथासंजायतेवित्तंभक्तिश्रद्धासमन्विता सएवव्रतकालश्चयतो
नित्यंहिजीवितं कामक्रोधाद्यहंकारद्वेषपैशून्यवर्जितः संपाद्यसर्वसंभारान्मंडपंतत्रकारयेत् प्रातःस्नात्वाशुचिर्भूत्वाकुर्यादुद्या
पनंबुधः मासतिथ्यादिसंकल्प्यकुर्यात्स्वस्त्ययनंततः पुण्याहवाचनंकार्यंआचार्यवरणंततः ततोब्राह्मणमाहूयवेदवेदांग
पारगं आचार्यंवरयेत्पूर्वंऋत्विगैकादशैःसह देवागारेतथागोष्ठेशुद्धेवास्वीयमंदिरे पुष्पमंडपिकांकृत्वापट्टकूलादिवेष्टितां त
न्मध्येलिंगतोभद्रंरचयेल्लक्षणान्वितं अव्रणंसजलंकुंभंतस्योपरितुविन्यसेत् सौवर्णंराजतंताम्रंमृन्मयंवापिकारयेत् तस्योपरि
न्यसेत्पात्रंताम्रंमृन्मयवैणवं कुंभोपरिन्यसेद्देवमुमयासहितंशिवं उमामहेश्वरींमूर्तिंपूजयेद्वृषभेस्थितां ब्रह्माणंदक्षिणेभा
गेसावित्र्यासहसुप्रभं कौबेर्यांस्थापयेद्विष्णुंलक्ष्म्यासहगरुत्मता महेशंस्थापयेन्मध्येशिवावृषसमन्वितं ततः पूजांविनिर्व

र्वमहासंभारविस्तरैः परमान्नंचनैवेद्यंभक्त्यादेवायदापयेत् उपोष्यजागरंकुर्याद्रात्रौसत्कथयामुदा ततःप्रभातसमयेस्नात्वाशु
द्धजलेशुचिः मृदाचस्थंडिलंकार्यंकुर्यादग्निमुखंततः प्रदक्षिणादशांशेनहवनंकारयेद्व्रती हवनस्यदशांशेनतर्पणंकारयेत्त-
तः तर्पणस्यदशांशेनमार्जनंकारयेत्ततः प्रदक्षिणात्रशतांशेनब्राह्मणान्भोजयेत्सुधीः स्वशाखोक्तेनविधिनाहोमयेद्रुद्रमंत्र
कैः मूलमंत्रेणगायत्र्याशंभोर्नामसहस्रकं पलाशस्यसमिद्भिश्चयवव्रीहितिलाज्यकैः पूर्णाहुतिंततोदद्यात्कृत्वास्विष्टकृदादि
कं होमांतेचगुरुंपूज्यसपत्नीकंसमाहितः प्रतिमांकुंभसहितांआचार्यायनिवेदयेत् शंभोःप्रसीददेवेशसर्वलोकेश्वरप्रभो
तवरूपप्रदानेनममसंतुमनोरथाः यद्भक्त्यादेवदेवेशमयाव्रतमिदंकृतं न्यूनंवाथक्रियाहीनंपरिपूर्णंतदस्तुमे अनेनैवविधानेनयइदंव्रतमाचरेत् यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः इहलोकेसुखीभूत्वाभुक्त्वाभोगान्यथेप्सितान् अंतेविमान
मारुह्यशिवलोकंसगच्छति इतिश्रीस्कंदपुराणेशिवप्रदक्षिणाव्रतोद्यापनंसंपूर्णम् अथाश्वत्थप्रदक्षिणाविधिः
ऋषिरुवाच भगवन्सर्वधर्मज्ञसर्वशास्त्रविशारद स्त्रीणांपुत्रविहीनानांनराणांसुखसंपदां उपायंचैवमेब्रूहिसुतसि
द्धिकथंभवेत् अथर्वणउ० पुराब्रह्मादयोदेवासर्वेविष्णुंसमाश्रिताः अपृच्छन्देवदेवेशंराक्षसैःपीडिताःस्वयं कथंभवे
त्वतच्छांतिरस्माकंवदनिश्चितं ऋषयऊचुः पलाशत्वंकथंप्राप्तंब्रह्मणावैमहात्मना वटत्वंचशिवोवापिविष्णुर्वैपिप्प
लोभवत् वालखिल्याऊचुः ब्रह्मणातुपुरासृष्टाःसर्वेदेवाःसवासवाः मिलित्वासर्वएवैतेब्रह्माणंवाक्यमब्रुवन् ब्र

ह्यन्सर्वाधिकोरुद्रःसर्वदेवेषुपश्यत कर्तुंतद्दर्शनंदेवगच्छामोभवतासह इतींद्रादिवचःश्रुत्वासर्वदेवपुरोगमः ब्रह्माकैलास
मगमत्सर्वदेवगणैर्वृतः शिवद्वारंसमासाद्यदेवाःसर्वेपिसंस्थिताः नदृश्यतेद्वारपालःशिवश्चाभ्यंतरेस्थितः गंतव्यंवानगंत
व्यंअस्माभिःशिवसंनिधौ परावृत्याथवास्वस्मिन्स्थानेगंतव्यमेववा एवंचिंतयमानैस्तैर्नारदोमुनिसत्तमः पुरादृष्टोदेववृंदै
स्तंमूचुःप्रणताश्चते देवाऊचुः मुनेवदविदांश्रेष्ठब्रूहिप्रश्नंसुशोभनं किंकरोतिमहादेवोगंतव्यंवानवांतरे नार
दउवाच चंद्रनाशदशायांतुदेवाःसंप्रस्थितंगृहात् तस्मात्कश्चिन्महाविघ्नोभवतांसंभविष्यति किंकरोतिशिवश्चेति
प्रश्नोह्यंतेतथाविधाः तस्मात्संभोगकार्येयंवर्ततेत्रिपुरांतकः इंद्रउवा॰ सर्वेषामेवदुःखानांनाशकर्तादिवस्पतिः मय्या
गतेकथंनाशोदेवतानांभविष्यति बिभीषणायदेवानांबलानांचाकरोन्मुनिः इतींद्रस्यवचःश्रुत्वाव्याकुलोभून्मुनिस्तदा कथं
मद्वचनंसत्यंभविष्यत्यघवज्रिणी अद्यमद्वचनंसत्यंयदिशीघ्रंभविष्यति लक्ष्मीनारायणमुदेकरिष्येव्रतमुत्तमम् एवंसं
चिंत्यमनसातूष्णींभूत्वामुनीश्वरः इंद्रोविचारयन्देवाःकिमिदानींविधीयतां ततोवज्रीह्युवाचेदंवन्हेमद्वचनंशृणु गृही-
त्वाविप्ररूपंत्वंशिवस्याभ्यंतरंविश यदिप्रसंगोस्त्यस्माकंतदावार्तांनिवेदय यदिनास्तिप्रसंगश्चेद्याचकत्वेनयाहिच
अवध्यत्वाद्दत्ताज्यत्वाद्द्विजत्वेनतद्व्रज इतिदेवेंद्रवचनंश्रुत्वावन्हिस्तथाकरोत् अभ्यंतरेददर्शेशंशिवयासहसंगतम् शि
वयापिचसोदृष्टोलज्जिताभोगमत्यजत् कोसिकोसीतिसंदृष्टोभिक्षुकोहंक्षुधायुतः वृद्धोस्म्यंधोस्मिदीनोस्मिभोजनं

ममदीयतां तेनादृष्टमितिज्ञात्वापार्वतीतमभोजयत् सोपिभुक्त्वासमाचारंवक्तुंसंप्रस्थतोबहिः तस्मिन्नेवक्षणेगुप्तोनार
दःपार्वतींययौ शिरोनिधायपार्वत्याःपादयोःसरुरोदह अहोबालककिंजातंतच्छीघ्रमभिधीयतां करोमिनिष्कृतिंतस्यसा
ध्यासाध्यस्यनान्यथा मातर्वक्तुंनशक्नोमिह्युपहासस्यकारणं कृतंयथेंद्रादिदेवैस्तथाकोन्यःकरिष्यति इतितस्यवचःश्रु
त्वापुनःपुनरपृच्छत मुद्रयित्वाततोनेत्रेकराभ्यांसमुनीश्वरः उवाचवचनंनीचमुखोसौगद्गदाक्षरं नारदउवाच इंद्रो
यंयुवयोर्भोगंदेवताभ्योह्यदर्शयत् युवयोश्चकृतानिंदातांश्रुत्वादुःखितोभृशं भोगविछित्तयेवन्हिःप्रेषितोद्विजरूपकः
अथवाकिमनेनापिकथनेनममांबिके जगन्मातासिदेवित्वंकातेस्यादुपहासता इतितस्यवचःश्रुत्वापार्वतीक्रुद्धमानसा
स्फुरदोष्टारक्तनेत्राद्दृष्ट्वातांनारदोययौ देवान्प्रतिह्युवाचेदंसंभोगाद्विरतोहरः आगम्यतांदर्शनार्थंदूरतोसौविलोकितः वह्ने
रेवंवचःश्रुत्वादेवेंद्रःसगणोययौ प्रणिपत्यमहादेवंकृतांजलिपुटोभवत् दृष्ट्वातथाविधंशक्रंपार्वतीवाक्यमब्रवीत् अह-
ल्याजारदुष्टात्मन्सहस्रभगवासव उपहासःकृतोमेद्यफलंतत्समवाप्नुहि यावंत्यःसंतिदेवानांजायावैसर्वएवते अजान
तस्त्रीसुखानिशाखिनःसंतुसस्त्रियः इतिदेवीवचःश्रुत्वाकंपिताःसर्वदेवताः ब्रह्मविष्णुमहेशाद्यास्तुष्टुवुर्जगदंबिकां ततोदे
वीप्रसन्नोभूद्देवेंद्रंवाक्यमब्रवीत् देवामद्वचनंमिथ्यात्रिकालेपिनजायते तस्माद्देकांशतोवृक्षायूयंसर्वेभवंतुवै इतिदे
व्यावचःश्रुत्वा जातादेवास्तुपादपाः अश्वत्थरूपीभगवान्वटरूपीसदाशिवः पलाशोभूद्विधाताचवज्रःशक्रोबभूवह इंद्रा

णीसालताजातादेवनार्योलतास्तथा मालत्याद्याःपुष्पवृक्षाउर्वश्याद्याप्सरोभवन् तस्मात्सर्वप्रयत्नेनसर्वदाश्वत्थमर्चयेत्
नारीवापुरुषोवापिलक्षंकुर्यात्प्रदक्षिणाः लक्ष्मीनारायणंपूज्यमंदवारेचतत्तले दंपतीभोजयेल्लक्ष्मीनारायणस्वरूपिणौ भा
वयित्वासपत्नीकान्पश्चाद्भुंजीतवाग्यता वंध्यादिर्लभतेपुत्रंइतरासांतुकाकथा मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे
अग्रतःशिवरूपायपिप्पलायनमोस्तुते विष्णोश्चप्रतिमाभावेकीर्तनंजागरादिकं अश्वत्थमूलेकर्तव्यंविष्णोराराधनं
परं सदासन्निहितोविष्णुर्वृक्षस्तुब्राह्मणेतथा विष्णुरुवाच अहमश्वत्थरूपेणशालग्रामेशिलासुच तस्मात्सर्व
प्रयत्नेनकुरुष्वतरुसेवनं तेनसर्वाणिभद्राणिभविष्यंतिनसंशयः अश्वत्थपूजास्पर्शेनकर्तव्याशनिवासरे अन्यवारेश्वत्थ
संगाद्दरिद्रोजायतेनरः विष्णुर्यदुक्तवांस्तेभ्योतद्व्रतंतेवदाम्यहं नदानैश्चतपोभिश्चनाध्वरैर्भूरिदक्षिणैः अश्वत्थसेवनाद
न्यत्कलौनास्त्यपराक्रिया तद्विधानंनिमित्तानिसंख्याकृतिश्चपूजनं हवनंतर्पणंविप्रभोजनंनियमंतथा व्रताधिकारि
णस्तत्रविधानंचविशेषतः एतत्सर्वंपिप्पलादीन्वक्ष्याम्यखिलवस्तुव्रत दारुणेविविधोत्पातेदिव्यभौमांतरिक्षजः परचक्र
भयंदेशविप्लवोदेशविग्रहः दुःस्वप्नंदुर्निमित्तंसंग्रामोद्भुतदर्शनः मारीभयंराजभयंतथाचोराग्निजंभयं क्षयापस्मार
कुष्टाद्याःप्रमेहोविषमज्वरः उदरंमूत्रकृच्छ्रंचग्रहग्रस्तस्तथैवच अन्येचरक्तरोगायेव्रणरोगास्तथैवच एतेषांचविनाश
यकुर्यादश्वत्थसेवनं प्रातरुत्थायनद्यादौस्नात्वासम्यक् कृतक्रियः अश्वत्थदेशमाश्रित्यगोमयेनोपलेपयेत् तमश्वत्थ

मलंकृत्यसूत्रेणगोरिकादिना पूजाद्रव्याणिसंपाद्यपुण्याहंवाचयेत्तथा आचार्यंऋत्विजैःसाकंकृत्वापूजांसमाचरेत् ध्यानमा
वाहनंनैवपाद्यमाचमनंतथा तथैवपिप्पलतरुंतथानारायणंप्रभुं श्वेतगंधाक्षतैःपुष्पैर्धूपदीपैर्निवेदनैः अर्चयेत्पुरुषसूक्तेनत
थैवध्यानपूर्वकं तेनैवहवनंकुर्यात्तर्पणंवानमस्क्रियां श्वेतवर्णंसलक्ष्मीकंचिंतयेत्पुरुषोत्तमं इतिध्यात्वावाहना
द्यैरुपचारैश्चषोडशैः तत्रअश्वत्थंअभिमंत्र्य आरात्तइत्यास्याग्निकांडांतःपातित्वादग्निर्ऋषिः वनस्पतिर्देवता अनु
ष्टुप्छंदः वनस्पत्यभिमंत्रणेविनियोगः आरात्तेअग्निरस्त्वारात्परशुरस्तुते निवातेत्वाभिवर्षंतुस्वस्तितेस्तु
वनस्पते अलक्ष्म्यंदंभुजस्यंदंदुःस्वप्नंदुर्विचिंतितं शत्रूणांचसमुत्पन्नंअश्वत्थंशमयस्वमे ततःप्रदक्षिणाःकुर्यात्तत्सर्वंसफ-
लंभवेत् लक्षमेकंद्विलक्षंवात्रिचतुःपंचलक्षकं कार्यस्यगौरवंज्ञात्वाद्वादशांतंसमाचरेत् ब्रह्मचारीहविष्याशीह्यधःशायी
जितेंद्रियः मौनीध्यानपरोभूत्वापिप्पलस्यस्तुतिंपठेत् विष्णोर्नामसहस्रंचपौरुषंवैष्णवंतथा एवंसंपाद्यविधिवच्छुभेमासेशु
भेदिनेप्रातःस्नात्वाशुचिर्भूत्वाकुर्यादुद्यापनंबुधः गणेशपूजनंस्वस्तिवाच्यनांदींचकारयेत् आचार्यंवरयेत्पश्चात्सर्वलक्षणसंयुतं
देवागारेतथागोष्ठेअश्वत्थेस्वीयमंदिरे पुष्पमंडपिकांकृत्वापट्टकूलादिवेष्टितां तन्मध्येसर्वतोभद्रंरचयेल्लक्षणान्वितं तन्मध्येस्था
पयेत्कुंभंसजलंवस्त्रसंयुतं तस्योपरिन्यसेत्पात्रंताम्रंमृन्मयंवैणवं अष्टपत्रान्वितंपद्मंकर्णिकाभिःसमन्वितं पंचकृष्णलकादू-
र्ध्वंस्वर्णपरिनिर्मितं लक्ष्मीनारायणींमूर्तिंअश्वत्थेनसमन्वितां स्थापयेत्पद्ममध्येतुब्रह्माद्यावाहनंततः ततःपूजांविनिर्वर्त्य

महासंसारविस्तरैः परमान्नंचनैवेद्यंभक्त्यादेवायदापयेत् उपोष्यजागरंकुर्यात्तद्रात्रौसत्कथयामुदा ततःप्रभातसमयेस्नात्वाशु
द्धेजलेशुचिः मृदाचस्थंडिलंकार्यंकुर्यादग्निमुखंततः कृतलक्षदशांशेनहवनंकारयेद्व्रती हवनस्यदशांशेनतर्पणंकारयेत्ततः पु
रुषसूक्तेनजुहुयात्तिलाज्यंपायससंमित् स्वशाखोक्तेनविधिनाजुहुयाद्विष्णुमंत्रकैः उक्तैःषोडशभिर्मंत्रैःकुर्याद्धोमंयथाविधि
हवनस्यदशांशेनमिष्टान्नंभोजयेद्द्विजान् ब्राह्मणानांस्वयंकुर्याद्यथोक्तनियमंतथा असामर्थ्येस्वयंकर्त्तुंसर्वमन्येनकारयेत् उ
क्तप्रमाणादधिकंफलंदशगुणंभवेत् ततश्चतुर्गुणंपीठंरजतंचचतुरस्रकं उपरिद्रोणमर्धंवातिलोपरिविनिक्षिपेत् श्वेतवस्त्रेणसं
छाद्यपूर्ववत्पूजयेत्तरुं दरिद्रायसुशीलायश्रोत्रियायकुटुंबिने उदङ्मुखायविप्रायस्वयंपूर्वमुखःस्थितः सुवर्णवृक्षराजंचमं
त्रेणप्रतिपादयेत् इहजन्मनिवान्यस्मिन्बाल्ययौवनवार्धके मनोवाक्कायजैर्दोषैर्मुच्यतेनात्रसंशयः आचार्येणाथविप्रेणसर्वं
यत्नेनकारयेत् एवंकृत्वाव्रतीसम्यक्व्रतस्यपरिपूर्तये हेमाश्वत्थतरुंदद्यात्सुक्लांगांचपयस्विनीं पिप्पलोवृक्षराजेंद्रोह्यग्नि
गर्भस्त्वमेवहि प्रभुर्वनस्पतीनांचसर्वजन्मनियत्कृतं अघौघंनाशयेक्षिप्रंतवरूपप्रदानतः अमुंतरुंगृहाणत्वंविष्णुरूपद्विजो
त्तम स्वीकृत्यदुष्करंघोरंक्षिप्रंशांतिंप्रयच्छमे एवंव्रतंयःकुरुतेपुत्रपौत्रप्रवर्धकं भुक्त्वाभोगान्सुविपुलान्विष्णुसायुज्यमाप्नुया
त् इतिश्रीभविष्योत्तरपुराणेअश्वत्थलक्षप्रदक्षिणोद्यापनंसंपूर्णं अथविष्णुलक्षप्रदक्षिणाविधिः युधिष्ठिर-
उवाच भगवन्देवदेवेशसर्वविद्याविशारद किंचिद्विज्ञप्तुमिच्छामिवक्तुमर्हस्यशेषतः अज्ञानादथवाज्ञानात्प्रमादाच्चकृतानि

भो दायादवधपूर्वाणिकथंयांतिक्षयंविभो पापानिस्रुबहून्यत्रवदस्वमुनिसत्तम व्यासउवाच लक्षप्रदक्षिणावर्तंनारदोक्तं
विधिंश्रृणु नारदउवाच येलोकाःपापसंयुक्ताधर्माधर्मविवर्जिताः व्रतहीनाव्रतभ्रष्टादुराचाराश्चकुत्सिताः अग्निकार्येण
रहिताःशास्त्रधर्मबहिष्कृताः नास्तिकाभिन्नमर्यादाहेतुकाःकितवाःशठाः मातापित्रोर्विरुद्धाश्चगुरुश्वशुरद्रोहकाः एतेषांनिष्कृ
तिंतातकृपयावदमेधुना अज्ञानांतुहिजीवानांसाधूनांत्वंस्रुहृत्स्मृतः अनाथनाथदेवेशतद्रूपास्ताद्दशाजनाः एतच्छ्रुत्वाततोब्र-
ह्माहर्षादुत्फुल्ललोचनः साधुसाध्वितिदेवेशोवचनंचेदमब्रवीत् ब्रह्मोवाच किंवर्णयामिसाधूनांमहात्म्यंचभवादृशां
हरेर्लोकैकनाथस्यकरुणामुक्तिदायिनी ब्रह्महत्यादिपापेषुसंकलीकरणेषुच जातिभ्रंशकरेष्वेकंअभक्ष्यभक्षणेषुच हरिणा
निर्मितंपूर्वंव्रतंलक्षप्रदक्षिणं सर्वेषामपिपापानांमूलादुत्कृतंनंपरं पापांधकारनाशायपापेंधनदवानलं नारायणेजगन्नाथेयो
गनिद्रामुपेयुषि प्रारंभेतव्रतमिदंकुर्याद्यावत्प्रबोधिनी द्वादश्यांवाचतुर्दश्यांपौर्णमास्यामथापिवा स्नानंकृत्वानदीतोयेनि
त्यकर्मसमाप्यच पश्चात्प्रदक्षिणावर्तःकर्तव्योहरिरीश्वरः अनंतमव्ययंविष्णुंलक्ष्मीनारायणंहरिं जगदीशनमस्तुभ्यंप्रदक्षि
णपदेपदे इतिमंत्रंसमुच्चार्यकुर्यादावर्तमादरात् प्रदक्षिणाःप्रकर्तव्यादिवसेदिवसेविभोः यावत्प्रदक्षिणावर्तस्तावन्मणिविनि
क्षिपेत् आवाहनादितःसम्यक्धूपदीपादिभिस्तथा नैवेद्यंपायसंप्रोक्तंतांबूलंदक्षिणान्वितं भोजयेच्चयथाशक्त्याविप्रान्स
र्वफलप्रदान् सर्वपापविनाशार्थंनारीभिःपुरुषैरपि प्रदक्षिणाःप्रकर्तव्यायावदुद्बोधिनीभवेत् लक्षप्रदक्षिणाःकार्याअंतेउ-

धापनंचरेत् उपवासःप्रकर्तव्योअधिवासनवासरे सौवर्णींप्रतिमांकृत्वाविष्णोरमिततेजसः गरुडेनसमायुक्तांस्थापयेत्कलशो
परि आचार्यंवरयित्वातु ऋत्विजश्चनिमंत्रयेत् होमंचविष्णुगायत्र्यातद्दशांशेनवाग्यतः पायसंजुहुयात्तत्रअयुतंतिलसर्पिषा
हुत्वास्विष्टकृदाद्यंचदद्याद्दानानिसर्वशः कार्पासंकंबलंचैवगामेकांचपयस्विनीं आचार्यायसपीठांतांप्रतिमांचनिवेदयेत् ब्रा
ह्मणान्भोजयेत्पश्चात्पंचविंशतिसंख्यकान् इतितस्यवचःश्रुत्वानारदस्तत्तथाकरोत् धर्मेणाचकृतंसर्वंमुनेश्चवचनाद्ध्रुवं
इतिश्रीभविष्येविष्णुलक्षप्रदक्षिणोद्यापनंसंपूर्णं अथतुलसीलक्षप्रदक्षिणाविधिः नारदउवाच रोप्यतेये
नविधिनातुलसीपूज्यतेसदा तदाचक्ष्वमहादेवममानुग्रहकारणात् महादेवउवाच शुभेपक्षेशुभेवारेशुभेऋक्षेशु
भोदये सर्वथाकेशवार्थंतुरोपयेत्तुलसींमुने गृहस्यांगणमध्येवागृहस्योपवनेपिवा शुचौदेशेनतुलसीमर्चयेत्तुबुद्धिमान्न
रः मूलेचवेदिकांकुर्यादालवालसमन्वितां प्रातःसंध्याविधिंकृत्वास्नानपूर्वंदिनेदिने गायत्र्यष्टशतंजप्त्वातुलसींपूजयेत्ततः
प्राङ्मुखोदङ्मुखोवापिस्थित्वाप्रयतमानसः ध्यायेच्चतुलसींदेवींश्यामांकमललोचनां प्रसन्नांपद्मवदनांवराभयचतुर्भुजां
किरीटहारकेयूरकुंडलादिविभूषणां धवलांकुशसंयुक्तांपद्मासननिषेवितां ध्यानं देवित्रैलोक्यजननीसर्वलोकैकपा
वनी आगच्छभगवंत्यत्रप्रसीदतुलसीप्रिये आवाहनं सर्वदेवमयेदेविसर्वदाविष्णुवल्लभे देविस्वर्णमयंदिव्यंगृहा
णासनमव्यये आसनं सर्वदेवमयेदेविसर्वदेवनमस्कृते दत्तंपाद्यंगृहाणेदंतुलसीत्वंप्रसीदमे पाद्यं सर्वतीर्थमयाकारे

सर्वांगमनिषेविते इदमर्घ्यंगृहाणत्वंदेविदैत्यांतकप्रिये अर्घ्यं सर्वलोकस्यरक्षार्थंसदासन्निधिकारिणी गृहाणतुलसिप्रीत्या
इदमाचमनीयंकं आचमनीयं॰ गंगादिसर्वतीर्थेभ्योसमानीतंजलंशुभं स्नानार्थंतुलसिस्वच्छंप्रीत्यातत्प्रतिगृह्यतां स्ना
नं क्षीरोदमथनोद्भूतचंद्रलक्ष्मीसहोदरे गृह्यतांपरिधानार्थंइदंक्षौमांबरंशुभे वस्त्रं कंचुकीं आचमनी॰ गंधपुष्पंत
थाधूपंदीपंनैवेद्यमेवच तांबूलंदक्षिणांचैवमंत्रपुष्पंततश्चरेत् प्रसीदममदेवेशिकृपयापरयामुदा अभीष्टफलसिद्धिंचकु
रुमेमाधवप्रिये देवैस्त्वंनिर्मितापूर्वंअर्चितासिमुनीश्वरैः नमोनमस्तेतुलसिपापंहरहरिप्रिये तुलस्यमृतजन्मासिसदा
त्वंकेशवप्रिये केशवार्थेविचिन्वामिवरदाभवशोभने इतिप्रार्थना इत्येवमर्चयेन्नित्यंप्रातरेवशुचिर्नरः मध्याह्नेवाथ
सायाह्नेपूजयेत्प्रयतोनरः वैशाखेकार्तिकेमाघेचातुर्मास्येविशेषतः पूजयेत्तुलसींदेवींअपूपफलपायसैः अन्यद्गुह्यतमं
किंचित्कथयामितवाग्रतः प्रदक्षिणाफलंचैवनमस्कारेतथैवच एवंकुर्याद्वुद्धिकामोसर्वकामोसदैवतु पंचाशद्भिर्भवेल्ल
क्ष्मीः शतैश्चविजयःस्मृतः विद्यार्थीतुसहस्रंवैद्धयुतेसर्वसंपदा लक्षेतुसर्वसिद्धिःस्यान्नात्रकार्याविचारणा यंयंचित
यतेकामंतंतंप्राप्नोतिसर्वशः भुक्त्वायथेप्सितान्भोगानंतेमोक्षमवाप्नुयात् इदंफलंकोटियुतंभवेदत्रनसंशयः लक्ष
संख्याश्चकर्तव्यास्तुलस्याश्चप्रदक्षिणाः तदाउद्यापनंकुर्यात्तेनसम्यक्फलंभवेत् उद्यापनंविनाविप्रफलंनैवभवेत्क्वचि
त् तस्मात्सर्वप्रयत्नेनउद्यापनविधिंश्शृणु सौवर्णींप्रतिमांविष्णोः शंखचक्रगदान्वितां तुलस्यायतनंचैवकुर्यात्सौव-

र्णनिर्मितं हेमादिनिर्मितेकुंभेपूर्णपात्रसमन्विते पुण्योदकैःपंचरत्नैःकुशादूर्वाप्रपूरिते तस्योपरिन्यसेद्विष्णुंलक्ष्म्याचतुलसी
समं पूजांपुरुषसूक्तेनकुर्यात्सर्वंप्रयत्नतः उपचारैःषोडशभिर्भक्तिभावसमन्वितः रात्रौजागरणंकुर्यात्पौराणैर्वेदपाठकैः
वैष्णवैश्चप्रबंधैश्चनृत्यैर्वाद्यैस्तथैवच ततःप्रातःसमुत्थायहोमंकुर्याद्विधानतः वैष्णवेनतुमंत्रेणतिलाज्येनविशेषतः पा
यसेनघृताक्तेनअष्टोत्तरसहस्रकं आचार्यायसवत्सांगांदक्षिणावस्त्रसंयुतां ब्राह्मणान्भोजयेत्पश्चात्सहस्रंवाथशक्तितः
शतंवाभोजयेद्धीमानष्टाविंशतिवापुनः तेभ्योपिदक्षिणां दद्याद्वित्तशाठ्यंनकारयेत् एवंयःकुरुतेमर्त्यस्तस्यपुण्यफलंशृणु
अश्वमेधसहस्रस्य वाजपेयशतानिच तत्पुण्यंलभतेमर्त्योनात्रकार्याविचारणा इदंरहस्यंपरमंनवाच्यंयस्यकस्यचित्
विष्णुप्रीतिकरंयस्मात्तस्मात्सर्वव्रताधिकं प्रदक्षिणातुलस्यास्तुमाहात्म्यंशृणुयान्नरः सकृद्वापठतेयोवैसगच्छेद्वैष्णवंप
दं इतिश्रीभविष्येलक्षतुलसीप्रदक्षिणोद्यापनंसंपूर्णम् अथगोब्राह्मणाग्निहनुमल्लक्षप्रदक्षिणाविधिः युधि
ष्ठिरउवाच भगवन्ज्ञानिनांश्रेष्ठसर्वविद्याविशारद किंचिद्विज्ञप्तुमिच्छामिवक्तुमर्हस्यशेषतः अज्ञानादथवाज्ञानात्
प्रमादाद्वाकृतंहियत् पापानिचबहून्यत्रविलयंयांतितद्वद व्यासउवाच लक्षप्रदक्षिणाःकार्याब्राह्मणेग्नौगवे
तथा नारदउवाच येचपापरतानित्यंधर्माधर्मविवर्जिताः व्रतहीनादुराचाराज्ञानहीनाश्चजंतवः तेषांपापविना
शार्थंप्रायश्चित्तंकथंभवेत् ब्रह्मोवाच किंवर्णयामिसाधूनांमाहात्म्यंचभवादृशां साधुसाधुचविप्रेंद्रवच्मिते

व्रतमुत्तमं ब्रह्महत्यादिपापेषु संकलीकरणेषु च जातिभ्रंशकरेचापि अभक्ष्यभक्षणे तथा विष्णुनानिर्मितंपूर्वंव्रतंलक्ष
प्रदक्षणं सर्वेषामपिपापानांनाशकंपरमंशुभं आषाढेशुक्लपक्षेतु एकादश्यांविशेषतः द्वादश्यांपौर्णमास्यांवाप्रारभेद्व्रतमुत्तमं
देशकालौतुसंकीर्त्यनत्वागुरुविनायकौ लक्षप्रदक्षिणाःकार्यास्त्रिरग्नींश्चशुचिव्रतः जितेंद्रियोजितप्राणोमुखेमंत्रंसमुच्चरे
त् नमस्तेगार्हपत्यायनमस्तेदक्षिणाग्नयेनम आहवनीयायमहावेद्यैनमोनमः गोर्वाप्रदक्षिणाःकार्यालक्षसंख्यायथाविधि
पूर्वपूज्यन्त्वगामेकांदत्वानैवेद्यमुत्तमं पश्चात्प्रदक्षिणाःकार्यानत्वातांचपुनःपुनः गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश यस्मा
त्तस्माच्छिवंमेस्यादिहलोकेपरत्रच एवंप्रदक्षिणांकृत्वासर्वपापैःप्रमुच्यते कर्मनिष्ठंशुचिंविप्रंपूजयेद्विधिवद्बुधः ततोप्रद
क्षणाःकार्यायावल्लक्षंभवेद्व्रतम् भूमिदेवनमस्तुभ्यंनमस्तेब्रह्मरूपिणे पूजितोदेवदैत्यैस्त्वमतःशांतिंप्रयच्छमे एवंहनुम
तःकार्याभूतप्रेतविनाशकृत् षोडशैरुपचारैश्चपूजयेद्वायुनंदनं ततोप्रदक्षिणाःकार्याआत्मकार्यार्थसिद्धये मंत्रः म
नोजवंमारुततुल्यवेगंजितेंद्रियंबुद्धिमतांवरिष्ठं वातात्मजंवानरयूथमुख्यंश्रीरामदूतंशरणंप्रपद्ये एवंप्रदक्षणावर्तंकुर्याद्दे
वंप्रयत्नतः भूतप्रेतपिशाचाद्याविनश्यंतिनसंशयः आदित्यादिग्रहाःसर्वेशांतिंयांतिशिवाज्ञया उद्यापनंचसर्वासांकुर्या
त्पूर्णफलाप्तये उद्यापनविधानादौपुण्याहंवाचयेत्ततः आचार्यंवरयित्वाचप्रतिमाःस्वर्णसंभवाः अव्रणंकलशंपूर्णंस्था
पयेन्मंडलेशुभे विरच्यलिंगतोभद्रंपूजयेद्देवमंजसा पायसंजुहुयात्तत्रतत्तन्मंत्रैर्विचक्षणः अष्टोत्तरसहस्रंतुप्रार्थयेच्चित्तं

चरेच्छुभं मंडलंदक्षिणायुक्तं आचार्यायनिवेदयेत् ब्राह्मणान्भोजयेच्छक्त्याचित्तशाठ्यविवर्जितः येकुर्वंतिव्रतमिदंपापमुक्ताभवंति
ते भुक्त्वायथेप्सितान्भोगानंतेसायुज्यमाप्नुयात् इतिभविष्येविप्राग्निगोह्नुमल्लक्षप्रदक्षणोद्यापनंसंपूर्णं अथलक्ष
बिल्वपत्रपूजाविधिरुच्यते व्यासउवाच पूर्वजन्मनिव्याधोसौकआसीद्राक्षसोपिसः किमर्थंकर्मकृतवान्कथंपत्रंसमर्पि
तं किंशीलंकःसमाचारस्तन्ममाचक्ष्वनाभिज किंनामसकथंप्राप्तःसालोक्यंतद्वदस्वमे ब्रह्मोवाच विदर्भदेशेनगरं
मोदोशाख्यंबभूवह विख्यातंत्रिषुलोकेषुकुबेरनगरोपमं भीमोनामाभवेद्व्याधोनगरेमांसविक्रयी परेषांदोषकथनेदो
षोयद्यापिवर्तते प्रश्नेकृतेप्रवक्तव्यंयाथातथ्यंनमत्सरात् ब्रह्मोवाच सराज्यकार्यंकुरुतेस्वयंभुंक्तेवरस्त्रियः राष्ट्रे
शृणोतिरामांसयातांवासपतिंतथा बलादानीयतेभोक्तुंक्रंदतींरुदतीमपि नवांगनायतेज्ञातिभेदंविषयलंपटः कचोक्तं
कुरुतेनारीतस्यदृष्टिपथंगता तामालिंग्यत्वसौकामीचुंबत्येतांभजत्यपि परद्रव्याणिगृण्हातिधनानिसबलात्पुनः सोपिता
दृग्गुणोमंत्रीदुष्टबुद्धिरघेरतः एवंदुराचाररतोनकन्यांनचमातरं नवर्जयतिसंभोगेभगिनीमपिनिर्घृणः नब्रह्महत्यांमनुते
नस्त्रीबालवधंतथा एवंपापसमाचारौपापस्यपर्वताविव आस्तामुभौदुष्टबुद्धीराजामात्यौसुदुःसहौ नब्राह्मणोनसंन्या
सीतद्गृहेयातिभिक्षितुं नराष्ट्रेनामतस्यासत्गृण्हातिप्राकृतोपिच एकदामृगयार्थंतौयातौचगहनंवनं हतानिमृगयूथानिप
क्षियूथान्यनेकशः तानिप्रापय्यनगरेअश्वारूढौस्वयंपुनः शिवस्यचमहास्थानंपथितौपश्यतःस्मह यस्मिन्विराजतेमूर्तिः

भक्त्यासहशिवस्यच स्थापितानामभिन्नासापुत्रार्थंकुर्वतीतपः भक्त्यासाक्षात्कृतौयत्रदेवदेवोह्युमापतिः पंचाक्षरेणमंत्रेण-
ध्यायताबहुवासरं दत्वातस्मैवरान्देवोप्रददेवांछितान्यपि ततोवसिष्ठहस्तेनतेनेयंस्थापिताद्दृढा उमामहेश्वरीमूर्तिर्वसिष्ठे
नपुराकृता यस्यादर्शनतोनृणांपुरुषार्थाश्चतुर्विधाः स्मरणात्पूजनाच्चापिसेव्यंतेनात्रसंशयः एवंवसिष्ठवाक्येनसापतद्भुविप
प्रथे शिवस्यभजनेनास्यस्मरणेनार्चनेनच रामलक्ष्मणशत्रुघ्नभरताःसादृशाःसुताः जातालोकेषुविख्याताःसर्वज्ञाः
शूरसंमताः एवंदृष्ट्वामहारम्यंप्रासादंराजनिर्मितं उमामहेश्वरींमूर्तिंराजामात्यौप्रपूजतुः बिल्वपत्रैश्चसंपूज्य अच्छिद्रैः
कोमलैःशुभैः प्रदक्षिणीकृत्यगृह्णीयतुःक्षणमात्रतः एतदेवपरंपुण्यंदैवाज्जातंतयोस्तदा एवंपापसमाचारौराज्यंकृत्वा
थममृतुः बध्वापाशैर्यमस्यहस्तैःनीतौतौशमनांतिकं चित्रगुप्तंसमाहूयपप्रच्छसशुभाशुभं तेनोक्तंनैतयोरस्तिपुण्यले
शोरवेःसुत पापानांगणनानास्तिततोदूतान्ब्रवीद्यमः बध्यतांवध्यतामेतौक्षिप्यतांनरकेषुच मृत्युलोकेततोह्येतौनीचयो
निंगताबुभौ कुंडेवीचिमयेपंकेसहस्रंपरिवत्सरान् एकैकस्मिन्क्रमेणैतौकुंडेष्वुक्ताघसंचयौ अनयोःपुण्यलेशोस्तिदू
ताःश्रृणुतसत्कृतिं प्रसंगादर्चितौदृष्टोदेवोआभ्यामुमापतिः तेनपुण्येननह्येतौपापंव्यतितरिष्यति एवमाकर्ण्यतद्वाक्यंदू
तैर्बध्वाहतंदृढं कुंभीपाकेशोणितोदेनिरयेगौरवेपितौ निक्षिप्तौकालकूटेच्चक्रमशःशतवत्सरान् तामिस्रेचांधतामिस्रेपू
यशोणितकर्दमे कंटकेषुक्षतांगौतौ संतप्तौतप्तवालुके भक्षितौक्रिमिभिस्तत्रभृशंशक्तनिमुखेउभौ असीपत्रवनेघोरेत

तौनीतावुभावपि यत्रशस्त्राभिघातेनवर्मभिद्येतपापिनां ततस्तप्तशिलायांतौनिःपिष्टौघनघा ततः भुक्त्वातुनरकानेकविं
शतिंवहुवासरं तद्दुःखंशक्यतेवक्तुंशेषेणापिकदाचन एवंबहुसहस्राणिभुक्त्वाभोगाननेकशः निस्तीर्णभोगौतौपापशेषे
णभू वमागतौ एकोजातःकाकयोनौउलूकोभूत्सरोपिच ततोएकोदर्दुरोभूदपरःसरटोभवत् ततएकोविषधरोपरोभूद्वृ
श्चिकोपिच तत्रापिकुरुतःपापंनानालोकविदंशतः शुनीमार्जारयोनौतौजातौनकुलसूकरौ वृकजंबूकयोनौतौजातौघोट
कगर्दभौ ततउष्ट्रगजौजातौनततोनक्रमहाझषौ ततोव्याघ्रमृगौजातौ नततोवृषभकासरौ एवंनानायोनिगतौजातौचांडाल
अंत्यजौ राक्षसीभिल्लयोनिंचनतश्चांतेसमीपतुः पिंगाक्षदुर्बुद्धिरिति नाम्नाजातौचभूतले आजन्मकृतपापस्यकथनेबहु
दोषता यदातौराज्यप्रभृतिआस्तांपापरतौसदा एकंपुण्यंतयोरासीन्मृगयांसर्पतोःक्वचित् शंकरस्यचनमनंदर्शनंचप्रद
क्षिणा अर्चनंबिल्वपत्राद्यैःस्तत्रस्पष्टआसीदुमापतिः अगाधंतत्तयोःपुण्यंपूर्वजन्मनिसंचितं यदापुनाराक्षसोसौभूमिपंभ-
क्षितुंगतः सआरूढोबिल्ववृक्षंतत्पत्राणीचमस्तके पतितानिउमेशस्यतुष्टोभूत्सद्वयोरपि दिव्यदेहंतयोर्दत्वास्वंलोकंप्रा
पयद्विभुः एतत्तेकथितंपूर्वजन्मकर्मचवैतयोः बिल्वपत्रार्चनादेवतुष्टोभूत्सउमापतिः लक्षपूजांप्रकुर्याच्चप्रसन्नोहिशिवोभ
वेत् एवंहिबिल्वपत्रैश्चसर्वकामार्थसिद्धये श्रीकामोबिल्वपत्रैश्चपूजयेच्चतथाशिवं लक्षेणसर्वसिद्धिश्चनात्रकार्याविचार-
णा यंयंचिंतयतेकामंतंतंप्राप्नोतिसर्वशः अथविप्रप्रवक्ष्यामिबिल्वपत्रैश्चपूजनं शंभुप्रीतिकरंनृणांशिवभक्तिविवर्धनं वै

शार्वेश्रावणेऊर्जेबिल्वपत्रार्चनंस्मृतं दिनेदिनेसहस्रंतु अर्चयेद्बिल्वपत्रकैः एवंमासत्रयंकुर्यात्ततउद्यापनंचरेत् उद्यापनं
प्रवक्ष्यामिव्रतस्यपरिपूर्तये आहूयब्राह्मणान्सर्वान्सुचंद्रेचशुभेदिने यत्रचोद्यापनंकार्यंमंडलंतत्रकारयेत् कर्तव्यंस्वगृहे
विप्रैस्तत्सर्वंसुकृतंभवेत् वेदिकातत्रकर्तव्यामंडपेचसुशोभने गीतवादित्रघोषेणब्रह्मघोषेणभूयसा प्रविश्यमंडपेत-
स्मिन्आचार्येणद्विजैःसह मासतिथ्यादिसंकीर्त्यकुर्यात्स्वस्त्ययनंततः पुण्याहवाचनंकार्यंआचार्यवरणंतथा ततोब्राह्मण
माहूयवेदवेदांगपारगं आचार्यंवरयेत्पूर्वंऋत्विगेकादशैःसह देवागरेथवागोष्ठेशुद्धेवास्वीयमंदिरे पुष्पमंडपिकांकृत्वापद्म
कूलादिवेष्टितां तन्मध्येलिंगतोभद्रंरचयेल्लक्षणान्वितं कुंभस्यरुद्रकोणेतुरचयेद्वेदिकांव्रती वस्त्रेणाच्छाद्यतांवेदींरचयेत्त
त्रतंदुलैः कुर्यात्तंदुलकैलासंत्रिकूटंतस्यचोपरि न्यसेद्देविकयासार्द्धंशंकरंलोकशंकरं सौवर्णींप्रतिमांकृत्वास्थापयेत्तंदुलो
परि ब्रह्माणंदक्षिणेभागेसावित्र्यासहसुप्रभं कौबेर्यांस्थापयेद्विष्णुंलक्ष्म्यासहगरुत्मता महेशंस्थापयेन्मध्येपार्वत्या
सहसुप्रभं कलशंस्थापयेत्तत्रताम्रंवामृन्मयंशुभं गंगोदकसमायुक्तं पंचरत्नसमन्वितं पंचपल्लवसंयुक्तंस्थापयेच्च
ततोग्रतः वस्त्रयुग्मेनसंवेष्ट्यकैलासंकलशंशुभः यदुक्तंतत्रकल्पोक्तंपूजनंतत्रकारयेत् वेदशास्त्रप्रमाणेनरात्रिंतांगमयेद्व्र
ती ततःप्रभातसमयेसुस्नायचशुचिर्भवेत् स्थंडिलंकारयेत्तत्रस्वशाखोक्तविधानतः हवनंचप्रकुर्वीतसतिलाज्येनपा
यसैः मूलमंत्रेणगायत्र्याशंभोर्नामसहस्रकैः येनमंत्रेणपूजातुकृतातेनैवहोमयेत् हवनंतद्दशांशेन तद्दशांशेनतर्पणं वंद

नंतदूर्शांशेनकुर्यात्तिलयवैःसह एवंहोमःप्रकुर्वीत अष्टोत्तरसहस्रकं बिल्वपत्रंसुवर्णस्य अर्पयेच्चउमापतिं आचार्यपूजयेद्विप्रां स्तोषयेद्दक्षिणादिभिः पयस्विनींचगांदद्याद्धिरण्येनसहैवतु प्रतिमांचसवस्त्रांचकलशंपर्वतंतथा दत्वाक्षमापयेत्सम्यग्देवदेवंज गद्गुरुं अनेनैवविधानेनलक्षपूजांकरोतियः पुत्रपौत्रप्रपौत्रैश्चराज्यंप्राप्नोतिशाश्वतं यइदंपठतेनित्यंश्रद्धाभक्तिसमन्वितः देवदेवोमहादेवोददातिविपुलांगतिं इतिश्रीस्कंदपुराणेउत्तरखंडेबिल्वदललक्षपूजनोद्यापनंसंपूर्णं अथशिवस्य नानालक्षपूजाविधिः ऋषयऊचुः यानिकानिचतीर्थानिपुण्यान्यायतनानिच किमुद्दिश्यचकार्याणितत्सर्वंकथ यप्रभो शिवाख्यानपरोलोकेत्वत्तोन्योनहिविद्यते कृपयाव्यासदेवस्यसर्वज्ञोसिमहामते लोमशउवाच पृथिव्यां यानितीर्थानिसागरांतानिभोद्विज माहात्म्यानिचशास्त्राणिकथितानिमयापुरा इदानींवक्तुमिच्छामिलक्षपूजांशिवस्यच स्कंदेनचसमाख्याताअगस्त्यायमहात्मने तेनैवकथितापूजामभाग्रेलक्षपुष्पिका यद्यद्दतौभवेत्पुष्पंशंकरेतुसमर्पयेत् श्रावणेमाधवेऊर्जेविदध्याल्लक्षपुष्पिकां एकैकंमूलमंत्रेणरुद्रमंत्रेणवापुनः अथवारुद्रसूक्तेनसहस्रेणाथवाव्रती अर्च येत्पार्वतीनाथंनमोरुद्रायवाजपेत् अनेनैवप्रकारेणलक्षपूजांसमर्पयेत् ऋषयऊचुः यानिकानिचपुष्पाणिविशि ष्टानिशिवार्चने तानिसर्वाणिभोब्रह्मन्कथयस्वयथामम लोमशउवाच बार्हतंकर्णिकारंचकरवीरंतिलस्यच बिल्वपुष्पंचकल्हारंअर्कमंदारमेवच नीलोत्पलंचकमलंकुमुदंचकुशेशयम् मालतीचंपकंचैवतथामोगरकंशुभं तगरं

शतपत्रंचसौवीरंमुनिसंज्ञिकं जातिपाटलकंचैवपुंनागंचविशिष्यते कदंबंचकुसुंभंचअशोकंबकुलंतथा पालाशकोरटंचैवक
बिलंधत्तुरंतथा एतान्यन्यानिपुष्पाणिविशिष्टानिशिवार्चने एतेषांलक्षपूजांवैयः करोतिनरोत्तमः भुक्त्वाभोगान्सुविपुलान्शिवेन
सहमोदते आयुःकामेनकर्तव्यचंपकैःपूजनंमहत् विद्याकामेनकर्तव्यंअर्कपुष्पैर्विशेषतः पुत्रकामेनकर्तव्यंबार्हतैःपूजनंमहत्
करवीरैर्जातिकुसुमैश्चंपकैर्नागकेसरैः बकुलीतिलपुन्नागैर्धनकामेनपूजयेत् दुःस्वप्ननाशनार्थायद्रोणपुष्पैस्तुपूजनं कल्हा
रैःकर्णिकारैश्चमंदारैःकुसुमैःशुभैः श्रीकामेनचकर्तव्यंबिल्वपुष्पैस्तुपूजनं विद्याकामेनकर्तव्यंशंकरस्यप्रपूजनं पालाशैःसा
दलैश्चैवकदंबकुसुमैस्तथा महाव्याधिनिरासार्थंपारिजातैस्तुपूजनं वशीकरणकामेनसौवीरैस्तोषयेत्तुयः तस्यविश्वंभवेद्वश्यं
नात्रकार्याविचारणा देवदानवगंधर्वावशीभवंतिनान्यथा पुत्रकामेनकर्तव्यंधत्तूरकुसुमैःशुभैः उत्तमांश्रियमाप्नोतिप्रसादा
च्छंकरस्यच एवंसर्वैश्चपुष्पैश्चसर्वकामार्थसिद्धये पूजयेत्पार्वतीनाथंभक्तियुक्तेनचेतसा यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः ल
क्षपुष्पैःपूजनेनप्रसंनःशंकरोयथा उद्यापनंप्रवक्ष्यामिव्रतस्यपरिपूर्तये आहूयब्राह्मणान्सर्वान्शुभेचतिथिवासरे यत्रउद्या
पनंकार्यंमंडपंतत्रकारयेत्स्वशाखोक्तेनकर्तव्यंतत्सर्वंसुकृतंभवेत् वेदिकाचप्रकर्तव्यामंडपेतत्रशोभने गीतवादित्रघोषेणब्रह्म
घोषेणभूयसा प्रविश्यमंडपेतस्मिन्आचार्येणद्विजैःसह तिथिऋक्षंचसंकल्प्यकुर्यात्स्वस्त्ययनंततः पुण्याहवाचनंकार्यंआ
चार्यवरणंततः वेदिकायांतुकर्तव्यंस्वस्तिकंपरमंशुभं तन्मध्येविधिवद्विप्रमंत्रैर्वेदोक्तस्वस्तिकैः कुर्यात्तंदुलकैलासंत्रिकूटंत

स्यचोपरि तस्योपरिन्यसेत्कुंभंताम्रंमृन्मयमेववा ब्रह्माणंदक्षिणेभागेउदीच्यांविष्णुमेवच सौवर्णीप्रतिमांकुर्यास्थापयेत्तंदुलो
परि महेशंस्थापयेन्मध्येपार्वत्यासहरूकप्रभं पंचपल्लवसंयुक्तंस्थापयेत्तस्यचाग्रतः वस्त्रयुग्मेनसंवेष्ट्यकैलासंकलशंशुभं यदुक्तं
रुद्रकल्पेतु पूजनंतत्रकारयेत् वेदशास्त्रपुराणेनरात्रौजागरणंचरेत् ततःप्रभातसमयेनद्यास्नात्वाशुभेजले स्थंडिलंकारये-
त्तत्रस्वशाखोक्तविधानतः हवनंरुद्रमंत्रेणतिलाज्येनचपायसैः नानाविधैर्भक्ष्यभोज्यैर्गंधधूपादिभिस्तथा प्रार्थयेच्छंकरंदेवं
विरिंचिंविष्णुनासह सावित्रींपार्वतींचैवलक्ष्मींगणपतिंतथा स्कंधभैरवचामुंडापरिवारांस्ततोर्चयेत् नैवेद्यैर्विविधैश्चैवतो
षयेद्गिरिजापतिं शर्कराघृतचूर्णेनचरुणाजुहुयात्सह श्रेयःसंपादनंकार्यंआचार्यपूजनंतथा ऋत्विजःपूजयेत्सम्यग्वस्त्रालं
करणैःशुभैः गोभूहिरण्यवस्त्राद्यैस्तोषयेद्ब्राह्मणांस्ततः अभिषेकंततःकुर्यात्पुराणश्रुतिचोदितं ततःशिवालयेगत्वासभार्येणद्वि
जैःसह स्नानंपंचामृतेनैवरुद्रसूक्तविधानतः पूजांसुवर्णपुष्पैश्चऋतुकालोद्भवैस्तथा कारयेत्तस्यलिंगस्ययथाशक्त्यातुपूजनं
वस्त्रयुग्मंसमभ्यर्च्यदंपतीन्भोजयेत्ततः प्रदक्षिणानमस्कारान्कृत्वामूर्ध्निकृतांजलिः क्षमापयेन्महादेवंमुहुर्मुहुरतंद्रितः महादे
वजगंनाथभक्तानांकार्यकारक त्वत्प्रसादादहंयाचेशीघ्रंकार्यप्रदोभव अनेनैवविधानेनलक्षपूजांकरोतियः पुत्रपौत्रप्रपौ-
त्रैश्चराज्यंप्राप्नोतिशाश्वतं यइदंपठतेनित्यंश्रद्धाभक्तिसमन्वितः देवदेवोमहादेवोददातिविपुलांमतिं इतिश्रीस्कंदपुराणे
उत्तरखंडेलक्षपुष्पपूजोद्यापनंसंपूर्णं अथतुलसीलक्षपूजाविधिः मासपक्षाद्युल्लिख्य ममसमस्तपापक्षयार्थं

श्रीमहाविष्णुप्रीत्यर्थंतुलसीलक्षपूजांकरिष्ये इतिसंकल्प्य तुलसीप्रार्थना देवैस्त्वंनिर्मितापूर्वंअर्चितासिमुनीश्वरैः
नमोनमस्तेतुलसिपापंहरहरिप्रिये प्रार्थना तुलस्यमृतजन्मासिसदात्वंकेशवप्रिये केशवार्थेविचिन्वामिवरदाभवशोभने
तुलसीपत्राणिसंगृह्यविष्णोर्भक्त्यासमर्पयेत् कृष्णउवाच अथराजन्प्रवक्ष्यामिलक्षश्रीतुलसीव्रतं विष्णुप्रीतिकरं
नृणांविष्णुभक्तिविवर्धनं तुलसीप्रभवैःपत्रैर्योनरःपूजयेद्धरिं नसलिप्येतपापौघैःपद्मपत्रमिवांभसा सुवर्णभारमेकंतुर
जतंचचतुर्गुणं तत्फलंसमवाप्नोतितुलसीदलपूजनात् रत्नवैडूर्यमुक्ताभिःप्रवालादिभिरर्चितः नतुष्यतितथाविष्णुस्तुलसी
पूजनाद्यथा तुलसीमंजरीभिस्तुपूजितोयेनकेशवः आजन्मकृतपापस्यतेनेनंसंमार्जितालिपिः यादृष्टानिखिलाघपापशम
नीस्पृष्टावपुःपावनी रोगाणामभिवंदितानिरसिनीसिक्तांतकत्रासिनी प्रत्यासंतिविधायिनीभगवतःकृष्णस्यसंरोपिताय
स्यार्चाकरणेविमुक्तिफलदातस्यैतुलस्यैनमः कार्तिकेमासिकुर्वंतिमाघेवामधुसूदने दिनेदिनेसहस्रंतुअर्पयेत्तुलसीछदान्
एवंमासत्रयंकुर्यात्ततउद्यापनंचरेत् वैशाखेमाघऊर्जेवाकुर्यादुद्यापनंक्रमात् यस्मिन्मासेप्रकर्तव्यंगुरुशुक्रोदयेसति हरेर्दि
नेशुभेमासिकुर्यादुद्यापनंव्रती आचार्यंवरयेदादौवेदवेदांगपारगं दांतंशांतंतथासौम्यंनित्यंब्राह्मणवर्चसं विधिज्ञंतत्त्व
वेत्तारंशुचिषंतंतपस्विनं स्वगृह्योक्तेनमार्गेणपूर्वंद्युःस्वस्तिवाचनं सौवर्णींप्रतिमांविष्णोःशंखचक्रगदान्वितां तुलस्यायत
नंचैवकुर्याद्धेमविनिर्मितां हेमादिनिर्मितंकुंभंपूर्णपात्रसमन्वितं पुण्योदकैःपंचरत्नैःकुशदूर्वाप्रपूरितं तस्योपरिन्यसेद्विष्णुं

व्र०रा
२१

लक्ष्म्याच तुलसीसमं पूजांपुरुषसूक्तेनकुर्याद्ब्रह्मादिदेवताः उपचारैःषोडशभिः पूजयेच्चतथाहरिं रात्रौजागरणंकुर्यात्पुराणैर्वे-
दपाठकैः ततःप्रातःसमुत्थायहोमंकुर्याद्विधानतः वैष्णवेनतुमंत्रेणतिलाज्येनविशेषतः पायसेनघृताक्तेनअष्टोत्तरसहस्रकं आ
चार्यायसवत्सांगांदक्षिणावस्त्रसंयुतां ब्राह्मणान्भोजयेत्पश्चात्सहस्रंवाथशक्तितः शतंवाष्टाविंशतिंचभोजयेद्ब्राह्मणान्बुधः
तेभ्योपिदक्षिणांदद्याद्वित्तशाठ्यंनकारयेत् एवंयःकुरुतेमर्त्योविष्णुसायुज्यतांव्रजेत् विष्णुप्रीतिकरंयस्मात्तस्मात्सर्वव्रताधि
कं तुलसीलक्षपूजोक्तंमहात्म्यंशृणुयान्नरः सकृद्वापिपठेन्नित्यंसगच्छेद्वैष्णवंपदं होम भस्मसमादायरक्षांकृत्वातथात्मनः ब्र-
ह्मराक्षसभूतानांशांतयेकारयेदिदं सर्पादिबाधकेप्राप्तेगर्भिण्यायाश्चनिर्गमात् भस्मप्रोक्षणमात्रेणसर्वंनश्येद्भयंनृणां
इतिभविष्योत्तरपुराणेलक्षतुलसीव्रतोद्यापनंसंपूर्णं अथविष्णोर्लक्षपुष्पपूजाविधिः ऋषयऊचुः यानिकानि
चतीर्थानिपुण्यान्यायतनानिच किमुद्दिश्यचकार्याणितत्सर्वंकथयप्रभो लोमशउवाच पृथिव्यांयानितीर्थानि
सागरांतानिभोद्विजाः महात्म्यानिचसर्वाणिकथितानिमयापुरा इदानींवक्तुमिच्छामिपुष्पाणांपूजनंतव लक्षपूजांप्रवक्ष्यामि
विष्णोरमिततेजसः पुष्पाणांलक्षपूजांतुकार्तिक्यांचसमाचरेत् माघेवाबहुलेवापिविदध्याल्लक्षपुष्पिकां यद्यदृतौभवेत्पुष्पं
विष्णवेचसमर्पयेत् एकैकंमूलमंत्रेणविष्णुसूक्तेनवापुनः अथवाविष्णुगायत्र्यानाम्नाचैवप्रपूजयेत् विष्णोःसहस्रनाम्नावै-
लक्षपूजांतुकारयेत् अतसीकर्णिकारंचकरवीरंतिलस्यच बार्हतंकेतकीचैवतथामंदारमेवच नीलोत्पलंसकुमुदंमालतीचंपकं

२१

तथा जातीपाटलकेचैवपुन्नागंचकदंबकं कल्हारंमोगरंचैव अशोकंबकुलंतथा मुनिपुष्पाणिशस्तानिविष्णोरमिततेजसः पा
लाशंकंटकीपुष्पंकमलंकोरदंतथा नीलपुष्पंधात्रिपुष्पंहरेःशस्तानिवैसदा एवंकुर्वंतियेभक्त्यातेयांतिहरिमंदिरं आयुःका
मेनकर्त्तव्यंअतसीधात्रिजैस्तथा पुत्रकामेनकर्त्तव्यंबार्हतीपूजनंहरेः करवीरैर्जातिकुसुमैश्चबकैर्नागकेसरैः बकुलीतिल
पुंनागैर्धनकामेनपूजयेत् कल्हारैःकर्णिकारैश्चमांदारैःकुसुमैःशुभैः विद्याकामेनकर्त्तव्यंविष्णोर्भक्त्याचपूजनं पालाशैःपा
टलैश्चैवकदंबैःपूजनंमहत् महाव्याधिविनाशार्थंपारिजातैश्चपूजनं वशीकरणकामेनसौवीरैस्तोषयेद्धरिं तस्यविश्वंभवे
द्वश्यंनात्रकार्याविचारणा देवदानवगंधर्वावशीभवंतिनान्यथा श्रीकामेनतुकर्त्तव्यंकेतकीपूजनंमहत् एवंहिसर्वपुष्पैश्चस
र्वकार्यार्थसिद्धये लक्षपूजांप्रकुर्याच्चप्रसन्नोहिहरिर्भवेत् उद्यापनंतथाकार्यंमंडपंतत्रकारयेत् आहूयब्राह्मणान्सर्वान्शुभनक्ष
त्रेशुभेदिने वेदिकाचप्रकर्तव्यामंडपेतुसुशोभने गीतवादित्रघोषेणब्रह्मघोषेणभूयसा प्रविश्यमंडपेतत्र आचार्येणद्विजैःस
ह पुण्याहवाचनंकृत्वाआचार्यादीन्वरेत्ततः उपोष्यदिवसेतस्मिन्रात्रौजागरणंचरेत् वेदिकायांतुकर्त्तव्यंस्वस्तिकंपरमाद्भुतं तन्म
ध्येतंदुलैःकुर्यात्घृतदीपंसुशोभनं पंचपल्लवसंयुक्तंन्यसेद्धस्त्रंसुशोभनं तस्योपरिन्यसेत्कुंभंपूर्णपात्रेणसंयुतं सौवर्णीप्रति
मांतत्रस्थापयेच्चहरेर्विभोः पूजांतत्रप्रकुर्वीतपंचामृतपुरःसरैः धूपदीपैश्चनैवेद्यैर्गीतवादित्रनृत्यकैः वेदशास्त्रपुराणैश्चतांरात्रीं
गमयेद्व्रती ततःप्रभातसमयेसुस्नातश्चशुचिर्भवेत् स्थंडिलंकारयेत्तत्रस्वशाखोक्तविधानतः हवनंचप्रकुर्वीतसतिलाज्ये-

नपायसैः मूलमंत्रेणगायत्र्याविष्णोर्नामसहस्रकैः येनमंत्रेणपूजावाकृतातेनैवहोमयेत् शर्करघृतपूर्णेनचरुणाजुहुयात्ततः
एवंहोमःप्रकर्तव्यअष्टोत्तरसहस्रकैः ततःस्विष्टकृतंहुत्वापूर्णाहुतिमतःपरम् श्रेयःसंपादनंपश्चादाचार्यपूजयेत्ततः ब्राह्मणा
न्भोजयेत्पश्चात्तेभ्योदद्याच्चदक्षिणां आचार्यपूजयेत्सम्यक्वस्त्रालंकरणैःशुभैः पयस्विनींचगांदद्याद्धिरण्यादिततथैवच प्रतिमांच
सवस्त्रांचकुंभेनाचार्यमर्पयेत् दत्वाक्षमापयेत्पश्चाद्देवदेवंजनार्दनम् येनयेनप्रकुर्याच्चलक्षपूजांचविष्णवे सौवर्णंचैवतत्पु-
ष्पमर्पयेच्चहरिंततः ब्राह्मणांश्चसपत्नीकान्भूषणैस्तोषयेत्ततः प्रदक्षिणानमस्कारान्कृत्वामूर्ध्निकृतांजलिः एवंयःकुरुतेपूजांतस्य
विष्णुःप्रसीदति इतिश्रीविष्णुधर्मोत्तरेविष्णोर्लक्षपुष्पपूजनोद्यापनंसं॰ अथबिल्ववर्त्युद्यापनविधिः द्रौपद्युवाच बिल्वव
र्तिविधिंब्रूहिदुर्वासःसर्वदर्शन कस्मिन्कालेसमारंभःकस्मिंश्चैवसमापनं दुर्वासाउवाच राजपुत्रिप्रवक्ष्यामिविधानंस
र्वकामद श्रद्धावित्तंयदास्याद्यातदैवप्रारभेद्व्रतं कार्पासस्यस्वहस्तेनतंतुंनिष्काशयेत्ततः स्वकीयैर्वाचविप्राद्यैरंगुलीत्रयसं-
मिता त्रिवृत्ताशोभनाचैवबिल्ववर्तिरुदाहृता ततःसंवर्तयेद्वर्तिस्वप्रदेशिनिसंमतां एवंलक्षमिताःकार्याःशक्तौकोटिमिताश्च
पि सर्वशक्तौतुकार्पासस्वांगुलेनैवनिर्मिताः घृतेनिमज्ज्यवातैलेस्थापयेत्ताम्रपात्रके स्थापयेन्मृन्मयेपात्रेप्रत्यहंसंख्ययान्वि
ताः श्रावणेमाधवेमाघेकार्त्तिकेतुविशेषतः दिनेदिनेसहस्रंतुअर्पयेद्बिल्ववर्त्तिकाः त्र्यंबकेश्वरमुद्दिश्यदेवागारेविशेषतः
गंगातीरेथवागोष्ठेयद्वाब्राह्मणसन्निधौ प्रज्वालयेत्तुपूजांतेब्रह्मलोकजिगीषया नारीवापुरुषोवापिभक्तियुक्तेनचेत

सा एकस्मिन्नेवदिवसेज्वालयेद्यदिसंभृतिम् नमःशंभवइत्येवंमंत्रोरुद्राक्षरैर्मितः पूजनस्यदशांशेनशिवमंत्रेणकारयेत् तर्प-
णंतद्दशांशेनतद्दशांशेनवंदनम् तद्दशांशेनवैहोमंकुर्याच्चरुतिलाज्यकैः अष्टोत्तरसहस्रंवामंत्रैःपौराणिकैर्मतः दद्याद्वर्त्तिय
मुद्दिश्यतद्देवस्यमनुर्मतः एवंसंपाद्यवैशास्त्र्यांकार्त्तिक्यांवाविशेषतः माघ्यांवाप्यथवान्यस्यांकस्यांचित्पूर्णिमातिथौ प्रातःस्ना
त्वाशुचिर्भूत्वाकुर्यादुद्यापनंबुधः गणेशपूजनंस्वस्तिवाचनंनांदींचकारयेत् आचार्यंवरयेत्सभ्यात्सर्वलक्षणसंयुतम् देवागारेथ
वागोष्ठेशुद्धेवास्वीयमंदिरे पुष्पमंडपिकांकृत्वापट्टकूलादिवेष्टितां तन्मध्येलिंगतोभद्रंचरयेल्लक्षणान्वितम् ततोवैरुद्रकोणेतुर
चयेद्वेदिकांव्रती वस्त्रेणाच्छादितांवेदींचरयेत्तत्रतंडुलैः अष्टपत्रान्वितंपद्मंकर्णिकाभिःसमन्वितं कलशंस्थापयेत्तत्रअव्रणंसज
लंतथा ताम्रमृन्मयपात्रंवातस्योपरिन्यसेत्सुधीः तस्योपरिन्यसेद्देवंउमयासहितंशिवम् सुवर्णनिर्मितंदेवंवृषभेणसमन्वि
तम् रजतस्यदीपपात्रंकृत्वाशक्त्यायथाविधि सुवर्णवर्त्तिकांकृत्वातन्मध्येस्थापयेत्सुधीः स्थापनंलिंगतोभद्रेब्रह्माद्यावाहनंत
तः न तःपूजांविनिर्वर्त्यमहासंभारविस्तरैः परमान्नंचनैवेद्यंभक्त्यादेवायदापयेत् उपोष्यजागरंकुर्याद्रात्रौसत्कथयामुदा
ततःप्रभातेविमलेजलेस्नात्वाप्रसन्नधीः वर्तिसंख्यादशांशेनतर्पणंकारयेद्व्रती तर्पणस्यदशांशेनहोमयेद्रुद्रमंत्रतः ति-
लाज्यचरुभिर्बिल्वैरुद्रमंत्रेणहोमयेत् आचार्यायप्रदातव्या गौःसवत्सापयस्विनी ब्रह्मादिमंडलंमूर्त्तिंदद्यात्सोपस्करांतथा
यजमानमथाचार्यस्त्वभिषिंचेद्गृहान्वितम् विसर्जयेत्ततोदेवंब्रह्मादिसहितंपुनः दद्याच्चभूयसींकर्मसमाप्याथविच-

क्षणः होमस्यतुदशांशेन ब्राह्मणान्भोजयेत्ततः दत्वाचदक्षिणांतेभ्योगृण्हीयादाशिषः शुभाः वर्द्धमानंरौप्यमयंहेमव-
र्तिसमन्वितं अथवाकांस्यपात्रंचघृतेनापूरितंशुभम् ब्राह्मणायप्रदातव्यंदक्षिणासहितंशुभं ततोभुंजीतत्तच्छेषंशिष्टे
रिष्टैश्चबंधुभिः एवंद्रुपदराजेंद्रपुत्रिसत्यव्रतेनघे लक्षवर्तिव्रतविधिस्तवाग्रेकथितोमया यंकृत्वाभक्तिभावेननारीवापु
रुषोपिवा दारिद्र्यतमसःसद्योमुच्यतेनात्रसंशयः पुत्रपौत्रप्रपौत्रंचसुखंसंप्राप्यभूतले अंतेदिव्यविमानेनलभतेज्वलि
तंपदं नैषधाधिपतेर्भार्याभर्तृदर्शनलालसा कृत्वाव्रतमिदंप्रापराज्यंभर्तृसुतान्वितं अन्याभिर्ऋषिपत्नीभिर्ऋषिभि-
श्चापितत्वगैः कृतमेतद्व्रतंदेवीस्वस्वकामार्थसिद्धये राजपुत्रिमहाभागेवनव्यसनदुःखिते कुरुष्वैतद्व्रतंसम्यक्माकृथाःकाल
बंधनं अयंकार्तिकमासश्चमासानामुत्तमोत्तमः आगामिन्यांपौर्णिमास्यांउद्यापनविधिंचर इदंदुर्वाससाख्यातंद्रौपद्यैव्रत
मुत्तमं येकरिष्यंतिमनुजास्तेलभेयुःसमीहितं इतिजैमिनीये आरण्यकेबिल्ववर्त्युद्यापनंसंपूर्णं अथरुद्रवर्त्युद्यापनविधिः
नारदउवाच देवदेवजगन्नाथजगदानंदकारक कौतुकेनेप्सितंकंचिद्धर्मप्रश्नंकरोम्यहं श्रुतानिदेवदेवेशव्रतानिनि
यमास्तथा तीर्थानिचमहंतीशायज्ञदानान्यनेकशः नास्तिमेनिश्चयोदेवभ्रामितोहंत्वयापुनः कथयस्वमहादेवयद्गोप्यंव्र
तमुत्तमं शिवउवाच शृणुनारदयेत्नेनव्रतानांव्रतमुत्तमं रुद्रवर्त्यभिधंपुण्यंसर्वोपद्रवनाशनं सुखसंपत्करंचैव
पुत्रराज्यसमृद्धिदम् शंकरप्रीतिजनकंशिवस्थानप्रदायकं स्वभर्त्रासहनारीणांमहास्नेहकरंपरं शृणुनारदयत्नेनगिरिशो

यत्रतुष्यति दीपानांलक्षदानंयत्कुर्यात्सपरमधार्मिकः यावत्कालंप्रज्वलंतीदीपास्तस्यशिवसन्निधौ ब्रह्मणोयुगसाहस्रंदातास्वर्गे
महीयते कार्पासवर्त्तिकायुक्तादीपादत्ताःशिवालये सुचिरंतेपिकैलासेतिष्ठंतिशिवमूर्त्तयः एवंहिबहवःसंतिदीपाश्चद्विजस
त्तम अधुनासंप्रवक्ष्याम्यस्पृर्वैःकथितंतव यत्कृत्वाकृतकृत्यास्युःदेवासुरनरेश्वराः एवंज्ञात्वानकुर्वंतितेज्ञेयादुःखभागिनः रु
द्रवर्तिसमं नास्तित्रिषुलोकेषुसुव्रतं अतएवसदाकार्यंव्रतमेतत्सुदुर्लभं मयाख्यातंव्रतमिदंकिमन्यच्छ्रोतुमिच्छसि नार
दउवाच केनचीर्णंव्रतमिदंकथयस्वप्रसादतः पूजाविधिंचमेब्रूहिउद्यापनसमन्वितं शिवउवाच शृणुनारददेवर्षेय
त्वंश्रोतुमिहेच्छसि तदहंसंप्रवक्ष्यामिविस्तरेणमहामते नर्मदायुत्तरेदेशेपुरीचोज्जयिनीशुभा तस्यामासीत्सुगंधान्ववा
रस्त्रीअतिसुंदरी तयाशुल्कंकृतंविप्रयुवभिश्चसुदुःसहम् सुवर्णानांशतंसाग्रंप्रतिज्ञातंचतैःकृतम् युवानश्चतथावि
प्राश्चभ्रंशिताश्चसुगंधया राजानोराजपुत्राश्चनग्नीकृत्यपुनःपुनः येषांद्रव्यंगृहीतंचधिक्कृतास्तेसुगंधया एवंहिबहवोलोका
लुंठिताश्चसदातया कदाचित्सागताक्षिप्रंकौतुकाविष्टमानसा ददर्शचमनोरम्यांपक्षिभिःपरिसेवितां केचिद्ध्यानपराविप्राः
केचिज्जपपरायणाः केचिच्छिवार्चकाविप्राःकेचिच्छक्तिप्रपूजिकाः तेषांमध्येवसिष्ठोहितथादृष्टोमहामुनिः उपविष्टः
कर्मसुनेकुशलोनीतिमार्गवित् तस्याधर्मेमवद्बुद्धिर्भाविपुण्यबलात्तदा विगताशाजीवनेसाविषयेषुविशेषतः विनम्र
कंधराभूत्वाप्रणिपत्यपुनःपुनः स्वकर्मपरिहारायपप्रच्छमुनिपुंगवम् सुगंधोवाच अनाथनाथविप्रेंद्रसर्ववेदविशारद

प्रसीदपाहिमांदेवशरणागतवत्सल मयाकृतानिविप्रेंद्रपापानिस्कबहूनिच तस्यपापस्य नाशायकारणंब्रूहिमप्रभो शि
वउवाच एवमुक्तस्तयाविप्रोवरिष्ठोमुनिरादरात् तेनज्ञातंचतत्सर्वंतस्याःकर्मपुरातनम् ततोब्रवीत्सचमुनिर्वचस्तांस
त्यसागरः वसिष्ठउ॰ शृणुस्कश्रोणिस्कभगेतवपापस्यसंक्षयः येनयज्जायतेपुण्यंतत्सर्वंकथयामिते यच्चतीर्थमह
त्पुण्यंत्रिषुलोकेषुविश्रुतं प्रयागमितिविख्यातंसर्वदेवैश्चरक्षितं गत्वातत्रप्रयागेवैव्रतंत्रैलोक्यदुर्लभं रुद्रवर्त्यभिधंपु
ण्यंशिवप्रीतिकरंपरं कार्पासतंतुभिःकार्यारुद्रवर्तीशिवप्रिया हस्तेनैवप्रकर्त्तव्यायुग्मकंस्कद्वदशस्कं एकादशैस्तंतुभिश्च
कारयेद्रुद्रवर्त्तिकां लक्षसंख्याचकर्त्तव्यागव्याज्येनपरिप्लुता सौवर्णंराजतंताम्रंमृन्मयंवानवंदृढं तत्पात्रेस्थापयेद्वर्त्तिंघृत
तैलेनपूरयेत् देयाशिवालयेनित्यंभक्तियुक्तेनचेतसा अथवातिलतैलेनकर्त्तव्यालक्षवर्तिका कृत्वाव्रतमिदंभद्रेप्राप्स्यसि-
त्वंपरांगतिं शिवउवाच ततःसाक्रोशमादायभृत्यंचैवस्कमित्रकं आयातातीर्थराजंवैदत्वादानानिसर्वशः व्रतंकृत्वाय
योकाश्यांस्कमित्रेणसमन्विता कृत्वासर्वाणितीर्थानिविश्वेशंप्रणिपत्यच उपोष्यरजनीमेकांजागरश्चतथाकृतः स्नात्वाचो
त्तरवाहिन्यांदत्वादानानिभूरिशः ततश्चक्रेव्रतंविप्रवसिष्ठेनोदितंचयत् यथोक्तविधिनासर्वंतथाचानुष्ठितंव्रतं ततःसा
स्वशरीरेणतस्मिन्लिंगेलयंययौ एवंयाकुरुतेनारीव्रतमेतत्स्कदुर्लभं यंयंचिंतयतेकामंव्रतस्यास्यप्रभावतः पुत्रपौत्रौधनं
धान्यंलभतेनात्रसंशयः शिवउवाच अथचोद्यापनंवक्ष्येव्रतसंपूर्णहेतवे प्रारंभेकार्त्तिकेमाघेवैशाखेश्रावणे

तथा तेषुचोद्यापनंकार्यंयथोक्तविधिनाततः अष्टकर्णिकयायुक्तं मंडलंकारयेच्छुभं कलशंस्थापयेत्तत्रपिधानेनसमन्वितं रौप्यंता-
म्रंमृन्मयंवावस्त्रयुग्मेनवेष्टितं तस्योपरिन्यसेद्देवमुमयासहितंशिवं रजतस्यदीपपात्रंकृत्वाशक्त्यायथाविधि स्वर्णवर्तिकांकृ
त्वातन्मध्येस्थापयेत्सुधीः स्वर्णनिर्मितंदेवंवृषभेणसमन्वितं पूर्वोक्तेनविधानेनपूजांकृत्वासमाहितः आचार्यंवरयेत्पूर्वंद्विजे
रेकादशैःसह होमंचैवसुसंपाद्यतिलपायसबिल्वकैः अष्टोत्तरसहस्रंवाअथवाष्टोत्तरंशतं रुद्रसूक्तेनवाविप्र मूलमंत्रेणवापु
नः दीपंलक्षंप्रकुर्वीतनरःपरमधार्मिकः दीपान्घृतेनसंयुक्तान्नरोदद्याच्छिवालये स्वर्णवर्तियुतंदीप माचार्यायनिवेदयेत् ततः
पूर्णाहुतिंहुत्वाब्राह्मणैःस्वस्तिवाचनं आचार्यंपूजयेद्भक्त्यावस्त्रालंकारभूषणैः तस्मैदेयासवत्साचगौरेकासुपयस्विनी ऋत्विजः
पूजयेत्सम्याद्वस्त्रालंकरणैःशुभैः वस्त्रोपानद्युगंचैवभोज्यैश्वविविधैरपि तेचैवभोजनीयाश्चसपत्नीकाःप्रयत्नतः स्वर्ण-
वर्तिकांकृत्वारौप्यपात्रेतथैवच दद्याच्छिवप्रीतयेचसर्वकामार्थसिद्धये घृतपूर्णंरौप्यपात्रंकांस्यपात्रंतथैवच स्वर्णवर्तिसहितं
आचार्यायनिवेदयेत् रुद्रपीठंसप्रतिमंआचार्यायसमर्पयेत् कांस्यंविष्णुमयंरौप्यंगोघृतेनसमन्वितं स्वर्णवर्तिसंयुक्तमतःशा
तिंप्रयच्छमे महादेवजगन्नाथभक्तानुग्रहकारक त्वत्प्रसादादहंयाचेशीघ्रंकार्यप्रदोभव अनेनैवविधानेनरुद्रवर्तिंकरोतियः
पुत्रपौत्रैःपरिवृतोराज्यंप्राप्नोतिशाश्वतं एवंयाकुरुतेनारीसर्वपापैःप्रमुच्यते श्रुत्वाकथांविधानेनस्थाप्यंसर्वंनिवेदयेत् अश्व
मेधसहस्राणिवाजपेयशतानिच कथाश्रवणमात्रेणतत्फलंलभतेनरः इतिभविष्योत्तरेशिवनारदसंवादेरुद्रवर्तीव्रतो

द्यापनंसंपूर्णं   अथमाणिक्यवर्त्युद्यापनं   अद्येत्यादिमासपक्षाद्युल्लिख्यममइहजन्मनिजन्मांतरेवारजोदोषनिमित्तपापप
रिहारार्थंपुत्रपौत्रावैधव्यप्राप्तयेकृतंयल्लक्षवर्तीदीपदानंतत्सांगतासिद्ध्यर्थंतदुद्यापनंकरिष्ये   तदंगगणपतिपूजनंस्वस्तिवाचनंआ
चार्यवरणंकरिष्ये   इतिसंकल्प्य   शिवउवाच   प्रसंगेनापिवक्ष्यामिवर्तिंमाणिक्यसंज्ञिकां   तस्यादानेनदेवित्वंममा
र्धासनभागिनी   जातासिमत्प्रियाहित्वंयावदाभूतसंप्लवं   सूतउवाच   आर्यावर्तेपुराकाचिद्विट्स्याभूल्लक्षणाह्वया   त
स्याभुजंगोमित्राभूद्दासोनाममहाबली   सालक्षणाऋतुस्नातास्थितागोदावरीतटे   बालवैधव्यदुःखेनरुदंतींचकुमारिकां   मृतंप
तिंपुरःस्थाप्यबंधुभिःपरिवारितां   आलपंतींनतोवीक्ष्यशनैस्तांप्रत्यपद्यत   लुठंतींभुविकायेनमुहुर्घ्नंतीमुरोबहु   जडानामपिकारु
ण्यंजायतेतांप्रपश्यच   तदातांलक्षणांवाक्यंभुजंगोचाचसत्तमः   भुजंगउवाच   कुलजानांचनारीणांदशेयंचसुदारुणा
अवस्थात्रयमेतासांतत्रेयंचसुदारुणा   कन्यात्वंजीवपत्नीत्वंविधवत्वमितित्रिधा   पारवश्यंचनारीणांदुःखमामरणांतिकं   मृ
तापत्यंचवैधव्यंतथैवापुत्रतास्त्रियः   असह्यमेतत्त्रितयंवैधव्यंतत्रचोत्तरं   बालेयंशोचतेतीवकस्येदंकर्मणःफलं   निवर्ततेवाकेने
यंकोवावेत्तितथाविधां   उवाचदासनामासौभुजंगःसूनृतंवचः   भुजंगउवाच   शृणुभद्रेप्रवक्ष्यामिधात्रास्रष्टाःपुराद्वि
जाः   देवानांचैवलोकानांहितार्थेमंत्रकोविदाः   शास्त्रज्ञानात्स्वभावाच्चजीवानांयत्पुराकृतं   जानंतिकर्मचफलंपृष्टव्याश्चधृतव्र
ताः   भुजंगवचनंश्रुत्वातथैवोमितिसापुनः   ततोगत्वामहावृद्धंयाजकंनामवैद्विजं   पप्रच्छतंदयालुंचप्रश्नकातरमानसा   ल-

क्षणोवाच मुनेत्वहंदुराचाराकुलटालक्षणान्वया तथापित्वांदयापात्रंपृच्छतेमांनिबोधय साधूनांसमचित्तानांजनाःसर्वेस
माभुवि दुर्गंधोवासुगंधोवायथावायोःसमोभुवि मुनेदशेयंनारीणांतृतीयातीवदुःसहा कर्मणाजायतेयेनकेनवाथनिवर्त्तते
एतद्विचार्यमेब्रह्मन्कृपयावदसुव्रत शांडिल्यउवाच इतितस्यावचःश्रुत्वायाजकोवाक्यमब्रवीत् दैवेकर्मणिपि-
त्र्येचनार्यःपाकेषुसंस्थिताः अकस्माच्चरजोदृष्ट्वास्पृष्टभांडाद्युपस्कराः अज्ञानादाश्रयाद्वापिकामाल्लोभात्कचित्स्त्रियः अ
वेदयित्वातिष्ठंतितेनदुष्यंतिसत्क्रियाः क्रियालोपकराह्येताःपापादस्मादुरत्ययात् दशामिमांप्राप्नुवंतिसर्वाअपिनसंशयः बा-
ल्येवायौवनेवापिवार्धक्येवाकदाचन तत्रयातुदुराचारापरानेवाभिकांक्षति श्वश्रोश्वपतिबंधूनांनित्यंवाचासुदुःखदा एतत
सहायतोनारीयादूषयतिसत्क्रियाः बाल्येवैधव्यमाप्नोतिसानारीनात्रसंशयः ऋतुस्नातातुयानारीबालकानवलोकयेत् लब्ध
भर्तातितोगर्भबालानामपिघातिनी एतत्कर्मसहायेनरजसादूषितातुया मृतापत्यातथाभूत्वावैधव्यंयौवनेव्रजेत् यानारीरज
सादुष्टासर्वभांडादिसंकरं कुरुतेयदिसानारीवैधव्यंवार्धकेव्रजेत् वाचानुकूलरहितापतिधर्मेषुसर्वदा बाल्येवैधव्यमापन्नाग
तिहीनाभवत्यलं सर्वासामपिवैधव्यंनिदानंपापसंभवं शांतिंतत्रप्रवक्ष्यामिकर्मणोस्यापिलक्षणे कृतेपिमुनिपंचम्यांव्रतेपा-
पंविशेषितं हस्तेनकारयेद्वर्तिकार्पासंशोध्यसुप्रभं अनेनैवविधानेनविष्णुवर्तिकरोतिया पापंगच्छतिनारीणांइतिवेदवि
दोविदुः शूर्पसंवायनंकृत्वाकृतेलक्षव्रतादिके समूलशेषंव्रजतिरजोदोषोनसंशयः निर्मूलंचभवत्याशुलक्षवर्तिव्रतेशुभे रा

जसोत्थमहापापंनारीणांनात्रसंशयः इतितस्यवचःश्रुत्वापुनःपप्रच्छलक्ष्मणा मनसाशंकिताभूत्वासादरंमुनिपुंगवं साधुसा
धुमहाभागचित्तंमेभयविव्हलं लक्षवर्तिव्रतस्यास्यविधानंकीदृशंवद कस्मिन्मासेप्रकर्तव्यंकस्मिंश्चैवसमर्पणं उद्यापनंकथंका
र्यंकिंफलंतस्यवा मुने तयापृष्टोयाजकोपिलोकानांहितकाम्यया फलंविधानंतत्सर्वंतदावोचन्महामुनिः शांडिल्यउवा
च कालोहिकार्तिकोमासोमाघवैशाखमेवच सहस्रगुणितंतत्तुव्रतमेतद्धिकार्तिके तस्मात्कोटिगुणंदत्तेमाघेमासि
व्रतोत्तमं तस्मादनंतगुणितंफलंवैशाखमासिवै तस्मान्मासत्रयेकार्यंयस्मिन्मासेसमाप्यते तस्मान्मासद्वयात्पूर्वंप्रारब्ध
व्यंव्रतंत्विदं अंतेमासिप्रकुर्वीतसमाप्तिंचविचक्षणः सहस्रवर्तिभिःकुर्यादारार्तिंविष्णवेन्वहं घृतेनाप्यथतैलेनसम्यगन्यैर्मनो
रमैः यस्मिन्मासेसमाप्तिःस्यात्पूर्णिमायांचकारयेत् उद्यापनंविधानेनव्रतसंपूर्तिकारणं प्रातःस्नात्वाशुचिर्भूत्वापंचगव्यंतु
प्राशयेत् पुण्याहवाचनंकृत्वावरेदाचार्यमुत्तमम् ब्रह्माणंऋत्विजश्चैवकुर्यात्तर्पणमंजसा सतिलैश्चयवैःकुर्यादग्नेनय
ऋत्वाद्द्विजः वर्त्यादशांशतःकुर्यात्तर्पणंतुविचक्षणः तर्पणस्यदशांशेनहोमंकुर्याद्विधानतः तर्पणोक्तेनमंत्रेणपायसंचघृ
तान्वितं पालाशसमिधाचैवमंत्रैर्होमश्चवैष्णवैः घृतंतुविष्णुगायत्र्याहोमस्याथविधिस्मृतः अष्टकर्णिकयायुक्तंसर्वतोभंड
लंलिखेत् कलशस्तत्रतथास्थाप्यःसपिधानःसवस्त्रकः रौप्यस्ताम्रोमृन्मयोवावस्त्रयुग्मेनवेष्टितः तस्योपरिन्यसेद्देवंलक्ष्म्या
सहस्रवर्णकं राजतंदीपपात्रंचस्वर्णवर्तिसमन्वितं ततोमासाधिदेवांश्चस्थापयेद्देवसंनिधौ कालोविष्णुस्तथावन्हीरविर्दामो

द्रोहरिः रुद्रःशेषोजगद्व्यापितेजोरूपीनिशाकरः निरंजनोफलाध्यक्षोविश्वरूपीजगत्प्रभुः स्वप्रकाशोस्वयंज्योतिश्चतुर्व्यूहो
जनाश्रयः परंब्रह्मविंशतिभिःपूजयेज्जगदीश्वरं शिरोललाटंनेत्रेचकर्णौनासांमुखंतथा कंठंस्कंधौतथाबाहूस्तनौवक्षस्त
थोदरं नाभिंकटीचजघनेऊरूजानुनीगुल्फके पादौतदग्रक्रमशोयुगान्येतैश्चपूजयेत् धूपदीपौतथादत्वानैवेद्यंचनिवेदये
त् आचार्यंपूजयेत्पश्चाद्ब्राह्मणानृत्विजस्तथा गांदद्यात्सवत्सांचसालंकारांगुणान्वितां त्रिंशत्फलंकांस्यपात्रंघृतेनपरिपू
रितं सुवर्णवर्तिसंयुक्तंआचार्यायनिवेदयेत् कांस्यंविष्णुमयंरौप्यंगोघृतेनसमन्वितं सुवर्णवर्तिसंयुक्तमतः शांतिंप्रयच्छमे
इतिमंत्रेणदद्यात् तथादशफलंकांस्यंतथाघृतसमन्वितं अथवातुयथाशक्त्यादद्यादावश्यकंत्विति व्रताभावेचयोद-
द्यात्कांस्यंचघृतपूरितं यावज्जीवंसुखप्राप्तिर्भवत्येवनसंशयः रजोदोषाद्विमुक्तास्यात्पौर्णमास्यांददातिया ब्राह्मणान्भो
जेत्पश्चाद्वित्तशाठ्यंनकारयेत् यात्वेवंकुरुतेनारीतस्याःपुण्यफलंश्रृणु यानिचान्यानिपापानिरहस्येवकृतानिच नश्यंतिता
नि सर्वाणिव्रतस्यास्यप्रभावतः चांडालगामिनीवापितथाशूद्राभिमर्शिनी कारुकरजकादीनागामिनीदुष्टचारिणी ब्रह्म
क्षत्रियवैश्येषुप्रतिलोमेषुगामिनी मातुलेयपितृव्यादिभ्रातृपुत्राभिगामिनी बालघ्नीवापितृघ्नीवाभर्तृमातृवधेरता गो
घ्नीवातस्करीवापिरजःसंकरकारिणी वन्हिदागरदाचैवनित्यंचाप्रियवादिनी पत्योजीवतियानारीमृतेवाव्यभिचारिणी ए
वमादिमहापापेरावृतापिकुलांगना कृत्वाचैतद्व्रतंपुण्यंमुच्यतेनात्रसंशयः व्रतानामुत्तमंचैवस्त्रीणामावश्यकंत्विदम् ए

कार्तिके प्रयत्नेन विष्णोरमिततेजसः कोटयो ब्रह्महत्यानामगम्यागमकोटयः तथैवान्युग्रपापानां कोटयोथ सहस्रशः नश्यं
ति नात्र संदेहो नारीणां वा नरस्य च दीपं दत्वा विधानतः पापमुक्तो भवेत्‌ क्षिप्रं दीपदानप्रभावतः दीपदानं हरेः कुर्यात्‌ कार्तिके तु विशेषतः
तिनात्र संदेहो नारीणां वा नरस्य च विलक्षवर्तिभिर्विष्णोः कृते चारार्तिकार्पणे किमत्र बहुनोक्तेन नानेन सदृशं व्रतं पुरुषोपि व्रतं
कृत्वा पूर्वोक्तैः पापसंचयैः मुच्यते नात्र संदेहो मधुसूदनशासनात्‌ एतत्सर्वं मयाख्यातं पृच्छंत्यास्तव मानदे व्रतं कुरु सुखं तिष्ठ
यथा ते रोचते मनः इति तद्वचनं श्रुत्वा पुनः पप्रच्छ लक्षणा अज्ञानाद्दुष्टभावाद्वा न विश्वासो मम ह्येवं प्रत्ययार्थं ततो ब्रह्मन्‌ प्र
त्यक्षं कुरु मेधुना इति तद्वचनं श्रुत्वा याजको वाक्यमब्रवीत्‌ ६७ शांडिल्य उवाच कथं ते प्रत्ययो भूयादिति तां करुणा
निधिः सा चोवाच पुनर्विप्रं विस्मयोत्फुल्ललोचना नववैधव्यमापन्ना रुदत्येषा कुमारिका अस्याः पतिः कथं जीवेद्वैधव्यं चैव
नश्यति तथा कुरु मुनिश्रेष्ठ दयादानवतां धनं इति तद्वचनं श्रुत्वा विस्मितो वाक्यमब्रवीत्‌ शांडिल्य उ॰ अधुना मकरं प्राप्तो
भास्करो लोकभास्करः माघोयं च वरो मासो सर्वक्रतुफलाधिकः प्रातः स्नात्वा च मासेस्मिन्प्राप्नुवत्यतुलं फलं स्नानं कृष्णार्पणं कृत्वा
देहि भर्त्रे मृताय च तेन जीवेदयं नूनं ब्रह्मघ्नोपि स्फुरापि च यस्मादयं राजयक्ष्मरोगेणाच मृतिं गतः तथापि माघमासस्य पुण्यादु
ज्जीवयिष्यति दापयित्वा हरेरार्तिं कांस्यपात्रे घृतेन च जीवत्पत्नी भव त्वं हि यावदामरणं ध्रुवं लक्षणा वचनं श्रुत्वा जलं स्पृष्ट्वा च
वाग्यता स्नानं विष्णवर्पणं कृत्वा ददौ तस्मै फलं तदा तदा पुण्यप्रभावेन तत्क्षणादेव सोत्थितः भुजंगं संप्रेषयित्वा नीत्वा पात्रं च कां
स्यकं कुमार्या दापयामास वैधव्यस्यापनुत्तये एतत्पुण्यप्रभावेन कुमारी सापि शोभना यावज्जीवं जीवपत्नी बभूव बहुपुत्रि

का कुमारिशोभनानामपतिंप्राप्यश्ऽशोभनं तद्वांधवास्तथासर्वेतुष्टुवुस्तांचलक्षणां याजंकचवहुस्कलाजग्मुस्तेस्वनि
केतनम् लक्षणेसापिदासेनभुजंगेनचसंयुता माघस्नानंतथाकृत्वाव्रतमेतच्चकारसा ततस्तुमरणंप्राप्तोदासस्तस्याःसद्वा
यकृत् गयानाममहाराजाचक्रवर्तीवभूवसः सालक्षणाचतत्पत्नीसर्वलक्षणसंयुता वभूवलोकविख्याताजीवत्पत्नी-
सुपुत्रिका अनेनैवविधानेनविष्णुवर्तीकरोतियः पुत्रपौत्रैःपरिवृतोराज्यंप्राप्नोतिशाश्वतं एवंयाकुरुतेनारीसर्वपापैःप्रमु-
च्यते लक्षवर्तीकथामेतांप्रीत्याश्रोष्यतिमानवः सोपितत्फलमाप्नोतिनात्रकार्याविचारणा इतिश्रीवायुपुराणेमाणि
क्यवर्तिव्रतोद्यापनंसंपूर्णं अथविष्णुवर्तिव्रतंलिख्यते युधिष्ठिरउ० देवदेवजगन्नाथसंसारार्णवतारक वदमेसर्वपा
पघ्नंव्रतंसर्वव्रतोत्तमं यस्याचरणमात्रेणजनानांसर्वकामदं अस्तिकिंचित्तदाब्रूहिममदेवदयानिधे श्रीकृष्णउवाच
लक्षवर्तिव्रतंवच्मिसर्वकामफलप्रदं विष्णुवर्त्तीतिविख्यातंशृणुराजन्समासतः शुभेतिथौशुभेलग्नेताराचंद्रेचशोभने
सम्यक्कृत्वाविशोध्यकार्पासंतृणधूलिविवर्जितं तस्यसूत्रंविधायाशुचतुरंगुलिकंतथा पंचसूत्रयुतावर्तिर्विष्णुवर्त्तीतिकथ्यते
एवंकुर्याल्लक्षसंख्यागोघृतेनपरिप्लुताः उद्दीपयेच्चविष्णवग्रेपात्रेराजतमृन्मये अथवाप्रत्यहंदेयाःसहस्रद्वयसंमिताः ए
वंदिनानिपंचाशदंतेउद्यापनंचरेत् कुरुराजन्प्रयत्नेनसर्वपापप्रणाशनं भुक्त्वायथेप्सितान्भोगानंतेसायुज्यमाप्नुयात्
पार्वत्याचपुरापृष्टंशंकरायमहात्मने तेनेदंकथितंदेव्याविष्णुवर्त्तीव्रतंशुभं तयाकृताविष्णुवर्त्तीलक्षसंख्याशुभप्रदा

उद्दीपितानयाभक्त्यासंतुष्टोहंव्रतेनच दत्तंकैलासभवनंशंकरेणचधारिता कर्तव्यंतुप्रयत्नेनजनेनशुभमिच्छता येनउद्दीपि
तोविष्णुः सर्वसौभाग्यदायकः सभवेत्पापनिर्मुक्तोविष्णुलोकेमहीयते उद्यापनंयथार्थत्वंशृणुराजन्ममाग्रतः येनकृत्वाचसकलं
फलंप्राप्नोतिमानवः कार्त्तिक्यामथवामाघ्यांवैशाख्यांवाशुभेदिने प्रतिमांकारयेद्विष्णोः सौवर्णीमाषमात्रतः कलशंकारये
त्ताम्रंपूर्णपात्रेणसंयुतं आचार्यंवरयेत्पूर्वंपंचऋत्विग्युतंव्रती पुण्याहवाचनंकृत्वागणेशंपूजयेत्ततः विधायसर्वतोभद्रंपंचव
र्णैर्यथाविधि स्थापयेत्प्रतिमांविष्णोः कलशेचनवेशुभे वस्त्रद्वयेनसंवेष्ट्यपूजयेत्कलशोपरि पूजयेच्चयथाशक्त्याब्रह्मा
द्यादेवताःशुभाः रात्रौजागरणंकुर्याच्छृणुयाद्वैष्णवींकथाम् प्रभातेविमलेस्नात्वापुनःसंपूज्यवैविभुम् प्रतिष्ठाप्यततो
वह्निंपायसंहवनेस्मृतम् जुहुयाद्विष्णुगायत्र्यासहस्रंपायसंशुभं तर्पणंदशसाहस्रंमार्जनंशतमाचरेत् सौवर्णींव-
र्तिकांकृत्वापात्रेराजतसंभवे कार्पासवर्तिसंयुक्तेर्नीराज्योहरिरीश्वरः आचार्यंपूजयित्वाचमंडलंतन्निवेदयेत् ब्राह्म
णान्भोजयेत्सम्यक्स्वयंभुञ्जीतवाग्यतः इतिश्रीविष्णुरहस्येविष्णुवर्त्युद्यापनंसपूर्णम् अथदेहवर्तिव्रतं-
लिख्यते सूतउवाच कैलासशिखरासीनंदेवदेवंजगद्गुरुम् पंचवक्त्रंदशभुजंशूलपाणिंत्रिनेत्रकम्
कपालखट्वांगधरंखड्गखेटकधारिणम् पिनाकपाणिंदेवेशंवरदाभयपाणिनं भस्मांगव्यालशोभाढ्यंशशांककृतशे-
खरं कैलासशिखरेवासंसूर्यकोटिसमप्रभम् क्रीडनेभगवांस्तत्रगणेशादिविसृज्यच विसृज्यदेवताःसर्वाः एकाकीउ-

मयासह तंदृष्ट्वादेवदेवेशंप्रहृष्टंचारुलोचनम् अथापृच्छत्तदादेवीयद्गोप्यंव्रतमुत्तमं देव्युवाच तदहंश्रोतुमि
च्छामिकथयस्वममप्रभो दानधर्मान्यनेकानितपस्तीर्थान्यनेकशः नास्तिमेनिश्चयोदेवश्रामिताहंत्वयापुनः व्रतानामुत्त
मंदेवभुक्तिमुक्तिप्रदायकं येनचीर्णेनदेवेशमानुषैःप्राप्यतेभुवि स्वर्गापवर्गदंसौख्यंनरकार्णवतारकम् तदहंश्रोतुमिच्छा
मिमनुष्याणांहितायच येनकृतेनलोकोयंशिवसायुज्यमाप्नुयात् शिवउवाच यन्नकस्यचिदाख्यातंनराणांमुक्ति-
दायकं शृणुदेविप्रयत्नेनकथयामितवांतिकम् कार्त्तिकेमार्गशीर्षेवामाघेमासिप्रयत्नतः पक्षयोरुभयोर्मध्येशुभेयोगेशु
भेदिने एकादश्यांत्रयोदश्यांचतुर्दश्यामुपोषितः कार्पासंनिस्तृणंकृत्वावर्त्तिंकृत्वाप्रयत्नतः पादांगुष्ठशिखांतंचस्वशरीर
प्रमाणतः सूत्रंनिर्मायत्नेनतुंतुत्रितयसंयुतम् तस्यवर्तिंविधायाथसम्यग्गोडघृतेनवै दीपदानंप्रकुर्वीतप्रीतयेममचान-
घे प्रत्यहंदापयेद्दीपंयावत्संवत्सरंभवेत् अथवाएकमासेवाषट्कत्तरशतत्रयात् दीपान्प्रज्वालयेद्भक्त्याममसंतोषहेतवे
उद्यापनंवत्सरांतेकुर्याद्विभवसारतः देहदीपसमंदानंनकिंचिदिहविद्यते महापापप्रशमनंस्वर्गद्वारविवर्धनं अत्रेदंकथयि
ष्यामिइतिहासंपुरातनं शृणुदेविप्रयत्नेनकथांपौराणिकींशुभां ईश्वरउवाच अरण्येवर्त्तमानास्तेपांडवाभार्ययासह
आत्मनोदुःखनाशार्थंपप्रच्छुःकेशवंप्रति युधिष्ठिरउ॰ केनोपायेनदेवेशसंकटादुद्धराम्यहं भुक्त्वाराज्यंचदेहांतेकेनसु
कृतिर्भवेन्मम श्रीकृष्णउ॰ अस्तिगुह्यमहाराजव्रतंसर्वार्थदायकम् नारीणांचविशेषणपुत्रसौभाग्यवर्धनं देहवर्त्तिः

सभाख्याताप्राणिनांसौख्यदायका आत्मदेहसमंसूत्रंतंतुत्रितयसंयुतं तस्यवर्त्तिंविधायाशु आज्येयोज्यप्रदीपयेत् एकंसंव
त्सरंपूर्णंदद्याच्छंकरतुष्टये अथवामासमध्येवादिनमध्येयथाविधि नीराजयेन्महादेवंतेनतुष्यतिशंकरः ददातिविपुलान्भो
गानंतेसायुज्यमाप्नुयात् इतिश्रुत्वाचकारासौधर्मराजोनृपोत्तमः उद्यापनंतथाकुर्यान्मंटपंकारयेच्छुभं पुण्याहवाचनंकृत्वा
आचार्यंवरयेत्ततः ऋत्विजश्चरुद्रसंख्यान्वृणुयाच्छिवतुष्टये विरच्यसर्वतोभद्रंकलशंचनवंदृढं सौवर्णींप्रतिमांतत्रभवा
नीशंकरस्यच उपचारैःषोडशभिःपूजयेत्कलशोपरि दीपपात्रंराजतंहिवर्तिंकृत्वासुवर्णजां त्र्यंबकेणमंत्रेणहुनेदष्टोत्त
रंशतं आचार्यायचतत्पीठंदद्याद्दक्षिणयायुतम् ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुंजीतवाग्यतः इदव्रतंमहादेविसर्वका
मसमृद्धिदम् कुरुत्वंचप्रयत्नेनसर्वान्कामानवाप्स्यसि इतिश्रीस्कंदपुराणेपार्वतीशंकरसंवादेदेहवर्त्तिव्रतोद्यापनंसंपू
र्णम् अथविष्णुसूर्यलक्षनमस्कारविधिः अंबरीषउवाच इक्ष्वाकूणांकुलगुरोब्रह्मन्धर्मज्ञसुव्रत ब्रूहिपा
पक्षयकरंव्रतंसर्वोत्तमंव्रतं ब्रह्मघ्नस्यसुरापस्यगुरुदारावमर्शिनः संकीर्णपापिनश्चैवसंकलीकरणस्यच भ्रातृपत्नी
सुतादीनांगामिनःकामिनोपिवा गुरोर्विश्वासघातस्यव्रतभ्रष्टस्यपापिनः संध्याकर्मविहीनस्यतथादुर्मार्गवर्तिनः
दासीवेश्यासंगिनश्चचांडालीगामिनस्तथा परस्वहारिणश्चापिदेवद्रव्यापहारिणः देवब्राह्मणवृत्तीनांछेदकस्यन
रस्यच रहस्यभेदकस्यापिरहस्याक्रांतपापिनः ब्रह्मयज्ञविहीनस्यदुःशास्त्रनिरतस्यच गुरुनिंदादिश्रोतुश्चगुरुद्रव्या

प्रहारिणः नराणांच विशेषेण प्रायश्चितं व्रतं वद वसिष्ठ उवाच श्रृणु गोप्याति गोप्यंच व्रतानामुत्तमव्रतं चतुर्वे-
देषु पुराणेश्च स्मृतिभिश्चैव निश्चितं ब्रह्महत्यादिपापानां प्रायश्चित्तं यदिच्छसि संकलीकरणानांच मलिनीकरणस्य-
च अपात्रीकरणानांच प्रायश्चित्तं यदिच्छसि भ्रातृपत्नीकृतानांच गामिनः कामिनस्तथा श्वश्रूमातृवधूनांच इच्छया गामिन
स्तथा तदा लक्षनमस्कारं व्रतं कुरु महीपते संध्याकर्मादित्यागस्य चांडालीगामिनस्तथैव दासीवेश्यासंगिनश्च क्षयंच यदि वांछ
सि श्रृणु नृप विधिं वक्ष्ये स्मरणात्पापनाशनम् चातुर्मास्ये तु संप्राप्ते केशवे शयनं गते आषाढस्य सिते पक्षे एकादश्यां समाहि
तः संकल्पं तु विधायादौ पुरतश्चक्रपाणिनः अहं लक्षनमस्कारव्रतं कर्तुं समुद्यतः निर्विघ्नं त्वत्प्रसादेन कुरु त्वं कृपया हरे पापपं
कनिमग्नं मां पापरूपं दुरासदं व्रतेनानेन कृष्ण प्रीतो भव मुद्धर जगत्पते इति संकल्प्य मनसा प्रारभेद्व्रतमुत्तमं विष्णोर्वा अथ सवि
त्रे वा नमस्कारान्प्रयत्नतः प्रातः स्नात्वा सदा कुर्यान्मध्याह्नावधि वाग्यतः यथासंख्यां प्रकुर्वीत कार्त्तिके तु समापयेत् दुष्टशाक
मथान्नं वा न भुंजीत कदाचन अनृतं न वदेत्क्वापि न ध्यायेत्पापपूरुषम् देवार्चनं जपं होमं न त्यजेत्तु कथंचन अतिथीन्पूज
येन्नित्यं यथाशक्त्या तु कारयेत् कार्त्तिके मासि संप्राप्ते पौर्णमास्यां ततः परम् संस्थाप्य कलशं पूर्णं सवस्त्रं सपिधानकम् वि
ष्णोश्च प्रतिमां कुर्यात्सविष्णुश्चापि स्वर्णजाम् नामभिः केशवाद्यैश्च मित्राद्यैश्च प्रपूजयेत् परमान्नं च नैवेद्यं कुर्यात्पश्चाच्च
तर्पणं पौरुषेण च सूक्तेन तिलगोधूमतंदुलैः देवदेव जगन्नाथ सर्वक्रतुफलप्रद व्रतेनानेन कृष्ण प्रीतो गृहाणार्घ्यं मयार्पितम्

एवमर्घ्यत्रयंदद्यात्पश्चाद्धोमंसमाचरेत् पौरुषेणचसूक्तेन शतमष्टोत्तरंचरुम् आसत्येनेतिसूर्यार्थंशतमष्टोत्तरंहुनेत्
होमशेषंसमाप्याथपूर्णाहुतिमतःपरः आचार्यपूजयेत्पश्चाद्द्याद्गोमिथुनंततः ब्राह्मणान्भोजयेत्पश्चाच्छतंविंशति-
पंचच दक्षिणांचयथाशक्त्यामंडलेनचदापयेत् अनुज्ञातस्ततस्तत्रैवस्वयंभुंजीतबंधुभिः इदंपुण्यंव्रतंराजन्पापारण्यदवा
नलं सर्वकामप्रदंनृणांसद्योविष्णुप्रियंकरम् मोक्षप्रदंचकर्तॄणांज्ञानमार्गप्रदंशुभं नानेनसदृशंकिंचित्त्रिषुलोकेषुवि-
द्यते सर्वेषामाश्रमाणांचविहितंश्रुतिचोदितम् नारीणांसधवानांचविधवानांविशेषतः इतिश्रीभविष्योत्तरपुरा
णेसूर्यविष्णुलक्षनमस्कारोद्यापनंसंपूर्णम् ७ ७ ७ ७ ७

श्रीः अथमंगलागौरीव्रतोद्यापनपूजनविधिः युधिष्ठिरउवाच उद्यापनविधिंब्रूहि व्रतराजस्यकेशव यतोनिरुद्या
पनकंव्रतंनिष्फलमुच्यते कृष्णउवाच वदामिव्रतराजस्यस्त्रीणांकर्त्तव्यमुत्तमम् श्रावणेमासिभौमेषुचतुर्षुव्रतमाचरेत्
प्रातरुत्थायसुस्नातासंकल्प्यव्रतमुत्तमम् दीपंमहांतंप्रज्वाल्यमंगलांपूजयेच्छुचिः अथपूजाविधिः अद्येत्यादिदेशकालौ
संकीर्त्यममपुत्रपौत्रादिवृद्ध्यर्थेअवैधव्याद्युरादिसकलसिद्धिद्वाराश्रीशिवमंगलागौरीप्रीत्यर्थंपंचवर्षपर्यंतंश्रीमंगलागौरी
व्रतंकरिष्ये प्रथमेवत्सरेमातुर्गेहेकर्त्तव्यमेवच ततोभर्त्तृगृहेकार्यमवश्यंस्त्रीभिरादरात् पंचमेवत्सरेप्राप्तेकुर्यादुद्यापनं
शुभम् आचार्यंवरयेत्तत्रवेदवेदांगपारगम् श्रावणेमासिभौमेषुत्द्युद्यापनविधिंचरेत् प्रातरुत्थायसुस्नातासंकल्प्यव्र
तमुत्तमम् चतुस्तंभंचतुर्द्वारंकदलीस्तंभमंडितम् घंटिकाचामरयुतंकमलैरुपशोभितम् मध्येवितानंबध्नीयात्सच्चवर्णै
रलंकृतंतन्मध्येस्थापयेत्पीठंदृषदंउपलंतथा रौप्येणकारयेत्पीठंदंडःकांचननिर्मितः रौप्यहेम्नोरभावेपिपाषाणस्यविधीयते
पीठोपरिन्यसेद्देवींततोग्रेदृषदंतथा तस्याग्रेलिंगतोभद्रंलिखेद्रंगैश्चपंचभिः हरिद्रापिष्टकंकृत्वातन्मध्येष्टदलंलिखेत्॥
तस्योपरिन्यसेद्व्रीहीन्द्रोणेनपरिसंमितान् सौवर्णंराजतंताम्रंकलशंविन्यसेद्बुधः पंचरत्नानिनिक्षिप्यसर्वौषधिसमन्वि
तम् तस्योपरिन्यसेत्पात्रंताम्रंवैणवसंभवम् उमामहेश्वरींमूर्तिंकांचनेनचनिर्मिताम् तस्योपरिन्यसेद्राजन्पूजयेच्छि
वमंगलां गृह्णावेद्दतिमंत्रेणस्थाप्यमूर्तिंपिठोपरि तदस्तुमित्रावरुणात्रऋचावाहनमाचरेत् गोधूमोद्भवपिष्टेनकारयेद्दी-

पमुनमम् कृत्वा प्रज्वालितो दीपो घृतवर्त्तिसमन्वितः उपचारैः षोडशभिर्गंधपुष्पादिभिस्तथा पत्रैः पुष्पैः षोडशैश्च नानाजातै
श्च जीरकैः तंडुलैर्धान्यकैश्चैव स्वच्छैः षोडशसंज्ञकैः अपामार्गस्य पत्रैश्च दूर्वाधत्तूरसंज्ञकैः षोडशैर्दूर्वसंख्याकैर्बिल्वपत्रै
श्च पंचभिः नीराजनं ततः कुर्याद्दीपैः षोडशसंख्यकैः अथपूजा कुंकुमागरुलिप्तांगां सर्वाभरणभूषिताम् नील
कंठप्रियां गौरीं वंदेहं मंगलाह्वयां ध्यानं॰ अत्रागच्छ महादेवि सर्वलोकसुखप्रदे यावद्व्रतमहं कुर्वे पुत्रपौत्रादिवृद्धये
आवाहनं॰ रौप्येण चासनं दिव्यं रत्नमाणिक्यशोभितं मयानीतं गृहाण त्वं गौरी कामारिवल्लभे आसनं॰ गंधपुष्पाक्ष-
तैर्युक्तं पाद्यं संपादितं मया गृहाण मंगले गौरी सर्वान्कामांश्च पूरय पाद्यं॰ गंधपुष्पाक्षतैर्युक्तं अर्घ्यं संपादितं मया गृहाण
पुत्रपौत्रादीन्प्रसन्नाभवसर्वदा अर्घ्यं॰ कामारिवल्लभे देवि कुर्वाचमनमंबिके निरंतरमहं वंदे चरणौ तव पार्वती आच
मनं॰ पयोदधिघृतं चैव मधुशर्करयासमम् पंचामृतेन स्नपनाक्रीयतां परमेश्वरि पंचामृतस्नानं॰ जान्हवीतोयमा
नीतं शुभं कर्पूरसंयुतम् स्नपयामि सुरश्रेष्ठे त्वां पुत्रादिफलप्रदाम् स्नानं॰ आचमनं॰ वस्त्रं च सोमदेवत्यं लज्जाया
स्तु निवारणम् मयानिवेदितं भक्त्या गृहाण परमेश्वरि वस्त्रं॰ कंचुकीमुपवस्त्रं च नानारत्नैः समन्वितं गृहाण त्वं मया
दत्तं पार्वती जगदीश्वरि कंचुकी वस्त्रं॰ कुंकुमागरुकर्पूरं चंदनं कस्तुरीं तथा विलेपनं महादेवि गंधं दास्यामि भक्तितः
गंधं॰ रंजिताः कुंकुमौघेन अक्षताश्चातिशोभनाः ममैषां देवि दानेन प्रसन्ना भव पार्वती अक्षता॰ हरिद्रां कुंकुमं चैव सिं

दूरंकज्जलान्वितम् सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्याणि मल्लिकाबकुलचंपकपाटलाब्जपुन्नागजातिक
रवीरलसालपुष्पैः बिल्वप्रवालतुलसीदलमालतीभिस्त्वांपूजयामिजगदीश्वरमेप्रसीद पुष्पाणि॰ अपामार्गस्यपत्रैश्चद्
र्वाधत्तूरसंज्ञकैः षोडशैर्दूर्वसंख्याकैर्बिल्वपत्रादिपंचच पत्रपूजा अथांगपूजा उमायैनमः पादौपूजयामि गो
र्यै॰ जंघे॰ पार्वत्यै॰ जानुनीपू॰ जगद्धात्र्यै॰ ऊरू॰ जगत्प्रतिष्ठायै॰ कटीपू॰ शांतिरूपिण्यै॰ नाभिं॰ देव्यै॰ उदरं॰ लोकवंद्यै॰ स्त
नौपू॰ काल्यै॰ कंठंपू॰ शिवायै॰ मुखं॰ भवान्यै॰ नेत्रौ॰ रुद्राण्यै॰ कर्णौपू॰ महादेव्यै॰ ललाटंपू॰ मंगलदात्र्यै॰ शिरःपूजयामि पु
त्रदायिन्यै॰ सर्वांगंपू॰ देवद्रुमरसोद्भूतोकृष्णागरुसमन्वितः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यताम् धूपं॰ त्वंज्योतिः
सर्वदेवानांतेजसांतेजउत्तमम् आत्मज्योतिपरंधामदीपोयंप्र॰ दीपं॰ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितम् भक्ष्य
भोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यताम् नैवेद्यं॰ आचमनं॰ करोद्वर्त्तनं॰ फलं॰ तांबूलं॰ दक्षिणां॰ वज्रमाणिक्यवैडूर्यमुक्ता
विद्रुममंडितम् पुष्परागसमायुक्तंभूषणंप्रतिगृह्यतां भूषणानि॰ नीराजनं॰ नमोदेव्यै॰ पुष्पांजलिं॰ प्रदक्षिणां॰ नमस्का
रः पुत्रान्देहिधनंदेहिसौभाग्यंदेहिमंगले अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते इतिप्रार्थना ततोवैणवपात्रेतु
सौभाग्यद्रव्यमाक्षिपेत् अन्नंकंचुकिसंयुक्तंसवस्त्रंफलदक्षिणं वायनंगौरिविप्रायददामिप्रीतयेतव सौभाग्यारोग्य-
कामानांसर्वसंपत्समृद्धये गौरीगिरीशतुष्ट्यर्थंवायनंतेददाम्यहं इतिमंत्राभ्यांवायनम् तान्येववैणवेपात्रेसौभाग्यद्

व्यमाक्षिपेत् लड्डुकंचुकिसंयुक्तंसवस्त्रफलदक्षिणम् मात्रेंसुवासिनीभ्यश्चदेयंवायनमुत्तमम् जननींमातृसंबंधिस्त्रियःषो
डशभोजयेत् नीराजनंततःकुर्याद्दीपैःषोडशसंख्यकैः भोक्तव्यादीपकाश्चाथस्त्रीभिःसहस्वयंततः अन्नंलवणवर्ज्यंतु-
मौनेनभोजयेत्स्वयम् सुवासिनीश्चापितथावस्त्रालंकारभूषणैः पूजयेच्चततःपश्चात्कुर्याद्गौरीविसर्जनम् विप्रायप्रति
मादेयारत्नवस्त्राणिभूरिशः एवंकृतेविधानेस्मिन्नार्यःवैधव्यमाप्नुयात् इतिमंगलागौरीपूजोद्यापनविधिः अथ
कथा युधिष्ठिरउवाच नंदनंदनगोविंदशृण्वतोबहुलाःकथाः श्रुताउत्कृष्टपुत्रायुःकरंश्रोतुंव्रतंमम श्रीकृष्ण
उ॰ अवैधव्यकरंवक्ष्येव्रतंचारिनिषूदन शृणुत्वंसावधानःसन्कथांवक्ष्येपुरातनीं कुंडिनंनामनगरंख्यातस्तत्र
द्विजप्रियःआसीद्वणिग्धर्मपालोनाम्नाबहुधनोपिसः सपत्नीकोह्यपुत्रोसौनास्तीतिव्याकुलोहृदि तस्यगेहेभस्मलिप्तो
देहेरुद्राक्षधारकः जटिलोभिक्षुकोनित्यमागच्छन्प्रियदर्शनः नस्वीकुर्वंस्तदन्नंसइतिदृष्ट्वाबलावदत् स्वामीनयंसदाया
तिभिक्षुर्नोजटिलोगृहे नस्वीकरोत्यस्मदन्नमितिदृष्ट्वाममाधिकम् दुःखंप्रजायतेनित्यंश्रुत्वाभार्यावचोब्रवीत् धर्म
पालउवाच प्रियेकदाचिद्गुप्तात्वंससुवर्णागणेभव यदाभिक्षार्थमायातिभिक्षोर्वस्त्रांतरेत्वया तदातस्यप्रदेयानिसु
वर्णानिप्रियेनघे अनंतरंतस्यभार्याचीकरत्स्वामिनोदितम् जटिलेनतुसाशप्तापत्यंतेनभविष्यति श्रुत्वाभिक्षोरिदं-
वाक्यंदुःखितातमुवाचह स्वामिन्त्राप्तात्वयापापाच्छापादुद्धरसंप्रति इत्युक्त्वातस्यचरणौववंदेदीनभाषिणी जटिलउ॰

भर्त्तुःसमीपेवक्तव्यंत्वयापुत्रिममाज्ञया नीलवस्त्रःसमारुह्यनीलाश्वंगच्छ काननम् एवनंतत्रकर्तव्यंयत्राश्वस्ते स्खलिष्यति ए-
म्यंपक्षिभिरायुक्तंमृगसंघद्रुमाकुलम् सुवर्णरचितंरत्नमाणिक्यादिविभूषितम् नानापुष्पैःसमायुक्तंदृश्यंदेवालयंततः वने
नेतत्रभव तीभवानीभक्तवत्सला आराधयत्वंमनसायथाविध्युद्धरिष्यति त्वांभवानीतिवचनंश्रुत्वाभिक्षोःसुखप्रदम्
ववंदेतस्यचरणौपुनःपुनरुवाचह तदैवकालेजटिलोऽन्तर्भूतोबभूवसः सावदत्सतिपत्येहिशृणुभिक्षूक्तमादरात्
यथोक्तमवदद्वृत्तांतश्रुत्वावाक्यमब्रवीत् नीलवस्त्रःसमारुह्यनीलाश्वंप्रस्थितोवनम् गच्छन्नानाविधान्वृक्षान्पथि
पश्यन्भयाकुलः मृगान्सिंहान्दंदशूकान्पथिपश्यभयाकुलः ददर्शासौतडागंचबाहुल्येनविराजितम् रक्तनीलोत्प
लैश्चक्रवाकहंसैश्चराजितम् स्नानंचकारतत्रासौतर्पणाद्यपिभूरिशः पुनरश्वंसमारुह्यजगामगहनंवनम् स्खलितंवा
जिनंपश्यन्अश्वादुत्तीर्यएवच चचारसपथिवीतंतत्रयावद्देवालयंगतः ददर्शचमहास्थूलंदेवालयमसौततः रत्नैर्मुक्ता
फलैश्चैवमाणिक्यैश्चापिसर्वतः पूजयामासजटिलवाक्यंस्मृत्वातिविस्मितः सुवर्णयुक्तेवस्त्राणिचंदनान्यक्षतान्शु
भान् चंपकादीनिपुष्पाणिधूपदीपंविशेषतः नानापक्वान्नसंयुक्तंरसैःषड्भिःसमन्वितम् नानाशाकैःसमाक्रांतंसदुग्धघृ
तशर्करं नैवेद्यंकरशुध्यर्थंचंदनंमलयाद्रिजम् संपाद्यतुष्टहृदयःफलतांबूलदक्षिणाः जजापमंत्रान्स्तुतोसौसगुण-
ध्यानपूर्वकं देवीभक्तगृहाद्दैत्यलोभयामाससादरं प्रसन्नावदद्देव्येयंपूजासंपादितंकथं येनसंपादितास्तस्मैददामिवरम्

द्भुतम् इतिश्रुत्वाधर्मपालोदेव्यग्रेप्रांजलिःस्थितः भगवत्युवाच धर्मपालत्वयासम्यक्पूजासंपादितानघ वरंयाचयमद्भक्त
ददामिबहुलंधनम् धर्मपालउवाच बहुलाधनसंपत्तिर्वर्ततेत्वत्प्रसादतः अपत्यंप्राप्तुमिच्छामिपितॄणांतारकंशुभं आ
यातिभिक्षुकोगेहेगृण्हातिनमदन्नकम् तेनमेबहुलंदुःखंसभार्यस्योपजायते इतिदीनवचःश्रुत्वादेवीवचनमब्रवीत्
॥ देव्युवाच धर्मपालकतेदृष्टेपत्यंनास्तिसुखप्रदम् तथापिकिंयाचयसिकन्यांविगलभर्तृकाम् पुत्रमल्पायुषंवा
थाप्यंधंदीर्घायुषंसुतम् धर्मपालउवाच पुत्रमल्पायुषंदेहितावताकृतकृत्यताम् प्राप्नोमिचोद्धरिष्यामिपितरोम
मघोरगाः देव्युवाच मत्पार्श्वेवर्तमानस्यनाभावारुह्यशुंडिनः तत्पार्श्ववर्तिचूतस्यगृहीत्वाफलमद्भुतम् पत्न्यै
देयंततःपुत्रोभविष्यतिनसंशयः इतिदेवीवचःश्रुत्वागत्वातत्पार्श्वएवच नाभिंगजमुखस्याथारुह्यजग्राहमोहतः फ
लान्युत्तीर्यचततःफलमेकंददर्शसः एवंपुनःपुनःकुर्वन्फलमेकंददर्शसः क्षुब्धोगणपतिश्चाथधर्मपालायशप्तवान्
षोडशेवत्सरेप्राप्तेअहिःपुत्रंदशिष्यति धर्मपालोफलंसम्यक्वस्त्रेबध्वागमद्गृहं फलंपत्न्यैददौसापिभक्षयित्वापतिव्र
ता गर्भंसाधारयामासपत्यासहसुसंगता संपूर्णेनवमेमासेप्रासूतसुतमुत्तमम् जातकर्मचकारास्यपितासंतुष्टमान
सः षष्ठीपूजांचकारास्यषष्ठेतुदिवसेततः द्वादशेहनिसंप्राप्तेशिवनाम्नाजुहावतम् षष्ठेमासिचकारासावन्नप्राश
नमद्भुतम् तृतीयेवत्सरेचूडामष्टमेब्देद्यनुत्तमम् कृत्वोपनयनंपार्थविप्रोभूत्तुष्टमानसः दशमेवत्सरेप्राप्तेब्रवीद्भा-

यौपतिव्रता भार्योवाच बालकस्यविवाहोपिकर्त्तव्यःसुमुहूर्तके धर्मपालउवाच मयासंकल्पितंकाश्यांगमनंबा
लकस्यतत् कृत्वासमायातुततोविवाहोस्यभविष्यति पुत्रोसौप्रेषितस्तेनशालकेनसमन्वितः वाराणस्यांप्रस्थितौसौ
गृहीत्वाबहुलंधनम् कुर्वंतौपथिसद्धर्मंप्रतिष्ठापुरमायतुः क्रीडंत्यःकन्यकादृष्टास्तत्रदेशेमनोरमे तासांसमाजेगौरां
गीसुशीलानामकन्यका तयासहसखीकाचित्चकारकलहंभृशम् गालनंचददौतस्यैरंडभाग्येमुहुर्मुहुः सुशी-
लोवाच सखित्वयागालनंमेव्यर्थंदत्तंशुभानने जनन्यामेमानवत्याश्चास्तिगौरीव्रतंशुभं तस्यप्रसादात्सकलाः
संबंधिन्यःप्रियाःस्त्रियः आजन्माविधवाजाताःकिंपुनःकन्यकाध्रुवम् वक्ष्येतस्यप्रभावंकिंव्रतराजस्यभामिनि पूज
नेधूपदीपोयंयत्रतत्रसुखंभवेत् इतिश्रुत्वाततोवाक्यंविस्मयोत्फुल्ललोचनः मातुलश्चिंतयामासबालकस्यप्रियंत
तः शतंजीवोभवेदेषोएतद्धस्ताक्षतायदि पतंत्यमुष्यशिरसिइतिभाव्यपुनःपुनः सुशीलामेवपश्यन्सविस्मयोत्फु
ल्ललोचनः सुशीलाप्रस्थितागेहेतदनुप्रस्थितावुभौ स्वगृहंप्रापगौरांगीनिकटेतद्गृहस्यतौ सतडागेरम्यदेशेवासंच
क्रतुरादरात् विवाहकालेसंप्राप्तेसुशीलाजनकोहरिः विवाहोद्योगवान्जातोविचचारहरंवरम् असमर्थंहरंदृष्ट्वा
तन्मातापितरावुभौ ययाचतुःशिवंबद्धांजलीविनयसुक्तकौ वरपितरावूचतुः उपस्थितोविवाहोनौपुत्रस्य
शुभयाहरेः सुशीलयाकन्यययायमसमर्थश्चदृश्यते अतोदेयोशिवःश्रीमान्लग्नकालेत्वयाविभो लग्नंभविष्यतितत-

तोदेयोस्माभिःशिवस्तव मातुलउवाच अवश्यंलग्नकालेसौशिवोग्राह्यःप्रियंवदः ततोमुहूर्तेसंप्राप्तेविवाहमकरोच्छिवः
तत्रैवशयनंचक्रेससुशीलःप्रियंवदः स्वप्नेसामंगलागौरीमातृरूपेणभास्वता सुशीलामवदत्साध्वीहितंवचनमेवच
गौर्युवाच सुशीलेतवगौरांगिभर्तुर्दंशार्थमागतः महान्भुजंगउत्तिष्ठदुग्धंस्थापयतत्पुरः घटंचस्थापयाशुत्वंतन्म
ध्येसगमिष्यति कूर्पासमंगान्निष्कास्यबंधनीयस्त्वयाघटः प्रातरुत्थायदेहित्वंमात्रेवायनकंशुभम् इतिगौरीवचःश्रु
त्वासुशीलाक्षणमुत्थिता ददर्शाग्रेनिःश्वसंतंकृष्णसर्पमहाभयम् ततश्चकारगौर्युक्तंप्रवृत्तानिद्रितुंततः उवाचवर
आसंनोक्षुत्तुग्रामहतीमम भक्षणायाशुदेहित्वंलड्डुकादिकमुत्तमं श्रुत्वेतिवाक्यंपात्रेसाददौलड्डुकमुत्तमम् भक्ष
यित्वाशिवोहेमेतस्मिन्पात्रेंगुलीयकं दत्वातत्स्थापयौमासस्थलेगुप्तेशुभाननः सुखेनशयनंचक्रेपृथिव्यांसर्वकोवि
दः ततःप्रभातसमयेशिवआगाद्गृहंस्वकं स्नानशुद्धासुशीलासामात्रेवायनकंददौ माताददर्शतन्मध्येमुक्ताहार-
मनुत्तमं ददौप्रियायैकन्यायैसहसातुष्टमानसा क्रीडाकालेसुसंप्राप्तेहरआगात्तुमंडपे आदेशयत्सुशीलांतांक्री-
डार्थंजननींततः सुशीलोवाच नायंवरोमेजननियेनपाणिग्रहःकृतः अनेनसहमनसाक्रीडनेच्छातथान
मे इतिश्रुत्वासमाक्रांतौचिंतयापितरौततः अंनदानमुपायात्रविरचेत्तुइतिद्रुतम् तदारभ्यचक्रतुस्तौपुराणोक्तवि
धानतः सुशीलापादयोश्चक्रेक्षालनंमुद्रिकान्विता जलधारांददौमाताचंदनंपुत्रकोहरेः हरिर्ददौचतांबूलंबुभुजे

स्तत्रमानवाः इतिरीत्यान्नदानंतत्प्रवृत्तंभिक्षुसौख्यदं तावुभौप्रस्थितौकाश्यांप्राप्तौकाशींसुखप्रदां निर्मलांभसिगंगायाः
स्नानंचक्रतुरादरात् स्वर्गद्वारंप्रस्थितौतौकुर्वंतौधर्ममुत्तमम् पीतांबराणिददतुर्भिक्षुकाणांगृहेगृहे आशिषश्चददुस्तस्मै
चिरंजीवोभवेदिति विश्वेश्वरंसमायातौनत्वास्तुत्वापुनःपुनः स्वयंगृहंप्रस्थितौतौशिवोमार्गेब्रुतंवदन् शिवउवाच ॥
कायेमेकिंचिदस्वास्थ्यंमातुलप्रतिभातिहि ततःप्राणोत्क्रमेतस्ययमदूताउपस्थिताः मंगलागौरिकाचापितेषांयुद्धमभून्महत्
जित्वातान्मंगलाप्राणान्ददौतस्मैशिवस्यच शिवोकस्मादुत्थितोसौमातुलंप्रत्युवाचह स्वप्नेयुद्धंमयादृष्टंमंगलायमभृ
त्ययोः जितास्तेमंगलागौर्यानतोहंशयनच्युतः मातुलउवाच यज्जातंशिवतज्जातंनस्मर्तव्यंत्वयापुनः गच्छावआवांन
गरेपितरौद्रष्टुमुत्सुकौ प्रस्थितौतौततस्तस्मात्सतिष्ठापुरमायतुः रम्येतडागेतत्रैतौपाकारांभंविचक्रतुः दृष्टौतौहरिदासीभि
र्धैर्यौदार्यधरौशुभौ दास्यऊचुः अन्नदानंहरेर्गेहेप्रवृत्तंतत्रगम्यताम् उभावूचतुः भोदास्योयात्रिकावावांगच्छा
वोनक्वचिद्गृहे इतिश्रुत्वातयोर्वाक्यंदास्योजग्मुःस्वकंगृहम् स्वस्वामिनिकटेवाक्यमवदन्सादरंतदा सर्वदासीवचःश्रुत्वा
तदर्थंप्रभुरादरात् प्रेषयामासहस्त्यादिरत्नवस्त्राणिभूरिशः तंदृष्ट्वाविस्मितौतावागच्छावश्चहरेर्गृहं हरिर्मातुलमभ्यर्च्य
शिवंपूजितुमागतः क्षालयंतीचसाकन्याचरणौतस्यसत्रपा अभूद्वरोमेयमितिजननींप्रत्युवाचह हरिःपप्रच्छसाश्चर्यं
शिवंमंगलदर्शनम् हरिरुवाच किंचिच्चिन्हंतवास्त्यत्रब्रूहिमेवरदर्शन शिवउवाच ममेदंचिन्हमस्तीहइ

व्र०रा
५

कृत्वागृहमागतः ततआनीयतत्पात्रंदर्शयामाससादरम् तत्पात्रंचहरिर्दृष्ट्वाकन्यादानंचकारसः ददौरत्नानिवस्त्राणिसुवर्णा
निबहून्यपि तामादायप्रस्थितौतौददतौबहुलंधनम् श्रावणेमासिसंप्राप्तेव्रतंभौमेचकारसा॥ भुक्त्वासर्वेप्रस्थितास्तेयोज-
नंजग्मुरुत्तमाः सुशीलोवाच गौरीविसर्जनंचापिदीपमानंकरिष्यति ततोगंतव्यमस्माभिःपितरौद्रष्टुमादरात् १००
इत्युक्त्वाआगतास्तत्रगौर्याआवाहनंकृतम् ददृशुस्तत्रसौवर्णदेवालयमनुत्तमं गौरीविसर्जनंदीपमानंसाचव्यची
करत् ततःसर्वेप्रस्थितास्तेपितरौद्रष्टुमुत्सुकाः कुंडिनासन्नदेशेतान्दृष्ट्वाविस्मयिनोजनाः अब्रुवंस्तेधर्मपालंसो-
त्कंठंप्रियदर्शनाः जनाऊचुः धर्मपालाद्यतेपुत्रोसभार्यःशालकस्तथा समायातोवयंदृष्ट्वाअधुनैवसमागताः यावज्ज
नावदंस्तत्रतावत्सोपिसमागतः नमस्कारांश्चकारासौपितृभ्यांपितृवल्लभः मातुलोपिनतिंचक्रेभगिनीधर्मपालयोः सुशी
लाश्वशुरायापिश्वश्रूंनत्वास्थितातदा श्वश्रूरुवाच सुशीलेतद्व्रतंब्रूहियद्व्रतस्यप्रभावतः आयुर्वृद्धिःशिशोर्मेपिजा
ताकमललोचने सुशीलोवाच नजानेहंव्रतंश्वश्रूजानेमानवतीहरौ श्वशुरंधर्मपालंचश्वश्रूंचभवतींतथा मं
गलांदेवतांजानेवरंतुयुवयोःकृतम् इत्युक्त्वाचसुशीलासाबुभुजेस्वांतहर्षिता कृष्णउवाच तस्माद्व्रतमिदंधर्मस्त्री
भिःकार्यंसदावतु युधिष्ठिरउवाच फलमस्यश्रुतंकृष्णविधानंब्रूहिकेशव कृष्णउवाच श्रावणेमासिभौ
मेषुचतुर्षुव्रतमाचरेत् प्रातरुत्थायसुस्नातासंकल्प्यव्रतमुत्तमं उपचारैःषोडशभिःपूजयेन्मंगलांतथा नीराजनं

मो०व्र०
५

ततःकुर्याद्दीपैःषोडशसंख्यया मात्रेसुवासिनीभ्यश्चदेयंवायनमुत्तमं भोक्तव्यादीपकाश्चापिअन्नंलवणवर्जितम् विसर्जे
नंमंगलायादीपमानंततःक्रमात् पंचसंवत्सरेष्वेवकर्त्तव्यंपतिमिच्छुभिः इतिश्रीभविष्योत्तरपुराणेमंगलागौरीव्रतोद्या
पनंसंपूर्णम् अथमौनव्रतंलिख्यते नंदिकेश्वरउवाच कथयस्वप्रभावेनव्रतंपरमदुर्लभम् येनासौवर
दोदेवस्तन्मेकथयषण्मुख स्कंदउवाच शृणुनंदीन्प्रवक्ष्यामिव्रतंपरमदुर्लभम् नकस्यचिन्मयाख्यातंत्वामेवकथ
याम्यहं महादेवव्रतंसम्यक्पवित्रंपापनाशनम् येनसंतुष्टमात्रेणसर्वपापैःप्रमुच्यते शाकल्यनगरेरम्येसोमशर्माद्वि
जोत्तमः सर्वदादुःखितोदीनोद्रव्यहीनोबुभुक्षितः तस्यकन्याद्वयंजातंसौंदर्यंशुभलक्षणम् रूपलावण्यसंपन्नागृ
हार्चनरतासदा ज्येष्ठारूपवतीनामकनिष्ठाचसुपर्णिका वत्सानांपालनार्थायजग्मतुस्तेसरोवरं हंसकारंडवाकीर्णं
चक्रवाकोपशोभितम् कदलीपारिजातैश्चचंपकैर्बिल्वकैस्तथा तीरेजलगतंमध्येलिंगंतत्रैवतिष्ठति तदार्चनरता
नांचअप्सराणांकदंबकं ददर्शसासमूहंचअटव्यंसुमनोहरं आवाहनंकृतंस्नानंताभ्यांतत्रसरित्तटे महादेवव्रतंदि
व्यंक्रियतांममसन्निधौ एवंसंतुष्टमात्रेणसर्वान्कामानवाप्नुयात् पूज्यतांश्रीमहादेवंसुभद्रेकन्यकेशिवां षोडशग्रं-
थिसंयुक्तंकरेबध्वासुदोरकम् दूर्वांकुरैःषोडशभिर्देवस्योपरिविन्यसेत् पुष्पाक्षतादिधूपैश्चसर्वंमौनेनकारयेत् ए
वंविधिसमायुक्तंपूजयस्वमहेश्वरम् नैवेद्यंतुकृतंदानंव्रतंताभ्यांगृहीतवान् दध्योदनंचतन्मध्यान्निक्षिप्त्वाचसरि

त्तटे फलानि पिष्टलड्डूकं स्वगृहे यानि गृह्यताम् ततः प्रभातसमये नैवेद्यं तु समर्पितम् तत्सर्वं हेमसंजातं व्रतस्यास्य प्रभावतः
तद्दृष्ट्वा महदाश्चर्यं पिता तस्यापि कंपितः रूपवत्या तदा प्रोक्तं व्रतस्यास्य प्रभावतः न भेतव्यं त्वया तात गृहीतां तु मया वने
द्वितीयेन्हि पुनस्ताभ्यां वत्सानीताः सरित्तटे वने तु कन्यके भ्रामन् तत्र राजा उपागतः प्रतापमुकुटो राजा मृगया सक्तमान
सः श्रांतस्तृषितवान् प्राप्तो यत्रास्ते कन्यका द्वयम् राजा अपृच्छतां कन्यां सुदकं तव सन्निधौ इत्युक्त्वा वतिराजेंद्रे रूपवत्या
मुदान्वितम् आनीतं शीतलं वारि ओदनं दधि संयुतम् ततो भुक्त्वा तु राजा सौ परिवारेण संयुतः पुनः प्रष्टुं समारेभे कस्य क
न्या सफलोचने रूपवत्युवाच सोमशर्मा पिता राजन् जानासि यदि वा न वा तस्य कन्या द्वयं राजन्वने चागतवत्यहं
इत्याकर्ण्य ततो राजा गतवान्मंदिरं प्रति दूतान्सप्रेषयामास कन्यार्थं विप्रसंन्निधौ अथ जग्मुस्ततो दूताः सोमशर्मा गृ
हं प्रति राजा आहूयते शीघ्रं गच्छ विप्र महीपतिम् ततो गत्वा समं दूतैस्तैः राज्ञः संनिवेदितः राज्ञा तु प्रार्थिता ज्येष्ठा रूपवत्य
भिधायिनी पुण्यमाणवकायैव कनिष्ठा च स्फुपर्णिका पाणिग्रहं तदा तत्र जातः कन्यकयोस्तयोः देवस्याराधनं त्यक्तं रूपव
त्या मदेन च व्रतस्यागत्यदोषेण राज्यलक्ष्मीगता भवत् कनिष्ठाया गृहे चैव राज्यं प्राप्तमनुत्तमं तस्या वेश्मनि संप्राप्ता ज्येष्ठा
भिक्षु गृहं प्रति तां दृष्ट्वा दुःखिता जाता कनिष्ठा प्रत्युवाच ह किमिदं तव दारिद्र्यं राज्यं कुत्र गतं तव साब्रवीत्परसैन्यैश्च
सर्वं जित्वा दुरात्मभिः हृतं सर्वस्वमस्माकं तन्नास्ति इति भुज्यते व्रतभंगप्रभावेन दारिद्र्यं समुपागतम् इत्याकर्ण्य स्फु

स्रूपर्णासाधनकुंभंददौतदा धनकुंभंगृहीत्वासाज्येष्टागच्छद्गृहंप्रति मार्गेचोरैस्ततोनीतोधनकुंभोमनोहरः दुःखंतदातुसंप्राप्तं
शोकाकुलितमानसा कनिष्ठायागृहंपश्चाज्जगामअतिदुःखिता पुनर्ददर्शतांज्येष्ठांकरुणासक्तमानसा वंशयष्टिंसमादायतस्यां
स्वर्णंनिधायच ददौज्येष्ठांस्रूपर्णासाविससर्जगृहंप्रति शनैःशनैस्तांगच्छंतींचोरास्तत्रसमागताः वंशयष्टिंगृहीत्वातेज
ग्मुस्तत्रयथागतं ज्येष्ठातुशोकसंपन्नास्रूपर्णांसमुपागमत् दुःखंवक्तुंसमारेभेकुपितःशंकरोमम स्रूपर्णातद्वचःश्रुत्वा
अरिराधेचशंकरम् तस्याराधनमात्रेणप्रत्यक्षोभूत्सदाशिवः पंचवक्त्रस्त्रिनेत्रश्चभक्तानांवरदप्रदः दृष्ट्वादेवंस्रूपर्णातु
दंडवत्प्रणिपत्यच स्रूपर्णोवाच धन्याहंकृपयादेवयदालोकितवानसि त्वत्प्रसादान्महादेवमुच्यतेकर्मबंधनात्
रक्षरक्षजगन्नाथत्राहिमांभवसागरात् ४० स्रूपर्णांदेवदेवेशोमाभैर्माभैरभाषत पुनःस्रूपर्णाइत्याहश्रूयतांजगदीश्व
र ज्येष्ठामेभगिनीपापाव्रतंत्यक्तंतवेश्वर रक्षितव्याजगन्नाथयदितुष्टोसिशंकर ईश्वरउवाच त्वद्भगिन्यात्वजानंत्या
व्रतभंगोमहान्कृतः सर्वंतदस्तुसंपूर्णंत्वद्भक्त्यामत्प्रसादतः इत्युक्त्वादेवदेवेशोराज्यंदत्वादिवंययौ पुनर्व्रतप्रभावेनरा-
ज्यंप्राप्तंमनोरमम् नंदिकेश्वरउवाच देवकेनप्रकारेणव्रतस्योद्यापनंवद कथ्यतांश्रीमन्महाभाग व्रतसंपूर्णहेत-
वे स्कंदउवाच वर्षेषोडशेसंपूर्णेकुर्यादुद्यापनंबुधः आदौमध्येतदाचांतेकुर्यादुद्यापनंततः मासेभाद्रपदेशुक्लेप
क्षेप्रतिपदातिथौ मंडपंकारयेत्तत्रकदलीस्तंभमंडितम् नानापुष्पैश्चशोभाढ्यंप्रवरंतत्रकारयेत् तन्मध्येलिंगतोभ-

द्रंपंचरंगैः समन्वितं कलशंस्थापयेत्तत्र हेमपात्रसमन्वितम् भवानीसहितंशंभुंस्वर्णेनचकारयेत् पुष्पैर्धूपैश्चदीपैश्चनानाफलसम
न्वितम् नैवेद्यंतुपचेन्मौनंषोडशत्रिगुणान्वितं फलानिपिष्टपक्वानिदद्याद्विप्रायषोडश तांबूलंदक्षिणोपेतंयथाशक्त्यातुदापयेत्
प्रसीददेवदेवेशचराचरजगद्गुरो ईशानायनमस्तुभ्यंव्योमव्यापिन्नमोस्तुते इतिक्षमाप्यदेवेशंभक्त्यातत्परमानसः रात्रौजाग
रणंकुर्याद्गीतवाद्यादिमंगलैः ततःप्रभातेउत्थायस्नानंकृत्वाविधानतः होमस्तत्रप्रकर्त्तव्योतिलाज्येनसमन्वितः मूलमंत्रेण
होतव्यंअष्टोत्तरशतंबुधैः आचार्यंपूजयेद्भक्त्यावस्त्रालंकारभूषणैः धेनुंदद्यात्सवत्सांचवस्त्रालंकारसंयुताम् पयस्विनींकां
स्यदोहांनानालंकारसंयुतां ततःशैवान्प्रपूज्याथषोडशैतान्तपोधनान् कौपीनास्तुप्रदातव्यास्तथादद्यात्कमंडलून् भक्त्या
क्षमाप्यतान्सर्वान्व्रतसंपूर्णहेतवे भोजनंतत्रदातव्यंलेह्यपेयसमन्वितं दक्षिणांचततोदद्याद्वित्तशाठ्यंनकारयेत् एवंविधि
समायुक्तोकरोतिव्रतमुत्तमम् राज्यंचलभतेलोकेपुत्रपौत्रैःसमन्वितः सर्वपापविनिर्मुक्तोसर्वदोषविवर्जितः भुक्त्वाभो-
गान्यथाकामसंतेगच्छेत्परंपदं लभतेपरमांमुक्तिंशिवलोकेमहीयते ६२ इतिश्री॰मौनव्र॰संपूर्णं अथ॰लक्षपू॰ देव्यु॰ देवदेवजगन्नाथभवसा
गरतारक सर्वकारणदेवेशसर्वसिद्धिप्रदायक अहमेकंमहागुह्यंप्रष्टुमिच्छामिशंकर प्राप्तहंकेनपुण्येनत्वामाशुकथयस्वमे ईश्वरउ॰ शृ
णुदेविप्रवक्ष्यामियत्पृष्टंयत्तुत्वयाप्रिये पुण्यात्पुण्यतरंश्रेष्ठमिहमोक्षप्रदायक त्वयायल्लक्षपूजाख्यंकृतंतत्पूर्वजन्मनि तेनप्राप्तासिमांदे
विसर्वैश्वर्यानुभाविनि पार्वत्यु॰ महाश्चर्यकरंगुह्यंदेवदेवजगत्पते विस्तरेणचतत्सर्वमाशुमेकथयप्रभो ईश्वरउवाच ॥

धान्यानांवैलक्षपूजाविधिंवक्ष्येचपार्वती लोकानामुपकारार्थंसर्वसंपत्करंशुभम् श्रावणेकार्तिकेवापिमाघेवामाधवेपिवा शुभेवा
स्यथवान्यस्मिन्यदाभक्तिःशिवेनृणाम् चित्तंवित्तंभवेद्यस्मिन्कालेचैवार्चयोच्छिवम् नित्यकर्मसमाप्यादौशुचिर्भूत्वासमाहितःस
मभ्यर्च्यविधानेनलक्षपूजांसमाचरेत् पंचाक्षरेणमंत्रेणत्र्यंबकेणतथैवच शिवनाम्नाथवाकुर्यात्पूजनंपार्वतीपतेः तंडुलानां
मुष्टिपात्रंमुद्गीमुद्गातिलस्यच ग्रासार्धमात्रमन्नानांयवमष्टोत्तरंशतम् तथासंख्याकृतंधान्यंसमूहंतंडुलादिकम् यवगो
धूममुद्गाश्चतंडुलावैतिलाःक्रमात् पंचधान्यमितिप्रोक्तंशांतिकेदेवपूजनम् तंडुलैश्चप्रकुर्वंतिलक्षपूजांचयेनराः तेषां
स्वर्गंचमोक्षंचप्रददातीहशंकरः एवंतिलैःप्रकुर्वंतिलक्षपूजांविधिंनराः तेजस्विनोमहाभागाःकुलेनचशतेनवै श्रीकामे
नप्रकर्त्तव्यंगोधूमैःपूजनंमहत् उत्तमांस्त्रियमाप्नोतिप्रसादाच्छंकरस्यच पुत्रकामेनकर्त्तव्यंयवैःपूजनमुत्तमं अंतेसायु
ज्यमाप्नोतिनात्रकार्याविचारणा वशीकामेनकर्त्तव्यंमुद्गैःपूजनमुत्तमम् देवदानवगंधर्ववशीभवतिनान्यथा पूजांकुर्या
त्स्वयत्नेनयद्यशक्तोभवेत्तदा कारयेद्ब्राह्मणाद्वाराविधिनासर्वमानवैः पूजेयंपंचधान्यानांसर्वकामार्थसिद्धिदा पूजयेत्पार्व
तीनाथंभक्तियुक्तेनचेतसा यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः समाप्तौधान्यपूजायाःउद्यापनविधिंचरेत् आचार्यंव
रयेत्तत्रवेदवेदांगपारगं पुष्पमंडपिकांकृत्वापूजास्थानेसमाहितः स्वर्णप्रतिमांकृत्वापार्वत्याःशंकरस्यच यथाशक्त्यान्नं
दिनंचरौप्यकेनसमन्वितम् अभिषिंच्यमहादेवमुमयासहितंशिवम् नवांबरेसितेशुद्धेस्थापयेत्पार्वतीपतिम् समभ्यर्च्य

द्विजैःसार्द्धंमहापूजांसमाचरेत् यवगोधूममुद्गैश्चतिलैर्हाटकनिर्मितैः रौप्येणतंडुलंकृत्वाभक्तिभावपुरःसरः सुवर्णरौप्यधा-
न्यानिकृत्वाशंभोःसमर्पयेत् यत्रधान्यार्पणंकुर्यात्तत्रैवंपूजनंस्मृतं लक्षसंख्याकृतंधान्यंसमूहंतंडुलादिकं सुवर्णरौप्यसहि
तंब्राह्मणायनिवेदयेत् अर्चनस्यदशांशेनब्राह्मणान्भोजयेत्ततः तद्दशांशेनवैहोमंकुर्याच्चरुतिलाज्यकैः आचार्यंचसपत्नी
कंतोषयेद्दक्षिणादिभिः अशक्तश्चेन्नरोयस्तुपंचाशत्पंचविंशतिः शक्तोसत्यांनकुर्याच्चेत्पूजनंनिष्फलंभवेत् येकुर्वंतिनरा
भक्त्याशिवपूजांविधानतः भुक्त्वेहसकलान्भोगानंतेसायुज्यमेवच एतत्तेकथितंगुह्यंममसांनिध्यकारकम् पुत्रारोग्यध-
नायुष्यसंपत्तिसुखमेवच कांताचसुभगातस्यभयेद्धर्ममतिःसदा ब्रह्महामद्यपःस्तेयीतथैवगुरुतल्पगः सद्यःपूतोभवे-
ल्लक्षपूजनात्पार्वतीपतेः इतिश्रीभविष्योत्तरपुराणेपंच धान्योद्यापनंसंपूर्णम् अथशिवामुष्टिव्रतंबाल्यावस्था
यांस्त्रीणांउक्तंभविष्ये देव्युवाच देवदेवजगन्नाथजगदानंदकारक कौतुकेनेप्सितंकिंचिद्धर्मप्रश्नंकरोम्यहम्
श्रुतानिदेवदेवेशव्रतानिनियमास्तथा तीर्थानिचमहंतीनियज्ञदानान्यनेकशः नास्तिमेनिश्चयोदेवभ्रामिताहंत्वयापुनः
कथयस्वमहादेवयज्ञोप्यंव्रतमुत्तमं केनत्वंहिमयाप्राप्तस्तपोदानव्रतादिना अनादिमध्यनिधनोभर्त्ताचैवजगत्प्रभुः शि
वउवाच शृणुदेविप्रयत्नेनव्रतानामुत्तमव्रतं शिवामुष्ट्यभिधानंचसर्वोपद्रवनाशनम् सुखसंपत्करंचैवपुत्रराज्य
समृद्धिदं शंकरप्रीतिजनकंशिवस्थानप्रदायकम् स्वभर्त्रासहनारीणांमहास्नेहकरंपरम् तेनव्रतप्रभावेनप्राप्तमर्धासनं

प्रिये इतिहासंपुरावृत्तंश्रृणुवैत्वंसमाहिता पुरासरस्वतीतीरेविमलाख्यामहापुरी तत्रचंद्रप्रभुर्नामराजाभूद्धनदोपमः त-
स्यस्त्रीरूपलावण्यासौंदर्यस्मरविभ्रमा सहिचंद्रप्रभूराजाकौतुकेनसमन्वितः महात्म्यंशिवपूजायाःपत्नींप्रत्यवदत्तदा
महादेविविशालाक्षिभार्येःबालमृगेक्षणे राज्ञश्चकस्यचित्सप्तपुत्राजाताविशारदाः तेषांमध्येकश्चिदेकतस्यभार्यापतिव्र
ता तस्याःकालेहिसंजातौद्वौपुत्रौलक्षणान्वितौ एककन्याप्रसूतासासर्वलक्षणसंयुता अप्रियास्वामिनेजातासाराज्ञीवनमा
गता साकदाचिद्वनंगत्वाचारयंतीगवांगणम् तत्रशार्दूलवाराहवनमाहिषकुंजरात् दृष्ट्वाभयेनव्यथितामूर्छितातिपपा
तह उत्थायचैवबभ्रामतृषार्ताविपिनंमहत् चकोरचक्रकारंडचंचरीकशताकुलं उत्फुल्लपद्मकल्हारकुमुदोत्पलमंडितं
राजपत्नीतदापूर्वददर्शाप्सरसांगणं समासाद्यसरस्तीरंपीत्वाजलमनुत्तमम् शिवंचोमामर्चयंतंददर्शाप्सरसांगणम्
किमेतदितिपप्रच्छताउचुर्योषितंप्रति शिवामुष्टिव्रतमिदंक्रियतस्माभिरुत्तमम् सर्वसंपत्करंस्त्रीणांतत्कुरुष्वपतिव्रते
राजपत्न्युवाच विधानंकीदृशंब्रूहिकिंफलंचास्यतन्मम ताउचुर्योषितःसर्वाःश्रावणेचेंदुवासरे प्रारब्धव्यंव्रतमि
दंशिवोर्च्यःपंचवत्सरान् तच्छ्रुत्वासापिजग्राहव्रतंनियतमानसा चतुर्ष्विंदुवारेषुफलैरन्नैःप्रपूजयेत् प्रथमेइंदुवारान्ते
पूजयेच्चशिवापतिं तंडुलैर्गोधूमतिलैर्मुद्गैरन्यैःप्रपूजयेत् धान्यानांसार्धमुष्टिंचफलैःसहप्रपूजयेत् नारिकेरंमातुलिंग
रंभाकर्कटिसंभवं उमांमहेश्वरींपूर्तिंस्थावरींचप्रपूजयेत् ततस्तद्व्रतमहात्म्यात्प्रीतिप्रियतराभवेत् ततोप्राप्यव्रतंप्र

व्र·रा·
१

त्याशिवमभ्यर्चयेत्सदा पूजयेद्बहुपुष्पैश्चगंधधूपैश्चदीपकैः नानाप्रकारैर्नैवेद्यैः पूजयेच्चउमापतिम् रौप्येणतंडुलंकृत्वानारि
केरेणसंयुतम् गोधूमतिलमुद्गाश्चहाटकेनविनिर्मिताः मातुलिंगंचकेरंचकर्कटीसहपूजयेत् एवंविधैर्धान्यफलैर्मंत्रेणा
नेनपूजयेत् ॐनमःशिवायशांतायपंचवक्त्रायशूलिने नंदिभृंगिमहाकालगणयुक्तायशंभवे ब्राह्मणान्भोजयेत्तत्र
यथाशक्त्याचभूरिशः भर्त्रासहकथांश्रुत्वाभक्तियुक्तेनचेतसा यंयंचिंतयतेकामंतंतंप्राप्नोतिभामिनी देव्युवाच
उद्यापनविधिंब्रूहिशिवपुष्प्याःसुरेश्वर भक्तितःश्रोतुमिच्छामिव्रतसंपूर्णहेतवे महादेवउवाच उद्यापनविधिंवक्ष्ये
व्रतराजस्यशोभने यस्यानुष्ठानमात्रेणसंपूर्णंहिव्रतंभवेत् तस्माद्व्रतमिदंदेविस्त्रीभिःकर्तव्यमद्भुतम् श्रावणेमासिसो
मेषुचतुर्षुव्रतमाचरेत् प्रातरुत्थायसुस्नातासंकल्प्यव्रतमुत्तमं पंचमेवत्सरेमासेकुर्यादुद्यापनंव्रती चतुस्तंभंचतुर्द्वारं
कदलीस्तंभमंडितम् घंटिकाचामरयुतंकदलैरुपशोभितम् चंदनागरुकर्पूरैर्लेपितंमंडपंशुभं मध्येवितानंबध्नीयात्पं
चवर्णैरलंकृतम् तन्मध्येस्थापयेल्लिंगंपूजयेच्चउमापतिं सुवर्णरौप्यधान्यैश्चफलैरुक्तैश्चपूजयेत् ब्राह्मणान्भोजये
त्स्वाद्वस्त्रालंकारभूषणैः अन्येभ्योविप्रवर्येभ्योदक्षिणांचप्रयत्नतः भूयसींपरयाभक्त्याप्रदद्याच्छिवतुष्टये उद्दिश्यपार्वतीं
शंचसर्वंकुर्यादतंद्रितः बंधुभिःसहभुंजीतपतिपुत्रैर्जनैःसह एवंयाकुरुतेनारीव्रतराजंमनोहरं सौभाग्यमखिलंतस्याः
सप्तजन्मनिसंशयः एतत्तेकथितंदेवीनवाग्रेव्रतमुत्तमं कोटियज्ञकृतंपुण्यंअस्यानुष्ठानमात्रतः जायतेनात्रसंदेहोऽत्रऋषि

मु·व्र
१

भिः परिकीर्तितम् येशृण्वंति तया भक्त्या कथां पापहरां शुभां व्रतजं प्राप्नुवंतीह तेपि पुण्यं नसंशयः इति श्रीभविष्योत्तरपुराणे
गौरीशंकरसंवादे शिवामुष्टिव्रतोद्यापनं संपूर्णम् अथ हस्तगौरीव्रतं लिख्यते कुंत्यां वनादुपेतायां कृष्णापुरमुत्तमं
मानितायां नरेंद्रेण तनयैः पंचभिः सह तस्याः कुशलमन्वेष्टुमाजगाम समाधवः अभिवंद्य सुखासीनं देवदेवं जनार्दनम् उ
वाच कुंती सानंदा सम्यक्प्रश्नमिदं वचः कुंत्युवाच धन्यास्मि कृतकृत्यास्मि सनाथास्मि परंतप अहं संभाविताय-
स्मात्त्वया यदुकुलेश्वर यदि मे सुप्रसन्नोसि तदाचक्ष्व व्रतं प्रभो यद्विधानात्सुखं राज्यं प्राप्नुयात्तनयैः सह कृष्ण उवाच
कुंति ते कथयिष्यामि व्रतानामुत्तमं व्रतम् यत्कृत्वा सुखसंतानधनधान्यसमन्विता विधूतदुष्कृता पुण्या सपुत्रा राज्यमाप्स्य-
सि हस्तगौरीव्रतं भद्रे कुरुष्व स्वस्थमानसा यत्कृत्वा भक्तिभावेन लभ्यते वांछितं फलं कुंत्युवाच यदुक्तं ते व्रतं नाथ वि
धानं तस्य कीदृशम् केन पूर्वं कृतं वीर तन्मे ब्रूहि जनार्दन श्रीकृष्ण उवाच कैलासशिखरे पूर्वं हस्तसंस्थे दिवाकरे दि
वा प्रस्वपिता गौरी स्वप्ने शंभुं ददर्श ह अर्धदेहं वृषार्धेन अर्धचंद्रकलान्वितम् प्रबुद्धा सा तदा गौरी शिवसंनिधिमागमत् प्र
णम्य देवदेवेशमिदमाह शुचिस्मिता देवखंडितदेहोयं स्वप्ने दृष्टस्तव प्रभो किमिदं तन्मया चक्ष्व तप्यते मानसं मम ॥
ईश्वर उवाच देवि पूर्वं निषिद्धोस्ति हस्तनक्षत्रगते रवौ स्वापस्त्वं विहितो तत्र दृष्टं तस्य फलं त्वया ॥ शृणु देवि त्वया नेन खं
डितोहं विलोकितः त्वयारब्धं व्रतं देवि समाराधनकाम्यया अपूर्णं च त्वया त्यक्तं मम नापि समर्पितं अपूर्णव्रतभावेन दृष्टोहं

ताहृशास्त्वया तत्कुरुष्वाधुनादेवीहस्तगौरीव्रतंशुभे येन पूर्णव्रतानारीसंपूर्णव्रततामियात् लभतेसर्वसंपत्तिंपुत्रपौत्रसुखा
निच देव्युवाच आरभ्यतेव्रतंनाथविधानेनमहेश्वर आरंभोस्यकदाकार्यः कोविधिःकस्यपूजनं ईश्वरउवाच
यस्मिन्नहनिहस्तर्क्षेउदयंप्राप्यतेरविः तस्मिन्कुर्यात्प्रयत्नेनसौवर्णकुंजरोत्तमं कांचनीप्रतिमागौर्याहेरंबस्यहरस्यच तस्यो
परिनिधातव्यासर्वालंकारभूषिता अन्वहंकांचनैःपुष्पैःपूज्यामुक्ताफलैःशुभैः नैवेद्यैश्चंदनैश्चैवशृणुयात्प्रत्यहंकथाम्
दिनेचतुर्दशेप्राप्तेसुस्नाताशुचिमानसा शुक्लवस्त्रधरादांताभानवेर्घ्यंनिवेद्यच पूजागृहेसुसंलिप्तेस्थापयेत्प्रतिमांशुभां
स्वर्णभाजनयुग्मंचपक्वान्नैःपाचितैःशुभैः सार्धत्रयोदशमितैर्नैवेद्यमुपकल्पयेत् फलमूलानिचान्यानिशुभानिसमुदाहरे
त् पूजयेत्स्वर्णकुसुमैःपुष्पैश्चान्यैःसुगंधिभिः देवींचंदनपुष्पैश्चतथापत्राक्षतैःशुभैः ध्यायेच्चहृदयेगौरींहरहेरंबसंयुताम्
दक्षिणांचततोदत्वानत्वादेवींविसर्जयेत् सार्धत्रयोदशततोदीपिकाःश्रद्धयान्वितः पतिवत्नीस्त्रियेदद्यात्तावतीःस्वयमाहरेत्
व्रतंसमाचरेदेवंयावद्वर्षत्रयोदश स्वर्णभाजनयुग्मंचप्रतिवर्षेविसर्जयेत् ततश्चतुर्दशेवर्षेतदुद्यापनमाचरेत् हेरंबशंभुगौ
रीचकांचनीगजपृष्ठके पूर्वोक्तविधिनापूज्यावासराणित्रयोदश चतुर्दशेदिनेप्राप्तेसंयुताप्रातरुत्थिता कृतोपवासानियमा
सुस्नाताशुद्धवेश्मनि स्थापयित्वाततोदेवींनक्तंकुर्यात्ततोर्चनम् सप्तविंशतिपत्राणिपूर्वोक्तेनविधानतः पूर्वोक्तमेवप-
क्वान्नंविन्यसेच्चपृथक् पृथक् अन्यानिफलमूलानिपक्वान्नानिचकल्पयेत् धूपदीपाक्षतैःपुष्पैश्चंदनैर्वरवाससा भक्त्या

समर्चयेद्देवींप्र तिमांप्रतिपादयेत् स्वंकथं पूजयामीतिमालंचिंत्तेःकथाःकुरु अनादिव्रतमेतद्धिनात्रकार्याविचारणा देव्युवा॰
सौवर्णप्रतिमांहस्तिपात्रपुष्पाणिकल्पयेत् यस्यानशक्तिःसानारीकथंकुर्याद्व्रतंविभो ईश्वरउवाच अशक्तोमृद्गजःकार्यःप्र
तिमाचापिमृन्मयी पात्राणिवैणवान्येवपुष्पाणिऋतुजानिच अक्षतैस्तंडुलैश्चैवश्रद्धयाफलमाप्यते श्रीकृष्णउवाच
ततश्चक्रेव्रतंगौरीअलभद्वांछितंफलम् पूर्णव्रताचसाजाताभाग्यसौभाग्यसंयुता लभयेतद्व्रतंकुंतीकुरुश्रद्धासमन्विता अ
थहस्तिव्रतंकुंतीसाभिमानाकरोद्व्रतम् गांधारीचापितच्छ्रुत्वाचक्रेतद्व्रतमादरात् तस्याःपुत्रशतेश्चापिआनीताशुभमृत्तिका
कृत्वावारणगांगौरींसपुत्रांसशिवांतथा व्रतंत्वरितमारेभेनिशाम्यचविषादिनी तच्छ्रुत्वाशोकसंतापोकुंत्याअभून्मानसोज्वरः कुं
तीवाक्यमुवाचेदंगांधारीपुण्यकारिणी यस्याःपुत्रशतंशक्तंशासनेवर्त्ततेसदा ममपंचसुतास्तेपिनशक्ताःक्वापिकर्मणि ॥
श्रुत्वातदर्जुनःप्राहमामातर्विमनाभव किंमृदःप्रतिमाकार्यात्वरयासमुपोहरेत् साक्षादिहहरंगौरीऐरावतमिभान
नम् कृत्वात्वंपूजनंमातःसम्यक्फलमवाप्स्यसि इत्युक्त्वात्वरितंपार्थोगंगातीरसमाहितः तत्रतुष्टावगौरीशंसूक्तैःस्तु
तिसमीरितैः तस्यतुष्टोभवच्छंभुःसमायाच्चेवरंततः अर्जुनउवाच देवदेवगजासीनगौरीहेरंबसंयुतः ॥
गृहाणपूजामागत्यममातुर्गृहेभव तथेत्युक्त्वाहरस्तस्यतद्विधोहरमागतः साष्टांगंप्रणतागौरींकुंतीपूजामथाकरोत् पंचो
पचारैःसंपूज्यनैवेद्यादिभिरुत्तमैः तुष्टाचभक्तिभावेनसागौरीचततोब्रवीत् कुंतितेपरितुष्टास्मिवरंवरयसुव्रते कुंत्युवाच

देहिमेसर्वसंपत्तिंसर्वसौख्यंसदोत्सवम् प्रयच्छममपुत्राणांसदाराज्यमनामयम् ममास्त्वव्याहताभक्तिस्त्वयिजन्मनिजन्मनि
व्रतमेनत्तुयःकुर्याच्चवल्लोकमवाप्स्यति नदारिद्र्यंनवैधव्यंनशोकोनापिदुष्कृतं कृच्छ्रंनापद्भुतमिदंकदाचित्संभविष्यति तयेत्यु
क्त्वाततोगौरीसगणांतरधीयत एतद्व्रतंसकलदुःखविनाशदक्षंसौभाग्यराज्यफलसाधनमाचरंत्यः यायोषितःसुखमनंत-
मिहोपभुंज्यगौरीसमीपमुपयांतिहिदेहनाशे ५३ इतिश्रीभविष्योत्तरपुराणेहस्तगौरीव्रतोद्यापनंसंपूर्णम् ॥
अथहस्तगौरीपूजा देशकालौसंकीर्त्यममइहजन्मनिजन्मांतरेचाखंडसौभाग्यप्राप्तयेपुत्रपौत्रराज्यकामनयाहस्त
गौरीव्रतांगत्वेनगौरीमहेश्वरप्रीत्यर्थंहेरंबशंभुगौरीपूजनंकरिष्ये तदंगत्वेनगणपतिपूजनंस्वस्तिवाचनंआचार्यादिवर
णंचकरिष्ये हस्तगौरींसदावंदेहृदयेभक्तवत्सलां शिवार्धांगस्थितामेकदंतपुत्रेणशोभितां ध्यायामि आगच्छभोह
स्तगौरीऐरावतगजोपरि शंभुनात्रगणेशेनपार्षदैःस्वसखीगणैः आवाह॰ आसनेस्वर्णरत्नाढ्येसर्वशोभासमन्विते
उपविश्यजगन्मातःप्रसादाभिमुखीभव आसनं इदंगंगाजलंसम्यक्सुवर्णकलशेस्थितम् पाद्यार्थंतेप्रयच्छामि-
क्षालयामिपदांबुजे पाद्यं॰ गंधपुष्पाक्षतारक्तपुष्पैस्तोयंसमन्वितं सुवर्णपात्रेचार्वंगीगृहाणार्घ्यंनमोस्तुते अर्घ्यं॰
कर्पूरैलामृगमदैःसुवासैरुपशोभितम् आचम्यतांमहादेविशिशिरंविमलंजलम् आचमनं॰ नदीनदसमुद्भूतंपवि
त्रंनिर्मलंजलम् स्नानार्थंतेप्रयच्छामिप्रसीदजगदंबिके स्नानं॰ पंचामृतेनस्नपनंकरिष्येभक्तवत्सले पयोदधिघृतं

चैवमाक्षिकंशर्करायुतम् पंचामृतस्नानं॰ मंदाकिन्याःसमानीतंहेमांभोरुहवासितं स्नानार्थंतेमयानीतंगृहाणजगदंबिके शुद्धस्ना॰
कौशेयंवस्त्रंदिव्यंकंचुक्याचसमन्वितं उपवस्त्रेणसंयुक्तंगृहाणपरमेश्वरि वस्त्रं॰ यज्ञोपवीतं॰ इदंगंधंमहद्दिव्यंकुंकुमेनसम
न्वितं विलेपनंमयादत्तंगृहाणवरदाभव गंधं॰ कज्जलंचैवसिंदूरंहरिद्राकुंकुमानिच भक्त्यार्पितंमयागौरीसौभाग्यंचगृहाण
भो सौभाग्यद्रव्याणि॰ नानाविधानिमाल्यानिस्रग्गंधीनिहरिप्रिये गृहाणसुमनानीशेप्रसादाभिमुखीभव पुष्पाणि॰ धूपं
मनोहरंदिव्यंस्रग्गंधंसुमनोहरं दशांगसहितंदेविधूपंमेप्रतिगृह्यताम् धूपं॰ दीपंतमोहरंज्योत्स्नं ज्ञानसंबोधकंसदा दीपंगृहा-
णमातस्त्वमपराधशतापहं दीपं॰ नानाविधानिभक्ष्याणिव्यंजनानिहरिप्रिये गृहाणदेविनैवेद्यंसुखदंसर्वदेहिनाम् नैवेद्यं॰
गंगोदकंसमानीतंमयाचमनहेतवे तेनाचम्यमहादेविवरदाभवचंडिके आचमनं॰ करोद्वर्तनं॰ रंभाफलंदाडिमंचमातुलिंगं
चखर्जुरम् नारिकेरंचजंबीरंफलान्येतानिगृह्यतां फलानि पूगीफलमितितांबूलं॰ हिरण्यगर्भेतिदक्षिणां॰ नीराजयामिदेवेशिक
र्पूराद्यैश्चदीपकैः गृहाणमंगलान्दीपान्वरदाभवशोभने नीराजनं॰ यानिकानिचपापानीतिप्रदक्षिणाः नानाविधानिदि
व्यानिबिल्वपत्रयुतानिच दूर्वांकुरैःसंयुक्तानिदत्तंजलिस्थानिगृह्यतां मंत्रपुष्पं॰ अपराधसहस्राणि॰ नमस्कारं॰ य
स्यस्मृत्येतिप्रार्थना उपायनमितिवायनम् इतिभविष्येहस्तगौरीपूजाविधिःसमाप्तः अथकूष्मांडीव्रतंलिख्य
ते युधिष्ठिरउवाच कृष्णकृष्णमहाभागब्रह्मरुद्रादिवंदित व्रतधर्मास्त्वयाप्रोक्ताःश्रुतास्तेसकलामया इदानींश्रोतु

मिच्छामिव्रतमेकंकृपानिधे यत्कृत्वासर्वपापानिविलयंयांतितत्क्षणात् संततिर्वर्धतेनित्यंसौख्यदंचधनादिकं अल्पायासंम
हापुण्यंसर्वकामसमृद्धिदं कथयस्वेंदिराकांतकृपायदिममोपरि श्रीकृष्णउवाच साधुपृष्टंमहाराजत्वयाकुरुकु ।
लोद्भव वच्मिसर्वविधानेनत शृणुष्वजगद्धितं व्रतस्थानांमहापुण्यंकूष्मांड्याख्यानमुत्तमम् तच्छृणुष्वमहाभागस्त्रीणां
चापिसुखोदयं सर्वसंपत्करंराजन्पुत्रपौत्रप्रवर्धनं नारदेनसमाख्यातंचंद्रसेनायभूपते आर्यावर्त्तेपुराकश्चिच्चंद्रसेनो
महीपतिः नारदंपरिपप्रच्छपुत्रपौत्रप्रदंव्रतम् चंद्रसेनउ॰ देवर्षेसर्वधर्मज्ञसर्वलोकनमस्कृत त्वत्समोनास्ति
लोकेषुहितवक्तापरोनृणाम् अद्यमद्भाग्ययोगेनसंजातदर्शनंतव पृच्छाम्येकमिदानींत्वामात्मश्रेयस्करंपरं दानंधर्मंव्र
तंवापिवदसत्पुत्रदायकं इदंराज्यंधनंवापिविनापुत्रेणमेविभो निष्फलंमुनिशार्दूलकृपयाबदमेविभो कृष्णउवाच
इतितद्वचनंश्रुत्वानारदोमुनिसत्तमः चंद्रसेनमुवाचेदंव्रतंगोप्यंसुरैरपि नारदउवाच चंद्रसेनमहाभागसुरुच्या
प्रिययासह व्रतंकुरुमयाप्रोक्तंकूष्मांड्याःसर्वसिद्धिदम् यत्कृत्वासर्वराजेंद्रभविष्यंतिमहाबलाः सत्पुत्राःपरधर्मज्ञा
वीर्यवंतोबहुश्रुताः आयुष्मंतोतिकुशला राज्यपालनतत्पराः श्रीकृष्णउवाच तच्छ्रुत्वानारदेनोक्तंचंद्रसेनोतिधा
र्मिकः व्रतंचकारकूष्मांड्याःपुत्राणांप्राप्तयेकिल अष्टौजाताःसुतास्तस्यदिक्पालसमतेजसः सुरूपःसुमुखःशांतः
सुप्रसादोथसोमकः चंद्रकेतुःसदानंदोसुनंदस्तुष्टयथाक्रमात् पुत्रैस्तैःसहधर्मात्मासुरुच्याभार्ययासह संतोषपरमं

प्रापदेवब्राह्मणपूजकः कूष्मांडीव्रतमाहात्म्याद्यद्युराभनसीप्सितम् तत्सर्वंप्राप्यराजेंद्रः कृतकृत्योबभूवह श्रीकृष्णउवाच
त्वमपीदंव्रतंराजन्समाचरयथाविधि द्रौपद्यासहधर्मज्ञसर्वान्कामानवाप्स्यसि युधिष्ठिरउवाच कर्तव्यंतुकदाकृ
ष्णविधिंतस्यवदस्वमे कस्मिन्मासेतिथौकस्यांरोपणीयाथवाभवेत् श्रीकृष्णउवाच वैशाखस्यसितेपक्षेचतुर्द
श्यांनराधिप शुचौदेशेस्थलंशोध्यकूष्मांडींरोपयेदथ षण्मासंपूजयेन्नित्यंषण्मंत्रैर्नामभिःसह ब्रह्मणानिर्मितासि
त्वंसावित्र्याप्रतिपालिता ईप्सितंममदेवित्वंदेहिसौभाग्यमेवनः सौभाग्यायै॰ आषाढेपूजयिष्येत्वांमातःसर्वसु-
खायहि आशांकुरुष्वसफलांसर्वकामप्रदेनमः सर्वकामदायै॰ श्रावणेपूजयिष्यामिभक्तविघ्नविनाशिनि कूष्मांडिब
हुबीजाढ्यांपुत्रदेत्वांनमोस्तुते पुत्रदायै॰ भद्रेभाद्रपदेशुभ्रेभद्रपीठोपरिस्थिते पूजयीष्यामिमातस्त्वांधनदायैनमोन
मः धनदायै॰ आश्विनेपूजयिष्यामिबहुबीजप्रपूरिते कूष्मांडीनामसंयुक्ते फलदेत्वांनमोनमः कूष्मांडयै॰ कार्तिकेपूज
यिष्यामिसफलांसकलांशुभाम् सफलायै॰ सुखदेशुभदेमातर्मोक्षदेत्वांनमोनमः षण्मासंपूजयेदेवंकूष्मांडींधर्मनंद
न मोक्षदायै॰ ततःस्वर्णमयींकृत्वाकूष्मांडींसफलांशुभां परितःपूजयेद्देवान्लोकपालांश्चमंडले मंडलेपूजयेत्तत्रसर्वतो
भद्रदेवताः कूष्मांडींपूजयेत्कुंभेवस्त्रालंकारभूषितां सौभाग्यद्रव्यसंयुक्तांपुष्पमालाभिरावृताम् तन्मूलेसंप्रतिष्ठाप्यचतु
र्दश्यांप्रपूजयेत् मंडपंकारयेत्तत्रतोरणैरुपशोभितं चतुर्द्वारसमायुक्तंपताकाभिरलंकृतम् तन्मूलेवेदिकांचैवचतु

रस्यांतुकारयेत् एवंकृत्वामहाराजआचार्यंवरयेत्ततः सपत्नीकंसुशीलंचवेदवेदांगपारगं वरणात्पूर्वमेवेहकारयेत्स्वस्तिवाच
नं सर्वत्रमंडपंकुर्याद्रंगवल्ल्यांमनोहरम् तदग्रेसर्वतोभद्रंनानारंगैस्तुकारयेत् अव्रणंकलशंस्थाप्यवस्त्रयुग्मेनवेष्टयेत् म
हाफलेनसंयुक्तंपंचरत्नसमन्वितम् जलप्रपूरितंकृत्वापुष्पपल्लवसंयुतं ब्रह्माणंचैवसावित्रींपूजयेद्विधिवद्व्रती पंचा
मृतेनसंस्नाप्यततःकुर्याच्चपूजनम् षोडशैरुपचारैश्चपूजयेत्परमेश्वरीं पूजयेत्पुरुषसूक्तेनमूलमंत्रेणवाव्रती कूष्मां-
ड्यैकामदायिन्यैब्राह्मण्यैव्रतहेतवे नमोस्तुशिवरूपिण्यैसफलंकुरुमेव्रतम् एवंकृत्वामहाराजपूजनंसर्वकामदम्
रात्रौजागरणंकृत्वागीतवाद्यादिमंगलैः कथांश्रुत्वाविधानेनयथोक्तांराजसत्तम ततःप्रभातेपूर्णायांहोमंकुर्याद्यथा
विधि प्रणोदेवीतिमंत्रेणजुहुयात्तिलसर्पिषा अष्टोत्तरशतंहोमंकुर्यात्तस्ययथाविधि होमशेषंततःकृत्वाआचार्यंपूज
येन्नृप वस्त्रादिभिरलंकारैस्तोषयेच्चसपत्निकम् षड्विप्रांश्चाथसंपूज्यादक्षिणावस्त्रसंयुतान् ततोदानंचकुर्वीतकू-
ष्मांड्याःपीठसंयुतम् दानमंत्रः कूष्मांडीबहुबीजाढ्यांवस्त्रालंकारभूषितां हेमबीजसमायुक्तांगृहाणद्विजसत्त
म कूष्मांडीव्रतसिध्यर्थंकुर्याद्गोदानमुत्तमम् व्रतसंपूर्णतार्थायआचार्यायनिवेदयेत् ततश्चशक्त्याविप्रेंद्रान्भोजयेद्भक्ति
संयुतः दक्षिणांचततोदद्याद्व्रतसंपूर्णहेतवे एवंकृतेमहाराजव्रतेसर्वसुखप्रदे ईप्सितांल्लभतेकामान्नात्रकार्याविचा
रणा इतिश्रीपद्मपुराणेकूष्मांडीव्रतोद्यापनंसंपूर्णम् अथकर्कटीव्रतंलिख्यते ऋषयऊचुः ॥

